# परीक्षापाठ्य-पुस्तक-सूचीपत्रम् ।

१ छन्दःकौमुदी । प्रथमपरीक्षापाठ्यनिर्द्धारितछन्दःसंग्रहपुस्तकम् । हिन्दी भाषा टीका बृहत् भूमिका परीक्षोपयोगि प्रश्नपत्र सहितः । (द्वितीय संस्करण) ।=)

२ गणितकौमुदी । प्रथमपरीक्षापाठ्यनिर्द्धारितगणितसंग्रह पुस्तकम् । हिन्दी भाषा टीका उदाहरण प्रश्नपत्र सहिता । (द्वितीय संस्करण) । ।=)

३ मूलरामायण-भारतीयशीलनिरूपणाध्याय सहितः । (सुधानाम्नि व्याख्या) अन्वय-व्याख्या-समास-व्याकरण-वाच्य-परिवर्तन-कोश-सारार्थ-भाषार्थ-परीक्षोपयोगि प्रश्नसंग्रह सहित । ।=)

४ रघुवंशम् । म. म. मल्लिनाथकृत टीका टीप्पणी सहितम् संपूर्णम् । १)

५ रघुवंशम् । म. म. मल्लिनाथकृत टीका टीप्पणी सहितम् । १ से ५ सर्ग । ॥)

६ रघुवंशम् । ( सुधानाम्नि व्याख्या ) अन्वय-व्याख्या-व्याकरण-समास-कोश-सारार्थ-भाषार्थ-संक्षिप्तकथा-शिक्षासंग्रहः परीक्षोपयोगिप्रश्नपत्र तथा मल्लिनाथटीका सहितम् । १ से ४ सर्गः १।) तथा १ से ५ सर्गः १॥)

७ रघुवंशम् । ( सुधानाम्नि व्याख्या ) परीक्षोपयोगि उपरोक्त टीका सहित ६ से १० सर्ग । (यन्त्रस्थ)

८ पञ्चतन्त्रम् । परीक्षोपयोगि टीप्पणी सहितम् । सम्पूर्णम् । ॥)

९ पञ्चतन्त्रकम् । पञ्चमतन्त्रम् (अपरीक्षित कारकम्) परीक्षोपयोगि टीप्पणी सहितम् =)

१० पञ्चतन्त्रम् । पञ्चमतन्त्रम् ( अपरीक्षितकारकम् । ) परीक्षोपयोगि टिप्पणी तथा भाषा टीका बृहद् भूमिका सहितम् । ।)

११ किरातार्जुनीयम् । (सुधानाम्नि व्याख्या) परीक्षोपयोगि अन्वय-व्याख्या-समास-व्याकरण-वाच्यपरिवर्तन-कोश-सारार्थ-भाषार्थ-मल्लिनाथ टीका तथा प्रश्नपत्र संग्रह सहितम् । १ से ३ सर्गः ॥।)

१२ किरातार्जुनीयम् । मल्लिनाथी-भावार्थदीपिनीव्याख्याद्वयोपेतम् । सर्गाः १ से ३ ।=)

१३ तर्कसंग्रहः । न्यायबोधिनी पदकृत्य-विरला टीका त्रयोपेतः । सटीप्पण । ।=)

१४ मेघदूतम् । मल्लिनाथकृत सञ्जीवनी, चारित्रवर्द्धिनी तथा परीक्षोपयोगि भावप्रबोधिनी टीकात्रयोपेतम् । ॥)

१५ चन्द्रालोकः । परीक्षोपयोगि "शरदागम" व्याख्या टिप्पणी सहितः । ॥=)

१६ शिशुपालवधम् । मल्लिनाथी टीका तथा वल्लभदेव कृत संदेहविषौषधिपरीक्षोपयोगि व्याख्या सहितम् । १से२ सर्गः ॥) १ से ३ सर्गः । ॥।)

१७ वृत्तरत्नाकरः । नारायणभट्टकृत नारायणी टीका तथा वैद्यनाथशास्त्री वरकले कृत परीक्षोपयोगि टिप्पणी उदाहरण तथा श्रुतबोध-छन्दोमंजरी-सुवृत्तितिलक सहितः । १॥)

१८ काव्यमीमांसा । साहित्याचार्य पं० नारायणशास्त्रिखिस्ते कृत परीक्षोपयोगि "काव्यमीमांसाचन्द्रिका" टीका सहित । (यन्त्रस्थ)

१९ नागानन्दनाटकम् । परीक्षोपयोगि संस्कृत टीका टिप्पणी सहितम् । (यन्त्रस्थ)

२० सिद्धान्तमुक्तावली । पं० सूर्य्यनारायण शुक्लरचित मयूख सहिता प्रत्यक्षखंड ॥=)

२१ योगसूत्रम् । भोजवृत्तिः, भावागणेशवृत्तिः, नागोजीभट्टवृत्तिः, मणिप्रभा, चन्द्रिका, योगसुधाकर टीका षट्क समेतम् । २)

२२ सिद्धान्तकौमुदी । मूलमात्र गुटका दशपाठ संग्रह सहित । ३)

---

THE

# KASHI-SANSKRIT-SERIES

( *HARIDÂS SANSKRIT GRANTHAMALA* )

NO. 84

( Kavya Section, No. 12 )



# RAGHUVANS'A MAHAKAVYAM.

( CANTOS I-V )

of

## KALIDAS

*Edited With*

THE COMMENTARY ( SANJIVINI ) OF MALLINATHA

and

THE SUDHA COMMENTARY

By

*Pandit Brahmashankar Mishra*

PRINTED, PUBLISHED & SOLD BY

JAI KRISHNADÂS-HARIDÂS GUPTA,

*The Chowkhamba Sanskrit Series Office, Vidya Vilas Press,*

*North of Gopalmandir, Benares City.*

1930.

हरिदाससंस्कृतग्रन्थमालासमाख्य
काशीसंस्कृतसीरिज़पुस्तकमालायाः

८४

काव्यविभागे (१२) द्वादशं पुष्पम् ।

* श्रीः *

# रघुवंशमहाकाव्यम् ।

( पञ्चसर्गात्मकम् )

महामहोपाध्यायश्रीमल्लिनाथसूरिकृतया सञ्जीविनीव्याख्यया

तथा

श्रीमन्मध्वसम्प्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यगोस्वामि-
श्रीदामोदरशास्त्रिणामन्तेवासिना मिश्रोपनामकपण्डितश्रीब्रह्मशङ्कर-
शर्मकृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम् ।

प्रकाशक—
जयकृष्णदास हरिदास गुप्त
चौखम्बा संस्कृत सीरिज आफिस,
विद्याविलासप्रेस, गोपालमंदिर के उत्तर फाटक,
बनारस सिटी ।

१९८७

श्रीः ।

.८ ६। श्रीश्रीगौरकृष्णः शरणं मम ।

# उपोद्घातः ।

अयि गीर्वाणवाणीप्रावीण्यमर्धिजिगमिषवः साहित्यामृतसरित्पतिं प्रविविक्षवश्च प्रियसच्छात्रवृन्दाः !

विदाङ्कुर्वन्तु सावधानमानसाः सन्तः श्रीमन्तो यदस्मिन् विश्वस्मिन्नशान्तिसाम्राज्ये शाश्वतीं शान्तिं लिप्सन्तः प्रायशः सकला एव सुजना यतमाना दरीदृश्यन्ते, ते च ज्ञानमन्तरेणोपायान्तरमलभमानाः शास्त्रमेवैकं तद्‌द्वारं निश्चित्य, तदध्येतुं प्रवृत्ता भवन्ति, परञ्च तदतीव श्रमसाध्यं मत्वा मन्दमतयः प्रायशो हतोत्साहतया विरमन्त्येव, अत एव-तेषामेव कृते काव्यमेकं सुगमं वर्त्म वरीवर्त्ति-अत एव-काव्यप्रकाशकारेणोक्तम्—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे" इति ॥

तस्य च दृश्यत्वेन श्रव्यत्वेन च द्वैविध्यमस्ति, तत्र श्रव्यमेवाश्रित्य तत्र भवता सारस्वतं सारमनुभवता सरसप्राञ्जलकवितानिर्माणपटीयस्त्वेन लब्धकविकुलचक्रवर्त्तिपदवीकेन महाकविना श्रीकालिदासेन श्रीहरिवंशस्थपञ्चदशाध्यायोक्तरघुवंश्यानां राज्ञां मध्ये दिलीपत आरभ्याग्निवर्णपर्यन्तानां राज्ञां प्रायशश्चरित्रचित्रणं स्वकीयाप्रतिमप्रतिभाऽनुसारेण चारुतरेण प्रदर्शयता श्रीरघुवंशनामकं महाकाव्यं साहित्यदर्पणीयषष्ठपरिच्छेदोक्तेषु—

"सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः । सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः ॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा । शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ॥
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः । इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत् । आदौ नमस्क्रियाऽऽशीर्वा वस्तुनिर्देश एव वा॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम् । एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ॥
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह । नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् । सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ॥
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः । सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः । वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा । नामास्य सर्गोपादेयकथया सर्गनाम तु ॥"

इति, लक्षणेषु यथासम्भवमिलितमहाकाव्यलक्षणैरुपेतमेकोनविंशतिसर्गात्मकं महाकाव्यं निबद्धं तच्च प्रायः साहित्यपथं प्रविविक्षूणां कोमलमतीनामतीवोपकारितया सर्वत्रैव विद्वद्भिरादृतम् ।

अत एव प्रायो भारतीयसकलसंस्कृतविश्वविद्यालयीयप्रथमपरीक्षायामादितःसर्गचतुष्टयात्मकं सर्गपञ्चकात्मकं वा पाठ्यपुस्तकत्वेन स्वीकृतं तत्तत्संस्थाप्रबन्धकर्तृभिः कृतिभिः ।

किन्त्वेतादृशस्य सर्वलोकप्रियस्य महाकाव्यस्य प्रणेत्रा "कस्मिन् काले कतमो जनपदः कतमा जातिः कतमत्कुलं चालङ्कृतानि" इति साम्प्रतमप्यैतिह्यविद्भिः सम्यक्तया निश्चेतुमसमर्थैः सद्भिः परस्परं मतैक्यं न स्थापितम् ।

अत एव तेष्वेकस्य कस्य चिन्मतमवलम्ब्य समयमेव निरूपयितुं यथाशक्ति प्रयते ।

तद्यथा—

कालिदासप्रणीतानि—रघुवंशं कुमारसम्भवं मेघदूतञ्चेति त्रीणि श्रव्यकाव्यानि, स्मृतिचन्द्रिकाऽभिध उत्कलदेशप्रचलितो वेदोक्तकर्मप्रतिपादकग्रन्थो ज्योतिर्विदाभरणनामकं कालज्ञानशास्त्रम्, ततो मालविकाग्निमित्रविक्रमोर्वशीयाभिज्ञानशाकुन्तलानि दृश्यकाव्यानि त्रीणि केषांचिन्मते सन्ति, तेषु ज्योतिर्विदाभरणग्रन्थे त्वेतल्लिखितमस्ति, यथा—

"मत्तोऽधुना कृतिरियं सति मालवेन्द्रे, श्रीविक्रमार्कनृपराजवरे समासीत् ।
धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघट ख ( क ) र्परकालिदासाः ॥

ख्यातो वराहमिहिरो नृपतेः सभायां, रत्नानि वै वररुचिर्नव विक्रमस्य ।
यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी ।
शङ्क्वादिपण्डितवराः कवयस्त्वनेके ज्योतिर्विदः समभवंश्च वराहपूर्वाः ॥
श्रीविक्रमस्य बुधसंसदि भूरिवृद्धैस्तैरप्यहं नयसखः किल कालिदासः ।
काव्यत्रयं सुमतिकृद् रघुवंशपूर्वं, जातं यतो ननु कियच्छ्रुतिकर्मवादः ॥
ज्योतिर्विदाभरणकालविधानशास्त्रं श्रीकालिदासकवितो हि ततो बभूव ॥
वर्षे वै वसुषट्कशून्यगुणकै ( ३०६८ ) र्याते कलौ सम्मिते ।
मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः" इति ॥

एतेन ज्योतिर्विदाभरणकालात् ( ३०६८ कलेरब्दगणनात् ) पूर्वं रघुवंशादिकानि कतिचित्पुस्तकानि कालिदासः प्रणीतवानिति धारणा, तेन ईशवीयवत्सरारम्भात् प्रथमशताब्द्यामेव कालिदाससम्भवो रघुवंशप्रणयनमिति निश्चीयते। अपराण्यपि बहूनि मतानि सन्ति, परन्तु तेषामुल्लेखनं विस्तरभयान्न क्रियते ।

अतः परं स ब्राह्मण आसीदित्युक्त्वा तदीयदेशकुलविषये पूर्णप्रमाणानुपलब्धेः किञ्चिदपि निरूपयितुं न प्रभवामि ।

अस्तु—

यद्यप्यस्य महाकाव्यस्य महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिता सञ्जीविनी समाख्या व्याख्या सतीष्वपि सतीषु विविधासु प्रत्नासु नूत्नासु च व्याख्यासु सहृदयविद्वद्धृदयरामणीयकेन विख्याततमाऽस्ति, तथाऽपि तस्या एव केवलायाः सुकुमारमतीनां प्रथमपरीक्षाऽर्थिनां कृते नातीवोपयोगितया श्रेष्ठिवरश्रीजयकृष्णदासगुप्तमहाशयप्रार्थनापारवश्येन सुधाऽभिधामभिनवां व्याख्यामादितः सर्गपञ्चकात्मिकां प्रारभ्य तस्य साग्रहानुनीयमानमानसो विघ्नैः पुनः पुनः प्रतिहन्यमानोऽपि श्रीमतां पदवाक्यप्रमाणपारावारीणानां विद्वद्वृन्दधुरीणानां माध्वसम्प्रदायाचार्यान्ववायसरःसरसिजानामनेककलाकलितात्मनां श्री १००८ श्रीमद्गोस्वामि श्रीदामोदरशास्त्रिनामस्मद्गुरुचरणानामेकान्तानुकम्पाकलितहृदया तैलङ्कदेशवास्तव्येन भ्रातृकल्पचिरञ्जीविश्रीसोमनाथरथशर्मणा चतुर्थसर्गोपान्ततः पञ्चमसर्गसमाप्तिपर्यन्तं कृतसपरिश्रमकोशादिलेखसाहाय्येन यथामति किरातार्जुनीयसुधासरणिमनुसरन् प्रतिश्लोकीयसन्दर्भान्वयव्याख्यासमासव्याकरणवाच्यान्तरकोशतात्पर्यार्थभाषाऽर्थैरलङ्कृत्य व्याकरणांशे सूत्रनिर्देशपुरःसरपदसाधुत्वप्रदर्शने श्रीगुरुचरणैस्तथा काशीस्थहिन्दूविश्वविद्यालयदर्शनाध्यापकैः श्रीबालकृष्णशर्ममहोदयैः सविशेषं नियोजितः समाप्य च पूर्वोक्तश्रेष्ठिमहोदयाय मुद्रणार्थं सर्वाधिकारप्रदानपुरःसरं समर्पितवान् ।

तेन च महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया सनाथीकृत्य सुधाऽऽख्यव्याख्योपेतं सर्गपञ्चकात्मकमेतत् स्वकीयद्रव्यव्ययेन निजविद्याविलासनाम्नि मुद्रणालये संमुद्र्य मयैव च सम्पादय्य प्रकाशितम् ।

आशासे चात्र यत्र कुत्र चित् सत्वरप्रकाशनाकृष्टमानसतया लेखने संशोधने वा दृष्टिदोषतो बुद्धिव्यामोहतो ,वा महीयोऽणीयो वा यद् यत् स्खलनमभूत्तत्तत् स्वकीयस्खलनमिव सम्भाव्य खलेतरैः कोविदकुलैः खलु समाधेयम् मर्षणीयञ्चेति ।

यद्यनेन केषाञ्चिदपि संस्कृतभाषाभिज्ञतालिप्समानमानसानामन्ते वासिनां कश्चनोपकारः स्यात् तर्हि स्वश्रमं सफलं मन्यमानः कृतकृत्यतामावहन् ,नितरामानन्दनिमग्नो भवेयम् ।

इति शम् ।

कार्तिककृष्णेऽमायां
भौमे सं० १९८७ वैक्रमीये
वाराणस्याम्

कृतिनामेकान्तविनेयो-
ब्रह्मशङ्करमिश्रः ।

श्रीः ।

अथ

# संक्षिप्तकथानकम्

## सन्तानार्थं राज्ञो दिलीपस्य वसिष्ठाश्रमाभिगमनम् ।

### प्रथमः सर्गः ।

आदौ सर्गारम्भे शिष्टाचारपरिप्राप्ततया शिष्यशिक्षाऽर्थकतया च श्लोकेनैकेन वागर्थौ प्रतिपित्सुना जगतः पित्रोः पार्वतीपरमेश्वरयोः प्रणतिपूर्वकं कविकुलशिरोमणिना श्रीकालिदासेन मङ्गलमाचरितं, तदनु श्लोकत्रयेण सुजनसुलभं स्वं निरभिमानशालित्वं, ततः श्लोकषट्केन रघुवंश्यानां राज्ञां प्राकृतगुणवर्णनं तत्पश्चाद् निजकृतेराकर्णनार्थं कृतिनां प्रार्थनां च प्रकट्य्य कथोपोद्घात इत्थं कृतः—

तद् यथा—

क्षितिभृतामाद्यो मनीषिणां माननीयः सर्वश्रेष्ठगुणोपेतो वैवस्वतो नाम मनुरासीत्, तस्य च विशुद्धवंशे सदाचारनिष्ठो दिलीपो नाम राजेन्दुः क्षीरनिधौ चन्द्र इव प्रसूतः, स च चक्रवर्तिलक्षणोपेतः सर्वशास्त्रेषु सकलकलासु राजनीत्यां धनुर्वेदे च निरुपमाभिज्ञतां स्वां सम्पादयन् चक्रवर्त्ती भूत्वा सपत्नशून्यं राज्यमुपाभुङ्क्त, अस्य निदेशवशवर्तिन्यो धार्मिकप्रजा अणुमात्रमपि निदेशपथं न व्यत्यक्रामन् ।

तस्य च सुदक्षिणानाम्नी मगधवंशजा महिष्यासीत्, इत्थं तया सह नैकविधानि सुखान्यनुभवतोऽपि राज्ञो दिलीपस्य सन्तानाभावात्सर्वदा राज्यात् प्रायो वैराग्यमेवासीत् ।

एकदेत्थं समयं नयतस्तस्य हृद्यकस्मादीदृशो विचारः समजनि, यत्तदधीनः सन् स्वामात्येषु राज्यपालनभारं निक्षिप्य पुत्रकाम्यया पत्नीसहितः कुलगुरोर्वसिष्ठमहर्षेराश्रमपदं स्यन्दनारूढः प्रययौ, ततः सायङ्काले गुरोराश्रमं प्राप्य, रथादवतीर्य पत्नीमप्यवतार्य सारथिं धुर्यानामश्वानां विश्रामार्थमादिदेश । पुनः कृतसायन्तनविधिं तपोनिधिं वसिष्ठमरुन्धत्याऽन्वास्यमानं दृष्ट्वा तयोः पादयोः प्रणिपत्य सपत्नीकः शिरसाऽभिवादनं चक्रे महर्षिणा सपत्नीकेन लब्धाशीर्वादः पृष्टराज्यकुशलो दिलीपो निजागमननिमित्तं सन्तानाभावमेव निवेदितवान् । महर्षिरपि ध्यानचक्षुषा सन्तानप्रतिबन्धकारणं ज्ञात्वा राजानं प्रत्यवोचत्—

"हे राजन् ! एकदा स्वर्गादिन्द्रदर्शनं कृत्वा परावर्त्तमानेन त्वया मार्गे कल्पतरुच्छायामाश्रितवर्ती कामधेनुर्नयनगोचरीभूता सत्यपि तदानीन्तने समये नाभिवन्दिता नापि प्रदक्षिणीकृता, अत एव रुष्टा सती सा—"हे मूढ ! यतस्त्वं मां तिरस्करोष्यतस्ते मत्प्रसूतेराराधनं विना पुत्रो न भविष्यति" इति त्वां शशाप, स शापस्त्वया सारथिना च वियद्गङ्गाया हरहरेति शब्दं कुर्वति स्रोतसि बन्धनरहितानां दिग्गजानां जलक्रीडाऽऽदिजन्यशब्देन च न श्रुतः, अधुना सा कामधेनुर्वरुणस्य यज्ञियदध्याज्यादिसम्पादनार्थं पाताललोके गता, तत्सुता नन्दिनी तु मदीयाश्रमे वर्तते, अस्याः परिचर्यां कुरु, एषैव प्रसन्ना सती त्वदभीष्टं साधयितुं समर्था भविष्यति",

इत्युक्त्वा राजानं महर्षिर्वसिष्ठो नन्दिनीपरिचर्याविधिं सम्यक्प्रकारेणाशिक्षयत्, ततः सपत्नीको राजाऽपि निवासयोग्यां महर्षिनिर्दिष्टां पर्णशालामध्यास्य मुनिजनसदृशो रात्रिं निनाय इति ॥ १ ॥

प्रथमसर्गसमाप्तिः ।

## द्वितीयः सर्गः ।

### [illegible] राज्ञो दिलीपस्य नन्दिनीतो वरावाप्तिः ।

अथ परेद्युः प्रातःकाले कृतनित्यकृत्यो राजा दिलीपो महिष्या सुदक्षिणया गन्धमाल्यादिभिः पूजितां नन्दिनीं चारयितुं वनं नयति स्म, स च कियद्दूरं गत्वा महिषीमनुचरवर्गं च निर्वर्त्य, स्वयं वसिष्ठमहर्षेर्निदेशानुसारेण सूर्यास्तसमयं यावत् छायावद् धेनुमनुगच्छन् कृत्स्नं दिनं चारयित्वा सायङ्काले समागते सति पुनराश्रमं प्रत्यावर्त्तयन् प्रतिनिवृत्तः पुनरपि निजाश्रमात्कियद्दूरं स्वागतार्थमागतया नन्दिनीसहितनिजागमनं प्रतीक्षमाणया महिष्या पुनरपि पूजितां धेनुं तदीयशालायां बद्ध्वा सायङ्कालीनकृत्यं समाप्य सदारस्य गुरोः पादौ सदारः स्वयं संवाह्य ततो मुनिजनसुलभमाहारादिकं कृत्वा शेते स्म,

इत्थमेव प्रत्यहं नन्दिनीं परिचरतस्तस्यैकविंशतिदिनानि व्यतीतानि, ततो द्वाविंशे दिवसे नन्दिनी राज्ञो भावं जिज्ञासमाना सती वने शष्पाणि चरन्ती २ गङ्गाप्रपातसविधेऽभिनवहरिद्वर्णशष्पपूर्णां हिमालयगुहां प्रविवेश ।

भूपतिरपि—"इयं कामधेनुसुता, अत एव न कैश्चिदपि वन्यैर्हिंस्रैर्व्याघ्रादिभिः कदा चिदपि प्रधर्षयितुं योग्ये"ति मत्वा तदीयपर्यवेक्षणान्निवृत्तचित्तो निश्चिन्तः सन्ननुपमप्राकृताद्रिशोभादर्शनसक्तमना इतस्ततो निभृत विलोकयन्नास्ते ।

इतो राज्ञः पारोक्ष्ये जाते सति सहसाऽकस्मादेकेन केन चित् सिंहेन प्रसह्याक्रान्ता सती सा धेनुस्तारस्वरेण चक्रन्द, ततस्तस्या मर्मस्पर्शिनमार्त्तस्वरं श्रुत्वा, आर्त्तपरित्राणपरायणो नगेन्द्रशोभाप्रेक्षणेऽतीवसक्तां दृष्टिं निवर्त्य यदा द्रष्टुमुन्मुखो बभूव, तदा नन्दिन्या-उपरि समाक्रम्य स्थितं सिंहं, तां च निजरक्षणार्थमधिकतरकातरदृष्ट्या राजानं निभृत विलोकयन्तीमपश्यत् । ईदृशीं तदीयां दुर्दशां दृष्ट्वा तदीयं मनः करुणाऽऽप्लुतं बभूव, ततः स सिंहोपरि भृशं कुपितः संस्तं हन्तुकामतया यावत्तूणीराद् बाणनिष्कासनार्थं निजदक्षिणकरं पृष्ठभागं नयति स्म, तावत्तदीयहस्तः शरसान्निध्यं प्राप्यापि तत्रातीवसक्ततया चित्रलिखितशरनिष्कासनोद्योग इवावातिष्ठत, राज्ञोऽपि स्वकीयामसम्भाविनीमीदृशीं दशां विलोक्य महदसामञ्जस्यमनुभवतः क्रोधातिरेकात् शरीरात्सर्वतोऽग्निकणनिर्गमतुल्यदुःखं बभूव, परन्तु स च बाहुस्तम्भतया कञ्चिदपि तत्प्रतीकारं कर्तुं यदा न प्राभवत्, तदा सिंहो मनुष्यवाचा राजानं विस्मययन्नब्रोचद्—

यद्—हे राजन् ! मां हन्तुकामतयेदानीन्तनेन त्वत्कृतबाणमोक्षणादिप्रयत्नेनालं, त्वत्प्रयुक्तमेकमप्यस्त्रं मत्केशमपि नाशयितुं न शक्ष्यति किमुत मां, नाहं प्राकृतः पशुः किन्तु कुम्भोदरनामा भगवतः शङ्करस्य प्रियपार्षदोऽस्मीत्यवेहि' किञ्च—त्वं निजपुरःस्थितं यममुं देवदारुतरुं पश्यसि स भवान्याः करकमलसेकसंवर्धिततया पुत्रकल्प इव प्रियतरः खल्वास्ते । अस्तु—एकदा कश्चिन्मदोन्मत्तो वन्यद्विपः कण्डूतिमपनेतुकामतया स्वगण्डस्थलमस्य तरोः स्कन्धे भृशं घर्षयंस्तत्रत्यं वल्कलमुन्मथितवांस्ततः पार्वती तद्वृत्तान्तं ज्ञात्वा देवदानवयोर्युद्धे शस्त्रादिभिः क्षततनुं स्कन्दमिवैनं भृशं शुशोच, अतस्तदा प्रभृत्येव भगवान् शङ्करो वन्यगजानां त्रासार्थमत्रैव निरन्तरं स्थातुं सिंहरूपेण मां नियोज्येत्यभ्यधात्—यद् यः कश्चन पशुस्त्वत्सन्निधि स्वयमेवागच्छेत्, तमेव भक्षयेः, अस्मात्स्थानाद्, भक्ष्यं पशुम् मार्गितुमन्यत्र क्वापि कदा चिदपि न गच्छेः, अतोऽद्य साक्षाद्भगवता शङ्करेणैव प्रेषितेवेयं धेनुर्मत्सन्निधिमागता, इयं मे भक्ष्यरूपाऽस्ति, अत एव नाहमद्यैनां मोक्तुं प्रभविष्यामि, अतोऽधुना त्वं स्वगुरुसन्निधिं याहि, लज्जां त्यज, नरो यद्वस्तु रक्षितुं न पारयति तेन तस्य यशो न क्षीयते,"

इतीत्थं तद्वचः श्रुत्वा राजा तमेवं वक्तुमारब्धवान्—

हे सिंह! सकलसुरासुरेज्यो भगवान् शङ्करो यथा भवतो माननीयतमोऽस्ति तथैव ममापि, कुलगुरोर्वसिष्ठमहर्षेरियं धेनुरपि मे माननीयेत्यतः स्वसमक्षमेवास्या विनाशः कथञ्चन स्यादिति सर्वथाऽत्यनुचितमेवेति हेतोर्यदि भवता भक्ष्यतयैषाऽपेक्षिताऽस्ति, तर्हि भवान् कृपां कृत्वैनां विमुच्य तत्स्थानापन्नं मामेव भक्षयतु, इत्याकर्ण्य महाट्टहासं कुर्वन् सन् सिंहो राजानं प्रत्युवाच—

हे राजन्! एकस्या अल्पीयस्या धेनोः कृते स्वकीयं विशालं राज्यं परित्यज्य नवीनवयस्कस्त्वं सम्प्रति स्वदेहार्पणं चिकीर्षुरसीति हेतोर्विचारशून्यो मूर्खशिरोमणिरसि, त्वं जीवनधारणं कुर्याश्चेत्तर्ह्यसंख्यकाः प्रजाः पालयेः, अपि चैकस्या धेनोर्विनाशेन भृशं कुपितं गुरुमन्यासां धेनूनां कोटिशः प्रदानेनाप्यनुग्राहयितुं शक्तोऽसीति तद्वचः श्रुत्वा राजा पुनराह—

यद्भवतोच्यते तत्सर्वं युक्तियुक्तं, किन्तु यथा भवतः पराधीनतयाऽस्मिन् देवदारौ महान् रक्षणप्रयासस्तथैव ममापि गुरोराज्ञावश्यतया सर्वतोभावेनास्यामस्ति, अतो नाहं स्वसम्मुखमेवास्या विनाशं द्रष्टुं प्रभवामीत्यादिभिर्बहुविधैर्वाक्यैः स सिंहं पराजित्य धेनुमोचनं तत्स्थानापन्नस्य स्वस्य भक्षणं च स्वीकारयामास, ततस्तथाऽस्त्वित्युक्तवते तस्मै सद्यः प्रतिष्टम्भविमुक्तबाहुतया न्यस्तशस्त्रः सन् स स्वदेहं मांसपिण्डमिव समर्पयत्, तदनन्तरम्—"अयं सिंहः सम्प्रत्येव मदुपरि निपतिष्यति, ततः कृपणाया अस्या धेनोरपि प्राणरक्षणं संभविष्यतीति मनसि प्रतिक्षणं तर्कयतस्तस्य शरणागतरक्षणतत्परस्य दिलीपस्योपरि विद्याधराः पुष्पवृष्टिं चक्रुः, नन्दिनी चातिमधुरस्वरेण तं प्रोवाच—हे पुत्र! त्वमुत्तिष्ठेति, ततो राजाऽपि श्रुतिमनोहरं तद्वचः श्रुत्वोत्थितो यावदूर्ध्वमुखः सन्नपश्यत्तावत्स्वपुरःस्थितां स्नेहप्रस्नुतस्तनीं स्वां जननीमिव गामेव ददर्श न तु सिंहं,

ततः "हे पुत्र! मायां प्रकल्प्यैव मया त्वं परीक्षितोऽसि, यतो वसिष्ठमहर्षिप्रभावान्मयि साक्षाद् यमोऽपि प्रहर्तुं न प्रभुः किमुतान्ये घातुका व्याघ्रादयः, अतस्त्वदेकान्तभक्त्याऽहं तुभ्यं प्रीताऽस्मि, ते यदभीष्टं मत्तो वरणीयमस्ति तद् वृणीष्वेति नन्दिनी तं पुनः प्रोवाच।

ततो यदा स सुदक्षिणायामात्मसदृशं पुत्रं वृतवांस्तदा नन्दिनी पत्रपुटके मदीयं दुग्धं दुग्ध्वा पिबेति तमादिदेश, किन्तु राजाऽपि गुरोराज्ञां विना पयःपानमनुचितं ज्ञात्वा गुरोराश्रमं तया सह प्रतिनिवृत्य गुरवे तस्या वरप्रदानरूपं प्रसादं निवेद्य, तदाज्ञां स्वीकृत्य च, वत्सहुतावशेषं तदीयं पयः पपौ।

ततः प्रातःकाले गोचारणरूपस्य व्रतस्य पारणां कृत्वा, सपत्नीको राजा दिलीपो हुतं वह्निं सपत्नीकं गुरुं सवत्सां नन्दिनीं च प्रदक्षिणीकृत्य, स्वां राजधानीं प्रति न्यवर्त्तत, तथा तन्महिषी सुदक्षिणाऽपि गर्भमाधत्त। इति॥ २॥

द्वितीयसर्गसमाप्तिः।

## तृतीयः सर्गः

### रघोर्जन्म राज्याभिषेकश्च।

गर्भधारणानन्तरं कियत्सु कालेषु व्यतीतेषु सत्सु प्राप्ते दशमे मासि महिष्यां सर्वचक्रवर्त्तिलक्षणोपेतं पुत्ररत्नमजनि, राजा च तस्य रघुरिति नाम कृतवान्, राजकुमारः स रघुरपि शुक्लपक्षे शशीव प्रतिदिनं स्वशरीरपुष्टिं दधौ, राजा दिलीपो महतोत्साहेनाह्लादेन च तस्य यथासमयं चूडाकरणोपनयनादिकान् संस्कारान् पुरोधसा वसिष्ठेन कारयामास, अनेकान् विदुषो निजसविधे संस्थाप्य तेभ्यश्च तं विधिवच्चतुर्दश विद्या अध्यापयामास, सकलासु विद्यासु तस्मिन् निष्णाते सति राजा दिलीपः स्वयं धनुर्वेदं तमशिक्षयत्, तदनन्तरं तं यौवराज्यपदेऽभिषिक्तवान्। ततस्तत्साहाय्येनैकोनशताश्वमेधयज्ञान् विधिवत्कृत्वा पुनरवशिष्टे शततमेऽश्वमेधयज्ञे दीक्षितः संस्तं कर्तुं प्रारेभे, ततस्तेन तद्यज्ञियाश्वसंरक्षणेऽन्यान्यैः राजकुमारैः

सह युवराजः स रघुर्नियोजितः । इन्द्रोऽपि—"दिलीपोऽमुं यज्ञं निर्विघ्नं पूरयितुं प्रभवेच्चेत्, तर्हि मदीयपदमधिकुर्यात्" इति मत्वा तमश्वमनुयायिभिर्नृपकुमारैः सह पश्यतो रघोः पुरस्तादचूचुरत्, किन्तु तन्मायापारवश्येनाश्वं तदपहारिणमिन्द्रं वा केनापि न द्रष्टुं प्रबभूवः। ततः सानुयायिवर्गो रघुरप्यतिविस्मयं प्राप, तस्मिन्नेव क्षणे दैववशात् कुलगुरोर्भगवतो-वसिष्ठस्य धेनुर्नन्दिनी यदृच्छया तत्राजगाम, ततस्तदीयेन मूत्रेण रघुरपि यावन्निजं नेत्रद्वयम् प्रमृष्टवांस्तावत्पूर्वस्यां दिशि यज्ञियमश्वं रथरश्मिसंयतं हरन्तमिन्द्रं ददर्श, तथा गगनव्यापिनाऽतिगम्भीरस्वरेण तं निवर्त्तयन्निव प्रोवाच—

हे देवेन्द्र ! यज्ञरक्षणे सदा तत्परो भवादृशो यदीदृशे नीचकर्मणि प्रवर्त्तेत, तर्हि सर्वा-यागादिकाः क्रियाः शाश्वतं नश्येयुः, अतो भवान् कृपयैनमश्वं मुञ्चत्विति, इत्थं तद्वचः श्रुत्वा देवेन्द्रोऽब्रवीत्—

"हे राजकुमार ! तव कथनं सर्वं सत्यमस्ति तथाऽपि शताश्वमेधयज्ञकरणात् शतक्रतुरिति नाम ममैव न तु कस्यचिदन्यस्यापि किन्तु सम्प्रति त्वद्गुरुर्दिलीपस्तन्मदीयमनन्याभिधायकं शतक्रतुरितिनाम स्वाभिधायकं चिकीर्षुरमुं शततममश्वमेधं क्रतुं प्रारब्धवान् , अतो मयाऽय-मश्वोऽपहृतः, यदि त्वमस्याश्वस्य मोचने कथञ्चन प्रयतेथास्तर्हि सगरस्य सन्ततेरिवाव-श्यं विनष्टो भवेरिति, इन्द्रस्येत्थं पूर्वोक्तं वचः श्रुत्वा निर्भीको रघुः प्रहस्य पुनस्तं प्रत्युवाच

"हे इन्द्र ! मामनिर्जित्यैव न खलु भवानश्वं नेतुं प्रभविष्यतीति,

एतावदुक्त्वा सपदि महेन्द्रं वक्षःस्थले बाणेन जघान, महेन्द्रोऽपि रघु बाणेन क्षततनुं कृतवांस्ततः पुनरपि रघुरेकेन शरेण महेन्द्रं बाहौ जघान, अन्येन शरेण च तदीयं वज्राङ्कितं महाध्वजं चिच्छेद ।

एवमुपान्तस्थितसिद्धसैनिकयोस्तयोरधोमुखैरूर्ध्वमुखैश्च शरैस्तुमुलं भयङ्करं युद्धं बभूव ।

अन्ततो गत्वा रघोर्बाणेन महेन्द्रस्य शरासनज्यायां छिन्नायां सत्यां सोऽतिक्रुद्धः सस्त-दुपरि वज्रं मुमोच, युवराजस्य रघोर्वक्षःस्थले तस्मिन् प्रहृते सति तद्विद्धः स भूमौ विचेष्टः सन् निपपात ।

ततः सकले रघुसैन्ये हाहेति दीर्घमाक्रन्दनं कृत्वा तदन्तिकं धावति सति सपदि निमेष-मात्रादेव वज्रप्रहारव्यथामवधूयानुपमपराक्रमशाली स युवराजः स्वपतनं पश्यतां पश्यतां सर्वेषां समक्षं सहसोदतिष्ठत्,

अपि च उत्थित एव स महावीरमूर्धन्यः पुनरपीन्द्रं हन्तुकामतया यावद्धनुषि बाणं समधित्सत्, तावदेव महेन्द्रस्तं निवार्योवाच—

"हे राजकुमार ! सम्प्रति त्वदीयेनानुपमेन वीर्यातिशयेनातिशयितः प्रीतोऽस्म्यतः अमु-मश्वं वर्जयित्वा यत्तेऽभीष्टं तद् वृणीष्वेति,

रघुस्तच्छ्रुत्वा प्रत्युत्तरयन्नाह—

"हे प्रभो ! यदि हयममोच्यमेव मन्यसे, ततो विधिनैव यज्ञाङ्गकर्मणि समाप्ते सति क्रतो-र्यत्फलं भवति तेन सम्पूर्णेन मदीयो दीक्षितः पिता प्राक्कृतैकोनशतैः क्रतुभिरेव शततमस्य फलेन युज्यतां, तथा चेमं वृत्तान्तं यज्ञमण्डपस्थः स भवदीयदूतमुखादेव यथा शृणुयात् तथा विधेहीति,

इन्द्रो रघोर्नैपुण्यं बुद्ध्वा स्वगतं तं प्रशंसितवान्, श्रूयमाणं तद्वचस्तथाऽस्त्वित्युक्त्वा प्रतिशुश्रुवांश्च ।

तत इन्द्रो हयं नीत्वा स्वां पुरीममरावतीं प्रति ययौ, रघुरपि स्वां राजधानीमयोध्यां प्रति न्यवर्त्तत ।

तदागमनात्प्रागेव दिलीप इन्द्रसन्देशहरमुखात्सर्वं युद्धवृत्तान्तमश्रौषीत्, अतो राज-कुमारे रघावागते सत्येव तमतिप्रीत्या कण्ठ आलिङ्गितवान्, ततः कियत्कालानन्तरं रघवे राज्यं दत्त्वा वानप्रस्थाश्रममाशिश्रिये । इति ॥ ३ ॥

तृतीयसर्गसमाप्तिः ।

## चतुर्थः सर्गः ।

### रघोर्दिग्विजययात्रा ।

शरदृतौ सम्प्राप्ते सत्येव रघोर्दिग्विजयाय हृदि समुत्साहोऽभूत्, ततो महत् सैन्यं स्वेन सह नीत्वा प्रथमं प्राचीं दिशं प्रति ययौ, तत्रत्यान् सुह्मदेशान् वङ्गदेशांश्च विजितवान्, गङ्गा-प्रवाहस्थितद्वीपेषु स्वकीयविजयस्मारकान् स्तम्भान् स्थापितवांश्च,

ततः कपिशां नदीं समुत्तीर्य कलिङ्गदेशान् ययौ, तत्रत्यान् राज्ञोऽपि व्यजेष्ट, ततः समुद्रतटेनैव गत्वा कावेरीं समुत्तीर्णः सन् मलयाचलस्योपत्यकायां सैन्येन सह निवासं कृतवान्, ततः पाण्डुदेशाधिपतिनोपायनीकृतं मौक्तिकादि महार्घं रत्नं स्वीकृत्य मार्गे स्थितौ मलयदर्दुरौ पर्वतावप्यतिक्रम्य पश्चिमां दिशं प्रति ययौ ।

तत्रत्यांश्च राज्ञो विजित्य तत्प्रदत्तमुपायनं स्वीकृत्य त्रिकूटाद्रिं पश्यन् सन् पारसदेशानागत्य तत्रत्यान् यवनान् विजितवान्, तत्पश्चादुदीचीं दिशं प्रति जगाम, तत्रत्यान् हूणजातीयान् नृपान् जित्वा, तेभ्यः काम्बोजेभ्यश्चोपहारं गृहीतवान्, ततो हिमालयमारुह्य पर्वतीयैः प्रदत्तमुपायनीभूतममितं द्रव्यं जग्राह, ततः कैलासं पुरा रावणेनोत्तोल्योत्थापनेन पराजितं मत्वेव तत्रागत्यैव हिमालयशिखरादवतीर्णः सन् लौहित्यां नाम नदीमुत्तीर्य प्राग्ज्यौतिपपुराधिपतिं जित्वा तस्मादुपायनस्वरूपान् गजेन्द्रान् गृहीतवान्,

इत्थं चतस्रो दिशो विजित्य प्रतिनिवर्त्तमानः सन् रघुः स्वां राजधानीं प्रापत्, तथा च विश्वजिद्यज्ञं कृत्वा सर्वस्वं दक्षिणां ब्राह्मणेभ्यो दत्वा धर्मपूर्वकं राज्यपालनं कुर्वन् सन् समयं यापयामास । इति ॥ ४ ॥

चतुर्थसर्गसमाप्तिः ।

## पञ्चमः सर्गः ।

### अजस्य स्वयंवरेऽभिगमनम् ।

इत्थं विश्वजिन्नाम्नि यज्ञे स्वकीयं सर्वं कोपसमूहमृत्विग्भ्यो याचकेभ्यश्च दत्वा रघुर्मृण्मयपात्रेणैव सर्वं देहकृत्यं स्नानादिकं कुर्वन्नासीत्,

ततः कदा चिद् महर्षिवरतन्तोः शिष्यः कौत्सनामा ऋषिः प्राप्तचतुर्दशविद्यः सन् स्वगुरवे गुरुदक्षिणां दातुं द्रव्यार्थी सन् रघोः सन्निधिमाजगाम, रघुः स्वगृहमागतमतिथिं कौत्सं यथाविध्यर्घादिभिरपूजयत् । कुशलप्रश्नानन्तरं कौत्सस्तं प्राह—

"हे राजन्! भवादृशे धर्मशीले प्रजापालके राज्ञि सति प्रजाः कथं न सुखिताः स्युः, भवतो गुणा भवत्पूर्वजगुणानतिक्रम्यातिमहत्त्वपदं प्राप्ताः सन्ति, सम्प्रत्यहं भवत्सविधे स्वार्थसाधनायागतोऽस्मि, किन्तु भवदीयां वर्त्तमानामवस्थां दृष्ट्वा मया तर्क्यते—यत्-भवत्सविधेऽतः प्रागेव मदागमनं समुचितमासीदिति ।

अस्तु—यद्यपि संप्रति भवान् केवलं नाममात्रं दधानेन राज्ञा सदृशो वर्त्तमान आस्ते, तथाऽपि देवानां तृप्त्यर्थं स्वयं चन्द्रवत् क्षीणः सन्, यज्ञे याचकेषु कृतसर्वस्वदानो भवाननुपमां सुपमां प्राप्नुवन्नास्ते, उक्तं च केनचित् कविना यथा—

"मणिः शाणोल्लीढः समरविजयी हेतिनिहतो—
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः" ॥ इति ॥

अतोऽहमधुना गुरुदक्षिणाऽर्थमन्यस्य कस्य चिन्नृपस्य सविधे गच्छामीत्युक्त्वा यावत् कौत्सो गन्तुमैहत तावद् राजा रघुस्तं निषिध्यापृच्छत्—

"हे विद्वन्! कियद् धनं भवताऽपेक्ष्यते" इति।

ततः कौत्सो गुरुणा महर्षिवरतन्तुना सह प्राक् कृतां सर्वां स्वां वार्तामुक्त्वा तं रघुं चतुर्दशकोटिमितं द्रव्यमपेक्षितमस्तीति विज्ञापितवान्, तच्छ्रुत्वा रघुरपि "नाद्यावधि कश्चिदर्थी रघोः सकाशात्कदा चिदपि मनोरथमनवाप्य वदान्यान्तरं गत इत्यतो भवान् मदीयेऽस्मिन् पवित्रेऽग्न्यगारे द्वित्राणि दिनानि वसन् सन् कृपया प्रतीक्षेत यावदहं भवदर्थं साधयितुं प्रयते" इति प्रत्यवोचत, कौत्सोऽपि तथेत्युक्त्वा तत्स्वीकृतवान्।

ततो रघुः प्रातः कुबेरं प्रत्यभियातुं निश्चिकाय, ततो यावत् प्रातःकाले रथमारुरुक्षुः संस्तत्र पद स्थापयति, तावदेव भाण्डागारिकैः पुरुषैरागत्य विनम्रैः सद्भिः स निवेदितः—यद्—हे महाराज! रात्रौ कोषगृहे स्वर्णवृष्टिरभूदिति।

ततो रघुस्तत्र गत्वा तामपश्यत्, तथा सुमेरुपर्वतखण्डमिव स्थितं सम्पूर्णं स्वर्णराशिं विदुषे कौत्साय समर्पयत्, कौत्सोऽपि तस्मै पुत्रप्राप्त्याशिषं दत्वा गुरोराश्रमं प्रति जगाम।

ततः कियद्दिवसानन्तरं रघोर्महिष्यामेकं पुत्ररत्नमजायत, यस्य च "अज" इति नाम बभूव।

इत्थं क्रमेण यथासमयं शिक्षाऽऽदिकप्राप्त्यनन्तरमजो युवावस्थां प्रापत्, तथा चेन्दुमत्याः स्वयंवरे स पितुराज्ञया प्रस्थानमकरोत्।

मार्गे मतङ्गमहर्षिशापाद् गजत्वं प्राप्तं प्रियंवदं गन्धर्वं बाणेन हत्वा तस्य तद्गजयोनितः समुद्धरणं कृतवान्, ततः प्रसन्नो भूत्वा स तस्मै सम्मोहननामकमस्त्रं प्राददात्, इत्थं स विदर्भाधिपतेर्भोजस्य पुरीं प्राप, भोजोऽपि तस्य स्वागतं कृतवांस्तथा चैकस्मिन् सर्वोपकरणालङ्कृते सुन्दरे राजसदने तन्निवासं कारयामास,

ततोऽजः स्नानादिकाः सकलाः क्रियाः समाप्य विश्रामं कृतवान्, परेद्युः प्रातः काले च स्वयंवरोचितवेषभूषां परिधार्य स्वयंवरस्थं राजसमाजं प्रति प्रययौ। इति॥ ५॥

पञ्चमसर्गसमाप्तिः।

---

सर्वविधपुस्तकप्राप्तिस्थानम्
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरीज़ आफिस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी।

# रघुवंशे सर्गपञ्चकस्य विषयानुक्रमः ।

सर्गाङ्काः

१ दिनपतेः सूनोर्मनोर्वंशे दिलीपजन्म, ततस्तस्य महिष्या सुदक्षिणया सार्धम् पुत्रप्राप्त्युपायं प्रष्टुं कुलगुरोर्वसिष्ठमहर्षेराश्रमं प्रति गमनं, वसिष्ठस्य कामधेनुशापादपुत्रतां विचार्य तत्सुताया नन्दिन्याः सेवनेनैव पुत्राप्तिरित्यतो दिलीपाय नन्दिनीसेवोपदेशः ।

२ वसिष्ठाज्ञया दिलीपस्य नन्दिनीसेवनं, ततस्तस्या दिलीपभावपरीक्षां कृत्वा ततः प्रसन्नाया दिलीपाय पुत्रवरदानं, ततो वसिष्ठं सपत्नीकं प्रणम्य सपत्नीकस्य दिलीपस्य पुनरयोध्यां प्रति परावर्त्तनं, राज्ञ्या गर्भधारणञ्च ।

३ रघोर्जन्म, तत्साहाय्येन दिलीपस्यैकोनशताश्वमेधयज्ञकरणं, ततः शततमेऽश्वमेधे यज्ञे देवेन्द्रस्य हयहरणं, ततो देवेन्द्रेण सह रघोर्युद्धम्, इन्द्रस्य रघोरुपरि वज्रप्रहारः, तत्प्रहारसहनेन प्रसन्नस्य देवेन्द्रस्य रघवे हयं विनैव दिलीपस्य यज्ञसमाप्तिवरदानं, ततो दिलीपस्य रघवे राज्यं दत्वा वानप्रस्थाश्रम ग्रहणम् ।

४ राज्यं प्राप्य रघोर्दिग्विजययात्रोपक्रमः, ततः प्रथमं दिग्जिगीषया रघोः प्राचीं दिशं प्रति गमनं, तां विजित्य दक्षिणां दिशं प्रति गमनं, ततस्तद्विजयानन्तरं प्रतीचीं प्रति गमन, तां विजित्योदीचीं प्रति गमनम्, एवं सर्वा दिशो विजित्य राजधानीं प्रति निवृत्तस्य रघोर्विश्वजिद्यज्ञे सर्वस्वदानम् ।

५ रघोः सविधे चतुर्दशकोटिमितगुरुदक्षिणाऽर्थिनः कौत्सस्यागमनं, ततो मृण्मयपात्रदर्शनाद् धनप्राप्तौ निराशं परावर्त्तमानं कौत्सं निषिध्य कुबेरेण रात्रौ वृष्टिद्वारा प्रदत्तस्य स्वर्णराशेः कौत्साय प्रदानं, ततः कौत्सस्याशिषा रघोर्महिष्यामजजन्म, तस्य स्वयंवरार्थ विदर्भदेशाधिपतेर्भोजस्य राजधानीं प्रति रघोः प्रेषणम्, मार्गमध्ये शापाद् गजत्वं प्राप्तस्य प्रियंवदस्याजद्वारोद्धारः, ततो भोजोऽजागमनं श्रुत्वा स्वागतीकृत्य राजसदने तत्स्थापनं, ततो बन्दिपुत्राणां स्तुतिवचनैः सुप्तस्याजस्योत्थापनं, ततोऽजस्य स्वयंवरस्थं नृपसमाजं प्रति गमनम् ।

# विषयानुक्रमः ।

## प्रथमे सर्गे ।

इति प्रथमसर्गसमाप्तिः ॥ १ ॥

## द्वितीये सर्गे।

इति तृतीयसर्गसमाप्तिः ।

## चतुर्थे सर्गे ।

इति चतुर्थसर्गसमाप्तिः ।

## पञ्चमे सर्गे ।

इति पञ्चमसर्गसमाप्तिः ।

---


सर्वविधपुस्तकप्राप्तिस्थानम्

जयकृष्णदास हरिदास गुप्तः—

**चौखम्बा संस्कृत सीरीज़ आफिस,**

विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,

वनारस सिटी ।

श्रीः ।

# रघुवंशकाव्यम् ।

## सञ्जीविनीसुधाभ्यामभ्युपेतम् ।

### प्रथमः सर्गः

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तन्नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥
शरणं करवाणि शर्मदं ते चरणं वाणि ! चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब ! कृतार्थसार्थवाहम् ॥
वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां-
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
व्याचष्टे कालिदासीयं काव्यत्रयमनाकुलम् ॥
कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षाद्विदुर्नान्ये तु मादृशाः ॥
तथाऽपि दक्षिणावर्तनाथाद्यैः क्षुण्णवर्त्मसु ।
वयं च कालिदासोक्तिष्ववकाशं लभेमहि ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीविनी टीका तामद्योज्जीवयिष्यति ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

इह खलु सकलकविशिरोमणिः कालिदासः ( काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ) इत्याद्यालंकारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनतां, ( काव्यालापांश्च वर्जयेद् ) इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन् रघुवंशाख्यं महाकाव्यं चिकीर्षुः, चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वाद्, ( आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम् ) इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्, काव्यनिर्माणस्य विशिष्टशब्दार्थप्रतिपत्तिमूलकत्वेन विशिष्टशब्दार्थयोश्च ( शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा । अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः ) इति वायुपुराणसंहितावचनबलेन पार्वतीपरमेश्वरायत्तदर्शनात्तत्प्रतिपित्सया तावेवाभिवादयते—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥

सञ्जीविनी—वागिति। वागर्थाविवेत्येकं पदम्। *इवेन सह नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम्*। एवमन्यत्रापि द्रष्टव्यम्। वागर्थाविव शब्दार्थाविव सम्पृक्तौ नित्यसम्बद्धावित्यर्थः। नित्यसम्बद्धयोरुपमानत्वेनोपादानात्। 'नित्यः शब्दार्थसम्बन्धः' इति मीमांसकाः। जगतो लोकस्य पितरौ। माता च पिता च पितरौ। "पिता मात्रा" इति द्वन्द्वैकशेषः। 'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यमरः। एतेन शर्वशिवयोः सर्वजगज्जनकतया वैशिष्ट्यमिष्टार्थप्रदानशक्तिः परमकारुणिकत्वं च सूच्यते। पर्वतस्यापत्यं स्त्री पार्वती "तस्यापत्यम्" इत्यण्। "टिड्ढाणञ्द्वयसज्दघ्नञ्०" इत्यादिना ङीप्। पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ। परमशब्दः सर्वोत्तमत्वद्योतनार्थः। मातुरभ्यर्हितत्वादल्पाक्षरत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः। वागर्थप्रतिपत्तये शब्दार्थयोः सम्यग्ज्ञानार्थं वन्देऽभिवादये। अत्रोपमाऽलङ्कारः स्फुट एव। तथोक्तं—(स्वतः सिद्धेन भिन्नेन सम्पन्नेन च धर्मतः। साध्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमा॥) इति प्रायिकश्चोपमाऽलङ्कारः कालिदासोक्तकाव्यादौ। भूदेवताकस्य सर्वगुरोर्मगणस्य प्रयोगाच्छुभलाभः सूच्यते। तदुक्तं—(शुभदो मो भूमिमयः) इति। वकारस्यामृतबीजत्वात्प्रचयगमनादिसिद्धिः॥ १॥

प्रेम्णा प्रेमनिधेः प्रणम्य चरणाम्भोजातयुग्मं गुरो-
स्तत्कारुण्यकणानवाप्य करुणापूर्णा विमूढात्मनि।
काव्येऽस्मिन् "रघुवंश" नाम्नि ननु व्याख्यां "सुधा" ऽऽख्यामिमां
गुर्वज्ञानगरार्गलां गुरुतरां कुर्मो यदप्यक्षमाः॥

अन्वयः—"अहं कालिदासः" वागर्थाविव, सम्पृक्तौ, जगतः, पितरौ, पार्वतीपरमेश्वरौ, वागर्थप्रतिपत्तये, वन्दे॥ १॥

व्याख्या—"अहमित्यस्य कर्तृपदस्य क्रिययाऽऽक्षेपः कर्तव्यः"। वागर्थाविव=शब्दाभिधेयाविव, सम्पृक्तौ=सततमनुबद्धौ, जगतः=लोकस्य, पितरौ=मातापितरौ, पार्वतीपरमेश्वरौ=गिरिजामहेश्वरौ, वागर्थप्रतिपत्तये=शब्दार्थोभयसम्यग्ज्ञानार्थं, वन्दे=प्रणमामि। यथा वागर्थौ नित्यसम्बद्धौ तथैव लोकस्योत्पादकौ उमामहेश्वरौ, अतः शब्दार्थयोः सम्यक्तरेण ज्ञानार्थं तौ स्तुव इति भावः॥ १॥

समासादि—उच्यत इति वाग्, वाक् च अर्थश्च वागर्थौ (द्वन्द्वः) ताविव वागर्थाविव (अव्ययीभावः)। वाक् च अर्थश्च वागर्थौ (द्वन्द्वः) प्रतिपदनं प्रतिपत्तिः (स्त्री०) ज्ञानं, प्रतिपद्यतेर्ज्ञानार्थत्वाद्, वागर्थयोः प्रतिपत्तिर्वागर्थप्रतिपत्तिस्तस्यै वागर्थप्रतिपत्तये (तत्पुरुषः)। गच्छतीति जगत् तस्य जगतः (न० लिं०)। माता च पिता च पितरौ तौ पितरौ (एकशेषः)। ईशितुं शीलमस्येतीश्वरः (पुं०)। परमश्चासावीश्वरः परमेश्वरः (कर्मधारयः), पर्वतस्यापत्यं स्त्री चेत् पार्वती (स्त्री०), पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ तौ पार्वतीपरमेश्वरौ (द्वन्द्वः)॥ १॥

व्याकरणं—वागर्थाविवेत्येकं पदं यतः "इवेन सह नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वञ्चेति वक्तव्यम्" इति वार्त्तिकेन विभक्त्यलोपो नित्यसमासश्च। सम्पृक्तौ=सम्+पृची (पर्चने-ईदित्)+क्त प्रत्ययः कुत्वम् औटि रूपम्। वाग्=वच (परिभाषणे-अकारेत्)+क्विप् "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" इति क्विप् प्रत्ययो दीर्घोऽसम्प्रसारणञ्च ततः कुत्वं सौ रूपम्। प्रतिपत्तिः=प्रति+पद (गतौ-अकारेत्)+क्तिन् प्रत्ययो, भावे सौ रूपम्। जगतः=गम्लृ (गतौ—लृदित्)+अति प्रत्ययः "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" इत्युणादिसूत्रेण गमेर्जगादेशोऽतिप्रत्ययस्तस्य च शतृवद्भावो निपात्यते ङसो रूपम्। पितरौ="पिता मात्रा" इति सूत्रेणैकशेषस्तस्मान्मातृपदलोपः। वन्दे=वदि (अभिवादनस्तुत्योः-इदित्)+लट् प्रत्ययस्तस्येडादेशः "इदितो नुम् धातोः" इतीदित्वान्नुम्। पार्वती=पर्वत+अण् "तस्यापत्यम्" इत्यण् प्रत्ययो णित्वादादिवृद्धिः "टि-

इढाणञ्द्वयसजूदघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति ङीप् प्रत्ययश्च सौ रूपम् । ईश्वरः = ईश-(ऐश्वर्ये-अकारेत्)+वरच् "स्थेशभासपिसकसो वरच्" इति वरच् प्रत्ययस्ताच्छील्येऽर्थे "नेड् वशि कृति" इतीडभावः सौ रूपम् । पार्वतीपरमेश्वरौ, मातुरभ्यर्हितत्वाद् अल्पाच्क-त्वाच्च पार्वतीशब्दस्य पूर्वनिपात औटि रूपम् ॥ १ ॥

वाच्यान्तरम्—"मया" वागर्थाविव सम्पृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वन्द्येते ॥ १ ॥

कोशः—"ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः । "अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति चामरः । "अथो जगती लोको, विष्टपं भुवनं जगत्" इत्यमरः । "मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ" इत्यमरः । "अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका । आर्या दाक्षायणी चैव गिरिजा मेनकाऽऽत्मजा" इत्यमरः ॥ १ ॥

तात्पर्यार्थः—पार्वतीपरमेश्वरौ प्रसन्नौ भूत्वा मह्यं काव्यनिर्माणशक्तिं प्रदत्तामतोऽह "कालिदासनामा" कविः स्वकाव्यविषये विशिष्टशब्दार्थयोर्ज्ञानार्थं तयोरधीश्वरौ पार्वतीपरमेश्वरौ वन्दे ॥ १ ॥

भाषाऽर्थः—शब्द और अर्थ के तरह नित्य मिले हुये, संसार के माता पिता, उमा और महेश्वर को "मैं कालिदास नामक ग्रन्थकर्ता महाकवि" शब्द और अर्थ का भलीभाँति से ज्ञान होने के लिये नमस्कार करता हूँ ॥ १ ॥

संप्रति कविः स्वाहंकारं परिहरति 'क्व सूर्य'-इत्यादिश्लोकद्वयेन—

क्व ? सूर्यप्रभवो वंशः क्व ? चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥

संजीविनी—क्वेति । प्रभवत्यस्मादिति प्रभवः कारणम् । "ऋदोरप्" । "अकर्तरि च कारके संज्ञायाम्" इति साधुः । सूर्यः प्रभवो यस्य स सूर्यप्रभवो वंशः क्व ? अल्पो विषयो ज्ञेयोऽर्थो यस्याः सा मे मतिः प्रज्ञा च क्व ? । द्वौ क्वशब्दौ महदन्तरं सूचयतः । सूर्यवंशमाकलयितुं न शक्नोमीत्यर्थः । तथा च तद्विषयप्रबन्धनिरूपणं तु दूरापास्तमिति भावः । तथा हि । दुस्तरं तरितुमशक्यम् "ईषद्दुःसुषु०" इत्यादिना खल्प्रत्ययः । सागरं मोहादज्ञानादुडुपेन प्लवेन । 'उडुपं तु प्लवः कोलः' इत्यमरः । अथवा चर्मावनद्धेन यानपात्रेण । 'चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्' इति सज्जनः । तितीर्षुस्तरीतुमिच्छुरस्मि भवामि । तरतेः सन्नन्तादुप्रत्ययः । अल्पसाधनैरधिकारम्भो न सुकर इति भावः । इदं च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव । तदुक्तम्—( प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः ) इति ॥ २ ॥

अन्वयः—सूर्यप्रभवः, वंशः, क्व, अल्पविषया, "मम" मतिश्च, क्व, "अहम्" मोहाद्, उडुपेन, दुस्तरं, सागरं, तितीर्षुः, अस्मि ॥ २ ॥

व्याख्या—सूर्यप्रभवः = दिवाकरोत्पन्नः, वंशः = कुलं (सूर्यवंश इति भावः) । क्व = कुत्र, अल्पविषया = स्तोकज्ञेयार्था, (परिमितपदार्थग्रहणक्षमेति भावः) । "मम" मतिश्च = बुद्धिश्च, क्व = कुत्र, (अनयोर्महदन्तरम् अतस्तद्वंश्यचरितानुकीर्तनमशक्यमिति भावः) । "अहम्" मोहाद् = अज्ञानाद्, उडुपेन = प्लवेनः चर्म्मावनद्धयानपात्रेण वा, दुस्तरं = दुःखेनापि तरितुं शक्यं, सागरं = समुद्रं, तितीर्षुः = तरितुमिच्छुः, अस्मि = भवामि, (अल्पसाधनैरधिकारम्भो न सुकर इति भावः) ॥ २ ॥

समासादि—कस्मिन्निति क्व (अ०) । प्रभवत्यस्मादिति प्रभवः, (पुं०) सरत्याकाशे गच्छतीति सूर्य्यः (पुं०)स प्रभवो यस्य स सूर्यप्रभवः (बहुव्रीहिः) । अल्पो विषयो यस्याः साऽल्पविषया (बहुव्रीहिः) । तरितुमिच्छतीति तितीर्षति, तितीर्षतीति तितीर्षुः (पुं०) । दुःखेन

सञ्जीविनी—वागिति। वागर्थाविवेत्येकं पदम्। "इवेन सह नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम्"। एवमन्यत्रापि द्रष्टव्यम्। वागर्थाविव शब्दार्थाविव सम्पृक्तौ नित्यसम्बद्धावित्यर्थः। नित्यसम्बद्धयोरुपमानत्वेनोपादानात्। 'नित्यः शब्दार्थसम्बन्धः' इति मीमांसकाः। जगतो लोकस्य पितरौ। माता च पिता च पितरौ। "पिता मात्रा" इति द्वन्द्वैकशेषः। 'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यमरः। एतेन शर्वशिवयोः सर्वजगज्जनकतया वैशिष्ट्यमिष्टार्थप्रदानशक्तिः परमकारुणिकत्वं च सूच्यते। पर्वतस्यापत्यं स्त्री पार्वती "तस्यापत्यम्" इत्यण्। "टिड्ढाणञ्द्वयसज्दघ्नञ्०" इत्यादिना ङीप्। पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ। परमशब्दः सर्वोत्तमत्वद्योतनार्थः। मातुरभ्यर्हितत्वादल्पाक्षरत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः। वागर्थप्रतिपत्तये शब्दार्थयोः सम्यग्ज्ञानार्थं वन्देऽभिवादये। अत्रोपमाऽलङ्कारः स्फुट एव। तथोक्तं—(स्वतः सिद्धेन भिन्नेन सम्पन्नेन च धर्मतः। साध्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमा॥) इति प्रायिकश्चोपमाऽलङ्कारः कालिदासोक्तकाव्यादौ। भूदेवताकस्य सर्वगुरोर्मगणस्य प्रयोगाच्छुभलाभः सूच्यते। तदुक्तं—(शुभदो मो भूमिमयः) इति। वकारस्यामृतबीजत्वात्प्रचयगमनादिसिद्धिः॥ १॥

प्रेम्णा प्रेमनिधेः प्रणम्य चरणाम्भोजातयुग्मं गुरो-
स्तत्कारुण्यकणानवाप्य करुणापूर्णा विमूढात्मनि।
काव्येऽस्मिन् "रघुवंश" नाम्नि ननु व्याख्यां "सुधा" ऽऽख्यामिमां
गुर्वज्ञानगरार्गलां गुरुतरां कुर्मो यदप्यक्षमा.॥

अन्वयः—"अहं कालिदासः" वागर्थाविव, सम्पृक्तौ, जगतः, पितरौ, पार्वतीपरमेश्वरौ, वागर्थप्रतिपत्तये, वन्दे॥ १॥

व्याख्या—"अहमित्यस्य कर्तृपदस्य क्रिययाऽऽक्षेपः कर्तव्यः"। वागर्थाविव=शब्दाभिधेयाविव, सम्पृक्तौ=सततमनुबद्धौ, जगतः=लोकस्य, पितरौ=मातापितरौ, पार्वतीपरमेश्वरौ=गिरिजामहेश्वरौ, वागर्थप्रतिपत्तये=शब्दार्थोभयसम्यग्ज्ञानार्थं, वन्दे=प्रणमामि। यथा वागर्थौ नित्यसम्बद्धौ तथैव लोकस्योत्पादकौ उमामहेश्वरौ, अतः शब्दार्थयोः सम्यक्त्वेण ज्ञानार्थं तौ स्तुव इति भावः॥ १॥

समासादि—उच्यत इति वाग्, वाक् च अर्थश्च वागर्थौ (द्वन्द्वः) ताविव वागर्थाविव (अव्ययीभावः)। वाक् च अर्थश्च वागर्थौ (द्वन्द्वः) प्रतिपदनं प्रतिपत्तिः (स्त्री०) ज्ञानं, प्रतिपद्यतेर्ज्ञानार्थत्वाद्, वागर्थयोः प्रतिपत्तिर्वागर्थप्रतिपत्तिस्तस्यै वागर्थप्रतिपत्तये (तत्पुरुषः)। गच्छतीति जगत् तस्य जगतः (न० लि०)। माता च पिता च पितरौ तौ पितरौ (एकशेषः)। ईशितुं शीलमस्येतीश्वरः (पुं०)। परमश्चासावीश्वरः परमेश्वरः (कर्मधारयः), पर्वतस्यापत्यं स्त्री चेत् पार्वती (स्त्री०), पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ तौ पार्वतीपरमेश्वरौ (द्वन्द्व.)॥ १॥

व्याकरणं—वागर्थाविवेत्येकं पदं यतः "इवेन सह नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वञ्चेति वक्तव्यम्" इति वार्त्तिकेन विभक्त्यलोपो नित्यसमासश्च। सम्पृक्तौ=सम्+पृची (पर्चने–ईदित्)+क्त प्रत्ययः कुत्वम् औटि रूपम्। वाग्=वच (परिभाषणे–अकारेत्)+क्विप् "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" इति क्विप् प्रत्ययो दीर्घोऽसम्प्रसारणञ्च ततः कुत्वं सौ रूपम्। प्रतिपत्तिः=प्रति+पद (गतौ–अकारेत्) +क्तिन् प्रत्ययो, भावे सौ रूपम्। जगतः=गम्लृ (गतौ—ऌदित्)+अति प्रत्ययः "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" इत्युणादिसूत्रेण गमेर्जगादेशोऽतिप्रत्ययस्तस्य च शतृवद्भावो निपात्यते ङसो रूपम्। पितरौ="पिता मात्रा" इति सूत्रेणैकशेषस्तस्मान्मातृपदलोपः। वन्दे=वदि (अभिवादनस्तुत्योः–इदित्)+लट् प्रत्ययस्तस्येडादेशः "इदितो नुम् धातोः" इतीदित्वान्नुम्। पार्वती=पर्वत+अण् "तस्यापत्यम्" इत्यण् प्रत्ययो णित्वादादिवृद्धिः "टि-

इढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्करपः" इति ङीप् प्रत्ययश्च सौ रूपम् । ईश्वरः=ईश-(ऐश्वर्ये-अकारेत्)+वरच् "स्थेशभासपिसकसो वरच्" इति वरच् प्रत्ययस्ताच्छील्येऽर्थे "नेड् वशि कृति" इतीडभावः सौ रूपम् । पार्वतीपरमेश्वरौ, मातुरभ्यर्हितत्वाद् अल्पाच्कत्वाच्च पार्वतीशब्दस्य पूर्वनिपात औटि रूपम् ॥ १ ॥

वाच्यान्तरम्—"मया" वागर्थाविव सम्पृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वन्द्येते ॥ १ ॥

कोशः—"ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः । "अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैम । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति चामरः । "अथो जगती लोको, विष्टपं भुवनं जगत्" इत्यमरः । "मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ" इत्यमरः । "अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका । आर्या दाक्षायणी चैव गिरिजा मेनकाऽऽत्मजा" इत्यमरः ॥ १ ॥

तात्पर्यार्थः—पार्वतीपरमेश्वरौ प्रसन्नौ भूत्वा मह्यं काव्यनिर्माणशक्तिं प्रदत्तामतोऽहं "कालिदासनामा" कविः स्वकाव्यविषये विशिष्टशब्दार्थयोर्ज्ञानार्थं तयोरधीश्वरौ पार्वतीपरमेश्वरौ वन्दे ॥ १ ॥

भाषाऽर्थः—शब्द और अर्थ के तरह नित्य मिले हुये, संसार के माता पिता, उमा और महेश्वर को "मैं कालिदास नामक ग्रन्थकर्ता महाकवि" शब्द और अर्थ का भलीभांति से ज्ञान होने के लिये नमस्कार करता हूँ ॥ १ ॥

संप्रति कविः स्वाहंकारं परिहरति 'क्व सूर्य'—इत्यादिश्लोकद्वयेन—

**क्व ? सूर्यप्रभवो वंशः क्व ? चाल्पविषया मतिः ।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥**

संजीविनी—क्वेति । प्रभवत्यस्मादिति प्रभवः कारणम् । "ऋदोरप्" । "अकर्तरि च कारके संज्ञायाम्" इति साधुः । सूर्यः प्रभवो यस्य स सूर्यप्रभवो वंशः क्व ? अल्पो विषयो ज्ञेयोऽर्थो यस्याः सा मे मतिः प्रज्ञा च क्व ? । द्वौ क्वशब्दौ महदन्तरं सूचयतः । सूर्यवंशमाकलयितुं न शक्नोमीत्यर्थः । तथा च तद्विषयप्रबन्धनिरूपणं तु दूरापास्तमिति भावः । तथा हि । दुस्तरं तरितुमशक्यम् "ईषद्दुःसुषु॰" इत्यादिना खल्प्रत्ययः । सागरं मोहादज्ञानादुडुपेन प्लवेन । 'उडुपं तु प्लवः कोलः' इत्यमरः । अथवा चर्मावनद्धेन यानपात्रेण । 'चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्' इति सज्जनः । तितीर्षुस्तरीतुमिच्छुरस्मि भवामि । तरतेः सन्नन्तादुप्रत्ययः । अल्पसाधनैरधिकारम्भो न सुकर इति भावः । इदं च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव । तदुक्तम्—( प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः ) इति ॥ २ ॥

अन्वयः—सूर्यप्रभवः, वंशः, क्व, अल्पविषया, "मम" मतिश्च, क्व, "अहम्" मोहाद्, उडुपेन, दुस्तरं, सागरं, तितीर्षुः, अस्मि ॥ २ ॥

व्याख्या—सूर्यप्रभवः=दिवाकरोत्पन्नः, वंशः=कुलं (सूर्यवंश इति भावः) । क्व=कुत्र, अल्पविषया=स्तोकज्ञेयार्था, (परिमितपदार्थग्रहणक्षमेति भावः) । "मम" मतिश्च=बुद्धिश्च, क्व=कुत्र, (अनयोर्महदन्तरम् अतस्तद्वंश्यचरितानुकीर्तनमशक्यमिति भावः) । "अहम्" मोहाद्=अज्ञानाद्, उडुपेन=प्लवेन, चर्म्मावनद्धयानपात्रेण वा, दुस्तरं=दुःखेनापि तरितुं शक्यं, सागरं=समुद्रं, तितीर्षुः=तरितुमिच्छुः, अस्मि=भवामि, (अल्पसाधनैरधिकारम्भो न सुकर इति भावः) ॥ २ ॥

समासादि—कस्मिन्निति क्व (अ०) । प्रभवत्यस्मादिति प्रभवः, (पुं०) सरत्याकाशे गच्छतीति सूर्यः (पुं०)स प्रभवो यस्य स सूर्यप्रभवः (बहुव्रीहिः) । अल्पो विषयो यस्याः साऽल्पविषया (बहुव्रीहिः) । तरितुमिच्छतीति तितीर्षति, तितीर्षतीति तितीर्षुः (पुं०) । दुःखेन

तरितुं शक्यो दुस्तरस्तं दुस्तरम् (पुं०)। उडुनो जलात् पातीत्युडुपं तेनोडुपेन (न०लिं०) गरेण सहोत्पन्नः सगरः (ब०व्री०), तेन निर्वृत्तः सागरस्तं सागरम् (पुं०) ॥ २ ॥

व्याकरणं—क्व = किम् + अत् "किमोऽत्" इत्यत्प्रत्ययः "क्वाति" इति क्वादेशोऽव्ययत्वात्सुपो लुक्। प्रभवः = प्र + भू (सत्तायाम्) + अप् "ऋदोरप्"इत्यप् प्रत्ययो धातोर्गुणावादेशौ सौ रूपम्। सूर्यः = सृ (गतौ) + क्यप् "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" इति क्यप् प्रत्ययो निपातनादुत्वं रपरत्वं च "हलि च" इति दीर्घः सौ रूपम्। तितीर्षुः = तॄ (प्लवनसन्तरणयोः) + सन्, प्रत्ययो द्वित्वम् "उरत्" इत्यभ्यासस्यात्वं रपरोऽभ्यासलोपश्च "सन्यतः" इत्यभ्यासस्येत्वम् "ऋत इद्धातोः" इतीत्वं रपरः "हलि च" इति दीर्घस्ततः सन्नन्तात् तितीर्ष + उः "सनाशंसभिक्ष उः" इत्यु प्रत्ययः सौ रूपम्। दुस्तरं = दुस् + तॄ (प्लवनसन्तरणयोः) + खल् "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खल् प्रत्ययो गुणो रपरश्चामि रूपम्। उडुपेन = उडु + पा (रक्षणे) + कः "सुपि स्थः" इत्यत्र सुपीति योगविभागात् क प्रत्ययः, "आतो लोप इटि च" इत्याकारलोपष्टारूपम्। अस्मि + अस (भुवि-अकारेत्) + लट् प्रत्ययस्तस्य मिपि शपो लुग् अदादित्वात्। सागरं + सागर + अण् "तेन निर्वृत्तम्"इत्यण् प्रत्यय-आदिवृद्धिरमि रूपम् ॥ २ ॥

वाच्यान्तरं—सूर्यप्रभवेण वंशेन क्व "भूयते," अल्पविषयया 'मम" मत्या च क्व "भूयते" "मया" मोहादुडुपेन दुस्तरः सागरस्तितीर्षुणा भूयते ॥ २ ॥

कोशः—"सूरसूर्यार्यमादित्यप्रभाकरदिवाकराः" इत्यमरः। "स्याज्जन्महेतुः प्रभवः स्थानञ्चाद्योपलब्धये" इत्यमरः। "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः। "स्तोकाल्पक्षुल्लकाः" इत्यमरः। "विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि" इत्यमरः। "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इत्यमरः। "उडुपं तु प्लवः-कोलः" इत्यमरः। अथवा "चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्" इति सज्जनः। "सरस्वान् सागरोऽर्णवः" इत्यमरः ॥ २ ॥

तात्पर्यार्थः—सूर्यवंशस्याल्पविषयाया मम मतेश्च महत्यन्तरे सत्यपि सूर्यवंशवर्णने मदीया प्रवृत्तिश्चर्मावनद्धयानपात्रेण सागरतरणमिव हास्यविषयेति ॥ २ ॥

भाषाऽर्थः—कहाँ तो सूर्य से उत्पन्न हुवा वंश, और कहाँ थोड़े विषयों को ग्रहण करनेवाली मेरी बुद्धि, अतः उसके वर्णन करने में मैं अज्ञान से पनसुहिया डोंगी द्वारा दुस्तर सागर पार करने की इच्छा करनेवाले की भाँति हूँ ॥ २ ॥

*मन्दः(१) सन् महाकाव्यं चिकीर्षुः कविः स्वासामर्थ्यं कथयति—*

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥

संजीविनी—मन्द इति। किं च मन्दो मूढः। 'मूढाल्पापटुनिर्भाग्या मन्दाः स्युः' इत्यमरः। तथाऽपि कवियशःप्रार्थी। कवीनां यशः काव्यनिर्माणेन जातं तत्प्रार्थनाशीलोऽहं प्रांशुनोन्नतपुरुषेण लभ्ये प्राप्ये फले फलविषये लोभादुद्बाहुः फलग्रहणायोच्छ्रितहस्तो वामनः खर्व इव। 'खर्वो ह्रस्वश्च वामनः' इत्यमरः। उपहास्यतामुपहासविषयताम्। "ऋहलोर्ण्यत्" इति ण्यत्प्रत्यय। गमिष्यामि प्राप्स्यामि ॥ ३ ॥

अन्वयः—मन्दः, "तथाऽपि" कवियशःप्रार्थी, "अहं" प्रांशुलभ्ये, फले, लोभाद्, उद्बाहुः, वामनः, इव, उपहास्यतां, गमिष्यामि ॥ ३ ॥

व्याख्या—"किञ्च" मन्दः = मूढः, "तथाऽपि" कवियशःप्रार्थी = काव्यकर्तृकीर्तिकाङ्क्षी, "अहं" प्रांशुलभ्ये = उन्नतपुरुषप्राप्ये, फले = फलविषये, लोभात् = प्राप्तीच्छया, उद्बाहुः = उ-

(१) यत्रावतरणे पार्श्वद्वयम् *एतच्चिह्नेन चिह्नितं तत्र "सुधा"काररचितं ज्ञेयम्।

च्छितहस्तः, वामनः = खर्वः, इव = यथा, उपहास्यताम् = उपहासविषयतां, गमिष्यामि = प्राप्स्यामि ॥ ३ ॥

समासादि—मन्दते स्वपितीति मन्दः (पुं०)। कवयन्तीति कवयः (पुं०), तेषां यशः कवियशः (त०पु०), तत् प्रार्थयितुं शीलमस्य स कवियशःप्रार्थी (पुं०)। उपहसितुं योग्यम् उपहास्यम् ( न० लिं० ) उपहास्यस्य भाव उपहास्यता तामुपहास्यताम् (स्त्री०)। लब्धुं योग्यं लभ्यं (न० लिं०), प्रकृष्टा अंशवो यस्यासौ प्रांशुः (पुं०), तेन लभ्यं प्रांशुलभ्यं तस्मिन् प्रांशुलभ्ये (त०पु०)। उदुच्छ्रितौ बाहू यस्य स उद्बाहुः (ब० व्री०) ॥ ३ ॥

व्याकरणम्—मन्दः = मदि ( स्तुतिमोदमदस्वप्नकान्तिगतिषु–इदित् ) + अच्, इदित्वाद्धातोर्नुम् "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच् प्रत्ययः सौ रूपम्। कवयः = कवृ ( वर्णने–ऋदित् ) + णिच्प्रत्ययस्ततः कवि + इन् "सर्वधातुभ्य इन्" इत्युणादिसूत्रेण इन् प्रत्ययः "णेरनिटि" इति णिलोपो जसि रूपम्। कवियशःप्रार्थी = कवियशस् + प्र + अर्थ (उपयाच्ञायाम्–अकारेत् ) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति ताच्छील्येऽर्थे णिनिप्रत्ययः सौ रूपम्। उपहास्यम् = उप + हस ( हसने–अकारेत् ) + ण्यत्, "ऋहलोर्ण्यत्" इति ण्यत् प्रत्यय उपधावृद्धिः सौ रूपम्। उपहास्यताम् = उपहास्य + तल् "तस्य भावस्त्वतलौ" इति तल् प्रत्ययष्टाप् अमि रूपम्। गमिष्यामि = गम्लृ ( गतौ–लृदित् ) + लृट् तस्य मिपि धातोः स्यप्रत्ययस्तस्य "गमेरिट् परस्मैपदेषु" इतीडागमः । लभ्यं = डुलभष् ( प्राप्तौ–डुकाराकारषकारेत् ) + यत् "पोरदुपधात्" इति यत् प्रत्ययः सौ रूपम् ॥३॥

वाच्यान्तरम्—मन्देन कवियशःप्रार्थिना "मया" प्रांशुलभ्ये फले लोभादुद्बाहुना वामनेनेवोपहास्यता गंस्यते ॥ ३ ॥

कोशः—"मूढाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः। "धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः" इत्यमरः। "यशः कीर्तिः समज्ञा च" इत्यमरः। "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः। "खर्वो ह्रस्वश्च वामनः" इत्यमरः ॥ ३ ॥

तात्पर्यार्थः—उन्नतपुरुषप्राप्यफलस्य ग्रहणे वामनो यथोपहास्यो भवति, तथैव विशिष्टकविवर्णनीयचरितस्य रघुकुलस्य वर्णनेऽहमुपहास्यो भविष्यामीति ॥ ३ ॥

भाषाऽर्थः—कवियों के यश पाने की इच्छा करनेवाला, मन्दबुद्धि मैं हँसी को पाऊँगा, जैसे कि लंबे पुरुष के हाथ लगने योग्य फल की ओर लोभ से ऊपर हाथ किया हुआ बौना ॥ ३ ॥

मन्दश्चेत्तर्हि त्यज्यतामयमुद्योग इत्यत आह—

अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ ४ ॥

सञ्जीविनी—अथवेति । अथवा पक्षान्तरे पूर्वैः सूरिभिः कविभिर्वाल्मीक्यादिभिः कृतवाग्द्वारे कृतं रामायणादिप्रबन्धरूपा या वाक्सैव द्वारं प्रवेशो यस्य तस्मिन् । अस्मिन्सूर्यप्रभवे वंशे कुले । जन्मनैकलक्षणः सन्तानो वंशः । वज्रेण मणिवेधकसूचीविशेषेण । 'वज्रं, त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदे' इति केशवः । समुत्कीर्णे विद्धे मणौ रत्ने सूत्रस्येव मे मम गतिः सञ्चारोऽस्ति । वर्णनीये रघुवंशे मम वाक्प्रसरोऽस्तीत्यर्थः ॥ ४ ॥

अन्वयः—अथवा, पूर्वसूरिभिः, कृतवाग्द्वारे, अस्मिन्, वंशे, वज्रसमुत्कीर्णे, मणौ, सूत्रस्य, इव, मे, गतिः, अस्ति ॥ ४ ॥

व्याख्या—अथवा = पक्षान्तरे, पूर्वसूरिभिः = प्राचीनकविभिः "वाल्मीक्यादिभिः" इति यावत्, कृतवाग्द्वारे = रचितप्रबन्धात्मकवचनप्रवेशे, अस्मिन् = एतस्मिन् "सूर्यप्रभवे" इति यावद्, वंशे = कुले, वज्रसमुत्कीर्णे = मणिवेधकसूचीविशेषविद्धे, मणौ = रत्ने, सूत्रस्य =

तन्तोः, इव = यथा, मे = मम, गतिः = सञ्चारः, अस्ति = वर्तते। वर्णनीये रघुवंशे मम वाक् प्रसरोऽस्तीति भावः ॥ ४ ॥

समासादि—सुवते सूयन्ते वा सूरयः (पुं०), पूर्वे च ते सूरयः पूर्वसूरयस्तैः पूर्वसूरिभिः (कर्मधारयः)। वक्तीति वाक् (स्त्री०), सैव द्वारं वाग्द्वारं (त० पु०), कृतं वाग्द्वारं यस्य स-कृतवाग्द्वारस्तस्मिन् कृतवाग्द्वारे ( ब० व्री० ) । वज्रेण समुत्कीर्णो वज्रसमुत्कीर्णस्तस्मिन् वज्रसमुत्कीर्णे (त० पु०)। सूत्र्यतेऽनेनेति सूत्रं तस्य सूत्रस्य (न० लिं०) ॥ ४ ॥

व्याकरणं—सूरयः = पूङ् ( प्राणिप्रसवे-पित् )+क्रिः। धात्वादेः पः सः "सूङः क्रिः" इति क्रिप्रत्ययः कित्वाद् गुणनिषेधो जसि रूपम्। कृतं = डुकृञ् (करणे-डुञित्)+क्तप्रत्ययः सौ रूपम्। समुत्कीर्णः = सम्+उद्+कृ (विक्षेपे)+क्तप्रत्ययः "ॠत इद्धातोः" इती-त्वं ततो रपरत्वं "हलि च" इति दीर्घः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठात-कारस्य नत्वं ततो णत्वं सौ रूपम्। गतिः = गम्लृ (गतौ-लृदित्)+क्तिन् प्रत्ययः "अनुदा-त्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः सौ रूपम्। अस्ति = अस (भुवि-अकारेत्)+लट् प्रत्ययस्तस्य तिपि शपो लुक् ॥ ४ ॥

वाच्यान्तरम्—अथवा पूर्वसूरिभिः कृतवाग्द्वारेऽस्मिन् वंशे वज्रसमुत्कीर्णे मणौ सूत्र-स्येव मे गत्या सूयते ॥ ४ ॥

कोशः—"गीर्वाग्वाणी सरस्वती" इत्यमरः। "स्त्री द्वार्द्वारं प्रतीहारः स्याद्" इत्यमरः। "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः। "पूर्वोऽन्य-लिङ्गः प्रागाह पुम्बहुत्वेऽपि पूर्वजान्" इत्यमरः। "सङ्ख्यावान् पण्डितः कविः। धीमान् सू-रिः कृती कृष्टिर्लब्धवर्णो विचक्षणः" इत्यमरः। "रत्नं मणिर्द्वयोरश्मजातौ मुक्ताऽऽदिकेऽपि च" इत्यमरः। "वज्रं त्वस्त्री कुलिशशस्त्रयोः। मणिवेधे रत्नभेदे" इति केशवः। "सूत्राणि नरि तन्तवः" इत्यमरः ॥ ४ ॥

तात्पर्यार्थः—यथा मणिवेधकसूचीविद्धे मणौ सूत्रस्य सञ्चरणं भवति, तथैव वाल्मीक्या-दिकृतरामायणरूपप्रबन्धात्मकवचनप्रवेशेऽस्मिन् सूर्यवंशे ममापि सञ्चरणमस्तीति ॥ ४ ॥

भाषाऽर्थ—अथवा पहले के कवियों ( वाल्मीकि आदिकों ) के द्वारा वर्णन किये हुए रामायण प्रबन्धात्मक द्वार वाले, सूर्यवंश में, मणि वेधनेवाले सूचीविशेष से वेध किये हुये मणि में सूत्र की भाँति मेरी गति है ॥ ४ ॥

एवं रघुवंशे लब्धप्रवेशस्तद्वर्णनां प्रतिजानानः 'सोऽहम्' इत्यादिभिः पञ्चभिः श्लोकैः कुलकेनाह—

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५ ॥

सञ्जीविनी—स इति। सोऽहं 'रघूणामन्वयं वक्ष्ये' इत्युत्तरेण सम्बन्धः। किंविधानां रघूणा-मित्यत्रोक्तानि विशेषणानि योज्यानि। आ जन्मनः। जन्मारभ्येत्यर्थः। "आङ् मर्यादाऽभि-विध्योः" इत्यव्ययीभावः। शुद्धानाम्। सुप्सुपेति समासः। एवमुत्तरत्रापि द्रष्टव्यम्। आज-न्मशुद्धानाम्। निषेकादिसर्वसंस्कारसम्पन्नानामित्यर्थः। आफलोदयमा फलसिद्धेः कर्म येषां ते तथोक्तास्तेषाम्। प्रारब्धान्तगामिनामित्यर्थः। आसमुद्रं क्षितेरीशानाम्। सार्वभौमाणामि-त्यर्थ.। आनाकं रथवर्त्म येषां तेषाम्। इन्द्रसहचारिणामित्यर्थः। अत्र सर्वत्राडोऽभिविध्य-र्थत्वं द्रष्टव्यम्। अन्यथा मर्यादाऽर्थत्वे जन्मादिषु शुद्ध्यभावप्रसङ्गात् ॥ ५ ॥

अन्वयः—सः, अहम्, आजन्मशुद्धानाम्, आफलोदयकर्मणाम्, आसमुद्रक्षितीशानाम्, आनाकरथवर्त्मनां, "रघूणाम्, अन्वयं, वक्ष्ये", इत्युत्तरेण सम्बन्धः ॥ ५ ॥

व्याख्या—सः = मन्दः, अहं = ग्रन्थकर्ता, कालिदासकविरिति यावत्। "रघूणामन्वयं वक्ष्ये" इत्युत्तरेण सम्बन्धः। किंविधानां रघूणामित्यत्रोक्तानि विशेषणानि योज्यानि कुलकत्वाद्।

आजन्मशुद्धानां = जन्मारभ्य; निषेकादिनिखिलसंस्कारसंस्कृतानाम्; आफलोदयकर्मणाम् = फलसिद्धिपर्य्यन्तं व्यापारवताम्, आसमुद्रक्षितीशानाम् = अब्धिपर्य्यन्तं धराऽधीश्वराणां, चक्रवर्तिनामिति यावद्, आनाकरथवर्त्मनां = स्वर्गपर्य्यन्तं स्यन्दनसञ्चरणवताम् ॥ ५ ॥

समासादि—जन्मन आ, आरभ्येत्याजन्म (अव्ययीभावः), आजन्मनः शुद्धा आजन्मशुद्धास्तेषामाजन्मशुद्धानाम् (अ०भा०) । फलस्योदय इति फलोदयः (त०पु०), फलोदयमभिव्याप्येत्याफलोदयम् (अ०भा०), आफलोदयं कर्म येषान्ते, आफलोदयकर्माणस्तेषामाफलोदयकर्म्मणाम् (ब० व्री०) । क्षितेरीशाः क्षितीशाः (त० पु०), समुद्रमभिव्याप्येत्यासमुद्रम् (अ० भा०), आसमुद्रं क्षितीशाः, आसमुद्रक्षितीशास्तेषामासमुद्रक्षितीशानाम् (अ०भा०) । रथस्य वर्त्म रथवर्त्म (त० पु०), न अकं दुःखं विद्यते यत्र स नाकः (ब० व्री०), नाकमभिव्याप्य, आनाकम् (अ० भा०), आनाकं रथवर्त्म येषान्ते, आनाकरथवर्त्मानस्तेषाम् आनाकरथवर्त्मनाम् (ब० व्री०) ॥ ५ ॥

व्याकरणम्—आजन्म = आङ् + जन्मन् + ङसि "आङ् मर्य्यादाऽभिविध्योः" इत्यव्ययीभावसमासः । एवमाफलोदयादिषु समासो बोध्यः । शुद्धाः = शुध (शौचे-अकारेत्) + क्त प्रत्ययः "झषस्तथोर्धोऽधः" इति निष्ठातकारस्य धत्वं जश्त्वं जसि रूपम् । नाकः = नञ् + अकः "नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या" इति नञो नकारलोपाभावो निपातितः सौ रूपम् ॥ ५ ॥

वाच्यान्तरम्—इत्यत आरभ्य चतुर्षु श्लोकेषु योग्यताविरहाद् वाच्यान्तरं न ज्ञातव्यं, किन्त्वतः पञ्चमे श्लोके द्रष्टव्यम् ॥ ५ ॥

कोशः—"जनुर्जननजन्मानि" इत्यमरः । "फलं हेतुकृते जातीफले फलकशस्ययोः । त्रिफलायाञ्च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इति हैमः । "समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः" इत्यमरः । "धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः" इत्यमरः । "स्वामी, त्वीश्वरः पतिरीशिता । अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इत्यमरः । "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः" इत्यमरः । "याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः" इत्यमरः । "अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः" इत्यमरः ॥ ५ ॥

तात्पर्यार्थः—सोऽहं निषेकादिसंस्कारशुद्धानां प्रारब्धान्तगामिनां सार्वभौमाणां सदेहस्वर्गगामिनां "रघूणामन्वयं वक्ष्ये" इत्युत्तरत्रापि योज्यम् ॥ ५ ॥

भाषाऽर्थः—वह "मन्दबुद्धि" मैं "कालिदास", जन्म से निषेकादि संस्कारों से शुद्ध, फल की सिद्धि पर्य्यन्त कर्म को करनेवाले, समुद्रपर्यन्त पृथ्वी का शासनकरने वाले, स्वर्ग तक रथ के मार्ग वाले "रघु के वंश को कहता हूँ" यह आगे के तीन श्लोकों में भी लगाना चाहिये । कुलक होने से यहाँ से पाँचवें श्लोक में से इस अर्थका आक्षेप किया जाता है ॥५॥

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।**
**यथाऽपराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥**

संजीविनी—यथेति । विधिमनतिक्रम्य यथाविधि । "यथाऽसादृश्ये" इत्यव्ययीभावः । तथा हुतशब्देन सुप्सुपेति समासः । एवं 'यथाकामार्चित'—इत्यादीनामपि द्रष्टव्यम् । यथाविधि हुता अग्नयो यैस्तेषाम् । यथाकाममभिलाषमनतिक्रम्यार्चितार्थिनाम् । यथाऽपराधमपराधमनतिक्रम्य दण्डो येषां तेषाम् । यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधनशीलानाम् । चतुर्भिर्विशेषणैर्देवतायजनार्थिसत्कारदण्डधरत्वप्रजापालनसमयजागरूकत्वादीनि विवक्षितानि ॥६॥

अन्वयः—यथाविधिहुताग्नीनां, यथाकामार्चितार्थिनां, यथाऽपराधदण्डानां, यथाकालप्रबोधिनाम् ॥ ६ ॥

व्याख्या—यथाविधिहुताग्नीनां = विधिमनतिक्रम्य, शास्त्ररीत्येति यावत्, तर्पितपावका-

नां, यथाकामार्चितार्थिनाम् = अभिलापमनतिक्रम्य पूजितयाचकानां, यथाऽपराधदण्डानाम् = अपराधमनतिक्रम्य "अपराधानुसारेण" इति यावद्, दण्डप्रदानां, यथाकालप्रबोधिनां = कालमनतिक्रम्य "उचितसमये" इति यावद्, जागरूकाणां, "दत्तावधानानाम्" इति यावत्॥६॥

समासादि—विधिमनतिक्रम्येति यथाविधि (अ०भा०), यथाविधि हुताः, यथाविधिहुताः (अ०भा०), अङ्गन्तीत्यग्नयः (पुं०), यथाविधिहुता अग्नयो यैस्ते यथाविधिहुताग्नयस्तेषां यथाविधिहुताग्नीनाम् (ब०व्री०)। काममनतिक्रम्य यथाकामम् (अ०भा०), यथाकामम् अर्चिता यथाकामार्चिताः (अ०भा०), अर्थः प्रयोजनमस्त्येषामित्यर्थिनः (पुं०), यथाकामार्चिता अर्थिनो यैस्ते यथाकामार्चितार्थिनस्तेषां यथाकामार्चितार्थिनाम् (ब०व्री०)। अपराधनमपराधः (पुं०), तमनतिक्रम्य यथाऽपराधम् (अ०भा०), यथाऽपराधं दण्डो येषान्ते यथाऽपराधदण्डास्तेषां यथाऽपराधदण्डानाम् (ब०व्री०)। कल्यतेऽनेनेति कालः (पुं०), तमनतिक्रम्य यथाकालम् (अ०भा०), प्रकर्षेण बोद्धुं शीलमेषान्ते प्रबोधिनः (पुं०), यथाकालं प्रबोधिनो यथाकालप्रबोधिनस्तेषां यथाकालप्रबोधिनाम् (अ०भा०) ॥ ६ ॥

व्याकरणं—"यथाविधिहुताग्नीनाम्" इत्यत्र "यथाविधि" पदे "यथाऽसादृश्ये" इत्यव्ययीभावसमासः, तथा "हुत" शब्देन सह "सह सुपा" इत्यत्र "सुपा" इति योगविभागात्समासः। हुताः = हु (दानादानयोः) + क्तप्रत्ययः कित्वाद् गुणनिषेधो जसि रूपम्। अग्नयः = अगि (गतौ-इदित्) + निप्रत्यय इदित्वान्नुम् "अङ्गेर्नलोपश्च" इत्युणादिसूत्रेण निप्रत्ययो धातोर्नकारलोपश्च जसि रूपम्। एवं यथाकामार्चितार्थिनामित्यादिषु यथाकामप्रभृतिपदेषु यथाविधिसमा पदसिद्धिर्बोध्या। अर्चिताः = अर्च (पूजायाम्-अकारेत्) + क्त प्रत्यय इडागमो जसि रूपम्। अर्थिनः = अर्थ + इनिः "अत इनिठनौ" इतीनिप्रत्ययो जसि रूपम्। अपराधः = अप + राध (संसिद्धौ-अकारेत्) + घञ् "भावे" इति घञ् प्रत्ययः सौ रूपम्। कालः = कल (सङ्ख्याने-अकारेत्) + घञ् "अकर्तरि च कारके संज्ञायाम्" इति घञ् प्रत्यय उपधावृद्धिः सौ रूपम्। प्रबोधिनः = प्र + बुध (अवगमने-अकारेत्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति भाष्यसम्मतत्वादुपसर्गे सत्यपि णिनिप्रत्यय उपधागुणो जसि रूपम्॥६॥

कोशः—"विधिर्विधाने दैवेऽपि" इत्यमरः। "अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इत्यमरः। "कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितम्" इति। "इच्छामनोभवौ कामौ" इति चामरः। "स्यादर्हिते नमस्यितं नमसितमपचायितार्चितापचितम्" इत्यमरः। "वनीयको याचनको मार्गणो याचकार्थिनौ" इत्यमरः। "आगोऽपराधो मन्तुश्च" इत्यमरः। "कालो दिष्टोऽप्यनेहाऽपि समयोऽपि" इत्यमरः। "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति कोशान्तरम् ॥ ६ ॥

तात्पर्यार्थः—शास्त्ररीत्या यज्ञकर्तृणाम् अतिथिसत्कारपरायणानां दुष्टनिग्रहकराणां प्रजापालनसमये जागरूकाणाम् ॥ ६ ॥

भाषार्थः—विधिपूर्वक अग्नि में आहुति देने वाले, इच्छाऽनुसार याचकों का सम्मान करने वाले, अपराध के अनुसार दण्ड देने वाले, उचित समय पर सावधान रहने वाले ॥ ६ ॥

त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥

संजीविनी—त्यागायेति। त्यागाय सत्पात्रे विनियोगस्त्यागस्तस्मै। 'त्यागो विहापितं दानम्' इत्यमरः। संभृतार्थानां सञ्चितधनानाम्। न तु दुर्व्यापाराय। सत्याय मितभाषिणां मितभाषणशीलानाम्। न तु पराभवाय। यशसे कीर्तये। 'यशः कीर्तिः समज्ञा च' इत्यमरः। विजिगीषूणां विजेतुमिच्छूनाम्। न त्वर्थसंग्रहाय। प्रजायै संतानाय गृहमेधिनां दारपरिग्रहाणाम्। न तु कामोपभोगाय। अत्र 'त्यागाय' इत्यादिषु "चतुर्थी तदर्थार्थ०" इत्यादिना ता-

दर्थ्ये चतुर्थीसमासविधानज्ञापकाच्चतुर्थी । गृहैर्दारैर्मेधन्ते सङ्गच्छन्त इति गृहमेधिनः । 'दारेष्वपि गृहाः पुंसि' इत्यमरः । 'जाया च गृहिणी गृहम्' इति हलायुधः । 'मेधृ संगमे' इति धातोर्णिनिः । एभिर्विशेषणैः परोपकारित्वं सत्यवचनत्वं पितॄणां शुद्धत्वं च विवक्षितानि ॥७॥

अन्वयः—त्यागाय, सम्भृतार्थानां, सत्याय, मितभाषिणां, यशसे, विजिगीषूणाम्, प्रजायै, गृहमेधिनाम् ॥ ७ ॥

व्याख्या—त्यागाय = सत्पात्रे दानाय, सम्भृतार्थानां = सञ्चितधनानां, न तु दुर्व्यापारायेति भावः । सत्याय = यथार्थाय, मितभाषिणां = नाधिकभाषणशीलानां, न तु पराभवायेति भावः । यशसे = कीर्त्यै, विजिगीषूणां = विजयेच्छुकानां, नत्वर्थसङ्ग्रहायेति भावः । प्रजायै = सन्तत्यै, गृहमेधिनां = कृतदारपरिग्रहाणां, न तु कामोपभोगायेति भावः ॥ ७ ॥

समासादि—त्यजनं त्यागस्तस्मै त्यागाय (पुं०) । सम्भृता अर्था यैस्ते संभृतार्थास्तेषां-सम्भृतार्थानाम् (ब०व्री०) । सति साधु सत्यं तस्मै सत्याय (न०लि०) । मितं भाषितुं शीलमेषान्ते मितभाषिणस्तेषां मितभाषिणाम् (पुं) । विशेषेण जेतुमिच्छन्तीति विजिगीषन्ति, विजिगीषन्तीति विजिगीषवस्तेषां विजिगीषूणाम् (पुं) । प्रकर्षेण जायत इति प्रजा तस्यै प्रजायै (स्त्री०) । गर्हन्ते गृह्णन्ति वा धान्यादिकमिति गृहाः (पुं०), तैर्दारैर्मेधितुं शीलमेषां ते गृहमेधिनस्तेषां गृहमेधिनाम् (पुं०) ॥ ७ ॥

व्याकरणं—त्यागाय = त्यज (हानौ-अकारेत्) + घञ् "भावे" इति घञ् प्रत्यय उपधावृद्धिः "चजोः कु घिण्यतोः" इति कुत्वम्, अत्र "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति तादर्थ्ये चतुर्थीसमासविधानज्ञापकाच्चतुर्थी बोध्या । एवं सत्यायेत्यादिष्वपि चतुर्थी बोध्या । सम्भृताः = सम् + डुभृञ् (धारणपोषणयोः-डुञित्) + क्तप्रत्ययो जसि रूपम् । सत्याय = सत् + यत् "तत्र साधुः" इति यत् प्रत्ययो ङेरूपम् । मितम् = माङ् (माने-ङित्) + क्तप्रत्ययः "द्यतिस्यतिमास्थामित्ति किति" इति धातोरित्वं सौ रूपम् । मितभाषिणाम् = मित + भाष (व्यक्तायां वाचि-अकारेत्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति ताच्छील्येऽर्थे णिनिप्रत्यय आमि रूपम् । विजिगीषूणां = वि + जि (जये) + सन् प्रत्ययस्ततः "सन्यङोः" इति धातोर्द्वित्वमभ्यासस्य "सन् लिटोर्जेः" इति कुत्वम् "अज्झनगमां सनि" इति दीर्घोऽभ्यस्तस्य, ततः सन्नन्ताद् "विजिगीष" धातोः "सनाशंसभिक्ष उः" इत्युप्रत्यय आमि रूपम् । प्रजायै = प्र + जनी (प्रादुर्भावे-ईदित्) + डः "उपसर्गे च संज्ञायाम्" इति डप्रत्ययष्टिलोपष्टाप् ङेरूपम् । गृहैः = गृहू (गर्हणे-ऊदित्) + कः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययो भिसि रूपम् । गृहमेधिनाम् = गृह + मेधृ (सङ्गमे-ऋदित्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति ताच्छील्येऽर्थे णिनिप्रत्यय आमि रूपम् ॥ ७ ॥

कोश.—"त्यागो विहापितं दानम्" इत्यमरः । "अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः । "सत्यं तथ्यमृतं सम्यग्" इत्यमरः । "यशः कीर्तिः समज्ञा च" इत्यमरः । "प्रजा स्यात् सन्ततौ जने" इत्यमरः । "दारेषु च गृहाः पुंसि" इत्यमरः । "गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि" इति मेदिनी च ॥ ७ ॥

तात्पर्यार्थः-परोपकारिणां सत्यभाषिणां यशोधनानां पूर्वपुरुषोद्धारार्थंकृतदारपरिग्रहाणाम्॥७॥

भाषाऽर्थः—सत्पात्र में दान देने के अर्थ धन इकट्ठा करने वाले, यश के अर्थ विजय चाहने वाले, सन्तान के अर्थ विवाह करने वाले ॥ ७ ॥

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८ ॥

सञ्जीविनी—शैशव इति । शिशोर्भावः शैशवं बाल्यम् । "प्राणभृज्जातिवयोवचनोद्गात्र०" इत्यञ्प्रत्ययः । "शिशुत्वं शैशवं बाल्यम्" इत्यमरः । तस्मिन्वयस्यभ्यस्तविद्यानाम् । एतेन ब्रह्म-

चर्याश्रमो विवक्षितः। यूनो भावो यौवनं तारुण्यम्। युवादित्वादण्प्रत्ययः 'तारुण्यं यौवनं समम्' इत्यमरः। तस्मिन्वयसि विषयैषिणां भोगाभिलाषिणाम्। एतेन गृहस्थाश्रमो विवक्षितः। वृद्धस्य भावो वार्द्धकं वृद्धत्वम्। "द्वन्द्वमनोज्ञादिभ्यश्च" इति वुञ्प्रत्ययः। 'वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि' इति विश्वः। संघातार्थेऽत्र "वृद्धाच्च" इति वक्तव्यात्सामूहिको वुञ्। तस्मिन्वार्द्धके वयसि मुनीनां वृत्तिरिव वृत्तिर्येषां तेषाम्। एनेन वानप्रस्थाश्रमो विवक्षितः। अन्ते शरीरत्यागकाले योगेन परमात्मध्यानेन। 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। तनुं देहं त्यजन्तीति तनुत्यजां देहत्यागिनाम्। 'कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। "अन्येभ्योऽपि दृश्यते" इति क्विप्। एतेन भिक्षाश्रमो विवक्षितः॥८॥

अन्वयः—शैशवे, अभ्यस्तविद्यानां, यौवने, विषयैषिणाम्, वार्द्धके, मुनिवृत्तीनाम्, अन्ते, योगेन, तनुत्यजाम्॥ ८॥

व्याख्या—शैशवे = बाल्ये वयसि, अभ्यस्तविद्यानां = पठितशास्त्राणां, यौवने = तारुण्ये वयसि, विषयैषिणां = भोगकाङ्क्षिणाम्, वार्द्धके = जरायां वयसि, मुनिवृत्तीनाम् = ऋषितुल्याचरणानाम्, अन्ते = तनुत्यागसमये, योगेन = चित्तवृत्तिनिरोधेन, तनुत्यजां = शरीरत्यागिनाम्॥ ८॥

समासादि—श्यतीति शिशुः (पु०), तस्य भावः शैशवं तस्मिन् शैशवे (न०लिं०)। अभ्यस्ता विद्या यैस्तेऽभ्यस्तविद्यास्तेषाम् अभ्यस्तविद्यानाम् (ब०व्री०)। यूनो भावो यौवनं तस्मिन् यौवने (न०लिं०)। विषयमेषितुं शीलमेषान्ते विषयैषिणस्तेषां विषयैषिणाम् (पुं०) वृद्धस्य भावो वार्द्धकं (न०लिं०) तस्मिन् वार्द्धके। मन्यन्ते वेदशास्त्रार्थतत्त्वानीति मुनयः (पुं०), तेषां वृत्तिरिव वृत्तिर्येषान्ते मुनिवृत्तयस्तेषां मुनिवृत्तीनाम् (ब०व्री०)। योजनं योगः (पुं०) तेन योगेन। तनुं त्यजन्तीति तनुत्यजस्तेषां तनुत्यजाम् (पुं०)॥ ८॥

व्याकरणं—शिशुः = शो (तनूकरणे) + उः "शः कित् सन्वच्च" इत्युणादिसूत्रेण, उप्रत्ययस्तस्य किद्भावः सन्वद्भावश्च "आदेच उपदेशेऽशिति" इत्यात्वं ततो धातोर्द्वित्वं "सन्यतः" इत्यभ्यासस्येत्वम् "आतो लोप इटि च" इत्याकारलोपः सौ रूपम्। शैशवे = शिशु + अञ् "प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्" इत्यञ् प्रत्ययः "तद्धितेष्वचामादेः" इत्यादिवृद्धिः "ओर्गुणः" इति गुणोऽवादेशो ङिरूपम्। अभ्यस्ताः = अभि + असु (क्षेपणे-उदित्) + क्तप्रत्ययष्टाप् जसो रूपम्। यौवने = युवन् + अण् "हायनान्तयुवादिभ्योऽण्" इत्यण् प्रत्यय आदिवृद्धिर्ङिरूपम्। विषयैषिणां = विषय + इष (इच्छायाम्-अकारेत्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययो गुणो वृद्धिरामि रूपम्। वार्द्धके = वृद्ध + वुञ् प्रत्यय आदिवृद्धिः "युवोरनाकौ" इत्यकादेशो ङिरूपम्। मुनीनां = मनु (अवबोधने-उकारेत्) इन् "मनेरुच्च" इत्युणादिसूत्रेण इन् प्रत्ययो धातोरकारस्योत्वश्चामि रूपम्। वृत्तीनां = वृतु (वर्तने-उकारेत्) + क्तिन् प्रत्ययः कित्वाद् गुणाभाव आमि रूपम्। योगेन = युजिर् (योगे-इरित्) + घञ् "भावे" इति घञ् प्रत्यय उपधागुणः "चजोः कु घिण्यतोः" इति कुत्वं टारूपम्। तनुत्यजां = तनु + त्यज (हानौ-अकारेत्) + क्विप् "अन्येभ्योऽपि दृश्यते" इति क्विप् प्रत्यय आमि रूपम्॥ ८॥

कोशः—"शिशुत्वं शैशवं बाल्यम्" इत्यमरः। "तारुण्यं यौवनं समम्" इत्यमरः। "विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि" इत्यमरः। "वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि" इति विश्वः। "वाचंयमो मुनिः" इत्यमरः। "आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने" इत्यमरः। "योगः संनहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः। "अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः" इति, अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्" इति चामरः। "कायो देहः क्लीवपुंसोः स्त्रियां मूर्त्तिस्तनुस्तनूः" इत्यमरः॥ ८॥

तात्पर्यार्थः—बाल्ये ब्रह्मचर्य्याश्रमिणां, यौवने गृहस्थाश्रमिणां, वार्द्धके वानप्रस्थाश्रमिणां, शरीरत्यागसमये भिक्ष्वाश्रमिणाम् ॥ ८ ॥

भाषाऽर्थः—बालकपन में विद्या सीखने वाले, युवावस्था में भोग की अभिलाषा रखने वाले, बुढापे में मुनियों की तरह जीविका रखने वाले, अन्त में (शरीर त्याग करने के समय में) योग से (चित्तवृत्ति के निरोध से) शरीर त्याग करने वाले ॥ ८ ॥

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥

संजीविनी—रघूणामिति । सोऽहं लब्धप्रवेशः । तनुवाग्विभवोऽपि स्वल्पवाणीप्रसारोऽपि सन् । तेषां रघूणां गुणैस्तद्गुणैः । आजन्मशुद्ध्यादिभिः कर्तृभिः कर्णं मम श्रोत्रमागत्य चापलं चपलकर्माविमृश्यकरणरूपं कर्तुम् । युवादित्वात्कर्मण्यण् । "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इत्यनेन चतुर्थी । प्रचोदितः प्रेरितः सन् । रघूणामन्वयं तद्विषयप्रबन्धं वक्ष्ये ॥ कुलकम् ॥९॥

अन्वयः—"सः, अहं," तनुवाग्विभवः, अपि, तद्गुणैः, कर्णम्, आगत्य, चापलाय, प्रचोदितः, सन्, रघूणाम्, अन्वयं, वक्ष्ये ॥ ९ ॥

व्याख्या—"सोऽहं=लब्धप्रवेशः," सोऽहमिति पदद्वयं पञ्चमश्लोकस्थमत्राध्याहृत्य व्याख्येयः श्लोकः । तनुवाग्विभवोऽपि=स्वल्पवचनैश्वर्य्योऽपि, तद्गुणैः=रघुगुणैराजन्मशुध्यादिभिः कर्तृभिः, कर्णं=श्रोत्रम्, ममेति शेषः । आगत्य=प्राप्य, चापलाय=चैकुराय, चपलकर्म विचारमन्तरेण करणरूपं कर्तुमिति यावत् । प्रचोदितः=प्रेरितः, सन्=भवन्, रघूणां=रघुवंश्यानां राज्ञामिति यावद् । अन्वयं=वंशं, तद्विषयकप्रबन्धमिति यावद् । वक्ष्ये=अभिधास्ये ॥ ९ ॥

समासादि—रघोर्वंशे जाता रघवस्तेषां रघूणां (पुं०) । अन्वयनमन्वयस्तमन्वयम् (पुं०) वक्तीति वाक् (स्त्री०), सैव विभवो वाग्विभवः (त०पु०), तनुर्वाग्विभवो यस्यासौ तनुवाग्विभवः (ब०व्री०) । अस्तीति सन् (पुं०) । तेषां गुणास्तद्गुणास्तैस्तद्गुणैः (त०पु०) । चपलस्य कर्म चापल तस्मै चापलाय ॥ ९ ॥

व्याकरणं—रघूणां=रघु+अञ् "जनपदशब्दात्क्षत्त्रियादञ्" इत्यञ् प्रत्ययो बहुत्वे ततः 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति प्रत्ययस्य लुक् तत आमि रूपम् । अन्वयम्=अनु+इण् (गतौ–णित्)+अच् "एरच्" इत्यच्प्रत्ययो भावे आर्धधातुकत्वाद् गुणोऽयादेशो यणादेशश्चामि रूपम् । वक्ष्ये=वच् (परिभाषणे–अकारेत्)+लृट् तस्येडादेशे धातोः स्यप्रत्यये"चोः-कुः" इति कुत्वम् "आदेशप्रत्ययोः" इति सस्य षत्वं कषयोः संयोगे क्षत्वं गुणः । सन्=अस (भुवि–अकारेत्)+लट् तस्य शत्रादेशः "श्नसोरल्लोपः" इत्यकारलोप उगित्वान्नुम् संयोगान्तलोपः सौ रूपम् । आगत्य=आङ्+गम्लृ (गतौ–लृदित्)+क्त्वा प्रत्ययस्तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यप् प्रत्ययः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकमकारलोपः "ह्रस्वस्य पिति कृति तुक्" इति तुगागमोऽव्ययत्वात्सुपो लुक् । चापलाय=चपल+अण् "हायनान्तयुवादिभ्योऽण्" इत्यण् प्रत्ययो-युवादित्वात् तत आदिवृद्धिः "यस्येति च" इत्यकारलोपस्ततः "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इति तुमुनः कर्मणि चतुर्थी ङेरूपम् । प्रचोदितः=प्र+चुद (प्रेरणे–अकारेत्)+णिच्" चुरादित्वाण्णिच् प्रत्यय उपधागुणस्ततः प्र+चोदि+क्तः कर्मणि प्रत्यय इडागम. "निष्ठायां सेटि" इति णिलोपः सौ रूपम् ॥ ९ ॥

वाच्यान्तरं—तेन मया तनुवाग्विभवेनापि तद् गुणैः कर्णमागत्य चापलाय प्रचोदितेन सता, आजन्मशुद्धानामाफलोदयकर्मणामासमुद्रक्षितीशानामानाकरथवर्त्मनां यथाविधिहुताग्नीनां यथाकामार्चितार्थिनां यथाऽपराधदण्डानां यथाकालप्रबोधिनां त्यागाय सम्भृतार्थानां-

सत्याय मितभाषिणां यशसे विजिगीषूणां प्रजायै गृहमेधिनां शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजां, रघूणामन्वयो वक्ष्यते ॥५-९॥

कोशः—"सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः। "तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे" इति मेदिनी। "गीर्वाग्वाणी सरस्वती" इत्यमरः। "विभवो रैमोक्षैश्वर्ये" इति। "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागशौर्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु। शुक्लादावपि वट्यां च" इति च मेदिनी। "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इति। "चपलश्चिकुरः समौ" इति चामरः ॥ ९ ॥

तात्पर्यार्थः—नाहमल्पवचनप्रसारः स्वयं रघुवंशविषयकप्रबन्धं रचयितुमुद्यतः; किन्तु रघुकुलगुणानां प्रेरणयेति ॥ ९ ॥

भाषाऽर्थः—ऐसे रघुवंशियों के वंश को; मैं वाणी का वैभव थोड़ा होते हुये भी कान में सुनाई पड़े हुये, उन्हीं के गुणों के द्वारा विना विचार किये ही वर्णन करने के लिये; प्रेरणा किया हुआ कह रहा हूँ ॥ ९ ॥

संप्रति स्वप्रबन्धपरीक्षार्थं सतः प्रार्थयते—

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥ १० ॥

संजीविनी—तमिति। तं रघुवंशाख्यं प्रबन्धं सदसतोर्गुणदोषयोर्व्यक्तेर्हेतवः कर्तारः सन्तः श्रोतुमर्हन्ति। तथा हि। हेम्नो विशुद्धिर्निर्दोषस्वरूपं श्यामिकाऽपि लोहान्तरसंसर्गात्मको दोषोऽपि वाऽग्नौ संलक्ष्यते। नान्यत्र। तद्वदत्रापि सन्त एव गुणदोषविवेकाधिकारिणः। नान्य इति भावः ॥ १० ॥

अन्वयः—सदसद्व्यक्तिहेतवः, सन्तः, तं, श्रोतुम्, अर्हन्ति, हि, हेम्नः, विशुद्धिः, श्यामिका, अपि, वा, अग्नौ, संलक्ष्यते ॥ १० ॥

व्याख्या—सदसद्व्यक्तिहेतवः=गुणदोषविवेकविधातारः, सन्तः=सुधियः, तं=रघुवंशाभिधं प्रबन्धं, श्रोतुम्=आर्णयितुम्, अर्हन्ति=योग्या भवन्ति, हि=यतः, हेम्नः=सुवर्णस्य, विशुद्धिः=निर्दोषस्वरूपं, श्यामिकाऽपि=नीलिकाऽपि, द्रव्यान्तरसंसर्गरूपो दोषोऽपीति यावत्। वा=अथवा, अग्नौ=वह्नौ, संलक्ष्यते=संदृश्यते, नान्यत्र ॥ १० ॥

समासादि—अस्तीति सत् (न०लि०); न सद् असद् (नञ् समासः), व्यज्यतेऽनयेति व्यक्तिः (स्त्री०) सच्चासच्च सदसती (द्वन्द्वः), तयोर्व्यक्तिः सदसद्व्यक्तिः (त०पु०) तस्या हेतवः सदसद्व्यक्तिहेतवः (त०पु०)। सन्तीति सन्तः (पुं०)। हीयते हिनोति वा हेम तस्य हेम्नः (न०लि०)। अङ्गतीत्यग्निस्तस्मिन्नग्नौ (पुं०) विशेषेण शुद्धिर्विशुद्धिः (स्त्री०)। श्यामा एव श्यामिका (स्त्री०) ॥ १० ॥

व्याकरणं—सद्=अस (भुवि-अकारेत्)+लट् तस्य स्थाने शतृप्रत्ययः "श्नसोरल्लोपः" इत्यकारलोपः। असद्=नञ्+सद् "नलोपो नञः" इति नञो नकारलोपः। व्यक्तिः=वि+अञ्जू (व्यक्तिम्रक्षणकान्तिगतिषु-ऊदित्) +क्तिन् प्रत्ययः "अनिदितां हल उपधायाः-क्ङिति" इति नकारलोपः "चोः कुः" इति कुत्वं "यस्य विभाषा" इतीडभावः सौ रूपम्। श्रोतुं=श्रु (श्रवणे)+तुमुन् प्रत्ययो गुणः। अर्हन्ति=अर्ह (पूजायाम्-अकारेत्) लट् तस्य झिप्रत्ययः 'झोऽन्तः" इति झस्यान्तादेशः। हेम्नः=हि (गतौ वृद्धौ च)+मनिन् "सर्वधातुभ्यो मनिन्" इत्युणादिसूत्रेण मनिन् प्रत्यय आर्धधातुकत्वाद् गुणः "अल्लोपोऽनः" इत्यन्नोऽकारलोपो ङसो रूपम्। संलक्ष्यते=सम्+लक्ष (दर्शनाङ्कनयोः-अकारेत्)+यक्+लट्, तस्य तादेश एशादेशश्च कर्मणि यक् प्रत्ययो बोध्यः। विशुद्धिः=वि+शुध (शौचे—अकारेत्)+क्तिन् प्रत्ययो 'झषस्तथोर्धोऽधः" इति निष्ठातस्य धत्वं जश्त्वम्। श्यामिका=

श्यामा+कः+टाप् "प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः" इतीत्वं "स्वार्थे कः" इति कप्रत्ययो बोध्योऽत्र ॥ १० ॥

वाच्यान्तरं—सदसद्व्यक्तिहेतुभिः सद्भिः स श्रोतुमर्ह्यते, हि हेम्नो विशुद्धिं श्यामिकामपि वाऽग्नौ (सन्तः) संलक्षयन्ति ॥ १० ॥

कोशः—"विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः" इत्यमरः । "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" इत्यमरः । "व्यक्तिस्तु पृथगात्मता" इत्यमरः । "हेतुर्ना कारणं बीजम्" इत्यमरः । "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः । "अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इत्यमरः । 'श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिन्धुलवणे क्लीबं स्त्री सारिवौषधौ । अप्रसूताऽङ्गनायाञ्च प्रियङ्गावपि चोच्यते । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ । नीलिकायाम्" इति मेदिनी । "वा स्याद् विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः ॥ १० ॥

तात्पर्यार्थः—यथा वह्निमन्तरेण न कैश्चित् सुवर्णस्य गुणदोषौ द्रष्टुं शक्येते, तथा सन्तमन्तरेणास्मद्रचितप्रबन्धगुणदोषावपि ॥ १० ॥

भाषाऽर्थः—भले और बुरे के विचार करने वाले, पण्डित लोग उसे सुनने के लिये योग्य हैं, क्योंकि सुवर्ण की शुद्धता और श्यामता अग्नि ही में देखी जाती है ॥ १० ॥

वर्ण्य वस्तूपक्षिपति श्लोकद्वयेन—

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।**
**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११ ॥**

सञ्जीविनी—वैवस्वत इति । मनस ईषिणो मनीषिणो धीराः । विद्वांस इति यावत् । पृषोदरादित्वात्साधुः । तेषां माननीयः पूज्यः । छन्दसां वेदानाम् । 'छन्दः पद्ये च वेदे च' इति विश्वः । प्रणव ओंकार इव । महीं क्षियन्तीशत इति महीक्षितः क्षितीश्वराः । क्षिधातोरैश्वर्यार्थात्क्विप् तुगागमश्च । तेषामाद्य आदिभूतः । विवस्वतः सूर्यस्यापत्यं पुमान्वैवस्वतो नाम वैवस्वत इति प्रसिद्धो मनुरासीत् ॥ ११ ॥

अन्वयः—मनीषिणाम्, माननीयः, छन्दसाम्, प्रणवः, इव, महीक्षिताम्, आद्यः, वैवस्वतः, नाम, मनुः, आसीत् ॥ ११ ॥

व्याख्या—मनीषिणाम्=पण्डितानाम्, माननीयः=पूज्यः, अग्रणीरिति यावत्, छन्दसां=वेदानाम्, प्रणवः=ओङ्कारः, इव=यथा, महीक्षितां=धराऽधीश्वराणाम्, आद्यः=प्रथमः, वैवस्वतः=विवस्वत्पुत्रः, सूर्यपुत्र इति यावद्, नाम="वैवस्वत" इति नाम्ना प्रसिद्धः, मनुः=कश्चिद् मनुः, आसीद्=बभूव ॥ ११ ॥

समासादि—विवस्वतोऽपत्यं पुमान् वैवस्वतः(पुं०)। मानयितुं योग्यो माननीयः(पुं०)। मनस ईषा मनीषा (स्त्री०), मनीषाऽस्त्येषामिति मनीषिणस्तेषाम् मनीषिणाम् । ( पुं० )। महीं क्षियन्ति ( अधिगच्छन्ति ) इति महीक्षितस्तेषाम् महीक्षिताम् ( पुं० )। आदौ भव आद्यः (पुं०)। प्रकृष्टो नवः(स्तुतिः) प्रणवः ( पुं० ) चन्दन्तीति छन्दांसि तेषां छन्दसाम् ( न० लिं० ) ॥ ११ ॥

व्याकरणं—वैवस्वतः=विवस्वत्+अण् "तस्यापत्यम्" इत्यण् प्रत्ययो णित्वादादिवृद्धिः । माननीयः=मान ( पूजायाम्—अकारेत् )+णिच् प्रत्ययो धातुसंज्ञा ततो-मानि+अनीयर् "तव्यत्तव्यानीयरः" इत्यनीयर् प्रत्ययो "णेरनिटि" इति णिचो लोपः सौ रूपम् । ईषा=ईष ( गतिहिंसादर्शनेषु—अकारेत् ) +अप्रत्ययः "गुरोश्च हलः" इति सूत्रेण ततष्टाप् । मनीषा=मनस्=ईषा "शकन्ध्वादिषु पररूपं वाच्यम्" इति टेः पररूपम् । मनीषिणाम्=मनीषा+इनि प्रत्ययः "व्रीह्यादिभ्यश्च" इति सूत्रेणामो रूपम् । आसी-

त्=अस ( भुवि—अकारेत् ) +लङ् प्रत्ययस्तस्य तिपि, आडागमः 'अस्तिसिचोऽपृक्ते" इतीडागमः । महीक्षिताम्=मही+क्षि ( निवासगत्योः ) +क्विप् प्रत्ययः "अन्येभ्योऽपि दृश्यते" इति सूत्रेण "ह्रस्वस्य पिति कृति तुक्" इति तुगागम आमि रूपम् । आद्यः=आदि+यत् प्रत्ययः "दिगादिभ्यो यत्" इति सूत्रेण, "यस्येति च" इतीकारलोपः सौ रूपम् । प्रणवः=प्र+णु (स्तुतौ)+अप् प्रत्ययः "ऋदोरप्" इति सूत्रेण ततो धातोर्णस्य नत्वम् "उपसर्गादसमासेऽपि णोपदेशस्य" इति पुनर्णत्वं सौ रूपम् । छन्दसां=चदि ( आह्लादे—इदित् ) + असुन्, इदित्वाद्धातोर्नुम् "चदेरादेश्च छः" इत्युणादिसूत्रेणासुन् प्रत्ययो धातोरादेश्छ आमि रूपम् ॥ ११ ॥

वाच्यान्तरम्—मनीषिणां माननीयेन छन्दसां प्रणवेनेव महीक्षितामाद्येन वैवस्वतेन नाम मनुनाऽभूयत ॥ ११ ॥

कोशः—"नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः । "धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः" इत्यमरः । "राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः । "ओङ्कारप्रणवौ समौ" इत्यमरः । "छन्दः पद्ये च वेदे च" इति विश्वः ॥ ११ ॥

तात्पर्यार्थः—यथा वेदानामादिः प्रणवस्तथा राज्ञामादिर्वैवस्वतो मनुरासीत् ॥ ११ ॥

भाषाऽर्थः—पण्डितों मे पूज्य वेदों में प्रणव ( ओङ्कार ) के समान राजाओं में प्रथम "वैवस्वत" नाम से प्रसिद्ध मनु हुये ॥ ११ ॥

वर्ण्ये रघुवंशे प्रधानपुरुषस्य रघोः पितृनामकथनम् ।

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १२ ॥

सञ्जीविनी—तदिति । शुद्धिरस्यास्तीति शुद्धिमान् । तस्मिञ्छुद्धिमति तदन्वये तस्य मनोरन्वये वंशे । 'अन्ववायोऽन्वयो वंशो गोत्रं चाभिजनं कुलम्' इति हलायुधः । अतिशयेन शुद्धिमाञ्छुद्धिमत्तरः । "द्विवचनविभज्योप०" इत्यादिना तरप् । दिलीप इति प्रसिद्धो राजा इन्दुरिव राजेन्दू राजश्रेष्ठः । "उपमितं व्याघ्रादिभिः" इत्यादिना समासः । क्षीरनिधाविन्दुरिव प्रसूतो जातः ॥ १२ ॥

अन्वयः—शुद्धिमति, तदन्वये, शुद्धिमत्तरः, दिलीपः, इति, राजेन्दुः, क्षीरनिधौ, इन्दुः, इव, प्रसूतः ॥ १२ ॥

व्याख्या—शुद्धिमति=पवित्रताऽऽपन्ने, निष्कलङ्क इत्यर्थः । तदन्वये=मनुवंशे, शुद्धिमत्तरः=अतिपवित्रः, दिलीपः=दिलीपेत्याह्वः, इति=प्रसिद्धः, प्रकाशार्थकमव्ययमेतद्, राजेन्दुः=भूपचन्द्रः, अत्रेन्दोः श्रेष्ठार्थबोधकतया राजश्रेष्ठ इत्यर्थो बोध्यः । क्षीरनिधौ=दुग्धोदधौ, इन्दुः=चन्द्रः, इव=यथा, प्रसूतो=जातः, ॥ १२ ॥

समासादि=अन्वीयत इत्यन्वयः, (पुं०) तस्यान्वयस्तदन्वयस्तस्मिंस्तदन्वये (त० पु०) शोधनं शुद्धिः,(स्त्री०) साऽस्त्यस्मिन्नस्य वेति शुद्धिमांस्तस्मिन् शुद्धिमति (पुं०) । अयमनयोरतिशयेन शुद्धिमानिति शुद्धिमत्तरः (पुं०) उनत्तीतीन्दुः, (पुं०) राजत इति राजा (पुं०) स इन्दुरिवेति राजेन्दुः । (उ० स०) निधीयतेऽस्मिन्निति निधिः, (पुं०) क्षीरस्य निधिः क्षीरनिधिस्तस्मिन् क्षीरनिधौ (त० पु०) ॥ १२ ॥

व्याकरणम्—अन्वयः=अनु+इण् (गतौ-णित्)+अच्, "एरच्" इत्यच् प्रत्ययो बाहुलकात् कर्मणि धातोर्गुणायादेशौ ततो यणादेशः सौ रूपम् । शुद्धिः=शुध (शौचे-अकारेत्) +क्तिन्,प्रत्ययः स्त्रियां कित्वादुपधागुणाभावः, "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं ततः पूर्वस्य जश्त्वं सौ रूपम् । शुद्धिमति=शुद्धि+मतुप् "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् प्रत्ययो ङिरूपम् । प्रसूतः=प्र=षूङ् (प्राणिगर्भविमोचने-ङित्)=क्तः, धात्वादेः षः सः "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्मणोऽविवक्षया कर्त्तरि क्त-

प्रत्ययः क्त्वाद् गुणाभावः सौ रूपम् । शुद्धिमत्तरः = शुद्धिमत् = तरप् "द्विवचनविभज्योपपदे तरबीयसुनौ" इति तरप् प्रत्ययः सौ रूपम् । इन्दुः = उन्दी (क्लेदने-ईदित्) + उः "उन्देरिच्चादेः" इत्यौणादिक उप्रत्ययो धातोरादेरित्वं सौ रूपम् । राजा = राजृ (दीप्तौ-ऋदित्) + कनिन् "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इत्यौणादिकः कनिन् प्रत्ययस्ततः सौ रूपम् । राजेन्दुः = राजन्-सु + इन्दु-सु "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्युपमितसमासः "सुपो धातुप्रातिपदिकयोः" इति सुपो लुक् ततः समासत्वात् प्रतिपदिकसंज्ञा सौ रूपम् । निधिः = नि + डुधाञ् (धारणपोषणयोः-डुजित्) + किः "उपसर्गे घोः किः" इति किप्रत्ययः "आतो लोप इटि च" इत्याकार लोपः सौ रूपम् ॥ १२ ॥

वाच्यान्तरं—शुद्धिमति तदन्वये शुद्धिमत्तरेण दिलीपेनेति राजेन्दुना क्षीरनिधाविन्दुनेव प्रसूतेनाभावि ॥ १२ ॥

कोशः—"वंशोऽन्ववायः सन्तानः" इति । "राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति । "हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इति । "सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इति । अत्रादिपदेनेन्दोरपि श्रेष्ठार्थबोधकत्वेन ग्रहणं बोध्यम् । "दुग्धं क्षीरं पयः समम्" इति । "इति हेतुप्रकरणप्रकाशादिसमाप्तिषु" इति । "व वा यथातथैवैवं साम्ये" इति चामराः ॥ १२ ॥

तात्पर्यार्थः—यथा क्षीरनिधाविन्दुर्जातस्तथा मनुवंशे दिलीपो जातः ॥ १२ ॥

भाषाऽर्थः—पवित्र उन "वैवस्वत" मनु के वंश में, अतिपवित्र, राजाओं में चन्द्र (अर्थात्-श्रेष्ठ) "दिलीप" इस नाम से प्रसिद्ध, क्षीरसमुद्र में चन्द्रमा के समान उत्पन्न हुये ॥ १२ ॥

'व्यूढ' इत्यादित्रिभिः श्लोकैर्दिलीपं विशिनष्टि—

> व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
> आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ १३ ॥

सञ्जीविनी—व्यूढेति । व्यूढं विपुलमुरो यस्य स व्यूढोरस्कः । "उरःप्रभृतिभ्यः कप्" इति कप्प्रत्ययः । "व्यूढं विपुलं भद्रं स्फारं समं वरिष्ठं च" इति यादवः । वृषस्य स्कन्ध इव स्कन्धो यस्य स तथा । "सप्तम्युपमान०" इत्यादिनोत्तरपदलोपी बहुव्रीहिः । शालो वृक्ष इव प्रांशुरुन्नतः शालप्रांशुः । 'प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः' इति यादवः । 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः । महाभुजो महाबाहुः । आत्मकर्मक्षमं स्वव्यापारानुरूपं देहमाश्रितः प्राप्तः क्षात्रः क्षत्रसंबन्धी धर्म इव स्थितः । मूर्तिमान्पराक्रम इव स्थित इत्युत्प्रेक्षा ॥ १३ ॥

अन्वयः—व्यूढोरस्कः, वृषस्कन्धः, शालप्रांशुः, महाभुजः, आत्मकर्मक्षमं, देहम्, आश्रितः, क्षात्रः, धर्मः, इव, (स्थितः) ॥ १३ ॥

व्याख्या—व्यूढोरस्कः = विपुलवक्षःस्थलः, वृषस्कन्धः = वृषभांसः, शालप्रांशुः = शालवृक्ष इव उन्नतः, महाभुजः = दीर्घबाहुः, आजानुबाहुरिति यावत् । आत्मकर्मक्षमं = स्वकार्यसाधनसमर्थं, देहं = शरीरम्, आश्रितः = अधिगतः, क्षात्रः = क्षत्रसम्बन्धी, धर्मः = स्वभावः, इव = यथा, स्थितः, मूर्तिमान् क्षत्रियधर्मः पराक्रम इव स्थित इत्युत्प्रेक्षा ॥ १३ ॥

समासादि—व्यूढमुरो यस्य स व्यूढोरस्कः (ब० व्री०) । वृषस्य स्कन्ध इव स्कन्धो यस्य स वृषस्कन्धः (ब० व्री०) । प्रकृष्टा अंशवोऽस्यासौ प्रांशुः (पुं०) शाल इव प्रांशुः शालप्रांशुः (त० पु०) । महान्तौ भुजौ यस्य स महाभुजः (ब० व्री०) । अततीत्यात्मा (पुं०) तस्य कर्म, आत्मकर्म (त० पु०) तस्मिन् क्षम आत्मकर्मक्षमस्तम् आत्मकर्मक्षमं (त० पु०) । क्षतस्त्रायत इति क्षत्रः (पु० लिं०) क्षत्रस्यायं क्षात्रः (पुं०) ॥ १३ ॥

व्याकरणं—व्यूढं = वि + वह (प्रापणे—अकारेत्) + क्तप्रत्ययो "वचिस्वपियजादीनां किति" इति सम्प्रसारणं "हो ढः" इति ढत्वं "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं-

ष्टुत्वं ढलोपः "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घः सौ रूपम् । व्यूढोरस्कः = "उरः प्रभृतिभ्यः कप्" इति बहुव्रीहिसमासान्तः कप् प्रत्ययः । आत्मनः = अत (सातत्यगमने-अकारेत्)+मनिण् "सातिभ्यां मनिन्मनिणौ" इत्युणादिसूत्रेण मनिण् प्रत्यय उपधावृद्धिर्ङसोरूपम् । क्षत्रः = क्षत्+त्रैङ् (पालने-ङित्)+कः, अनैमित्तिकत्वेनान्तरङ्गत्वादादौ "आदेच उपदेशेऽशिति" इत्यात्वं ततः "आतोऽनुपसर्गे कः" इति कप्रत्ययः "आतो लोप इटि च" इत्याकारलोपः । क्षात्रः = क्षत्र+अण् "तस्येदम्" इत्यण् प्रत्यय आदिवृद्धिः । आश्रितः + आङ्+श्रिञ् (सेवायां-ञित्)+क्तप्रत्ययः "द्वितीयाश्रित" इत्यादिनिर्देशात् कर्त्तरि "श्र्युकः किति" इतीण्निषेधः ॥ १३ ॥

वाच्यान्तरं—व्यूढोरस्केन वृषस्कन्धेन शालप्रांशुना महाभुजेनात्मकर्म्मक्षमं देहमाश्रितेन क्षात्रेण धर्म्मेणास्थायि ॥ १३ ॥

कोशः—"व्यूढं विपुलं भद्रं स्फारं समं वरिष्ठञ्च" इति यादवः । "स्कन्धो भुजशिरोंऽसोऽस्त्री" इत्यमरः । "प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः" इति यादवः । "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः । अथवा "यः पद्मलोचनच्छत्रध्वजवज्राङ्किताङ्घ्रिकः । चतुर्हस्तः स्वहस्तेन शालप्रांशुः स उच्यते" इति च । "भुजबाहू प्रवेष्टो दोः स्यात्" इत्यमरः । "कायो देहः क्लीबपुंसोः स्त्रियां मूर्त्तिस्तनुस्तनूः" इत्यमरः ॥ १३ ॥

तात्पर्यार्थः—मूर्त्तिमान् क्षात्रधर्मः पराक्रम इव दिलीपः स्थितः ॥ १३ ॥

भाषाऽर्थः—चौड़ी छाती वाले, वैल के कन्धे के समान कन्धे वाले, साल सरीखे ऊँचे, लम्बी भुजा वाले, अपने काम के करने में समर्थ देह को धारण किये हुये, जैसे क्षत्रियों का धर्म्म पराक्रम हो, उसके समान दिलीप हुये ॥ १३ ॥

**सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना ।**
**स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥ १४ ॥**

सञ्जीविनी—सर्वेति । सर्वातिरिक्तसारेण सर्वेभ्यो भूतेभ्योऽधिकबलेन । 'सारो बले स्थिरांशे च' इत्यमरः । सर्वाणि भूतानि तेजसाऽभिभवतीति सर्वतेजोऽभिभावी तेन । सर्वेभ्य उन्नतेनात्मना शरीरेण 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति विश्वः । मेरुरिव । उर्वीं क्रान्त्वाऽऽक्रम्य स्थितः । मेरावपि विशेषणानि तुल्यानि । ( अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ ) इति मनुवचनाद्राज्ञः सर्वतेजोऽभिभावित्वं ज्ञेयम् ॥ १४ ॥

अन्वयः—सर्वातिरिक्तसारेण, सर्वतेजोऽभिभाविना, सर्वोन्नतेन, आत्मना, मेरुः, इव, उर्वीं, क्रान्त्वा, (स्थितः) ॥ १४ ॥

व्याख्या—सर्वातिरिक्तसारेण = अशेषप्राणिसमधिकबलेन, सर्वतेजोऽभिभाविना = समस्तप्रभावाभिभवकारिणा, स्वप्रभावेण सकलजनाभिभवकारिणेति भावः । सर्वोन्नतेन = निःशेषोच्छ्रितेन, आत्मना = शरीरेण, मेरुः = सुमेरुः, इव = यथा, उर्वीं = वसुन्धरां, क्रान्त्वा = आक्रम्य, स्थितः = स्थितवान् ॥ १४ ॥

समासादि—सरतीति सारः (पुं०), सर्वेभ्योऽतिरिक्तः सर्वातिरिक्तः (त० पु०) सर्वातिरिक्तः सारो यस्य स सर्वातिरिक्तसारस्तेन सर्वातिरिक्तसारेण (ब० व्री०) सर्वेषां तेजांसि सर्वतेजांसि (त० पु०) तान्यभिभवितुं शीलमस्य स सर्वतेजोऽभिभावी तेन सर्वतेजोऽभिभाविना । सर्वेभ्य उन्नतः सर्वोन्नतस्तेन सर्वोन्नतेन (त० पु०) । ऊर्णोतीत्युर्वी तामुर्वीम् । (स्त्री०) । अततीत्यात्मा तेनात्मना (पुं०) मिनोति प्रक्षिपति ज्योतींषि, उच्चत्वादिति मेरुः (पुं०) ॥ १४ ॥

व्याकरणम्—अतिरिक्तः = अति+रिचिर् (विरेचने-इरित्)+क्तप्रत्ययः कुत्वम् । सारः = सृ (गतौ)+घञ् "सृ स्थिरे" इति घञ् प्रत्ययो वृद्धिः । सर्वतेजोऽभिभाविना = सर्वतेजस्+अभि+भू (सत्तायां)+णिनिः = "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्र-

त्ययो वृद्धिरावादेशष्टारूपम् । स्थितः = ष्ठा (गतिनिवृत्तौ) + क्तः, धात्वादेः षस्य सत्वं "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्तरि क्तप्रत्ययः "द्यतिस्यतिमास्थामित्ति किति" इति धातोराकारस्येत्वम् । उन्नतः = उद् + णम (प्रह्वत्वे शब्दे-अकारेत्) + क्तप्रत्ययो धात्वादेर्णस्य नत्वम् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः । उर्वीम् = ऊर्णुञ् (आच्छादने-ञित्) + उः "महति ह्रस्वश्च" इत्युणादिसूत्रेण, उप्रत्ययो नुलोपो ह्रस्वश्च ततो "वोतो गुणवचनात्" इति ङीप् यणादेशः । क्रान्त्वा = क्रमु (पादविक्षेपे-उदित्) + क्त्वाप्रत्यय इडभावपक्षे "क्रमश्च क्त्वि" इति दीर्घोऽनुस्वारपरसवर्णौ । मेरुः = डुमिञ् (प्रक्षेपणे-डुञित्) + रुः "मिपीभ्यां रुः" इत्युणादिसूत्रेण रुप्रत्ययो गुणः । आत्मना = अत (सातत्यगमने-अकारेत्) + मनिण् "सातिभ्यां मनिन्मनिणौ" इत्युणादिसूत्रेण मनिण् प्रत्यय उपधावृद्धिष्टारूपम् ॥ १४ ॥

वाच्यान्तरं—सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना सर्वोन्नतेनात्मना मेरुणेव (तेन) उर्वी क्रान्त्वा स्थितेनाभावि ॥ १४ ॥

कोशः—"अथ समं सर्वम्। विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्" इत्यमरः । "अतिरिक्तः समधिकः" इत्यमरः । "सारो बले स्थिरांशे च" इत्यमरः । "तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि" इत्यमरः । "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः । "सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा" इत्यमरः। "मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः" इत्यमरः । "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति विश्वः ॥ १४ ॥

तात्पर्यार्थः—यथा सकलपर्वतापेक्षयाऽधिकसारः स्वतेजसाऽन्याभिभवकर्त्ता सकलपर्वतापेक्षयोन्नतो मेरुः पर्वतो भूमिमाक्रम्य स्थितस्तथैव दिलीपोऽपीति ॥ १४ ॥

भाषाऽर्थः—सबसे अधिक बलवान्, (मेरुपक्षमें सबसे अधिक स्थिर), सभी लोगों के तेज को अपने प्रभावसे (मेरु पक्षमें, कान्तिसे) नीचा दिखाने वाले, सब से अधिक ऊंचे शरीर से मेरु पर्वत के समान पृथ्वी को दबा कर बैठे हुए ॥ १४ ॥

**आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।**
**आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥ १५ ॥**

सञ्जीविनी—आकारेति । आकारेण मूर्त्या सदृशी प्रज्ञा यस्य सः । प्रज्ञया सदृशागमः-प्रज्ञाऽनुरूपशास्त्रपरिश्रमः। आगमैः सदृश आरम्भः कर्म यस्य स तथोक्तः । आरभ्यत इत्यारम्भः कर्म । तत्सदृश उदयः फलसिद्धिर्यस्य स तथोक्तः ॥ १५ ॥

अन्वयः—आकारसदृशप्रज्ञः, प्रज्ञया, सदृशागमः, आगमैः, सदृशारम्भः, आरम्भसदृशोदयः, "स दिलीप आसीदिति शेषः ॥ १५ ॥

व्याख्या—आकारसदृशप्रज्ञः = आकृतितुल्यबुद्धिः, प्रज्ञया = मत्या, सदृशागमः = अनुरूपशास्त्रः, तस्य दिलीपस्य यादृशी तीक्ष्णा मतिरासीत् तादृशः शास्त्रेषु परिश्रमोऽपीति भावः । आगमैः = शास्त्रैः, राजनीत्यादिभिरिति यावत् । सदृशारम्भः = समानोद्घातः, नीतिशास्त्राद्यनुकूलसकलकार्यारम्भ इति भावः । आरम्भसदृशोदयः = उपक्रमानुरूपफलसिद्धिः, प्रारब्धकर्मतुल्यफलसिद्धिरिति भावः । स दिलीप आसीदिति शेषः ॥ १५ ॥

समासादि—प्रकृष्टं ज्ञानं प्रज्ञा, (स्त्री०), आकरणमाकारः (पुं०) आकारेण सदृशी, आकारसदृशी (त० पु०) आकारसदृशी प्रज्ञा यस्यासौ आकारसदृशप्रज्ञः (ब० व्री०) । सदृशआगमो यस्य स सदृशागमः । आरम्भणमारम्भः (पुं०) सदृश आरम्भो यस्य स सदृशारम्भः (ब० व्री०) । आरम्भेण सदृश आरम्भसदृशः (त०पु०), आरम्भसदृश उदयो यस्य स आरम्भसदृशोदयः ॥ १५ ॥

व्याकरणम्—आकारेण = आङ् + डुकृञ् (करणे-डुञित्) + घञ् प्रत्ययो भावे वृद्धिष्टा-

रूपम् । प्रज्ञा = प्र + ज्ञा ( अवबोधने ) + अङ् "आतश्चोपसर्गे" इत्यङ् प्रत्ययो भावे "आतो लोप इटि च" इत्याकारलोपः + टाप् । आरम्भः = आङ् + रभ (राभस्ये-अकारेत्) + घञ् प्रत्ययो भावे "रभेरशब्लिटोः" इति नुम् तस्यानुस्वारपरसवर्णौ । आकारसदृशप्रज्ञः = आकारसदृशी + प्रज्ञा "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति पुंवद्भावः "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वः ॥ १९ ॥

वाच्यान्तरम्—आकारसदृशप्रज्ञेन प्रज्ञया सदृशागमेनागमैः सदृशारम्भेणारम्भसदृशोदयेन "दिलीपेनाभावि" ॥ १९ ॥

कोशः—"आकारविङ्गिताकृती"इत्यमरः । "वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृग्" इत्यमरः । "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः"इत्यमरः । "प्रक्रमः स्यादुपक्रमः । स्यादभ्यादानमुद्घात आरम्भः" इत्यमरः ॥ १९ ॥

तात्पर्यार्थः—तस्य राज्ञो दिलीपस्य यथाऽऽकारोऽत्युन्नतस्तथा बुद्धिरपि महती, यथा च बुद्धिस्तथा शास्त्रेषु परिश्रमः, यथा शास्त्रानुसारिणी क्रिया, तथा क्रियाऽनुरूपा फलसिद्धिरासीत् ॥ १९ ॥

भाषाऽर्थः—आकार के सदृश बुद्धिवाले, बुद्धि के सदृश शास्त्र का अभ्यास करने वाले, शास्त्र के अनुरूप कर्म प्रारम्भ करने वाले, प्रारम्भ किये हुये कर्म के अनुरूप फल सिद्धि प्राप्त करने वाले (दिलीप थे) ॥ १९ ॥

*तस्य भयङ्करत्वं मनोरमत्वञ्च दर्शयति—*

**भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।**
**अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ १६ ॥**

सञ्जीविनी—भीमेति । भीमैश्च कान्तैश्च नृपगुणै राजगुणैस्तेजःप्रतापादिभिः कुलशीलदाक्षिण्यादिभिश्च स दिलीप उपजीविनामाश्रितानाम् । यादोभिर्जलजीवैः 'यादांसि जलजन्तवः' इत्यमरः । रत्नैश्चार्णव इव । अधृष्योऽनभिभवनीयः । अभिगम्य आश्रयणीयश्च बभूव ॥१६॥

अन्वयः—भीमकान्तैः, नृपगुणैः, सः, उपजीविनां, यादोरत्नैः, अर्णवः, इव, अधृष्यश्च, अभिगम्यश्च, बभूव ॥ १६ ॥

व्याख्या—भीमकान्तैः = भयङ्करमनोज्ञैः, नृपगुणैः = राजगुणैः, तेजःप्रतापदयादाक्षिण्यादिभिरिति यावत् । सः = दिलीपः, उपजीविनाम् = आश्रितानां, यादोरत्नैः = जलजन्तुमणिभिः, अर्णवः = समुद्रः, इव = यथा, अधृष्यश्च = अनभिभवनीयश्च, अभिगम्यश्च = सेवनीयश्च, बभूव = अभूत् ॥ १६ ॥

समासादि—भीमाश्च कान्ताश्च भीमकान्ताः (द्वन्द्वः) तैर्भीमकान्तैः । नॄन्पान्तीति नृपाः (पुं०) तेषां गुणा नृपगुणास्तैर्नृपगुणैः (त० पु०) उपजीवितु शीलमस्त्येषामित्युपजीविनस्तेषामुपजीविनाम् (पुं०) । धर्षितुं योग्यो धृष्यो न धृष्योऽधृष्यः (न० त०) । अभिगन्तुं योग्य इत्यभिगम्यः (पुं०) । यादांसि च रत्नानि च यादोरत्नानि (द्वन्द्वः) तैर्यादोरत्नैः । अर्णांसि सन्त्यस्मिन्नित्यर्णवः (पुं०) ॥ १६ ॥

व्याकरणम्—भीमकान्तैरित्यत्र, कान्ताः = कमु (कान्तौ-उदित्) क्तप्रत्ययः "अनुदात्तस्य क्विझलोः क्ङिति" इत्युपधादीर्घः । नृपगुणैरित्यत्र नृपाणां = नृ + पा (रक्षणे) + कः "आतोऽनुपसर्गे कः" इति कप्रत्ययः "आतो लोप इटि च" इत्याकारलोप आमि रूपम् । बभूव = भू (सत्तायां) + लिट् तस्य तिपो णलि "भुवो वुग् लुङ्लिटोः" इति वुगागमो धातोर्द्वित्वमभ्यासहलो लोपः "ह्रस्वः" इति ह्रस्वः "भवतेरः" इत्यभ्यासस्यात्वं "अभ्यासे चर्च" इति जश्त्वम् । उपजीविनाम् = उप + जीव (प्राणधारणे-अकारेत्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययो भाष्यसम्मतत्वादुपसर्गेऽप्युपपदे । धृष्यः = ञिधृषा (प्रा-

गल्भ्ये—ञिकाराकारेत्)+क्यप् "ऋदुपधाच्चाक्लृपि चृतेः" इति क्यप् प्रत्ययः कित्वाद् गुणनिषेधः। अधृष्यः=नञ्+धृष्यः "नलोपो नञः" इति नञो नकारलोपः। अभिगम्यः=अभि+गम्लृ (गतौ—लृदित्)+यत्- "पोरदुपधात्" इति यत् प्रत्ययः। अर्णवः=अर्णस्+वप्रत्ययः "अर्णसो लोपश्च" इति वप्रत्ययः सलोपश्च ॥ १६ ॥

वाच्यान्तरम्—भीमकान्तैर्नृपगुणैरुपजीविनां तेनाधृष्येन चाभिगम्येन च यादोरत्नैरर्णवेनेव बभूवे ॥ १६ ॥

कोशः—"दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्" इत्यमरः। "कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्" इत्यमरः। "मौर्व्यां द्रव्याश्रिते सत्वशौर्यसंध्यादिके गुणः" इत्यमरः। "राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः। "यादांसि जलजन्तवः" इत्यमरः। "रत्नं मणिर्द्वयोरश्मजातौ मुक्ताऽऽदिकेऽपि च" इत्यमरः। "सरस्वान् सागरोऽर्णवः" इत्यमरः ॥ १६ ॥

तात्पर्यार्थः—स दिलीपो जलजन्तुरत्नादिभिः समुद्र इव तेजःप्रतापादिभिः कुलशीलदाक्षिण्यादिभिश्च, सर्वराजगुणैराश्रितानामनभिभवनीयः सेवनीयश्च बभूव ॥ १६ ॥

भाषाऽर्थः—भयानक और मनोरम राजगुणों (तेजः, प्रताप, आदि और दया दाक्षिण्यादि) के कारण से आश्रितों को वह राजा दिलीप, जलजन्तु और रत्नों के कारण से समुद्र के समान दूर रहने योग्य और सेवाकरने योग्य हुये ॥ १६ ॥

*तस्य प्रजा राजनिदेशवशवर्त्तिन्य इत्याह—*

**रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम् ।**
**न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ १७ ॥**

सञ्जीविनी—रेखेति। नियन्तुः शिक्षकस्य सारथेश्च तस्य दिलीपस्य संबन्धिन्यो नेमीनां चक्रधाराणां वृत्तिरिव वृत्तिर्व्यापारो यासां ताः 'चक्रधारा प्रधिर्नेमिः' इति यादवः। 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्' इत्यमरः। प्रजाः। आ मनोः, मनुमारभ्येत्यभिविधिः। पदद्वयं चैतत्। समासस्य विभाषितत्वात्। क्षुण्णादभ्यस्तात्प्रहताच्च वर्त्मन आचारपद्धतेरध्वनश्च परमधिकम्। इतस्तत इत्यर्थः। रेखा प्रमाणमस्येति रेखामात्रंरेखाप्रमाणम्। ईषदपीत्यर्थः। "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इत्यनेन मात्रच्प्रत्ययः। परशब्दविशेषणं चैतत्। न व्यतीयुर्नातिक्रान्तवत्यः। कुशलसारथिप्रेषिता रथनेमय इव तस्य प्रजाः पूर्वक्षुण्णमार्गं न जहुरिति भावः॥ १७ ॥

अन्वयः—नियन्तुः, तस्य, नेमिवृत्तयः, प्रजाः, आ, मनोः, क्षुण्णाद्, वर्त्मनः, परं, रेखामात्रम्, अपि, न, व्यतीयुः ॥ १७ ॥

व्याख्या—नियन्तुः=शिक्षकस्य—सारथेश्च, तस्य=दिलीपस्य, नेमिवृत्तयः=चक्रधाराव्यापाराः, प्रजाः=जनाः, आ मनोः=मनुमारभ्य, क्षुण्णाद्=अभ्यस्तात्—प्रहताच्च, वर्त्मनः=आचारपद्धतेः—मार्गाच्च, परम्=अधिकम्, इतस्तत इत्यर्थः। रेखामात्रं=रेखाप्रमाणम्, अपि, न=नहि, व्यतीयुः=व्यतिक्रान्तवत्यः। कुशलसारथिप्रेरिता रथनेमय इव तस्य प्रजाः पूर्वक्षुण्णमार्गं न जहुरिति भावः ॥ १७ ॥

समासादि—रेखा प्रमाणमस्येति रेखामात्रम् (न० लि०)। प्रकर्षेण जायन्ते प्रजाः (स्त्री०) नियच्छतीति नियन्ता तस्य नियन्तुः (पुं)। नेमीनां वृत्तिरिव वृत्तिर्यासां ता नेमिवृत्तयः (त० पु०) ॥ १७ ॥

व्याकरणं—रेखामात्रं=रेखा+मात्रच् "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इत्यनेन मात्रच् प्रत्ययः प्रमाणेऽर्थे सौ रूपम्। क्षुण्णाद्=क्षुद (सञ्चूर्णने—अकारेत्)+क्तप्रत्ययः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति दकारतकारयोर्द्वयोर्नत्वं ततो णत्वं ङसे रूपम्। आमनो-

रित्यत्र पदद्वयम् "आङ्मर्य्यादाऽभिविध्योः" इति सूत्रस्य वैभाषिकत्वाद् । व्यतीयुः = वि + अति + इण् (गतौ—णित्) + लिट्प्रत्ययस्तस्य झेरुसादेशे धातोर्द्वित्वमभ्यासस्य "दीर्घ इणः किति" इति दीर्घः "इणो यण्" इति यणादेशः । प्रजाः = प्र + जनी (प्रादुर्भावे—ईदित्) + डः "उपसर्गे च संज्ञायाम्" इति डप्रत्ययष्टाप् जसि रूपम् । नियन्तुः = नि + यम (उपरमे-अकारेत्) + तृन् प्रत्ययः "तृन्" इति सूत्रेण "ऋत उत्" इत्युकारैकादेशो रपरः सलोपश्च धातोर्मस्यानुस्वारपरसवर्णौ ङसो रूपम् । नेमिवृत्तय इत्यत्र—वृत्तिः = वृतु (वर्तने—उदित्) + क्तिन् प्रत्ययो "यस्य विभाषा" इतीडभावः ॥ १७ ॥

वाच्यान्तरं—नियन्तुस्तस्य नेमिवृत्तिभिः प्रजाभिरामनोः क्षुण्णाद् वर्त्मनः परं रेखामात्रमपि न व्यतीये ॥ १७ ॥

कोशः—"नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः" इत्यमरः । "चक्रधारा प्रधिः पुमान्" इति यादवः । "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्यमरः । "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इत्यमरः । "प्रजा स्यात् सन्ततौ जने" इत्यमरः॥१७॥

तात्पर्यार्थः—यथा निपुणसारथिसञ्चालिता रथचक्रधाराः पूर्वक्षुण्णसरणिं न जहति, तथैव तस्य दिलीपस्य प्रजा अपि पूर्वाभ्यस्तां मनूपदिष्टामाचारपद्धतिं न तत्यजुः ॥ १७ ॥

भाषाऽर्थः—शिक्षक अथवा सारथि के सदृश उस राजा दिलीप की रथ के पहिये की भांति चलने वाली प्रजायें मनुके समय से बताये हुये ( रथचक्रधारापक्षमें खुँदे हुए ) मार्ग से लकीर भर भी बाहर न गईं ॥ १७ ॥

*तस्य करग्रहणम् प्रजानां सुखविधानार्थमित्याह—*

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १८ ॥**

सञ्जीविनी—प्रजानामिति । स राजा प्रजानां भूत्या अर्थाय भूत्यर्थं वृद्ध्यर्थमेव । (अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या) । ग्रहणक्रियाविशेषणं चैतत् । ताभ्यः प्रजाभ्यो बलिं षष्ठांशरूपं करमग्रहीत् । 'भागधेयः करो बलिः' इत्यमरः । तथाहि । रविः सहस्रं गुणा यस्मिन्कर्मणि तद्यथा तथा सहस्रगुणं सहस्रधोत्स्रष्टुं दातुम् । उत्सर्जनक्रियाविशेषणं चैतत् । रसमम्ब्वादत्ते गृह्णाति । 'रसो गन्धे रसे स्वादे तिक्तादौ विषरोगयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे ॥' इति विश्वः ॥ १८ ॥

अन्वयः—सः, प्रजानां, भूत्यर्थम्, एव, ताभ्यः, बलिम्, अग्रहीत्, हि, रविः, सहस्रगुणम्, उत्स्रष्टुं, रसम्, आदत्ते ॥ १८ ॥

व्याख्या—सः = राजा दिलीपः, प्रजानां = जनानां, भूत्यर्थं = सम्पत्त्यै, वृद्ध्यर्थमिति यावद्, एव = निश्चयेन, ताभ्यः = प्रजाभ्यः, बलिं = भागधेयं, षष्ठांशरूपमिति भावः । अग्रहीत् = जग्राह, हि = यतः, रविः = भानुः, सहस्रगुणं = सहस्रगुणाधिकम्, उत्स्रष्टुं = दातुं, रसम् = अम्बु, आदत्ते = गृह्णाति । राजा दिलीपो यत् करं षष्ठांशरूपं गृह्णाति ततोऽप्यधिकं प्रजानां सुखवृद्ध्यर्थं द्रव्यं यज्ञादावुत्सृजतीति भावः ॥ १८ ॥

समासादि-प्रकर्षेण जायन्त इति प्रजास्तासां प्रजानाम् (स्त्री०) । भूत्या इदं भूत्यर्थं, क्रियाविशेषणम् (अव्ययीभावो नित्यसमासः ) । सहस्रं गुणा यस्मिन् कर्मणि तत् सहस्रगुणं (ब० व्री०) क्रियाविशेषणमेतत् । रूयते स्तूयते रवते वेति रविः (पुं) ॥ १८ ॥

वाच्यान्तरं—तेन प्रजानां भूत्यर्थमेव ताभ्यो बलिरग्राहि, हि सहस्रगुणमुत्स्रष्टुं रविणा रस आदीयते ॥ १८ ॥

व्याकरणम्—प्रजानाम् = प्र + जनी (प्रादुर्भावे—ईदित्) + डः प्रत्ययः "उपसर्गे च संज्ञायाम्" इति डप्रत्ययष्टिलोपष्टाप् आमि रूपम् । भूतिः = भू (सत्तायां) + क्तिन् प्रत्ययः । भूत्य-

र्थम् = भूति + अर्थ "अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्या" इति नित्यसमासः। अग्रहीत् = ग्रह (उपादाने—अकारेत्) + लुङ् तस्य तिपि च्लेः सिच् ततः "अस्तिसिचोऽपृक्ते" इतीडागमो वलादिलक्षणोऽपीडागमः "इट ईटि" इति सिचो लोपो धातोरडागमः। उत्स्र- ष्टुम् = उद् + सृज (विसर्गे—अकारेत्) + तुमुन् प्रत्ययः "सृजिदृशोर्झल्यमकिति" इत्यमा- गमो यणादेशः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति जस्य षत्वं ष्टुत्वमव्ययत्वा- त्सुपो लुक्। आदत्ते = आङ् + डुदाञ् (दाने—डुञित्) + लट् तस्य तप्रत्यये श्लौ धातोर्द्वित्व- मभ्यासह्रस्वः "श्नाऽभ्यस्तयोरातः" इत्याकारलोपश्चर्त्वम्। रविः = रुङ् (गतिरेषणयोः— ङित्) + इप्रत्ययः "अच इः" इत्युणादिसूत्रेण ततो गुणावादेशौ सौ रूपम् ॥ १८ ॥

कोशः—"प्रजा स्यात् सन्ततौ जने" इत्यमरः। "भूतिर्भस्मनि सम्पदि" इत्यमरः। "भागधेयः करो बलिः" इत्यमरः। "रसो गन्धे रसे स्वादे तिक्तादौ विषरोगयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे" इति विश्वः। "भानुर्हंसः सहस्रांशुस्तपनः सविता रविः" इत्यमरः ॥ १८ ॥

तात्पर्यार्थः—यथा सूर्यः सहस्रगुणं वर्षाद्वारा दातुं जलं गृह्णाति तथैव दिलीपोऽपि प्रजानां सुखवृद्ध्यर्थमेव ताभ्यः करं गृहीत्वा ततोऽप्यधिकेन तेन यज्ञादिमार्गसेतुवापीकूपतडागादि- निर्माणं करोति ॥ १८ ॥

भाषाऽर्थः—प्रजाओं के भलाई ही के लिये वह राजा दिलीप उन सबों से (अर्थात् प्रजाओं से) कर लेता था, जैसे—कि सहस्रगुणा बरसाने ही के लिये सूर्य जल लेता है ॥ १८ ॥

सम्प्रति बुद्धिशौर्य्यसम्पन्नस्य तस्यार्थसाधनेषु परानपेक्षत्वमाह—

**सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥ १९ ॥**

सञ्जीविनी—सेनेति। तस्य राज्ञः सेना चतुरङ्गबलम् परिच्छाद्यतेऽनेनेति परिच्छद- उपकरणं बभूव। छत्रचामरादितुल्यमभूदित्यर्थः। "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः "छादेर्घे ऽद्व्युपसर्गस्य" इत्युपधाह्रस्व.। अर्थस्य प्रयोजनस्य तु साधनं द्वयमेव। शास्त्रेष्व- कुण्ठिताऽव्याहता बुद्धिः 'व्यापृता' इत्यपि पाठ। धनुष्याततााऽऽरोपिता मौर्वी ज्या च। 'मौर्वी ज्या शिञ्जिनी गुण' इत्यमर। नीतिपुरःसरमेव तस्य शौर्यमभूदित्यर्थः ॥ १९ ॥

अन्वयः—तस्य, सेना, परिच्छदः, (बभूवेति शेषः, बुद्ध्यादिषु सर्वत्र योज्यम्), अर्थसाधनं, द्वयम्, एव, (एकम्) शास्त्रेषु, अकुण्ठिता, बुद्धिः, (अपरम्) धनुषि, आतता, मौर्वी, च ॥१९॥

व्याख्या—तस्य = राज्ञो दिलीपस्य, सेना = सैन्यम्, परिच्छदः = उपकरणम्, बभूवेति शेषः—बुद्ध्यादिषु सर्वत्र योज्यम्। छत्रचामरादितुल्यं शोभाऽर्थमेवाभूदिति भावः। अर्थ- साधनं = प्रयोजननिर्वर्तनं, द्वयमेव = द्वितयमेव, (एकम्) शास्त्रेषु = नीतिशास्त्रादिषु, अकुण्ठि- ता = अव्याहता, बुद्धिः = मतिः, (अपरम्) धनुषि = कोदण्डे, आतता = आरोपिता, मौर्वी = शिञ्जिनी, गुण इति यावत्। च, नीतिशास्त्रादिसम्मतमेव तस्य शौर्य्यप्रदर्शनमभूदिति भावः ॥ १९ ॥

समासादि—परिच्छाद्यतेऽनेनेति परिच्छदः (पुं०)। द्वौ अवयवौ यस्य तद् द्वयम् (न०लि)। साध्यतेऽनेनेति साधनम् (न०लि) अर्थस्य साधनम् अर्थसाधनम् (त० पु०) न कुण्ठितेत्यकु- ण्ठिता (न०त०)। मूर्वाया इयं विकाररूपा मौर्वी (स्त्री०)। धनतीति धनुस्तस्मिन् धनुषि (न० लि०) ॥ १९ ॥

व्याकरणम्—परिच्छदः = परि + छद (अपवारणे—अकारेत्) + णिच् प्रत्यय उपधावृ- द्धिस्तस्माद् छादि + घ प्रत्ययः "पुंसि संज्ञायां घः प्रायेण" इति सूत्रेण ततो "णेरनिटि" इति णिलोपः "छादेर्घेऽद्व्युपसर्गस्य" इत्युपधाह्रस्वः सौ रूपम्। द्वयं = द्वि + तयप् प्रत्ययः "सङ्ख्या- या अवयवे तयप्" इतिसूत्रेण तस्य चायजादेशः "द्वित्रिभ्यां तयस्यायज्वा" इतिसूत्रेण

सौ रूपम् । साधनं = साध (संसिद्धौ—अकारेत्) + ल्युट् प्रत्ययः "करणाधिकरणयोश्च" इति सूत्रेण ततो "युवोरनाकौ" इति योरनादेशः सौ रूपम् । कुण्ठिता = कुठि (कुण्ठने—इदित्) तस्येदित्त्वान्नुम् ततः कुण्ठ् + क्तप्रत्ययो वलादिलक्षण इडागमष्टाप् । अकुण्ठिता = नञ् + कुण्ठिता "नलोपो नञः" इति नञो नकारलोपः । बुद्धिः = बुध (अवगमने—अकारेत्) + क्तिन् प्रत्ययो भावे "झपस्तथोर्धोऽधः" इति तकारस्य धत्वं जश्त्वं च, सौ रूपम् । मौर्वी = मूर्वा + अण् + ङीप् "अवयवे च प्राण्योपधिवृक्षेभ्यः" इति विकारेऽण् प्रत्यय आदिवृद्धिः "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति ङीप् सौ रूपम् । धनुषि = धन (शब्दे-अकारेत्) + उस् "अर्तिपृवपियजितनिधनितपिभ्योऽनित्" इत्युणादिसूत्रेण, उस् प्रत्ययस्तदवयवसकारस्येत्संज्ञाऽभावश्च सस्य षत्वं ङिरूपम् । आतता = आङ् + तनु (विस्तारे-उदित्) + क्तप्रत्ययस्ततष्टाप् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः सौ रूपम् ॥ १९ ॥

वाच्यान्तरं—तस्य सेनया परिच्छेदेनाभावि, शास्त्रेष्वकुण्ठितया बुद्ध्या धनुषि चाततया मौर्व्या च "इति" द्वयेनैवार्थसाधनेनाभावि ॥ १९ ॥

कोशः—"ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्" इत्यमरः । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति । "निर्वर्तनोपकरणानुव्रज्यासु च साधनम्" इत्यमरः । "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इत्यमरः । "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः ॥ १९ ॥

तात्पर्यार्थः—तस्य दिलीपस्य सेना प्रयोजनसम्पादिका नाभूत् केवलं तु शोभाऽर्थमेव । किन्तु राजनीतिविषया तदीया मतिः सज्यं शरासनञ्चेति द्वयेनैव सकलार्थसिद्धिरभूत् ॥१९॥

भाषाऽर्थः—उस राजा दिलीपकी सेना तो छत्र चामर के समान केवल शोभार्थ हुई । क्योंकि प्रयोजन सिद्ध दो से होते थे, एक तो-शास्त्रों में पैनी बुद्धि से, और दूसरे धनुष पर चढ़ी हुई प्रत्यञ्चा से ॥ १९ ॥

राज्यमूलं मन्त्रसंरक्षणं तस्यासीदित्याह—

**तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।**
**फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २० ॥**

सञ्जीविनी—तस्येति । संवृतमन्त्रस्य गुप्तविचारस्य । 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः । शोकहर्षादिसूचको भ्रुकुटीमुखरागादिराकार इङ्गितं चेष्टितं हृदयगतविकारो वा । 'इङ्गितं हृद्गतो भावो बहिराकार आकृतिः' इति सज्जनः । गूढे आकारेङ्गिते यस्य स्वभावचापलाद्भ्रमपरम्परया मुखरागादिलिङ्गैर्वाऽतृतीयगामिमन्त्रस्य तस्य प्रारभ्यन्त इति प्रारम्भाः सामाद्युपायप्रयोगाः । प्रागित्यव्ययेन पूर्वजन्मोच्यते तत्र भवाः प्राक्तनाः । "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" इत्यनेन ट्युल्प्रत्ययः । संस्काराः पूर्वकर्मवासना इव । फलेन कार्येणानुमेयाऽनुमातुं योग्या आसन् । अत्र याज्ञवल्क्यः-(मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् । कुर्याद्यथा तन्न विदुः कर्मणामाफलोदयात् ॥ ) इति ॥ २० ॥

अन्वयः—संवृतमन्त्रस्य, च, गूढाकारेङ्गितस्य, तस्य, प्रारम्भाः, प्राक्तनाः, संस्काराः, इव, फलानुमेयाः, "आसन्" इति शेषः ॥ २० ॥

व्याख्या—संवृतमन्त्रस्य = गुप्तविचारस्य, च = पुनः, गूढाकारेङ्गितस्य = अप्रकटिताकृतिहृद्गतभावस्य, तस्य = दिलीपस्य, प्रारम्भाः = सामाद्युपायप्रयोगाः, प्राक्तनाः = पूर्वजन्मोद्भवाः, संस्काराः = कर्मवासनाः, इव = यथा, फलानुमेयाः = कार्यज्ञेयाः, आसन्निति शेषः । तस्य दिलीपस्य मन्त्रोऽतीव गुप्ततम आसीदिति भावः ॥ २० ॥

समासादि—मन्त्रणं मन्त्रः (पुं०), संवृतो मन्त्रो यस्य स संवृतमन्त्रस्तस्य संवृतमन्त्रस्य (ब० व्री०)। आकरणमाकारः, (पुं०), आकारश्चेङ्गितञ्च, आकारेङ्गिते (द्वन्द्वः), गूढे आकारेङ्गिते यस्य स गूढाकारेङ्गितस्तस्य गूढाकारेङ्गितस्य (ब० व्री०)। अनुमातुं योग्या-अनुमेयाः (पुं०), फलेनानुमेयाः फलानुमेयाः (त० पु०)। प्रारम्भणानि प्रारम्भाः (पुं०) सस्करणानि संस्काराः (पुं०)। प्राक् पूर्वजन्मनि भवाः प्राक्तनाः (पुं०)॥ २०॥

व्याकरणम्—मन्त्रः = मन्त्रि (गुप्तभाषणे-इदित्) घञ् "भावे" इति घञ् प्रत्यय इदित्वान्नुम् सौ रूपम्। संवृतः = सम् + वृञ् (वरणे-ञित्) + क्तप्रत्ययः "यस्य विभाषा" इतीडभावः सौ रूपम्। गूढे = गुहू (संवरणे-ऊदित्) + क्तप्रत्ययः "यस्य विभाषा" इतीडभावः "हो ढः" इति ढत्वं "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं ष्टुत्वं ढलोपः "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घ औ रूपम्। आकारः = आङ् + डुकृञ् (करणे-डुञित्) घञ् "भावे" इति घञ् प्रत्ययो वृद्धिः सौ रूपम्। अनुमेयाः = अनु + माङ् (माने-ङित्) + यत् "अचो यत्" इति यत् प्रत्ययः "ईद्यति" इत्यनेनेत्वं गुणो जसि रूपम्। प्रारम्भाः = प्र + आङ् + रभ (राभस्ये-अकारेत्) + घञ् प्रत्ययो भावे "रभे रशब्लिटोः" इति नुमागमो जसि रूपम्। प्राक्तनाः = प्राक् + ट्युल् "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" इति ट्युल् प्रत्ययस्तुडागमः "युवोरनाकौ" इत्यनादेशो जसि रूपम्॥ २०॥

वाच्यान्तरं—संवृतमन्त्रस्य च गूढाकारेङ्गितस्य तस्य प्रारम्भैः प्राक्तनैः संस्कारैरिव फलानुमेयैरभावि॥ २०॥

कोशः—"वेदभेदे गुप्तवादे मन्त्रः" इत्यमरः। "इङ्गिते ह्वद्गतो भावो बहिराकार आकृतिः" इति सज्जनः। "फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायाञ्च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इति हैमः॥ २०॥

तात्पर्यार्थः—शोकहर्षादिसूचकैर्भृकुटीमुखरागादिलिङ्गैरप्यतृतीयगामिमन्त्रस्य तस्य दिलीपस्य यथा लोके कार्येण पूर्वजन्मोद्भवसंस्कारस्यानुमानं भवति तथैव सामाद्युपायप्रयोगाणामप्यनुमानमभूत्॥ २०॥

भाषाऽर्थः—विचार को गुप्त रखने वाले, तथा—बाहर भीतर के हर्षशोकादि सूचक चिह्नोंको छिपाने वाले, उस राजा दिलीप के कार्य "सामदामाद्युपाय" फलों से अनुमान किये जाते थे, जैसे—कि पूर्व जन्म के संस्कार॥ २०॥

सम्प्रति सामाद्युपायान्विनैवात्मरक्षाऽऽदिकं कृतवानित्याह—

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत्॥ २१॥

सञ्जीविनी—जुगोपेति। अत्रस्तोऽभीतः सन्। 'त्रस्तो, भीरुभीरुकभीलुकाः' इत्यमरः। त्रासोपाधिमन्तरेणैव त्रिवर्गसिद्धेः प्रथमसाधनत्वादेवात्मानं शरीरं जुगोप रक्षितवान्। अनातुरोऽरुग्ण एव धर्मं सुकृतं भेजे। अर्जितवानित्यर्थः। अगृध्नुरगर्धनशील एवार्थमाददे स्वीकृतवान्। 'गृध्नुस्तु गर्धनः। लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ' इत्यमरः। "त्रसिगृधिधृषिक्षिपेः क्नुः" इतिक्नुप्रत्ययः। असक्त आसक्तिरहित एव सुखमन्वभूत्॥ २१॥

अन्वयः—सः, अत्रस्तः, "सन्" आत्मानं, जुगोप, अनातुरः "सन्" धर्मं, भेजे, अगृध्नुः, "सन्" अर्थम्, आददे, असक्तः "सन्" सुखम्, अन्वभूत्॥ २१॥

व्याख्या—सः = दिलीपः, अत्रस्तः = अभीरुः, "सन्निति शेषः, सर्वत्रानातुरादिषु योज्यम्"। आत्मानं = कलेवरं, जुगोप = पालितवान् (भयं विनैव पुरुषार्थत्रयस्य सिद्धेरादिमसाधनत्वादेव शरीरं रक्षितवानिति भावः। अनातुरः = अरुग्णः, "सन्" धर्मं = पुण्यम्, भेजे = सेवितवान्, अर्जितवानित्यर्थः। अगृध्नुः = अलोलुपः, "सन्" अर्थं = द्रविणम्, आद-

दे=गृहीतवान् ( स्वीकृतवानित्यर्थः ) । असक्तः=आसक्तिरहितः "सन्" सुखं=कल्याणम्, अन्वभूत्=अनुभूतवान् ॥ २१ ॥

समासादि—अततीत्यात्मा तमात्मानम् (पुं०)। न त्रस्तोऽत्रस्तः (न० त०) आतुतोतीत्यातुरः (पुं०) न आतुरोऽनातुरः (न० त०)। गृध्यतीति गृध्नुः (पुं०) न गृध्नुरगृध्नुः (न० त०)। न सक्तोऽसक्तः (न०·त०) ॥ २१ ॥

व्याकरणं—जुगोप=गुपू (रक्षणे-ऊदित्)+लिट् तस्य तिपो णलादेशे धातोर्द्वित्वं 'कुहोश्चुः' इति चुत्वं "पुगन्तलघूपधस्य च" इत्युपधागुणः। आत्मानम्=अत (सातत्यगमने-अकारेत्)+मनिण् "सातिभ्यां मनिन्मनिणौ" इत्युणादिसूत्रेण मनिण् प्रत्ययो णित्वादुपधावृद्धिरमि रूपम्। त्रस्तः=त्रसी (उद्वेगे-ईदित्)+क्त प्रत्ययः "श्वीदितो निष्ठायाम्" इतीण्निषेधः सौ रूपम्। अत्रस्तः=नञ्+त्रस्त "नलोपो नञः" इति नञो नकारलोपः। भेजे=भज (सेवायाम्-अकारेत्)=लिट् तस्य तप्रत्ययस्यैशादेशे धातोर्द्वित्वं "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ। आतुरः=आङ्+तुर(त्वरणे-अकारेत्)+कप्रत्ययः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः कित्वाद् गुणनिषेधः सौ रूपम्। अनातुरः=नञ्+आतुर "नलोपो नञः" इति नकारलोपः "तस्मान्नुडचि" इति नुट्। गृध्नुः=गृधु (अभिकाङ्क्षायाम्—उदित्)+क्नु प्रत्ययः "त्रसिगृधिधृषिक्षिपेः" इति क्नुप्रत्ययः सौ रूपम्। अगृध्नुः=नञ्+गृध्नु "नलोपो नञः" इति नञो नकारलोपः। आददे=आङ्+डुदाञ् ( दाने-डुञित्)+लिट् तस्य तप्रत्ययस्यैशादेशे धातोर्द्वित्वमभ्यासह्रस्वः "श्नाऽभ्यस्तयोरातः" इत्याकारलोपः। सक्तः=षञ्ज-( सङ्गे-अकारेत् )+क्तप्रत्ययः "धात्वादेः षः सः" इति षस्य सादेशः "चोः कुः" इति कुत्वं सौ रूपम्। असक्तः=नञ्+सक्त "नलोपो नञः" इति नकारलोपः। अन्वभूत्=अनु+भू(सत्तायाम्)+लुङ् तस्य तिपि च्लेः सिच् "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुग् धातोरडागमः ॥ २१ ॥

वाच्यान्तरं-तेनात्रस्तेन सताऽऽत्मा जुगुपे, अनातुरेण धर्मो भेजे, अगृध्नुनाऽर्थ आददे, असक्तेन सुखमन्वभावि ॥ २१ ॥

कोशः—"आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च" इति धरणिः। "त्रस्तो, भीरुर्भीरुकभीलुकाः" इत्यमरः। "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। "आमयावी, विकृतो व्याधितोऽपटुः। आतुरोऽभ्यमितोऽभ्यान्तः" इत्यमरः। "गृध्नुस्तु गर्धनः। लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ" इत्यमरः। "हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि" इत्यमरः। "शर्मशातसुखानि च" इत्यमरः॥२१॥

तात्पर्यार्थः—स दिलीपो भयादात्मानं न रक्षितवान्, रोगाद् धर्मं न सेवितवान्, लोभाद् धनं न गृहीतवान्, आसक्त्या सुखं नानुभूतवान् ॥ २१ ॥

भाषाऽर्थः—उस (राजा दिलीप) ने विना डरे हुये अपने शरीर की रक्षा की, विना रोगी होते हुये धर्म का सेवन किया, विना लोभी होते हुये धन का ग्रहण किया, और विना आसक्त होते हुये सुख का अनुभव किया ॥ २१ ॥

परस्परविरुद्धानामपि गुणानां तत्र साहचर्य्यमासीदित्याह—

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**
**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ २२ ॥**

सञ्जीविनी—ज्ञान इति। ज्ञाने परवृत्तान्तज्ञाने सत्यपि मौनं वाङ्नियमनम्। यथाऽऽह कामन्दकः—( नास्यापतापि वचनं मौनं व्रतचरिष्णुता ) इति। शक्तौ प्रतीकारसामर्थ्येऽपि क्षमा अपकारसहनम्। अत्र चाणक्यः-( शक्तानां भूषणं क्षमा ) इति। त्यागे वितरणे सत्यपि श्लाघाया विकत्थनस्य विपर्ययोऽभावः। अत्राह मनुः—( न दत्वा परिकीर्तयेद् )

इति । इत्थं तस्य गुणा ज्ञानादयो गुणैर्विरुद्धैर्मौनादिभिरनुबन्धित्वात्सहचारित्वात् सह प्रसवो जन्म येषां ते सप्रसवाः सोदरा इवाभूवन् । विरुद्धा अपि गुणास्तस्मिन्नविरोधेनैव स्थिता इत्यर्थः ॥ २२ ॥

अन्वयः—ज्ञाने, मौनं, शक्तौ, क्षमा, त्यागे, श्लाघाविपर्ययः, "इत्थं" तस्य, गुणाः, गुणानुबन्धित्वात्, सप्रसवाः, इव, "अभूवन्" इति शेषः ॥ २२ ॥

व्याख्या—ज्ञाने = परवृत्तान्तावगमे, "सत्यपि" मौनं = वाणीनियमनं, शक्तौ = प्रतीकारसामर्थ्येऽपि, क्षमा = अपकारसहिष्णुता, त्यागे = दाने, "सत्यपि" श्लाघाविपर्ययः = स्वप्रशंसनाभावः, "इत्थं" तस्य = दिलीपस्य, गुणाः = ज्ञानप्रभृतयः, गुणानुबन्धित्वाद् = विरुद्धमौनादिगुणसहचारित्वात्, सप्रसवाः = सोदर्य्याः, इव = यथा, अभूवन्निति शेषः । परस्परविरुद्धा अपि ज्ञानमौनादिप्रभृतयो गुणास्तत्राविरोधेनैवासन्निति भावः ॥२२॥

समासादि—मुनेः कर्म भावो वा मौनम् ( न० लिं० ) । श्लाघाया विपर्ययः श्लाघाविपर्य्ययः, (त० पु०) अनुबन्धोऽस्यास्तीत्यनुबन्धी ( पुं० ), तस्य भावोऽनुबन्धित्वं ( न० लिं० ), गुणैरनुबन्धित्वं गुणानुबन्धित्वं तस्माद् गुणानुबन्धित्वात् (त० पु०) । सह प्रसवो जन्म येषां ते सप्रसवाः ( ब० व्री० ) ॥ २२ ॥

व्याकरणम्—मौनं = मुनि + अण् "इगन्ताच्च लघुपूर्वात्" इत्यण् प्रत्ययो "यस्येति च" इतीकारलोप आदिवृद्धिः सौ रूपम् । शक्तौ = शक्लृ ( शक्लृ-लृदित् ) + क्तिन् प्रत्ययो भावे ङिरूपम् । सप्रसवाः = सह + प्रसव "वोपसर्जनस्य" इति सहस्य सादेशः ॥ २२ ॥

वाच्यान्तरं—ज्ञाने मौनेन, शक्तौ क्षमया, त्यागे श्लाघाविपर्य्ययेण, तस्य गुणैर्गुणानुबन्धित्वात् सप्रसवैरिवाभावि ॥ २२ ॥

कोशः—"अथ मौनमभाषणम्" इत्यमरः । "क्षितिक्षान्त्योः क्षमा" इत्यमरः । "त्यागो विहापितं दानमुत्सर्जनविसर्जने" इत्यमरः । "अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्" इत्यमरः । "मौर्व्यां द्रव्याश्रिते सत्वशौर्य्यसन्ध्यादिके गुणः" इत्यमरः । "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः ॥ २२ ॥

तात्पर्य्यार्थः—स दिलीपः परवृत्तान्तज्ञानवानपि प्रयोजनं विना तन्न वदति, प्रतीकारकरणक्षमोऽप्यपकारकर्तुरुपेक्षणं करोति, दाता सन्नपि नात्मविकत्थनं करोति, ॥ २२ ॥

भाषाऽर्थः—दूसरे के वृत्तान्त को जानते हुये भी उस विषयमें चुप रहना, सामर्थ्य रहने पर भी अपकार सहन करना, दान करने पर भी अपनी बडाई न करना, इस प्रकार से उस राजा दिलीप के ज्ञानादिक गुण विरुद्ध मौनादिक गुणों के साथ रहने से सहोदर के समान हुये ॥ २२ ॥

द्विविधं वृद्धत्वं, ज्ञानेन वयसा च । तत्र तस्य ज्ञानेन वृद्धत्वमाह—

**अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।**
**तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥ २३ ॥**

सञ्जीविनी—अनाकृष्टेति । विषयैः शब्दादिभिः । 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरः। अनाकृष्टस्यावशीकृतस्य विद्यानां वेदवेदाङ्गादीनां पारदृश्वनः पारमन्तं दृष्टवतः । दृशेः क्वनिप् । धर्मे रतिर्यस्य तस्य राज्ञो जरसा जरया विना । 'विस्रसा जरा' इत्यमरः । "षिद्भिदादिभ्योऽङ्" इत्यङ्प्रत्ययः "जराया जरसन्यतरस्याम्" इति जरसादेशः । वृद्धत्वं वार्धकमासीत् । तस्य यूनो विषयवैराग्यादिज्ञानगुणसम्पत्त्या ज्ञानतो वृद्धत्वमासीदित्यर्थः । नाथस्तु—चतुर्विधं वृद्धत्वमिति ज्ञात्वा 'अनाकृष्टस्य' इत्यादिना विशेषणत्रयेण वैराग्यज्ञानशीलवृद्धत्वान्युक्तानीत्यवोचत् ॥ २३ ॥

अन्वयः—विषयैः, अनाकृष्टस्य, विद्यानां, पारदृश्वनः, धर्मरतेः, तस्य, जरसा, विना, वृद्धत्वम्, आसीत्, ॥ २३ ॥

व्याख्या—विषयैः = गन्धरसरूपस्पर्शशब्दैः, अनाकृष्टस्य = अवशीकृतस्य, विद्यानां = वेदवेदाङ्गादीनाम्, पारदृश्वनः = अन्तं दृष्टवतः, धर्मरतेः = पुण्यासक्तेः, तस्य = दिलीपस्य, जरसा विना = वृद्धावस्थामन्तरेण, वृद्धत्वम् = वार्द्धकम्, आसीद् = अभूत्। तस्य युवावस्थाऽऽपन्नस्य राज्ञो विषयविरक्तादिगुणशालितयैव ज्ञानतो वृद्धत्वमासीदिति ॥ २३ ॥

समासादि—न आकृष्टोऽनाकृष्टस्तस्यानाकृष्टस्य ( त० पु० )। पारं दृष्टवानिति पारदृश्वा तस्य पारदृश्वनः ( पुं० ) धर्मे रतिर्यस्य स धर्मरतिस्तस्य धर्मरतेः ( ब० व्री० )। वृद्धस्य भावो वृद्धत्वम् ( न० लि० ) ॥ २३ ॥

व्याकरणम्—आकृष्टस्य = आङ् + कृष ( विलेखने—अकारेत् ) + क्तप्रत्ययो भावे षष्ठ्येकवचने ङसो रूपम्। अनाकृष्टस्य = नञ् + आकृष्ट "नलोपो नञः" इति नञो नलोपः "तस्मान्नुडचि" इति नुडागमः। पारदृश्वनः = पार + अम् + दृशिर् ( प्रेक्षणे—इरित् ) + क्वनिप् "दृशेः क्वनिप्" इति क्वनिप् प्रत्ययो ङसो रूपम्। धर्मरतेः = व्यधिकरणपदबहुव्रीहिः। रतिः = रमु ( क्रीडायाम्—उदित् ) + क्तिन् प्रत्ययो भावे "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः सौ रूपम्। वृद्धत्वम् + वृद्ध + त्व प्रत्ययः "तस्य भावस्त्वतलौ" इति सूत्रेण सौ रूपम्। आसीद् = अस ( भुवि-अकारेत् ) + लङ् तस्य तिपि "अस्तिसिचोऽपृक्ते" इतीडागमो धातोराडागमः। जरसा + जॄष् ( वयोहानौ—षित् ) + अङ् "षिद्भिदादिभ्योऽङ्" इत्यङ् प्रत्ययः "ऋदृशोऽङि गुणः" इति गुणो रपरष्टाप्, ततष्टाविभक्तौ "जराया जरसन्यतरस्याम्" इति वैकल्पिकजरसादेशो विनायोगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति तृतीया ॥ २३ ॥

वाच्यान्तरं—विषयैरनाकृष्टस्य विद्यानां पारदृश्वनो धर्मरतेस्तस्य जरसा विना वृद्धत्वेनाभावि ॥ २३ ॥

कोशः—"रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी" इत्यमरः। "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। "स्यात् स्थाविरं तु वृद्धत्वं वृद्धसङ्घेऽपि वार्द्धकम्" इत्यमरः। "विस्रसा जरा" इत्यमरः ॥ २३ ॥

तात्पर्यार्थः—विषयेभ्यो विरक्तोऽधीतवेदवेदाङ्गसकलविद्यो धर्माचरणतत्परो दिलीपो युवाऽपि सन् वृद्ध इवाभूत् ॥ २३ ॥

भाषाऽर्थः—विषयादिकों से नहीं खींचे जाते हुये, (विषयों के वश में न होते हुये) विद्याओं के पार देखने वाले ( अन्त करने वाले ) धर्म में रुचि रखने वाले उस राजा दिलीप को वृद्धावस्था ( आये ) विना उक्त विशेषणों से वृद्धता प्रगट हुई ॥ २३ ॥

*द्विविधं पितृत्वं रक्षणेनोत्पादनेन च तत्र तस्य रक्षणेन पितृत्वमाह—*

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४ ॥

सञ्जीविनी—प्रजानामिति। प्रजायन्त इति प्रजा जना 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययः। 'प्रजा स्यात्संततौ जने' इत्यमरः। तासां विनयस्य शिक्षाया आधानात्करणात् सन्मार्गप्रवर्तनादिति यावत्। रक्षणाद् भयहेतुभ्यस्त्राणाद् आपन्निवारणादिति यावत्। भरणादन्नपानादिभिः पोषणादपि। अपिः समुच्चये। स राजा पिताऽभूत्। तासां पितरस्तु जन्महेतवो जन्ममात्रकर्तारः केवलमुत्पादका एवाभूवन्। जननमात्र एव पितॄणां व्यापारः। सदा शिक्षारक्षणादिकं तु स एव करोतीति तस्मिन्पितृत्वव्यपदेशः। आहुश्च—( स पिता यस्तु पोषकः ) इति ॥ २४ ॥

अन्वयः—प्रजानां, विनयाधानाद्, रक्षणाद्, भरणाद्, अपि, सः, पिता, "अभूत्" तासाम्, पितरः, तु, केवलं, जन्महेतवः "अभूवन्" ॥ २४ ॥

व्याख्या—प्रजानां=जनानां, स्वशासनाधीनानामिति भावः । विनयाधानाद्=नम्रताऽऽदिगुणशिक्षाकरणात्, सन्मार्गनयनादिति यावत् । रक्षणात्=पालनाद् चौरादिभयहेतुभ्य इति शेषः । भरणात्=पोषणाद्, अन्नपानादिभिरिति शेषः। अपि=समुच्चये, सः=दिलीपः, पिता=रक्षिता, जनको वा, आसीदिति शेषः । तासां=प्रजानाम्, पितरः=जनकाः, तु=किन्तु, केवलं जन्महेतवः=उत्पत्तिमात्रकारणानि, अभूवन्निति शेषः ॥ २४ ॥

समासादि—प्रकर्षेण जायन्त इति प्रजास्तासां प्रजानाम् (स्त्री०) । आहितिराधानम् (न० लि०) विशेषेण नयनं विनयः (पुं०) तस्याधानं विनयाधानं तस्माद् विनयाधानात् । (त०पु०) पातीति पिता (पुं०) । जन्मनो हेतवो जन्महेतवः (त० पु०) ॥ २४ ॥

व्याकरणम्—प्रजानां=प्र+जनी (प्रादुर्भावे—ईदित्)+डप्रत्ययः "उपसर्गे च संज्ञायाम्" इति सूत्रेण ततष्टिलोपष्टाप् आमि रूपम् । पिता=पा (रक्षणे)+तृच् "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ" इत्युणादिसूत्रेण निपातनात् पातेराकारस्येत्वं ततः सौ "ऋदुशनस्पुरुदंसोऽनेहसाञ्च" इत्यनङादेशः "सर्वनामस्थाने चासंबुद्धौ" इत्युपधादीर्घः "नलोपः प्रातिपदिकान्तस्य"इति नलोपो हल्ङ्याादिना सुलोपः ॥ २४ ॥

वाच्यान्तरम्—प्रजानां विनयाधानाद् रक्षणाद्भरणादपि तेन पित्राऽभूयत, तासां पितृभिः केवलं जन्महेतुभिरभूयत ॥ २४ ॥

कोशः—"प्रजा स्यात् सन्ततौ जने" इत्यमरः । "तातस्तु जनकः पिता" इत्यमरः । "जनुर्जननजन्मानि जनिरुत्पत्तिहेतवः" इत्यमरः । "हेतुर्ना कारणं बीजम्" इत्यमरः ॥ २४ ॥

तात्पर्यार्थः—दिलीपप्रजानां पितरस्तु केवलं जन्मदातार एवाभूवन्, किन्तु तासां विनयादिशिक्षको भयहेतुभ्यो रक्षकोऽन्नवस्त्रादिभिः पोषको दिलीप एवाभूत् ॥ २४ ॥

भाषाऽर्थः—नम्रता आदि की शिक्षा देने से, आपत्तियों से बचाने से, और अन्नादिकों के द्वारा पोषण करने से, वह दिलीप ही प्रजाओं के पिता हुये, और उन प्रजाओं के पिता तो केवल जन्म देने ही में कारण हुये ॥ २४ ॥

*तस्यार्थकामावपि धर्म एवास्तामित्याह—*

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ २५ ॥**

सञ्जीविनी—स्थित्या इति । दण्डमर्हन्तीति दण्ड्याः "दण्डादिभ्यो यः"इति यप्रत्ययः । (अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥) इति शास्त्रवचनात् । तान्दण्ड्यानेव स्थित्यै लोकप्रतिष्ठायै दण्डयतः शिक्षयतः । प्रसूतये संतानायैव परिणेतुर्दारान्परिगृह्णतः । मनीषिणो विदुषः । दोषज्ञस्येति यावत् । 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । धीरो मनीषी' इत्यमरः । तस्य दिलीपस्यार्थकामावपि धर्म एवास्तां जातौ । अस्तेर्लङ् । अर्थकामसाधनयोर्दण्डविवाहयोर्लोकस्थापनप्रजोत्पादनरूपधर्मार्थत्वेनानुष्ठानादर्थकामावपि धर्मशेषतामापादयन्स राजा धर्मोत्तरोऽभूदित्यर्थः । आह च गौतमः—(न पूर्वाह्णमध्यदिनापराह्णानफलान्कुर्याद् यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्) । इति ॥ २५ ॥

अन्वयः—दण्ड्यान्, "एव" स्थित्यै, दण्डयतः, प्रसूतये, परिणेतुः, मनीषिणः, तस्य, अर्थकामौ, अपि, धर्मः, एव, आस्ताम् ॥ २५ ॥

व्याख्या—दण्ड्यान्=दण्डयोग्यान्, अपराधिन इति यावत् । एवेति शेषः । स्थित्यै=प्रतिष्ठायै, लोकस्येति शेषः । दण्डयतः=शिक्षयतः, प्रसूतये=सन्तानाय, एवेति शेषः ।

परिणेतुः = कृतदारपरिग्रहस्य, मनीषिणः = विदुषः, दोषाणामिति शेषः । तस्य = दिलीपस्य, अर्थकामावपि = अर्थकामाख्यौ, पुरुषार्थावपि, धर्म एव = सुकृतमेव, आस्ताम् = अभूताम्॥२५॥

समासादि—दण्डमर्हन्तीति दण्ड्यास्तान् दण्ड्यान् (पुं०) । दण्डयतीति दण्डयन्; तस्य दण्डयतः (पुं०) । परिणयतीति परिणेता तस्य परिणेतुः (पुं०) । अर्थश्च कामश्च अर्थकामौ (द्वन्द्वः) । मनस ईषा मनीषा (त० पु०), साऽस्त्यस्मिन्निति मनीषी तस्य मनीषिणः (पुं०) ॥ २५ ॥

व्याकरणं—स्थित्यै = ष्ठा (गतिनिवृत्तौ) + क्तिन् प्रत्ययो भावे धात्वादेः षः सः "द्यति-स्यतिमास्थामित्ति किति" इत्याकारस्येत्वं ङे रूपम् । दण्डयतः = दण्ड (निर्यातने—अ-कारेत्) + णिच् + लट् प्रत्ययस्ततः शपि गुणायादेशौ "लटः शतृशानचावप्रथमासमानाधिक-रणे" इति लटः शत्रादेशो ङसो रूपम् । दण्ड्यान् = दण्ड + यः "दण्डादिभ्यो यः" इति य-प्रत्ययः "यस्येति च" इत्यकारलोपः शसो रूपम् । परिणेतुः = परि + णीञ् (प्रापणे—ञित्) + तृन् प्रत्ययो धात्वादेर्णोनो गुणश्च ङसि "ऋत उत्" इत्युदेकादेशो रपरः "उपसर्गादसमासे-ऽपि णोपदेशस्य" इति धात्वादेर्णत्वम् । प्रसूतये = प्र + षूङ् (प्राणिप्रसवे—ङित्) + क्तिन् भावे "यस्य विभाषा" इतीडभावो ङेरूपम् । आस्ताम् = अस (भुवि—अकारेत्) + लङ् तस्य तसि धातोराडागमो वृद्धिश्च "तस्थस्थमिपां तान्तन्तामः" इति तसस्तामादेशः । ईषा = ईष (गतिहिंसादर्शनेषु-अकारेत्) + अ प्रत्ययः "गुरोश्च हलः" इति सूत्रेण ततष्टाप् सौ रूपम् । मनीषा = मनस् + ईषा "शकन्ध्वादिषु पररूपं वाच्यम्" इति टेः पररूपम् । मनी-षिणः = मनीषा + इनिः "व्रीह्यादिभ्यश्च" इतीनिप्रत्ययो ङसो रूपम् ॥ २५ ॥

वाच्यान्तरं—स्थित्यै दण्ड्यान् दण्डयतः, प्रसूतये परिणेतुः, मनीषिणस्तस्यार्थकामा-भ्यामपि धर्मेणैवाभूयत ॥ २५ ॥

कोशः—"अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हेमः । "इच्छा मनोभवौ कामौ" इत्यमरः । "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः । "विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः । धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् प-ण्डितः कविः" इत्यमरः ॥ २५ ॥

तात्पर्यार्थः—स दिलीपोऽपराधानुसारेण दण्डयोग्यानां दण्डदानात् तथा पुत्रेच्छया विवा-हकरणात् परमधार्मिकोऽभूत् ॥ २५ ॥

भाषाऽर्थः—"लोक मर्यादा की" स्थिति के लिये अपराधियों को दण्ड देने वाले, स-न्तान के लिये विवाह करने वाले "अत एव" बुद्धिमान् उस राजा दिलीप के अर्थ और काम भी धर्म ही हुये ॥ २५ ॥

—तस्य दिलीपस्येन्द्रेण सह परस्परविनिमयेन सख्यमाह—

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥

सञ्जीविनी—दुदोहेति । स राजा यज्ञाय यज्ञं कर्तुं गां भुवं दुदोह । करग्रहणेन रिक्तां चकारेत्यर्थः । मघवा देवेन्द्रः सस्याय सस्यं वर्धयितुं दिवं स्वर्ग दुदोह । द्युलोकान्महीलोके वृष्टिमुत्पादयामासेत्यर्थः । "क्रियाऽर्थोपपद०" इत्यादिना यज्ञसस्याभ्यां चतुर्थी । एवमुभौ संपदो विनिमयेन परस्परमादानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतुः । राजा यज्ञैरिन्द्रलो-कमिन्द्रश्चोदकेन भूलोकं पुपोषेत्यर्थः । उक्तं च दण्डनीतौ—(राजा त्वर्थान्समाहृत्य कुर्या-दिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत्) ॥ इति ॥ २६ ॥

अन्वयः—सः, यज्ञाय, गां, दुदोह, मघवा, सस्याय, दिवं, "दुदोह" "एवम्" उभौ, स-म्पद्विनिमयेन, भुवनद्वयं, दधतुः ॥ २६ ॥

व्याख्या—सः = राजा दिलीपः, यज्ञाय = यागाय "यज्ञं कर्तुमिति यावत्"। गां = क्षमाम्, पृथ्वीमित्यर्थः । दुदोह = अदुहत्, षष्ठांशरूपकरादानेन पृथ्वीं रिक्तां चकारेत्यर्थः । मघवा = इन्द्रः, सस्याय = धान्याय, सस्यं बर्धयितुमिति यावत् । दिवं = स्वर्गं, दुदोह = स्वर्गाद्भूतले वृष्टिं कारयामासेत्यर्थः । "एवम्" उभौ = इन्द्रदिलीपौ, सम्पद्विनिमयेन = परस्परं सस्यवृष्टिरूपसम्पदोरादानप्रतिदानाभ्याम्, भुवनद्वयं = लोकद्वितयं, स्वर्गलोकं मर्त्यलोकञ्चेत्यर्थः । दधतुः = पालयामासतुः, "राजा दिलीपो यागैः स्वर्गलोकम् इन्द्रश्च वृष्ट्या मर्त्यलोकं ररक्षतुरिति भावः ॥ २६ ॥

समासादि—यजनमिति यज्ञः (पुं०) तस्मै यज्ञाय । दीव्यत्यत्रेति द्यौस्तां दिवं (स्त्री०) । सम्पदो विनिमयः सम्पद्विनिमयस्तेन सम्पद्विनिमयेन (त०पु०) । द्वौ अवयवौ यस्य तद् द्वयम् (न० लि०) भुवनयोर्द्वयं भुवनद्वयं तद् भुवनद्वयम् (न० लिं०) ॥ २६ ॥

व्याकरणं—दुदोह = दुह (प्रपूरणे—अकारेत्) + लिट् तस्य तिपो णलादेशो धातोर्द्वित्वमभ्यासहलो लोप उपधाया गुणः । यज्ञाय = यज (देवपूजासङ्गतिकरणदानेषु—अकारेत्) + नङ् "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति नङ् प्रत्ययः श्चुत्वं ततः "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ङे रूपम् । एवं सस्यायेत्यत्रापि चतुर्थी बोध्या । दिवं = दिवु (क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु—उदित्) + डिवि प्रत्ययः "दिवेर्डिवि." इत्यौणादिको डिवि-प्रत्ययो डित्वाट्टिलोपोऽमिरूपम् । दधतुः = डुधाञ् (धारणपोषणयोः—डुञित्) + लिट् तस्य तसोऽतुसादेशो धातोर्द्वित्वमभ्यासह्रस्वो जश्त्वम् "आतो लोप इटि च" इत्याकारलोपः । द्वयं = द्वि + तयप् "सङ्ख्याया अवयवे तयप्" इति तयप् प्रत्ययः "द्वित्रिभ्यां तयस्यायज्वा" इति तपयोऽयजादेशः "यस्येति च" इतीकारलोपः सौ रूपम् ॥ २६ ॥

वाच्यान्तरं—तेन यज्ञाय गौर्दुदुहे, मघोना सस्याय द्यौः "दुदुहे", उभाभ्यां सम्पद्विनिमयेन भुवनद्वयं दधे ॥ २६ ॥

कोशः—"विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा" इत्यमरः । "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतु." इत्यमरः । "वृक्षादीनां फलं सस्यम्" इत्यमरः । "इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः" इत्यमरः । "सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्" इत्यमरः । "सम्पदि । संपत्ति. श्रीश्च लक्ष्मीश्च" इत्यमरः । "जगती लोको, विष्टपं भुवनं जगद्" इत्यमरः ॥ २६ ॥

तात्पर्यार्थः—सम्पादितसख्याविव इन्द्रदिलीपौ वृष्टियज्ञाभ्यां मर्त्यस्वर्गलोकौ मिथो ररक्षतुः ॥ २६ ॥

भाषाऽर्थः—वह राजा दिलीप यज्ञ करने के लिये पृथ्वी को "षष्ठांशरूप" कर ग्रहण द्वारा दुहा, और इन्द्र ने धान्य की वृद्धि होने के लिये स्वर्ग को वृष्टिद्वारा दुहा "इस प्रकार से" दोनो "इन्द्र और दिलीप" परस्पर "धन और वृष्टि रूप" अपनी २ सम्पत्ति के बदलने से दोनों "स्वर्ग और मर्त्य" लोक की रक्षा की ॥ २६ ॥

*तस्य राज्ये तस्करभयं नासीदित्याह—*

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥

सञ्जीविनी—नेति । राजानोऽन्ये नृपा रक्षितुर्भयेभ्यस्त्रातुस्तस्य राज्ञो यशो नानुययुः किल नानुचक्रुः खलु । कुतः । यद्यस्मात्कारणात्तस्करता चौर्यं परस्वेभ्यः परधनेभ्यः स्वविषयभूतेभ्यो व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता, अपहार्यान्तराभावात्तस्करशब्द एवापहृत इत्यर्थः । अथवा । (अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि) इति न्यायेन शब्दे स्थिता स्फुरिता न तु स्वरूपतोऽस्तीत्यर्थः ॥ २७ ॥

अन्वयः—राजानः, रक्षितुः, तस्य, यशः, न, अनुययुः, किल, यत्, तस्करता, परस्वेभ्यः, व्यावृत्ता "सती" श्रुतौ, स्थिता ॥ २७ ॥

व्याख्या—राजानः=अन्ये नरपतयः, रक्षितुः=त्रातुः, "भयेभ्यः" इति शेषः। तस्य=राज्ञो दिलीपस्य, यशः=कीर्त्ति, न=नहि, अनुययुः=अनुचक्रुः, किल=प्रसिद्धौ। यत्=यस्मात् कारणात्, तस्करता=चौर्य्यम्, परस्वेभ्यः=अन्यदीयधनेभ्यः, स्वविषयभूतेभ्य इति भावः। व्यावृत्ता=पराङ्मुखीभूता "सती"। श्रुतौ=श्रवणे, तस्करतेत्यर्थप्रतिपादके वाचकशब्द-इति भावः। स्थिता=प्रवृत्ता, अपहार्यान्तराभावात्तस्करशब्द एवापहृत इत्यर्थः। अथवा-श्रुतौ=ध्वनौ "रवमात्रे" स्थिता=अस्थात्, तस्करता केवलं श्रूयत एव नहि परधनार्थं-प्रवर्तते ॥ २७ ॥

समासादि—राजन्त इति राजानः (पुं०)। रक्षतीति रक्षिता तस्य रक्षितुः (पुं०)। परेषां स्वानि परस्वानि तेभ्यः परस्वेभ्यः (त० पु०)। श्रूयतेऽनयेति श्रुतिः, श्रूयत इति वा श्रुतिर्ध्वनिः (स्त्री०) तस्यां श्रुतौ। तस्करस्य भावस्तस्करता (स्त्री०) ॥ २७ ॥

व्याकरणम्—अनुययुः=अनु+या (प्रापणे)+लिट् तस्य झेरुसादेशो धातोर्द्वित्वमभ्यासह्रस्वः "आतो लोप इटि च" इत्याकारलोपः। राजानः=राजृ (दीप्तौ—ऋदित्)+कनिन् "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इत्यौणादिकः कनिन् प्रत्ययो जसि "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधादीर्घः। रक्षितुः=रक्ष (रक्षणे—अकारेत्)+तृन् प्रत्ययः "तृन्" इति सूत्रेण "आर्धधातुकस्येड्वलादेः" इति प्रत्ययस्येडागमो ङसि "ऋत उत्" इत्युदेकादेशो-रपरः सलोपविसर्गौ। व्यावृत्ता=वि+आङ्+वृतु (वर्त्तने—उदित्) क्त प्रत्ययः "गत्यर्था-कर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्तरि क्तप्रत्ययष्टाप् सौ रूपम्। श्रुतौ=श्रु(श्रवणे)+क्तिन् प्रत्ययः कित्वाद् गुणनिषेधो ङिरूपम्। तस्करता=तस्कर+तल् "तस्य भावस्त्वतलौ" इति तल् प्रत्ययष्टाप् सौ रूपम्। स्थिता=ष्ठा (गतिनिवृत्तौ)+क्तप्रत्ययः कर्त्तरि "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति सूत्रेण धात्वादेः षः सः "द्यतिस्यतिमास्थामित्ति किति" इति धातोरित्वं टाप् सौ रूपम् ॥ २७ ॥

वाच्यान्तरम्—"अन्यैः" राजभी रक्षितुस्तस्य यशो नानुयये किल, यत् तस्करतया परस्वेभ्यो व्यावृत्तया "सत्या" श्रुतौ स्थितयाऽभावि ॥ २७ ॥

कोशः—"किलशब्दस्तु वार्त्तायां संभाव्यानुनयार्थयोः" इति विश्वः। "किल सम्भाव्य-वार्त्तयोः। हेत्वरुच्योरलीके च" इति हैमश्च। "राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः। "यशः कीर्त्तिः समज्ञा च" इत्यमरः। "परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले" इति मेदिनी। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः। "श्रुतिः-श्रोत्रे तथाऽऽम्नाये वार्त्तायां श्रोत्रकर्मणि" इति विश्वः। "चौरैकागारिकस्तेनदस्युतस्करमोषकाः" इत्यमरः ॥ २७ ॥

तात्पर्यार्थः—भयेभ्यस्त्रातुर्दिलीपस्य राज्ञो यशोऽन्ये नृपा नानुचक्रुः, यतस्तद्राज्ये न वस्तुतश्चौर्य्यमभूत् किन्तुचौर्य्यशब्दः केवलं लोकानां श्रवणगोचर एवाभूत् ॥ २७ ॥

भाषाऽर्थः—अन्य राजा लोग "भय से" रक्षा करने वाले उस राजा दिलीप के यश का अनुकरण नहीं कर सके, क्योंकि—उसके राज्य में चोरी यह शब्द" अपने विषय भूत दूसरे के द्रव्य से पृथक् होती हुई केवल श्रवण गोचर हुई। अथवा—चोरी अर्थ वाचक चोरी शब्द के ही चुराने में प्रवृत्त हुई ॥ २७ ॥

*तस्य शिष्ट एव प्रियो दुष्ट एवाप्रिय आसीदित्याह—*

द्वेष्योऽपि संमतः शिष्टस्तस्यार्त्तस्य यथौषधम्।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८ ॥

सञ्जीविनी—द्वेष्य इति । शिष्टो जनो द्वेष्यः शत्रुरपि । आर्त्तस्य रोगिण औषधं यथौषधमिव । तस्य संमतोऽनुमत आसीत् । दुष्टो जनः प्रियोऽपि प्रेमास्पदीभूतोऽपि । उरगक्षता सर्पदष्टाऽङ्गुलीव । ( छिन्द्याद्बाहुमपि दुष्टमात्मनः ) इति न्यायात् त्याज्य आसीत् । तस्य शिष्ट एव बन्धुर्दुष्ट एव शत्रुरित्यर्थः ॥ २८ ॥

अन्वयः—शिष्टः, द्वेष्यः, अपि, आर्त्तस्य, औषधं, यथा, तस्य, सम्मतः, "आसीत्" दुष्टः, प्रियः, अपि, उरगक्षता, अङ्गुली, इव "तस्य" त्याज्यः, आसीत् ॥ २८ ॥

व्याख्या—शिष्टः = सज्जनः, द्वेष्योऽपि = अक्षिगतोऽपि, शत्रुरपीति यावत् । आर्त्तस्य = दुःखितस्य, रोगेणेति शेषः, रोगिण इति भावः । औषधम् = भेषजं, यथा = इव, तस्य = दिलीपस्य, सम्मतः = अभिमतः, प्रिय इति यावत् । आसीदिति शेषः । दुष्टः = दुर्जनः, प्रियोऽपि = वल्लभोऽपि, सुहृदपीति यावत् । उरगक्षता = सर्पदष्टा, अङ्गुली = करशाखा, इव = यथा, तस्येति शेषः । त्याज्यः = त्यागार्हः, आसीत् = अभूत् । तस्य दिलीपस्य सुजनो बन्धुरसज्जनो रिपुरासीदिति भावः ॥ २८ ॥

समासादि—द्वेष्टुमर्हो द्वेष्यः (पुं०) । येन प्रकारेण यथा (अ०) । त्यक्तुं योग्यस्त्याज्यः (पुं०) । उरसा गच्छतीत्युरगः, (पुं०) तेन क्षता उरगक्षता (त० पु०) ॥ २८ ॥

व्याकरणं—द्वेष्यः = द्विष (अप्रीतौ-अकारेत्) +ण्यत् "ऋहलोर्ण्यत्" इति ण्यत् प्रत्यय उपधागुणः सौ रूपम् । सम्मतः = सम्+मनु (अवबोधने-उदित्) +क्तप्रत्ययः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः सौ रूपम् । शिष्टः = शासु ( अनुशिष्टौ—उदित् )+क्तप्रत्ययः "शास इदङ्हलोः" इत्याकारस्येत्वं "शासिवसिघसीनां च" इति षत्वं कित्वात्, ततः ष्टुत्वं सौ रूपम् । आर्त्तस्य = आङ्+ऋ (गतिप्रापणयोः)+क्तप्रत्ययो वृद्धिस्ततो रपरत्वं ङसो रूपम् । यथा = यद्+थाल् "प्रकारवचने थाल्" इति थाल् प्रत्ययः "त्यदादीनामः" इत्यकारोऽन्तादेशो यच्छब्दस्य ततोऽव्ययत्वाद्विभक्तिलोपः । त्याज्यः = त्यज (हानौ-अकारेत्) +ण्यत् "ऋहलोर्ण्यत्" इति ण्यत् प्रत्यय उपधावृद्धिः "त्यजेश्च" इति वार्त्तिकेन "चजोः कुघिण्ण्यतोः" इति प्राप्तं कुत्वं वार्यते, सौ रूपम् । दुष्टः = दुष (अप्रीतौ-अकारेत्)+क्तप्रत्ययः ष्टुत्वं सौ रूपम् । आसीत = अस (भुवि-अकारेत्)+लङ् तस्य तिपि धातोराडागमो वृद्धिश्च "अस्तिसिचोऽपृक्ते" इति तिप ईडागमः । उरगेण = उरस्+ गम्ऌ (गतौ—ऌदित्)+डः 'उरसो लोपश्च" इति वार्त्तिकेन डप्रत्यय उरसः सकारलोपश्च क्रियेते ततो डित्वाट्टिलोपष्टारूपम् । क्षता = क्षणु (हिंसायाम्—उदित्)+क्तप्रत्ययः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपष्टाप् सौ रूपम् ॥ २८ ॥

वाच्यान्तरं—शिष्टेन द्वेष्येणाप्यौषधेन यथा तस्य सम्मतेनाभूयत, दुष्टेन प्रियेणाप्युरगक्षतयाऽङ्गुल्येव त्याज्येनाभूयत ॥ २८ ॥

कोशः—"द्वेष्ये त्वक्षिगतः" इत्यमरः । "भेषजौषधभैषज्यान्यगदो जायुरित्यपि" इत्यमरः । "अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इत्यमरः । "अङ्गुल्यः करशाखाः स्युः" इत्यमरः । "उरगः पन्नगो भोगी जिह्मगः पवनाशनः" इत्यमरः ॥ २८ ॥

तात्पर्यार्थः—यथा कटुभैषज्यं रोगग्रस्तस्य प्रियम् भवति, तथैव तस्य दिलीपस्यापि सज्जनः शत्रुरपि सन् प्रियोऽभूद्, असज्जनः प्रियतमोऽपि सन् सर्पदष्टाऽङ्गुलीव त्याज्योऽभूत् ॥ २८ ॥

भाषार्थः—जिस प्रकार रोगी को कड़वी "हितकर" औषधि भी प्यारी होती है, उसी प्रकार उस राजा दिलीप का द्वेष करने के योग्य "वैरी" होता हुआ भी सज्जन प्यारा होता था । और प्यारा होता हुआ भी दुर्जन सांप से काटी हुई अङ्गुली की भांति छोड़ देने के योग्य होता था ॥ २८ ॥

तस्य परोपकारित्वमाह—

तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ॥ २९ ॥

सञ्जीविनी–तमिति। वेधाः स्रष्टा । 'स्रष्टा प्रजापतिर्वेधाः' इत्यमरः । तं दिलीपम् । समाधीयतेऽनेनेति समाधिः कारणसामग्री । महाभूतानां यः समाधिस्तेन महाभूतसमाधिना विदधे ससर्ज । नूनं ध्रुवम् । इत्युत्प्रेक्षा । तथाहि । तस्य राज्ञः सर्वे गुणा रूपरसादिमहाभूतगुणवदेव परार्थः परप्रयोजनमेवैकं मुख्यं फलं येषां ते तथोक्ता आसन् । महाभूतगुणोपमानेन कारणगुणाः कार्यं संक्रामन्तीति न्यायः सूचितः ॥ २९ ॥

अन्वयः—वेधाः, तं, महाभूतसमाधिना, विदधे, नूनं, तथाहि, तस्य, सर्वे, गुणाः, परार्थैकफलाः, आसन् ॥ २९ ॥

व्याख्या—वेधाः = विधिः तं = दिलीपम्, महाभूतसमाधिना = पृथिव्यप्तेजोवाय्वाकाशानां कारणसामग्र्या, विदधे = विरचितवान्, नूनं = ध्रुवम्, "इत्युत्प्रेक्षा" तथा हि = तेन प्रकारेण हि, तस्य = दिलीपस्य, सर्वे = निखिलाः, गुणाः = दयादानदाक्षिण्यादिगुणाः, "रूपरसादिमहाभूतगुणवदेव" परार्थैकफलाः = अन्यप्रयोजनमुख्यफलकाः, आसन् = अभूवन् ॥२९॥

समासादि—विदधातीति वेधाः (पुं०) । समाधानं समाधिः (पुं०) महन्ति च तानि भूतानि महाभूतानि (क० धा०) महाभूतानां समाधिः महाभूतसमाधिस्तेन महाभूतसमाधिना (त० पु०) । तेन प्रकारेण तथा (अ०) । परस्यार्थः परार्थः (त०पु०), स एव एकं "मुख्यं" फलं येषां ते परार्थैकफलाः (व० ब्री०) ॥ २९ ॥

व्याकरणं—वेधाः = वि + डुधाञ् (धारणपोषणयोः—डुञित्) + असिप्रत्ययः "विधाञो वेधश्च"इत्यौणादिकोऽसिप्रत्ययो धातोर्वेधादेशश्च सौ रूपम् । विदधे = वि + डुधाञ् (धारणपोषणयोः—डुञित्) + लिट् तस्य तप्रत्ययस्यैशादेशे धातोर्द्वित्वमभ्यासस्य ह्रस्वजश्त्वे "आतो लोप इटि च" इत्याकारलोपः । महाभूतानाम् = महत् + जस्; भूत + जस् "आन्महतः समानाधिकरणजातीययोः" इत्याकारोऽन्तादेशो महच्छब्दस्यामि रूपम् । समाधिः = सम् + आङ् + डुधाञ् (धारणपोषणयोः–डुञित्) + किः "उपसर्गे घोः किः" इति कि प्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपः सौ रूपम् । तथा = तद् + थाल् "प्रकारवचने थाल्" इति थाल् प्रत्ययः "त्यदादीनामः" इत्यकारोऽन्तादेशस्तच्छब्दस्य ततोऽव्ययत्वाद्विभक्तेर्लुक् । आसन् = अस (भुवि—अकारेत्) + लङ् तस्य झेर्झस्यान्तादेश इकारलोपः संयोगान्तलोपो धातोराडागमो वृद्धिश्च ॥ २९ ॥

वाच्यान्तरं—वेधसा महाभूतसमाधिना स विदधे नूनं तथा हि तस्य सर्वैर्गुणैः परार्थैकफलैरभूयत ॥ २९ ॥

कोशः—"स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः। "नूनं निश्चिततर्कयोः" इति विश्वः । "भूतं क्ष्माऽऽदौ पिशाचादौ न्याय्ये सत्योपमानयोः" इति विश्वः । "अथ समं सर्वम् । विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्"इत्यमरः । "परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले" इति मेदिनी । "अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः । "एके मुख्यान्यकेवलाः" इत्यमरः । "फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायाञ्च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इति हैमः । "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु । शुक्लादावपि वर्त्यां च" इति मेदिनी ॥ २९ ॥

तात्पर्यार्थः—ब्रह्मा यथा यया कारणसामग्र्या महाभूतपञ्चकं निर्मितवांस्तया सामग्र्यैव तथा दिलीपमपि निर्ममौ, अत एव पञ्चमहाभूतगुणवदस्यापि सर्वे शौर्यादयो गुणाः परप्रयोजनमुख्यफलका आसन् ॥ २९ ॥

भाषाऽर्थः—ब्रह्मा जी ने उस राजा दिलीप को महाभूतों (पृथ्वी-जल-तेज-वायु-आकाश) के कारण की सामग्री से बनाया था, निश्चय करके-उस राजा दिलीप के सभी "शौर्यादि" गुण "पञ्च महाभूतों के रूप रसादि गुणों के तुल्य" पराये प्रयोजन वाले ही थे ॥ २९ ॥

*(तस्य चक्रवर्तित्वमाह—)*

**स वेलावप्रवलयां परिखीकृतसागराम्।**
**अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३० ॥**

सञ्जीविनी—स इति। स दिलीपः। वेलाः समुद्रकूलानि। 'वेला कूलेऽपि वारिधेः, इति विश्वः। ता एव वप्रवलयाः प्राकारवेष्टनानि यस्यास्ताम्। 'स्याच्चयो वप्रमस्त्रियाम्। प्राकारो वरणः शालः प्राचीनं प्रान्ततो वृतिः' इत्यमरः। परितः खातं परिखा दुर्गवेष्टनम्। 'खातं खेयं तु परिखा' इत्यमरः। "अन्येष्वपि दृश्यते" इत्यत्रापिशब्दात्खनेर्डप्रत्ययः। अपरिखाः परिखाः संपद्यमानाः कृताः परिखीकृताः सागरा यस्यास्ताम्। अभूततद्भावे च्विः। अविद्यमानमन्यस्य राज्ञः शासनं यस्यास्तामनन्यशासनामुर्वीमेकपुरीमिव शशास। अनायासेन शासितवानित्यर्थः॥ ३० ॥

अन्वयः—सः, वेलावप्रवलयाम्, परिखीकृतसागराम्, अनन्यशासनाम्, उर्वीम्, एकपुरीम्, इव, शशास ॥ ३० ॥

व्याख्या—सः = दिलीपः, वेलावप्रवलयां = समुद्रकूलप्राकारवेष्टनाम्, परिखीकृतसागरां = दुर्गवेष्टनीकृतोदधिम्, अनन्यशासनां = स्वेतरशासनरहिताम्, उर्वीम् = पृथ्वीम्, एकपुरीम् = एकनगरीम्, इव = यथा, शशास = शासितवान्, प्रयासं विनैवासमुद्रं पृथ्वीं ररक्षेति भावः ॥ ३० ॥

समासादि—वप्राण्येव वलया वप्रवलयाः (त० पु०), वेला एव वप्रवलया यस्याः सा वेलावप्रवलया तां वेलावप्रवलयाम् (ब० व्री०)। परितः खाताः परिखाः (स्त्री०), न परिखा-अपरिखाः परिखाः सम्पद्यमानाः कृता इति परिखीकृताः, परिखीकृताः सागरा यस्याः सा परिखीकृतसागरा तां परिखीकृतसागराम् (ब० व्री०)। अन्यस्य शासनम् अन्यशासनम् (त० पु०), अविद्यमानमन्यशासनं यस्याः साऽनन्यशासना तामनन्यशासनाम् (ब० व्री०)। ऊर्णोतीत्युर्वी तामुर्वीम् (स्त्री०)। एका चासौ पुरी, एकपुरी तामेकपुरीम् (क० धा०) ॥ ३० ॥

व्याकरणम्—परिखाः = परि + खनु (अवदारणे-उदित) + डप्रत्ययः "अन्येभ्योऽपि दृश्यते" इति खनतेर्डप्रत्ययष्टिलोपष्टाप् जसि रूपम्। परिखीकृताः = परिखा + च्वि + डुकृञ् (करणे-डुञित्) + क्तः। "कृभ्वस्तियोगे संपद्यकर्तरि च्विः" इति च्विप्रत्ययः सर्वापहारः "अस्य च्वौ" इतीत्वम्। अनन्यशासनां = नञ् + विद्यमान + अन्यशासन, "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति वार्तिकेन विद्यमानपदलोपो नलोपः "तस्मान्नुडचि" इति नुडागमः स्त्रियां टाप् अमि रूपम्। उर्वीम् = ऊर्णुञ् (आच्छादने-ञित्) + कुप्रत्ययः "महति ह्रस्वश्च" इत्यौणादिकः कुप्रत्ययो धातोरादेर्ह्रस्वो नुलोपश्च ततः "वोतो गुणवचनात्" इति ङीष् यणादेशोऽमि रूपम्। शशास = शासु (अनुशिष्टौ-उदित्) + लिट् तस्य तिपो णलादेशो धातोर्द्वित्त्वमभ्यासहलो लोपो ह्रस्वश्च। एकपुरीम् = एका + पुरी "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पुंवद्भाव एकशब्दस्य ॥ ३० ॥

वाच्यान्तरं—तेन वेलावप्रवलया परिखीकृतसागराऽनन्यशासनोर्वी, एकपुरीव शशासे ॥ ३० ॥

कोशः—"वेला कूलेऽपि वारिधेः" इति विश्वः। "स्याच्चयो वप्रमस्त्रियाम्। प्राकारे वरणः-शालः प्राचीनं प्रान्ततो वृतिः" इत्यमरः। "खातं खेयं तु परिखा" इत्यमरः। "उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः। सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा", इत्यमरः। "परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले" इत्यमरः। "पूः स्त्री पुरीनगर्यौ वा पत्तनम् पुटभेदनम्। स्थानीयं निगमम्", इत्यमरः ॥ ३० ॥

तात्पर्य्यार्थः—स दिलीप आसमुद्रान्तभूमेः शासनमनायासेन सामान्याया एकनगर्य्या-इवाकरोत् ॥ ३० ॥

भाषार्थः—उस राजा दिलीप ने समुद्र का किनारा है कङ्कण के तरह चहारदीवारी जिसकी, और समुद्र है खाईं जिसकी, ऐसी अन्य किसी राजा से शासन नहीं की जाती हुई पृथ्वी की एक नगरी की भांति शासन किया ॥ ३० ॥

*(तस्य पत्न्या नामाह—)*

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।**
**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ ३१ ॥**

सञ्जीविनी—तस्येति । तस्य राज्ञो मगधवंशे जाता मगधवंशजा । "सप्तम्यां जनेर्डः" इति डप्रत्ययः । एतेनाभिजात्यमुक्तम् । दाक्षिण्यं परच्छन्दानुवर्तनम् । 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु' इति शाश्वतः । तेन रूढं प्रसिद्धम् । तेन नाम्ना । अध्वरस्य यज्ञस्य दक्षिणा दक्षिणाऽऽख्या पत्नीव सुदक्षिणेति प्रसिद्धा पत्न्यासीत् । अत्र श्रुतिः—(यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः) इति । (दक्षिणाया दाक्षिण्यं नामर्त्विजो दक्षिणत्वप्रापकत्वम् । ते दक्षन्ते दक्षिणां प्रतिगृह्य) इति च ॥ ३१ ॥

अन्वयः—तस्य, मगधवंशजा, दाक्षिण्यरूढेन, नाम्ना, अध्वरस्य, दक्षिणा, पत्नी, इव, सुदक्षिणा, इति, "पत्नी" आसीत् ॥ ३१ ॥

व्याख्या—तस्य = दिलीपस्य, मगधवंशजा = मगधदेशीयनृपकुलोत्पन्ना, दाक्षिण्यरूढेन = परच्छन्दानुवर्तनप्रसिद्धेन, नाम्ना = नामधेयेन, अध्वरस्य = यज्ञस्य, दक्षिणा = तदाख्या, पत्नी = भार्य्या, इव = यथा, सुदक्षिणा, इति = सुदक्षिणेतिनाम्ना प्रसिद्धा, "पत्नी" आसीद् = बभूव, तस्य दिलीपस्य नामतुल्यगुणशालिनी सुदक्षिणा नाम्नी भार्याऽऽसीदिति भावः ॥ ३१ ॥

समासादि—दक्षिणस्य भावो दाक्षिण्यं ( न० लिं० ), तेन रूढं दाक्षिण्यरूढं तेन दाक्षिण्यरूढेन (त० पु०) । मगधानां राजानो मगधास्तेषां वंशो मगधवंशः (त० पु०), तत्र जाता मगधवंशजा (स्त्री०) । स्वःसम्बन्धिनमध्वानं राति ददातीत्यध्वरस्तस्याध्वरस्य (पुं०)॥३१॥

व्याकरणं—दाक्षिण्यं = दक्षिण + ष्यञ् "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति भावे ष्यञ् प्रत्ययो ब्राह्मणादेराकृतिगणत्वाद् ञित्वाद् वृद्धिः "यस्येति च" इत्यकारलोपः सौ रूपम् । रूढं = रुह (बीजजन्मनि प्रादुर्भावे च-अकारेत्) + क्तप्रत्ययः "हो ढः" इति ढत्वं "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं ष्टुत्वं ढकारलोपः "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घः सौ रूपम् । मगधानां = मगध + अञ् "जनपदशब्दात्क्षत्रियादञ्" इत्यञ् प्रत्ययो-बहुत्वे "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इत्यञो लुगामि रूपम् । मगधवंशजा = मगधवंश + जनी ( प्रादुर्भावे—ईदित् ) + डः "सप्तम्यां जनेर्डः" इति डप्रत्ययो डित्वाट्टिलोपष्टाप् सौ रूपम् । पत्नी = पति + ङीप् "पत्युर्नो यज्ञसंयोगे" इति नकारोऽन्तादेशो नान्तत्वाद् "ऋन्नेभ्यो ङीप्" इति ङीप् सौ रूपम् । आसीत् = अस ( भुवि—अकारेत् ) + लङ् तस्य तिपि "अस्तिसिचोऽपृक्ते" इतीडागमो धातोराडागमश्च । अध्वरस्य = अध्वन् + रा ( दाने ) + कः "आतोऽनुपसर्गे कः" इति कप्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपस्ततो नलोपो ङसो रूपम् ॥ ३१ ॥

वाच्यान्तरं—तस्य मगधवंशजया दाक्षिण्यरूढेन नाम्नाऽध्वरस्य दक्षिणया पत्न्येव सुदक्षिणयेत्यभूयत ॥ ३१ ॥

कोशः—"दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु" इति शाश्वतः । "आख्याऽऽह्वे अभिधानञ्च नामधेयञ्च नाम च" इत्यमरः । "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः स-

न्तानः" इत्यमरः। "पत्नी पाणिगृहीती च द्वितीया सहधर्म्मिणी। भार्या जायाऽथ पुंभूम्नि दाराः स्याद्" इत्यमरः। "यज्ञः सवोऽध्वरोयागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः ॥ ३१ ॥

तात्पर्य्यार्थः—परच्छन्दानुवर्त्तित्वगुणबाहुल्यात् तस्य दिलीपस्य मनोवृत्तानुसारिणी, अन्वर्थनाम्नी यज्ञस्य पत्नी दक्षिणेव सुदक्षिणेत्याख्या मगधवंशनन्दिनी महिष्यासीत् ॥३१॥

भाषाऽर्थः—उस राजा दिलीप की मगध वंश में उत्पन्न हुई दूसरे के मनोऽनुकूल चलने के कारण यज्ञ की पत्नी दक्षिणा के तरह सुदक्षिणा इस नाम से प्रसिद्ध पटरानी थी ॥ ३१ ॥

*तस्यानेकासु पत्नीषु सतीष्वपि प्रिया सुदक्षिणैवेत्याह—*

कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाऽधिपः ॥ ३२ ॥

सञ्जीविनी—कलत्रवन्तमिति। वसुधाऽधिपः, अवरोधेऽन्तःपुरवर्गे महति सत्यपि मनस्विन्या दृढचित्तया पतिचित्तानुवृत्त्यादिनिर्बन्धक्षमयेत्यर्थः। तया सुदक्षिणया लक्ष्म्या चात्मानं कलत्रवन्तं भार्यावन्तं मेने। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। वसुधाऽधिप इत्यनेन वसुधया चेति गम्यते ॥ ३२ ॥

अन्वयः—वसुधाऽधिपः, अवरोधे, महति, अपि, मनस्विन्या, तया, लक्ष्म्या, च, आत्मानं, कलत्रवन्तं, मेने ॥ ३२ ॥

व्याख्या—वसुधाऽधिपः=पृथ्वीपतिः, दिलीप इति भावः। अवरोधे=अन्तःपुरवर्गे, महत्यपि=बाहुल्येन सत्यपि, मनस्विन्या=पतिचित्तानुवृत्त्यादिस्वधर्मे दृढचित्तया, तया=सुदक्षिणया, लक्ष्म्या=श्रिया, राज्यस्येति शेषः। च, आत्मानं=स्वं, कलत्रवन्तम्=भार्य्यावन्तम्, मेने=अवगतवान् ॥ ३२ ॥

समासादि—कलत्रमस्त्यस्यासौ कलत्रवांस्तं कलत्रवन्तम् (पुं०)। अततीत्यात्मा, तमात्मानम् (पुं०)। अवरुध्यत इत्यवरोधस्तस्मिन्नवरोधे (पुं०)। प्रशस्तं मनोऽस्या अस्तीति मनस्विनी तया मनस्विन्या (स्त्री०), अधिपातीत्यधिपः (पुं०), वसूनि दधातीति वसुधा (स्त्री०), तस्या अधिपो वसुधाऽधिपः (त० पु०) ॥ ३२ ॥

व्याकरणं—कलत्रवन्तं=कलत्र+मतुप् "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् प्रत्ययः "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मतुपो मस्य वकारादेश उगित्वान्नुम् अमो रूपम्। आत्मानम्=अत (सातत्यगमने-अकारेत्)+मनिण् "सातिभ्यां मनिन्मनिणौ" इत्यौणादिको मनिण् प्रत्ययो णित्वादुपधावृद्धिरमि रूपम्। अवरोधे=अव+रुधिर् (आवरणे-इरित्)+घञ् "हलश्च" इति घञ् प्रत्ययो बाहुलकात्कर्मणि, उपधागुणो ङि रूपम्। मेने=मनु (अवबोधने-उदित्)+लिट् तस्य तप्रत्ययस्यैशादेशो धातोर्द्वित्वम् "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्यभ्यासलोप उपधाऽकारस्यैत्वञ्च। मनस्विन्या=मनस्+विनिः "अस्मायामेधास्रजो विनिः" इति विनिः, प्रत्ययः "ऋन्नेभ्यो ङीप्" इति ङीप् टारूपम्। अधिपः=अधि+पा (रक्षणे)+कः "आतश्चोपसर्गे" इति कप्रत्ययः "आतो लोप इटि च" इत्याकारलोपः। वसुधायाः=वसु+डुधाञ् (धारणपोषणयोः—डुञित्)+कः "आतोऽनुपसर्गे कः" इति कप्रत्यय आकारलोपष्टाप् ङसो रूपम् ॥ ३२ ॥

वाच्यान्तरं—वसुधाऽधिपेनावरोधे महत्यपि मनस्विन्या तया लक्ष्म्या चात्मा कलत्रवान् मेने ॥ ३२ ॥

कोशः—"कलत्रं श्रोणिभार्ययोः" इत्यमरः। "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च" इति धरणिः। "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च" इत्यमरः। "संपत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः। "सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा। गोत्रा कुः पृथिवी पृथ्वी" इत्यमरः। "स्वामी, त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इत्यमरः ॥ ३२ ॥

तात्पर्य्यार्थः—तस्य दिलीपस्य बहुपु स्त्रीगणेपु सत्स्वपि स्वानुकूलाचरणतया स्ववशवर्तितया च लक्ष्मीः सुदक्षिणा च द्वे एव प्रिये पत्न्यौ यथाऽर्थत आस्ताम् ॥ ३२ ॥

भापाऽर्थः—उस राजा दिलीप का रनिवास बहुत बड़ा होने पर भी ( बहुत सी रानियां होने पर भी ) दृढ चित्त सुदक्षिणा और लक्ष्मी से ही वह अपने को स्त्री वाला समझता था ॥ ३२ ॥

*दिलीपः स्वपत्न्यां बहुदिनावधि पुत्रोत्पत्तिप्रतीक्षणं कृतवानित्याह—*

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।**
**विलम्बितफलैः कालं स निनाय मनोरथैः ।। ३३ ।।**

सञ्जीविनी—तस्यामिति । स राजा । आत्मानुरूपायां तस्याम् । आत्मनो जन्म यस्यासावात्मजन्मा पुत्रः । तस्मिन्समुत्सुकः । यद्वा । आत्मनो जन्मनि पुत्ररूपेणोत्पत्तौ समुत्सुकः सन् । ( आत्मा वै पुत्रनामासि ) इति श्रुतेः । विलम्बितं फलं पुत्रप्राप्तिरूपं तेपां तैर्मनोरथैः-कदा मे पुत्रो भवेदित्याशाभिः कालं निनाय यापयामास ॥ ३३ ॥

अन्वयः—सः, आत्मानुरूपायां, तस्याम्, आत्मजन्मसमुत्सुकः, "सन्" विलम्बितफलैः, मनोरथैः, कालं, निनाय ॥ ३३ ॥

व्याख्या—सः = राजा दिलीपः, आत्मानुरूपायां = स्वसदृशि, तस्यां = सुदक्षिणायाम्, आत्मजन्मसमुत्सुकः = पुत्रोत्पत्तीष्टार्थोद्युक्तः, पुत्रप्राप्तौ सोद्योग इति भावः। सन्निति शेपः । विलम्बितफलैः = चिरायितपुत्रप्राप्तिहेतुकैः, मनोरथैः = काङ्क्षाभिः "कदा मे पुत्रो भविष्यतीत्यात्मकैरिति भावः । कालं = समयं, निनाय = नीतवान् ॥ ३३ ॥

समासादिः—आत्मनोऽनुरूपा आत्मानुरूपा तस्यामात्मानुरूपायाम् ( त० पु० ) । आत्मनो जन्म आत्मजन्म ( त० पु० ) आत्मजन्मनि समुत्सुकस्तस्मिन्नात्मजन्मसमुत्सुके ( त० पु० ) । विलम्बितं फलं येपान्ते विलम्बितफलास्तैर्विलम्बितफलैः ( ब० व्री० ) । आमकत्वेन मनांस्येव रथा येपु ते मनोरथास्तैर्मनोरथैः ( ब० व्री० ) ॥ ३३ ॥

व्याकरणं—विलम्बितं = वि + लवि ( शब्देऽवस्रंसने च—इदित् ) + क्तप्रत्यय इदित्वान्नुम् तस्यानुस्वारपरसवर्णौ वलादिलक्षण इडागमः सौ रूपम् । निनाय = णीञ ( प्रापणे-ञित् ) + लिट् धात्वादेर्णो नस्ततो लिट्स्तिपो णलादेशो धातोर्द्वित्वमभ्यासह्रस्वो णित्वाद् वृद्धिः ॥ ३३ ॥

वाच्यान्तरं—तेनात्मानुरूपायां तस्यामात्मजन्मसमुत्सुकेन "सता" विलम्बितफलैर्मनोरथैः कालो निन्ये ॥ ३३ ॥

कोशः—"आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च"इति धरणिः । "आत्मा वै पुत्रनामासि" इति श्रुतिः । "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः । "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः । "फले हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इति हैमः । कालो दिष्टोऽप्यनेहाऽपि" इत्यमरः "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति मेदिनी च । "इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः ॥ ३३ ॥

तात्पर्य्यार्थः—स्वमनोऽनुकूलायां तस्यां सुदक्षिणायां पुत्रोत्पादनोत्सुको दिलीपो बहुदिवसानि व्यतीयाय ॥ ३३ ॥

भापाऽर्थः—उस "राजा दिलीप" ने अपने मन के अनुरूप उस "सुदक्षिणा" में पुत्र के जन्म के विपय में उत्सुक होते हुये, विलम्ब है जिसके फलमें ऐसे "कब मेरे पुत्र होगा" इस आकाङ्क्षा से समय विताया ॥ ३३ ॥

*सन्तानार्थमुद्योक्तुं प्रवृत्तस्य राज्ञो मन्त्रिवर्गे राज्यभारसमर्पणमित्याह—*

संतानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥

सञ्जीविनी—संतानेति । तेन दिलीपेन । संतानोऽर्थः प्रयोजनं यस्य तस्मै संतानार्थाय विधयेऽनुष्ठानाय । स्वभुजादवतारिताऽवरोपिता जगतो लोकस्य गुर्वी धूर्भारः सचिवेषु निचिक्षिपे निहिता ॥ ३४ ॥

अन्वयः—तेन, सन्तानार्थाय, विधये, स्वभुजाद्, अवतारिता, जगतः, गुर्वी, धूः, सचिवेषु, निचिक्षिपे ॥ ३४ ॥

व्याख्या—तेन = राज्ञा दिलीपेन, सन्तानार्थाय = वंशप्रयोजनाय, पुत्रार्थायेति यावद् । विधये = विधानाय, अनुष्ठानायेति यावत् । स्वभुजाद् = आत्मबाहोः, अवतारिता = अवरोपिता, जगतः = लोकस्य, गुर्वी = दुर्भरा, धूः = भारः, कार्यस्येति शेषः । सचिवेषु = मन्त्रिषु, निचिक्षिपे = स्थापयामास ॥ ३४ ॥

समासादि—सन्तानोऽर्थः प्रयोजनं यस्यासौ सन्तानार्थस्तस्मै सन्तानार्थाय (ब० व्री०) । विधानं विधिस्तस्मै विधये ( पुं० ) । स्वस्य भुज स्वभुजस्तस्मात् स्वभुजात् (त० पु०) । गच्छतीति जगत् तस्य जगतः ( न० लिं० ) । सचनं सचिस्तं वान्तीति सचिवास्तेषु सचिवेषु ॥ ३४ ॥

व्याकरणं—विधये = वि + डुधाञ् ( धारणपोषणयोः—डुञित् ) + किः "उपसर्गे घोः किः" इति किप्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपो ङेरूपं तादर्थ्ये चतुर्थी । अवतारिता = अव + तॄ ( प्लवनसन्तरणयोः ) + णिच् वृद्धिः, अवतारि + क्तप्रत्ययो वलादिलक्षण इडागमः "निष्ठायां सेटि" इति णिलोपष्टाप् सौ रूपम् । जगतः = गम्लृ (गतौ—लृदित्) + अतिः "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" इत्यौणादिकोऽतिप्रत्ययो गमेर्जगादेशोऽतेः शतृवद्भावोऽपि निपातितवान् ङसो रूपम् । गुर्वी = गुरु + ङीष् "वोतो गुणवचनात्" इति ङीष् यणादेशः सौ रूपम् । निचिक्षिपे = नि + क्षिप—( प्रेरणे—अकारेत् ) + लिट् प्रत्ययः कर्मणि तस्य तप्रत्ययस्यैशादेशो धातोर्द्वित्वमभ्यासलोपः "कुहोश्चुः" इति चुत्वमभ्यासस्य "असंयोगाल्लिट् कित्" इति कित्वाद् गुणनिषेधः ॥ ३४ ॥

वाच्यान्तरं—स सन्तानार्थाय विधये स्वभुजादवतारितां जगतो गुर्वीं धुरं सचिवेषु निचिक्षेप ॥ ३४ ॥

कोशः—"वंशोऽन्ववायः सन्तानः" इत्यमरः । "अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः । "विधिर्विधाने दैवेऽपि" इत्यमरः । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः । "भुजबाहू प्रवेष्टो दोः" इत्यमरः । "अथो जगती लोको, विष्टपं भुवनं जगत्" इत्यमरः । "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः । "मन्त्री सहायः सचिवौ" इत्यमरः ॥ ३४ ॥

तात्पर्य्यार्थः—पुत्रप्रयोजनकमनुष्ठानं कर्तुं समुत्सुको दिलीपो राज्यभारं मन्त्रिषु स्थापयामास ॥ ३४ ॥

भाषाऽर्थः—सन्तान प्राप्ति के लिये अनुष्ठान "करने" के निमित्त अपने बाहु पर से उतारे हुये जगत् के बडे भारी (प्रजा पालन रूप कार्य) भार को मन्त्रियों के ऊपर रख दिया ॥ ३४ ॥

*पुत्रप्राप्तिकाम्यया दिलीपस्य स्वगुरोर्वसिष्ठस्याश्रमे गमनमित्याह—*

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥

सञ्जीविनी—अथेति । अथ धुरोऽवतारानन्तरं पुत्रकाम्ययाऽऽत्मनः पुत्रेच्छया "काम्य-

च्च" इति पुत्रशब्दात्काम्यच्प्रत्ययः। "अप्रत्ययात्" इति पुत्रकाम्यतेरप्रत्ययः। ततष्टाप्। तया तौ दम्पती जायापती। राजदन्तादिषु जायाशब्दस्य दमिति निपातनात्साधुः। प्रयतौ पूतौ विधातारं ब्रह्माणमभ्यर्च्य 'स खलु पुत्रार्थिभिरुपास्यते' इति मान्त्रिकाः। गुरोः कुलगुरोर्वसिष्ठस्याश्रमं जग्मतुः पुत्रप्राप्त्युपायापेक्षयेति शेषः ॥ ३५ ॥

अन्वयः—पुत्रकाम्यया, प्रयतौ, तौ, दम्पती, विधातारम्, अभ्यर्च्य, गुरोः, वसिष्ठस्य, आश्रमं, जग्मतुः ॥ ३५ ॥

व्याख्या—अथ = मन्त्रिषु राज्यधुरः स्थापनानन्तरम्, पुत्रकाम्यया = सुतेच्छया, प्रयतौ = पवित्रौ, तौ = सुदक्षिणादिलीपौ, दम्पती = जायापती, विधातारं = विधिम्, अभ्यर्च्य = सम्पूज्य, गुरोः = कुलगुरोः, वसिष्ठस्य = तन्नामकस्य महर्षेः, ब्रह्मणो मानसपुत्रस्येति यावद्। आश्रमं = वासस्थान, जग्मतुः = ययतुः, पुत्रप्राप्त्युपायजिज्ञासयेति शेषः ॥ ३५ ॥

समासादि—विशेषण दधातीति विधाता तं विधातारम् (पुं०)। आत्मनः पुत्रमिच्छतीति पुत्रकाम्यति, पुत्रकाम्यतीति पुत्रकाम्या तया पुत्रकाम्यया (स्त्री०)। जाया च पतिश्चेति दम्पती (द्वन्द्वः)। गृणातीति गुरुस्तस्य गुरोः (पु०) ॥ ३५ ॥

व्याकरणम्—अभ्यर्च्य = अभि + अर्च (पूजायाम्—अकारेत्) + णिच् + क्त्वा प्रत्ययस्तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यवादेशः "णेरनिटि" इति णिलोपोऽव्ययत्वात् सुपो लुक्। विधातारं = वि + डुधाञ् (धारणपोषणयोः—डुञित्) + तृन् "तृन्" इति तृन् प्रत्ययः कर्त्तरि ततोऽमि "ऋतो ङिसर्वनामस्थानयोः" इति गुणः "अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्" इत्युपधादीर्घः। प्रयतौ = प्र + यम (उपरमे-अकारेत्) + क्त प्रत्ययः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकमकारलोप औ रूपम्। पुत्रकाम्यया = पुत्र + काम्यच् + अप्रत्ययः "काम्यच्च" इति काम्यच् प्रत्ययः "सनाद्यन्ता धातवः" इति धातुसंज्ञा ततः पुत्रकाम्य इति धातोः "अप्रत्ययात्" इत्यप्रत्ययष्टाप् टा रूपम्। दम्पती = जाया + पती, अत्र द्वन्द्वसमासे "राजदन्तादिषु परम्" इति सूत्रेण जायाशब्दस्य पूर्वप्रयोगो दम्भावश्च निपात्येते। गुरोः = गॄ (शब्दे) + कुः "कृग्रोरुच्च" इत्यौणादिकः कुप्रत्ययो धातोरुकारोऽन्तादेशश्च "उरण् रपरः" इति रपरो ङसो रूपम्। जग्मतुः = गम्लृ (गतौ–लृदित्) + लिट् तस्य तसोऽतुसादेशो धातोर्द्वित्वमभ्यासहलो लोपः "कुहोश्चुः" इति चुत्वमभ्यासस्य "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधाऽकारलोपः ॥ ३५ ॥

कोशः—"मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः "अथो अथ समुच्चये। मङ्गले संशयारम्भाधिकारानन्तरेषु च। अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि" इति हैमश्च। "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः। "पवित्रः प्रयतः पूतः" इत्यमरः। "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी" इत्यमरः। "दम्पती जम्पती जायापती भार्यापती च तौ" इत्यमरः। "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः॥३५॥

तात्पर्यार्थः—पुत्रप्राप्त्युपायजिज्ञासया सुदक्षिणादिलीपौ ब्रह्माणमभ्यर्च्य स्वकुलगुरोर्दिव्यचक्षुषो वसिष्ठस्याश्रमं जग्मतुः ॥ ३५ ॥

भाषाऽर्थः—मन्त्रियों के ऊपर राज्यभार सौंपने के अनन्तर पुत्रकी कामना से पवित्र हो, वे दोनों स्त्री पुरुष सुदक्षिणा और दिलीप ब्रह्मा की पूजा कर के गुरु वसिष्ठ के आश्रम को गये ॥ ३५ ॥

*तयोरेकरथेन वसिष्ठाश्रमगमनमित्याह—*

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥

सञ्जीविनी—स्निग्धेति। स्निग्धो मधुरो गम्भीरो निर्घोषो यस्य तमेकं स्यन्दनं रथम्। प्रावृषि भवः प्रावृषेण्यः। "प्रावृष एण्यः" इत्येण्यप्रत्ययः। तं प्रावृषेण्यं पयोवाहं मेघं विद्युदैरावताविव। आस्थितावारूढौ। जग्मतुरिति पूर्वेण सम्बन्धः। इरा आपः। 'इरा भूवाक्सुराऽप्सु स्यात्' इत्यमरः। इरावान्समुद्रः। तत्र भव ऐरावतोऽभ्रमातङ्गः। 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इत्यमरः। 'अभ्रमातङ्गत्वाच्चवाभ्रस्थरूपत्वात्' इति क्षीरस्वामी। अत एव मेघारोहणं विद्युत्साहचर्यञ्च घटते। किञ्च विद्युत ऐरावतसाहचर्यादैरावती संज्ञा। ऐरावतस्य स्त्र्यैरावतीति क्षीरस्वामी। तस्मात्सुष्ठूक्तं विद्युदैरावताविवेति। एकरथारोहणोक्त्या कार्यसिद्धिबीजं दम्पत्योरत्यन्तसौमनस्यं सूचयति॥ ३६॥

अन्वयः—स्निग्धगम्भीरनिर्घोषम्, एकं, स्यन्दनम्, प्रावृषेण्यम्, पयोवाह, विद्युदैरावतौ, इव, आस्थितौ, "तौ जग्मतुः"॥ ३६॥

व्याख्या—स्निग्धगम्भीरनिर्घोषम्=मधुरगभीरनिःस्वनम्, एकम्=अद्वितीयं, स्यन्दनं=रथं, प्रावृषेण्यं=वर्षाकालिकम्, पयोवाहम्=मेघं, विद्युदैरावतौ=क्षणप्रभाऽभ्रमातङ्गौ, इव=यथा, आस्थितौ=आरूढौ, "तौ जग्मतुः" इति पूर्वश्लोकेन सम्बन्धः। एकरथारोहहणोक्त्या कार्य्यसिद्धिकारणीभूता दम्पत्योर्मिथोरत्यन्तमैत्री सूचिता॥ ३६॥

समासादि—स्निग्धो गम्भीरो निर्घोषो यस्य स स्निग्धगम्भीरनिर्घोषस्तं स्निग्धगम्भीरनिर्घोषम् (ब० व्री०)। स्यन्दते यातीति स्यन्दनस्तं स्यन्दनम् (पुं०)। वर्षणं वृट्, प्रकृष्टा वृट् प्रावृट् (स्त्री०) तत्र भवः प्रावृषेण्यस्तम् प्रावृषेण्यम् (पुं०)। पयांसि वहतीति पयोवाहस्तं पयोवाहम् (पुं०)। विशेषेण द्योतत इति विद्युत् (स्त्री०), इरा आपः सन्त्यस्मिन्निति, इरावान् समुद्रस्तत्र भव ऐरावतः (पुं०) विद्युच्च, ऐरावतश्चेति विद्युदैरावतौ (द्वन्द्वः)॥३६॥

व्याकरणं—स्निग्धः=ष्णिह (प्रीतौ-अकारेत्)+क्त प्रत्ययो धात्वादेः षः सः "वा-द्रुहमुहष्णुहष्णिहाम्" इति हस्य घः "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं घस्य जश्त्वं च सौ रूपम्। स्यन्दनं=स्यन्दू (प्रस्रवणे-ऊदित्)+युच् "अनुदात्तेतश्च हलादेः" इति युच् प्रत्ययः "युवोरनाकौ" इत्यनादेशोऽमिरूपम्। आस्थितौ=आङ्+ष्ठा (गतिनिवृत्तौ)+क्तः "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्त्तरि क्तप्रत्ययो धात्वादेः षः-सस्ततः कित्वाद् "द्यतिस्यतिमास्थामित्ति किति" इति धातोराकारस्येत्वम्, औ रूपम्। प्रावृषि=प्र+वृषु (सेचने-उदित्)+क्विप् प्रत्ययः "नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" इति पूर्वपदस्य दीर्घो ङिरूपम्। प्रावृषेण्यम्=प्रावृष्+एण्यः "प्रावृष एण्यः" इत्येण्यप्रत्ययो-भवार्थेऽमि रूपम्। पयोवाहम्=पयस्+वह (प्रापणे-अकारेत्)+अण् प्रत्ययः "कर्मण्यण्" इतिसूत्रेण, णित्वादुपधावृद्धिरमि रूपम्। विद्युद्=वि+द्युत (दीप्तौ-अकारेत्)+क्विप् प्रत्ययः "भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्" इति सूत्रेण सौ रूपम्। इरावान्=इरा+मतुप् प्रत्ययः "मतोर्वोऽयवादिभ्यः" इति मतुपो मस्य वः सौ रूपम्। ऐरावतः=इरावत्+अण् "तत्र भवः" इति भवार्थेऽण् प्रत्ययः "तद्धितेष्वचामादेः" इत्यादिवृद्धिः सौ रूपम्॥३६॥

वाच्यान्तरं—स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनं प्रावृषेण्यं पयोवाहं विद्युदैरावताभ्यामिवास्थिताभ्यां "ताभ्यां जग्मे"॥ ३६॥

कोशः—"चिक्कणं मसृणं स्निग्धम्" इत्यमरः। "स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः" इत्यमरः। "एके मुख्यान्यकेवलाः" इत्यमरः। "याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः" इत्यमरः। स्त्रियां प्रावृट् स्त्रियां भूम्नि, वर्षाः" इत्यमरः। "सलिलं कमलं जलम्। पयः कीलालममृतं जीवनं भुवनं वनम्" इत्यमरः। "शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा। तडित्सौदामनी विद्युच्चञ्चला चपला अपि" इत्यमरः। "इरा भूवाक्सुराऽप्सु स्याद्" इत्यमरः। "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः॥ ३६॥

तात्पर्यार्थः—यथा मेघमारूढौ विद्युदैरावतौ तथैव, एकरथमारूढौ तौ सुदक्षिणादिलीपौ प्रययतुः ॥ ३६ ॥

भाषाऽर्थः—मधुर और गम्भीर शब्द करने वाले एक ही रथ पर वर्षा काल के मेघ के ऊपर चढ़े हुये विजली और ऐरावत हाथी की भांति वे दोनों सुदक्षिणा और दिलीप चले॥३६॥

*सेनाविरहितयोस्तयोर्गमने कारणमाह—*

**मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।**
**अनुभावविशेषात्तु सेनापरिवृताविव ॥ ३७ ॥**

सञ्जीविनी—माभूदिति । पुनः किंभूतौ दंपती । आश्रमपीडा मा भून्मास्त्विति हेतोः । "माङि लुङ्" इत्याशीरर्थे लुङ् । "न माङ्योगे" इत्यडागमनिषेधः । परिमेयपुरःसरौ परिमितपरिचरौ । अनुभावविशेषात्तु तेजोविशेषात्सेनापरिवृताविव स्थितौ ॥ ३७ ॥

अन्वयः—"पुनः किम्भूतौ दम्पती" आश्रमपीडा, माभूद्, इति, परिमेयपुरःसरौ, अनुभावविशेषात्, तु, सेनापरिवृतौ, इव, "तौ जग्मतुः" ॥ ३७ ॥

व्याख्या—"पुनः किम्भूतौ तौ दम्पती" आश्रमपीडा=वसिष्ठस्थानबाधा, माभूद्=नह्यस्तु, इति=अस्माद्, हेतोरिति शेषः । परिमेयपुरःसरौ=परिमिताग्रेसरौ, स्वल्पसङ्ख्याकपरिचरपरिवृताविति यावद् । अनुभावविशेषात्=प्रभावातिशयात्, तेजोऽतिशयादिति यावत् । तु=किन्तु, सेनापरिवृतौ=सैन्यसमन्वितौ, इव=यथा, स्थितौ जग्मतुरिति, शेषः ॥ ३७ ॥

समासादि—आश्रमस्य पीडा, आश्रमपीडा (त० पु०) । पुरः सरन्तीति पुरःसराः, राज्ञामग्रेयायिनोऽनुचराः (पुं०) परिमातुं शक्याः परिमेयाः (पुं) परिमेयाः पुरःसरा ययोस्तौ परिमेयपुरःसरौ (ब०व्री०) । अनुभवनमनुभावः (पुं०) तस्य विशेषोऽनुभावविशेषस्तस्मादनुभावविशेषात् (त० पु०) । सिनोतीति सेना (स्त्री०) तया परिवृतौ सेनापरिवृतौ (त०पु०)॥३७॥

व्याकरणम्—माभूद्=माङ्+भू(सत्तायाम्)+लुङ् "माङि लुङ्" इति लुङ् आशीरर्थे तस्य तिपि धातोश्च्लिप्रत्ययस्तस्य सिजादेशे "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक् "न माङ्योगे" इति सूत्रेणाडागमनिषेधः । परिमेयाः=परि+माङ् (माने—ङित्)+यत् "अचो यत्" इति यत् प्रत्ययः "ईद्यति" इति धातोराकारस्येत्वं गुणो जसि रूपम् । पुरःसराः=पुरस्+सृ (गतौ)+टः "पुरोऽग्रतोऽग्रेषु सर्तेः" इति टप्रत्ययो गुणो रपरः-सस्य रुत्वविसर्गौ जसि रूपम् । अनुभावस्य=अनु+भू (सत्तायाम्)+घञ् "भावे" इति घञ् प्रत्ययो वृद्धिरावादेशो ङसि-रूपम् । सेनया=षिञ् (बन्धने—ञित्)+नः, धात्वादेःषः सः "कृवृजॄषिद्रुपन्यनिस्वपिभ्यो नित्" इत्यौणादिको नप्रत्ययः स च नित्संज्ञको गुणष्टाप् टा रूपम् । परिवृतौ=परि+वृञ् (वरणे)+क्तप्रत्यय औ रूपम् ॥ ३७ ॥

वाच्यान्तरम्—आश्रमपीडया माभावीति परिमेयपुरःसराभ्यामनुभावविशेषात्तु सेनापरिवृताभ्यामिव "ताभ्यां जग्मे" ॥ ३७ ॥

कोशः—"पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् । स्यात् कष्टं कृच्छ्रमाभीलं-त्रिष्वेषां भेद्यगामि यत्" इत्यमरः । "पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः । पुरोगमः पुरोगामी" इत्यमरः । "अनुभावः प्रभावे च सतां मतिविनिश्चये" इत्यमरः । "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्" इत्यमरः ॥ ३७ ॥

तात्पर्यार्थः—सैन्येन सह गमने जनसमुदायेन गुरोराश्रमपीडा भविष्यतीत्याशङ्क्याल्पपरिचरावपि सुदक्षिणादिलीपौ प्रभावाधिक्यादपरिमितपरिचरपरिवृताविव दृश्यमानौ जग्मतुः ॥ ३७ ॥

भाषाऽर्थः—गुरु वसिष्ठ के आश्रम को पीडा न हो, इस "कारण" से थोड़े "इने गिने"

नौकरों (राजा के आगे २ चलने वालों) से युक्त होते हुये भी प्रभाव की अधिकता के कारण से सेना से घिरे हुये की भांति "दिखलाई पड़ते हुये" वे दोनों सुदक्षिणा और दिलीप चले जाते थे ॥ ३७ ॥

*मार्गे तयोः सुखदवायुभिः सेव्यमानयोर्गमनमित्याह—*

सेव्यमानौ सुखस्पर्शैः शालनिर्याসगन्धिभिः ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८ ॥

सञ्जीविनी—सेव्यमानाविति । पुनः कथंभूतौ । सुखशीतलत्वात्प्रियः स्पर्शो येषां तैः । शालनिर्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवद्भिः । 'शालः सर्जतरुः स्मृतः' इति शाश्वतः । उत्किरन्ति विक्षिपन्तीत्युत्किराः । "इगुपध०" इत्यादिना किरतेः कप्रत्ययः । पुष्परेणूनामुत्किरास्तैराधूता मान्द्यादीषत्कम्पिता वनराजयो यैस्तैर्वातैः सेव्यमानौ ॥ ३८ ॥

अन्वयः—"पुनः कथम्भूतौ" सुखस्पर्शैः, शालनिर्यासगन्धिभिः, पुष्परेणूत्किरैः, आधूतवनराजिभिः, वातैः, सेव्यमानौ, "तौ जग्मतुः" ॥ ३८ ॥

व्याख्या—सुखस्पर्शैः = आनन्दप्रदस्पर्शैः, प्रियस्पर्शैरिति यावत् । शालनिर्यासगन्धिभिः = सर्जतरुनिस्यन्दगन्धवद्भिः, पुष्परेणूत्किरैः = प्रसूनपरागविक्षेपकैः, आधूतवनराजिभिः = ईषत्कम्पितकाननपङ्क्तिभिः, वातैः = पवनैः, सेव्यमानौ = परिचर्य्यमाणौ, "तौ दम्पती जग्मतुः" । एतेन सुखकरवायुसञ्चारेणाभीष्टसिद्धिस्तयोः सूचिता ॥ ३८ ॥

समासादि—सेव्यत इति सेव्यमानः, सेव्यमानश्च सेव्यमाना चेति सेव्यमानौ (ए०शे०) । सुखयतीति सुखः (पुं०) सुखः स्पर्शो येषां ते सुखस्पर्शास्तैः सुखस्पर्शैः (ब० व्री०) । शालेभ्यो-निर्यासाः शालनिर्यासाः (त० पु०) शालनिर्यासाश्च ते गन्धाः शालनिर्यासगन्धाः (क०धा०) शालनिर्यासगन्धाः सन्त्येषु ते शालनिर्यासगन्धिनस्तैः शालनिर्यासगन्धिभिः (पुं०) । उत्किरन्तीत्युत्किराः (पुं०) पुष्पाणां रेणवः पुष्परेणवः (त० पु०) तेषामुत्किराः पुष्परेणूत्किरास्तैः पुष्परेणूत्किरैः (त०पु०) आङ् ईषद् धूता आधूताः (पुं०) वनस्य राजयो वनराजयः (त० पु०) आधूता वनराजयो यैस्ते, आधूतवनराजयस्तैराधूतवनराजिभिः (ब० व्री०) ॥ ३८ ॥

व्याकरणं—सेव्यमानौ = षेवृ (सेवने-ऋदित्) + यक् + लट् "धात्वादेः षः सः" इति सः "सार्वधातुके यक्" इति यक् तस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञा ततः सेव्य + धातोर्लट् तस्य शानजादेशे "आने मुक्" इति मुगागमे, "पुमान् स्त्रिया" इति पुंस एकशेषे, औ रूपम् । उत्किराः = उद् + कॄ (विक्षेपे) + कः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः "ॠत इद्धातोः" इतीत्त्वं रपरो जसि रूपम् । वातैः = वा (गतिगन्धनयोः) + क्त प्रत्ययो भिसि रूपम् । आधूताः = आङ् + धूञ् (कम्पने-ञित्) + क्त प्रत्ययः "यस्य विभाषा" इतीडागमनिषेधो-जसि रूपम्, अत्राङ् ईषदर्थे ज्ञेयः ॥ ३८ ॥

वाच्यान्तरं—सुखस्पर्शाञ्छालनिर्यासगन्धिनः पुष्परेणूत्किरानाधूतवनराजीन् वातान् सेव्यमानाभ्यां "ताभ्यां जग्मे" ॥ ३८ ॥

कोशः—"स्यादानन्दथुरानन्दशर्मशातसुखानि च" इत्यमरः । शालः सर्जतरौ वृक्षमात्र-प्राकारयोरपि" इति मेदिनी । "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः । "परागः कौसुमे रेणौ धूलिस्नानीययोरपि । गिरिप्रभेदे विख्यातावुपरागे च चन्दने" इति कोशान्तरम् । "परागः सुमनोरजः" इति चामरः । "नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः । "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः । "वीथ्यालिरावलिः पङ्क्तिः श्रेणीलेखास्तु राजयः" इत्यमरः ॥ ३८ ॥

तात्पर्यार्थः—पुत्राप्त्युपायजिज्ञासया गच्छतोस्तयोर्यात्रायां मार्गेऽभीष्टफलप्राप्तिसूचकः-सुखस्पर्शो वायुर्ववौ ॥ ३८ ॥

भाषार्थः—सुख कर स्पर्श वाली, शाल वृक्षों से निकले हुये गन्ध से युक्त, पुष्पों के परागों को उडानेवाली, वायु का "सुदक्षिणा और दिलीप" सेवन करते हुये जाने लगे ॥ ३८ ॥

*मार्गे मयूरवाणीः शृण्वतोस्तयोर्गमनमित्याह—*

**मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।**

**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥ ३९ ॥**

सञ्जीविनी—मनोऽभिरामा इति। रथनेमिस्वनोन्मुखैः। मेघध्वनिशङ्कयोन्नमितमुखैरित्यर्थः। शिखण्डिभिर्मयूरैर्द्विधा भिन्नाः शुद्धविकृतभेदेनाविष्कृतावस्थाद्वयाश्च्युताच्युतभेदेन वा षड्जो-द्विविधः। तत्सादृश्यात्केका अपि द्विधा भिन्ना इत्युच्यते। अत एवाह-षड्जसंवादिनीरिति। षड्भ्यः स्थानेभ्यो जातः षड्जः। तदुक्तं-(नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन्। षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः॥) स च तन्त्रीकण्ठजन्मा स्वरविशेषः। 'निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः॥' इत्यमरः। षड्जेन संवादिनीः सदृशीः। तदुक्तं मातङ्गेन-(षड्जं मयूरो वदति) इति। मनोऽभिरामाः, मनसः प्रियाः। के मूर्ध्नि कायन्ति ध्वनन्तीति केका मयूरवाण्यः 'केका वाणी मयूरस्य' इत्यमरः। ताः केकाः शृण्वन्तौ, इति श्लोकार्थः ॥ ३९ ॥

अन्वयः—रथनेमिस्वनोन्मुखैः, शिखण्डिभिः, द्विधा, भिन्नाः, षड्जसंवादिनीः, मनोऽभिरामाः, केकाः, शृण्वन्तौ, "तौ दम्पती जग्मतुः" ॥ ३९ ॥

व्याख्या—रथनेमिस्वनोन्मुखैः=स्यन्दनचक्रप्रान्तनिनादोन्नमिताननैः, मेघध्वनिशङ्कयोर्ध्वमुखैरिति यावद्। शिखण्डिभिः=मयूरैः, द्विधा=द्विप्रकाराः, शुद्धविकृतभेदेनेति शेषः। भिन्नाः=भेदमापन्नाः, "द्वैधीभूताः" इत्यर्थः। षड्जसंवादिनीः=तन्त्रीकण्ठविनिःसृतस्वरविशेषानुसारिणीः, मनोऽभिरामाः=हृदयप्रियाः, मानसानन्ददायिनीरित्यर्थः। केकाः=मयूरवाणीः, शृण्वन्तौ=आकर्णयन्तौ "तौ दिलीपौ जग्मतुः ॥ ३९ ॥

समासादि—अभिरमते मनो यासु ता अभिरामाः (स्त्री०) मनसोऽभिरामा मनोऽभिरामास्ता मनोऽभिरामाः (त० पु०)। शृणोतीति शृण्वन्, शृण्वंश्च शृण्वन्ती चेति शृण्वन्तौ (एकशेषः) (पु०)। रमन्तेऽस्मिन्निति रथः (पु०) नयतश्चक्रं रथं वेति नेमी (स्त्री०) रथस्य नेमी रथनेमी (त० पु०) तयोः स्वनो रथनेमिस्वनः (त० पु०) उद् ऊर्ध्वं मुखं येषान्ते, उन्मुखाः (व० व्री०) रथनेमिस्वनेनोन्मुखा रथनेमिस्वनोन्मुखास्तै रथनेमिस्वनोन्मुखैः (त०पु०)। षड्भ्यः स्थानेभ्यः-संजात. षड्जः (पुं०) संवदितुं शीलमस्त्यासामिति संवादिन्यः (स्त्री०) षड्जस्य संवादिन्यः-षड्जसंवादिन्यस्ताः षड्जसंवादिनीः (त० पु०)। के मूर्ध्नि कायन्ति ध्वनन्तीति केका-मयूरवाण्यस्ताः केकाः (स्त्री०)। द्वौ प्रकारौ यस्याः सा द्विधा (अव्य०) शिखण्डः (प्रशस्तं-पुच्छम्) अस्त्येषामिति शिखण्डिनस्तैः शिखण्डिभिः (पु०) ॥ ३९ ॥

व्याकरणम्—अभिरामाः=अभि+रमु (क्रीडायाम्—उदित्) घञ् प्रत्ययोऽधिकरणे "हलश्च" इति सूत्रेण तत उपधावृद्धिष्टाप् शसि रूपम्। शृण्वन्तौ=श्रु (श्रवणे)+लट् तस्य शत्रादेशः "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रेण ततः "श्रुवः शृ च" इति श्रुवः शृ श्नुप्रत्ययश्च नस्य णत्वं "हुश्नुवोः सार्वधातुके" इति यणादेशः "उगिदचां-सर्वनामस्थानेऽधातोः" इति नुमागम एकशेषः पुंसः "पुमान् स्त्रिया" इति सूत्रेण, औ रूपम्। रथः=रमु (क्रीडायाम्—उदित्)+'क्थन्' "हनिकुषिनीरमिकाशिभ्यः क्थन्" इत्यौणादिकः क्थन् प्रत्ययः कित्त्वाद् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो-झलि क्ङिति" इत्यनुनासिकमकारलोपः सौ रूपम्। नेमी=णीञ् (प्रापणे—ञित्)+मिः, धात्वादेर्णो नः "नियो मिः" इत्यौणादिको मि प्रत्ययो गुण औ रूपम्। षड्जस्य=षष्—जनी (प्रादुर्भावे—ईदित्)+डः "पञ्चम्यामजातौ" इति ड प्रत्ययष्टिलोपः षस्य जश्त्वेन

ङो जसि रूपम् । संवादिन्यः=सम्+वद (व्यक्तायां वाचि—अकारेत्)+णिनिः+ङीप् "सुप्यजातौ णिनिस्ताच्छील्ये" इति भाष्यसम्मतत्वादुपसर्गेऽपि णिनिः प्रत्यय उपधावृद्धिः "ऋन्नेभ्यो ङीप्" इति ङीप् जसो रूपम् । केकाः=के+कै (शब्दे)+डः "अन्येष्वपि दृश्यते" इति सूत्रेऽपिशब्दस्य सर्वोपाधिव्यभिचारार्थकत्वेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचिद् विधानादत्र डप्रत्ययः "आदेच उपदेशेऽशिति" इति धातोरात्वं "टेः" इति डित्वसामर्थ्यात्क्वचिदभस्यापि टेर्लोपविधानाट्टिलोपः "हलदन्तात्सप्तम्याः संज्ञायाम्" इत्यलुक् टाप् शसो रूपम् । द्विधा=द्वि+धा "सङ्ख्याया विधार्थे धा" इति धा प्रत्ययोऽव्ययत्वात्सुपोलुक् । भिन्नाः=भिदिर् (विदारणे—इरित्)+क्त प्रत्ययः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति दकारतकारयोर्नत्वं टाप् शसो रूपम् । शिखण्डिभिः=शिखण्ड+इनिः "अत इनिठनौ" इतीनिः प्रत्ययो नलोपो भिसि रूपम् ॥ ३९ ॥

वाच्यान्तरं—रथनेमिस्वनोन्मुखैः शिखण्डिभिर्द्विधा भिन्नाः षड्जसंवादिनीर्मनोऽभिरामाः केकाः शृण्वद्भ्यां ताभ्यां जग्मे ॥ ३९ ॥

कोशः—"स्वान्तं हृन्मानसं मनः" इत्यमरः । "याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः" इत्यमरः । "पुंलिङ्गस्तिनिशे नेमिश्चक्रप्रान्ते स्त्रियामपि" इति रुद्रः । "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्यमरः । "नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन् । षड्भ्यः सञ्जायते यस्मात्तस्मात्षड्ज इति स्मृतः" इति कोशान्तरम् । "निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः" इत्यमरः । "षड्जं मयूरो वदति" इति मातङ्गोक्तिः । "केका वाणी मयूरस्य" इत्यमरः । "शिखण्डस्तु, पिच्छबर्हे नपुंसके" इत्यमरः ॥ ३९ ॥

तात्पर्य्यार्थः—रथचक्रप्रान्तोद्भूतशब्दं मेघध्वनिं मन्यमानानामत एवोर्ध्वमुखानां मयूराणां वाणीः शृण्वन्तौ तौ जग्मतुः ॥ ३९ ॥

भाषाऽर्थः—रथ के चक्र प्रान्त के शब्द को सुन कर के ऊपर मुख किये हुये मयूरों द्वारा दो प्रकार की की हुई षड्ज स्वर का अनुसरण करने वाली "तथा" मन को प्रसन्न करने वाली वाणी को सुनते हुये वे दोनों चले ॥ ३९ ॥

*मृगद्वन्द्वं पश्यतोस्तयोर्गमनम्—*

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४० ॥

सञ्जीविनी—परस्परेति । विश्रम्भाददूरं समीपं यथा भवति तथोज्झितं वर्त्म यैस्तेषु । स्यन्दनाबद्धदृष्टिषु स्यन्दने रथ आबद्धाऽऽसञ्जिता दृष्टिर्नेत्रं यैस्तेषु । 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः । कौतुकवशाद्रथासक्तदृष्टिष्वित्यर्थः । मृग्यश्च मृगाश्च मृगाः "पुमान् स्त्रिया" इत्येकशेषः । तेषां द्वन्द्वेषु मिथुनेषु । 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः । परस्पराणां सादृश्यं पश्यन्तौ । द्वन्द्वशब्दसामर्थ्यान्मृगीषु सुदक्षिणाऽक्षिसादृश्यं दिलीपो, दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणेत्येवं विवेक्तव्यम् ॥ ४० ॥

अन्वयः—"पुनः कथम्भूतौ" अदूरोज्झितवर्त्मसु, स्यन्दनाऽऽबद्धदृष्टिषु, मृगद्वन्द्वेषु, परस्पराक्षिसादृश्यं, पश्यन्तौ, "तौ, जग्मतुः" ॥ ४० ॥

व्याख्या—"पुनः कथम्भूतौ" अदूरोज्झितवर्त्मसु=सन्निकटत्यक्तमार्गेषु, विश्वासात् पलायनविरहितेष्विति भावः । अत एव—स्यन्दनाबद्धदृष्टिषु=रथसंलग्ननेत्रेषु, कौतुकवशादिति शेषः । मृगद्वन्द्वेषु=हरिणमिथुनेषु, परस्पराक्षिसादृश्यम्=मिथो नयनसरूपताम्, पश्यन्तौ=विलोकयन्तौ, "तौ जग्मतुः" । अत्र मृगद्वन्द्वेष्विति पदे द्वन्द्वशब्दसामर्थ्याद्

मृगीषु सुदक्षिणानेत्रसरूपतां दिलीपः, मृगेषु दिलीपनेत्रसरूपतां सुदक्षिणा च पश्यन्तौ, इति बोद्धव्यम् ॥ ४० ॥

समासादि—सदृशस्य भावः सादृश्यम् (न० लिं०), अक्ष्णां सादृश्यम् अक्षिसादृश्यम् (त०पु०) परस्परं च तद् अक्षिसादृश्यम् परस्पराक्षिसादृश्यम् (त० पु०)। न दूरमदूरम् (नञ् त० पु०) अदूरं यथा स्यात्तथोज्झितं वर्त्म यैस्तान्यदूरोज्झितवर्त्मानि तेषु, अदूरोज्झितवर्त्मसु। (ब० व्री०)। मृग्यश्च मृगाश्चेति मृगाः (ए० शे०) तेषां द्वन्द्वानि मृगद्वन्द्वानि तेषु मृगद्वन्द्वेषु (त० पु०)। पश्यतीति पश्यन् (पुं) पश्यँश्च पश्यन्ती चेति पश्यन्तौ (ए० शे०)। स्यन्दते यातीति स्यन्दनः (पु०) तस्मिन्ना समन्ताद् बद्धा दृष्टयो यैस्तानि स्यन्दनाबद्धदृष्टीनि तेषु स्यन्दनाबद्धदृष्टिषु (ब० व्री०) ॥ ४० ॥

व्याकरणं—सादृश्यं = सदृश + ष्यञ् "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ् ञित्वादादिवृद्धिरमि रूपम्। उज्झितम् = उज्झ (उत्सर्गे—अकारेत्) + क्तप्रत्ययो वलादिलक्षण इडागमः सौ रूपम्। मृगाणां = मृगाः + मृग्यः "पुमान् स्त्रिया" इति पुंस एकशेषआमि रूपम्। द्वन्द्वानि = द्विशब्दस्य "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" इत्यत्र योगविभागादत्रापि द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य जसि रूपम्। पश्यन्तौ = दृशिर् (प्रेक्षणे—इरित्) + लट् "लटः शतृशानचावप्रथमासमानाधिकरणे" इति लटः शत्रादेशस्ततो धातोः शप् प्रत्ययः "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति धातोः पश्यादेशः "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमागमस्ततः "पुमान् स्त्रिया" इति सूत्रेणैकशेषः पुंसस्ततऔ रूपम्। स्यन्दने = स्यन्दू (प्रस्रवणे—ऊदित्) + युच् "अनुदात्तेतश्च हलादेः" इति युच् प्रत्ययस्तस्यानादेशो ङि रूपम्। आबद्धाः = आङ् + बध (संयमने—अकारेत्) + क्तप्रत्ययः "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं धस्य जश्त्वं टाप् जसि रूपम्। दृष्टयः = दृशिर् (प्रेक्षणे—इरित्) + क्तिन् प्रत्ययः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वं ष्टुत्वं जसि रूपम् ॥ ४० ॥

वाच्यान्तरम्—अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षिसादृश्यं पश्यद्भ्यां 'ताभ्यां जग्मे' ॥ ४० ॥

कोशः—"लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी" इत्यमरः। "अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः। सरणिः पद्धतिः पद्या वर्त्तन्येकपदीति च" इत्यमरः। "मृगे कुरङ्गवातायुहरिणाजिनयोनयः" इत्यमरः। "द्वन्द्वं कलहयुग्मयोः" इति, "द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः" इत्यमरविश्वकोशौ। "याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः" इत्यमरः ॥ ४० ॥

तात्पर्यार्थः—रथमार्गं परित्यज्य विश्वासात् समीपे तिष्ठत्सु हरिणमिथुनेषु दिलीपो हरिणीषु सुदक्षिणानयनसारूप्यं पश्यन् सुदक्षिणा हरिणेषु दिलीपनयनसारूप्यं पश्यन्ती सती च तौ जग्मतुः ॥ ४० ॥

भाषार्थः—समीप में रथ के मार्ग को छोड़े हुये, रथ की ओर दृष्टि लगाये हुये, मृग के जोड़ों में परस्पर (एक दूसरों के) आंखो की समानता को देखते हुये (वे दोनों चले) ॥४०॥

×मार्गे क्वचित् सारसान् पश्यन्तौ जग्मतुरित्याह—×

श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम्।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥

सञ्जीविनी—श्रेणीबन्धादिति। श्रेणीबन्धात्पङ्क्तिबन्धनाद्धेतोरस्तम्भामाधारस्तम्भरहिताम्। तोरणं बहिर्द्वारम्। 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः। तत्र या स्रग्विरच्यते तां तोर-

स्रजं वितन्वद्भिः । कुर्वद्भिरिवेत्यर्थः । उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम् । कलनिर्ह्रादैरव्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः । करणैः । क्वचिदुन्नमिताननौ । 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः ॥ ४१ ॥

अन्वयः—श्रेणीबन्धाद्, अस्तम्भां, तोरणस्रजं, वितन्वद्भिः, कलनिर्ह्रादैः सारसैः, क्वचिद्, उन्नमिताननौ, "तौ जग्मतुः" ॥ ४१ ॥

व्याख्या—श्रेणीबन्धात् = पङ्क्तिबन्धनाद्, अस्तम्भाम् = आधारस्तम्भरहितां, तोरणस्रजम् = बहिर्द्वारमालां, वितन्वद्भिः = विरचयद्भिः, इवेति शेषः । उत्प्रेक्षा बोधकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षाऽत्र ज्ञेया । कलनिर्ह्रादैः = मधुरास्फुटध्वनिभिः, सारसैः = पक्षिविशेषैः, "करणैः" । क्वचित् = कस्मिंश्चित्, स्थल इति शेषः । उन्नमिताननौ = ऊर्ध्वमुखौ, "तौ जग्मतुः ॥ ४१ ॥

समासादि—श्रेण्या बन्धः श्रेणीबन्धः (त० पु) तस्माद् श्रेणीबन्धात् । विशेषेण तन्वन्तीति वितन्वन्तस्तैर्वितन्वद्भिः (पु०) । न विद्यते स्तम्भो यस्याः सा, अस्तम्भा तामस्तम्भाम् (ब० व्री०) । तोरणस्य स्रक् तोरणस्रक् तां तोरणस्रजम् (त०पु०) । कलो निर्ह्रादो-येषान्ते कलनिर्ह्रादास्तैः कलनिर्ह्रादैः (ब० व्री०) । कस्मिंश्चिद् इति क्वचित् (अ० ) । उन्नमिते आनने ययोस्तौ, उन्नमिताननौ, ॥ ४१ ॥

व्याकरणं—वितन्वद्भिः = वि + तनु (विस्तारे—अकारेत्) + उ + लट्, "लटः शतृशानचावप्रथमासमानाधिकरणे" इति लटः शत्रादेशे "तनादिकृञ्भ्य उः" इत्यु प्रत्ययो यणादेशो भिसि रूपम् । क्व = किम् + अत् "किमोऽत्" इत्यत्प्रत्ययः "क्वाति" इति क्वादेशः । उन्नमिते = उद् + णम (प्रह्वत्वे शब्दे—अकारेत्) + णिच् + क्तप्रत्ययौ णो नो धात्वादेस्ततो-वलादिलक्षण इडागमः "निष्ठायां सेटि" इति णिचो लोप औरूपम् ॥ ४१ ॥

वाच्यान्तरं—श्रेणीबन्धादस्तम्भां तोरणस्रजं वितन्वद्भिः कलनिर्ह्रादैः सारसैः क्वचिदुन्नमिताननाभ्यां "ताभ्यां जग्मे" ॥ ४१ ॥

कोशः—"वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः" इत्यमरः । "स्तम्भौ स्थूणाजडीभावौ" इत्यमरः । "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः । "माल्यं मालास्रजौ मूर्ध्नि" इत्यमरः । "पुष्कराह्वस्तु सारसः" इति, "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इत्यमरयादवौ । "ध्वनौ तु मधुरास्फुटे । कलः" इत्यमरः । "स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः" इत्यमरः । "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः ॥ ४१ ॥

तात्पर्यार्थः—पङ्क्तिबन्धनं कृत्वाऽऽकाशे मधुराव्यक्तभाषिणः सारसान् स्तम्भरहितान् बहिर्द्वारमाल्यसदृशान् क्वचिदूर्ध्वमुखौ पश्यन्तौ तौ जग्मतुः ॥ ४१ ॥

भाषाऽर्थः—पक्ति बांधने से (पंक्ति बांध कर चलने से) विना खम्भे के बन्दनवार (की तरह शोभा) को करते हुवे, अस्पष्ट मधुर शब्द वाले सारस पक्षियों के कारण से कभी २ ऊपर की ओर मुख किये हुये (वे दोनों चले) ॥ ४१ ॥

*गच्छतोस्तयोः पथ्यनुकूलवायुवहनमित्याह—*

पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥

सञ्जीविनी—पवनस्येति । प्रार्थनासिद्धिशंसिनोऽनुकूलत्वादेव मनोरथसिद्धिसूचकस्य पवनस्यानुकूलत्वाद् गन्तव्यदिगभिमुखत्वात् । तुरगोत्कीर्णै रजोभिरस्पृष्टा अलका देव्याः, वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ । 'शिरसा वेष्टनशोभिना सुतः' इति वक्ष्यति ॥ ४२ ॥

अन्वयः—प्रार्थनासिद्धिशंसिनः, पवनस्य, अनुकूलत्वात्, तुरगोत्कीर्णैः, रजोभिः, अस्पृष्टालकवेष्टनौ, "तौ जग्मतुः" ॥ ४२ ॥

व्याख्या—प्रार्थनासिद्धिशंसिनः = याच्ञापूर्त्तिविज्ञापकस्य, मनोरथसिद्धिसूचकस्येति भावः। पवनस्य = वातस्य, अनुकूलत्वाद् = गन्तव्यदिगभिमुखत्वाद्, शकुनशास्त्रेऽभिमुखपवनस्य कार्यसिद्धिकरत्वमुक्तम्। तुरगोत्कीर्णैः = अश्वोत्क्षिप्तैः, अश्वखुरोत्क्षिप्तैरित्यर्थः। रजोभिः = धूलिभिः, अस्पृष्टालकवेष्टनौ = असम्पृक्तचूर्णकुन्तलोष्णीषौ, "शिरसा वेष्टनशोभिना सुतः" इति वक्ष्यमाणप्रयोगवशाद्वेष्टनपदेन शिरोवेष्टनं गृह्यते। "तौ दम्पती जग्मतुः" ॥ ४२ ॥

समासादि—पुनातीति पवनः (पुं०) तस्य पवनस्य। अनुकूलस्य भावोऽनुकूलत्वं तस्मादनुकूलत्वात् (न० लिं०)। प्रार्थनायाः सिद्धिः प्रार्थनासिद्धिः (त० पु०) तां शंसितुं शीलमस्येति प्रार्थनासिद्धिशंसी तस्य प्रार्थनासिद्धिशंसिनः (पुं०)। रज्यन्ते वस्त्रादयेभिरिति रजांसि (न० लिं०) तै रजोभिः। तुतोर्तीति तुरः (पुं०), तुरो गच्छन्तीति तुरगाः (पुं०) तैरुत्कीर्णानि तुरगोत्कीर्णानि तैस्तुरगोत्कीर्णैः (त० पु०)। न स्पृष्टा अस्पृष्टाः (न० त० पु०) अलकाश्च वेष्टनञ्चेति, अलकवेष्टने (द्वन्द्वः) अस्पृष्टे अकलवेष्टने ययोस्तौ, अस्पृष्टालकवेष्टनौ (ब० व्री०)॥४२॥

व्याकरणम्—पवनः = पूञ् (पवने—ञित्) + युच् "बहुलमन्यत्रापि" इत्यौणादिको युच् प्रत्ययस्तस्यार्धधातुकत्वेन धातोर्गुणो योरनादेशस्ततोऽवादेशः सौ रूपम्। अनुकूलत्वाद् = अनुकूल + त्वः "तस्य भावस्त्वतलौ" इति त्वप्रत्ययो ङसि रूपम्। सिद्धिः = षिधु (संराद्धौ—उदित्) + क्तिन् प्रत्ययो धात्वादेः पः सः "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं पूर्वधस्य जश्त्वं सौ रूपम्। प्रार्थनासिद्धिशंसिनः = प्रार्थनासिद्धि + शंसु (स्तुतौ—उदित्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिर्ङसो रूपम्। रजोभिः = रञ्ज (रागे—अकारेत्) + असुन् "भूरञ्जिभ्यां कित्" इत्यौणादिकोऽसुन् प्रत्ययः स च कित् तस्माद् "अनिदितां हल उपधायाः क्ङिति" इत्युपधानकारलोपो भिसि रूपम्। तुरः = तुर (त्वरणे—अकारेत्) + कः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः कित्वाद् गुणाभावः सौ रूपम्। तुरगैः = तुर + गम्लृ (गतौ—लृदित्) + डः "अन्यत्रापि दृश्यत इति वक्तव्यम्" इति वार्त्तिकबलेन डप्रत्ययष्टेर्लोपो भिसि रूपम्। उत्कीर्णानि = उद् + कॄ (विक्षेपे) + क्त प्रत्ययः "ॠत इद्धातोः" इतीत्वं रपरत्वं "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठातस्य नत्वं ततो णत्वं "हलि च" इति धातोरुपधादीर्घो जसि रूपम्। अस्पृष्टे = नञ् + स्पृश (संस्पर्शने—अकारेत्) + क्तप्रत्ययः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वं ष्टुत्वं ततो नञ्समासे "नलोपो नञः" इति नकारलोपष्टाप् औरूपम्॥ ४२ ॥

वाच्यान्तरम्—प्रार्थनासिद्धिशंसिनः पवनस्यानुकूलत्वात् तुरगोत्कीर्णैः रजोभिरस्पृष्टालकवेष्टनाभ्यां ताभ्यां जग्मे ॥ ४२ ॥

कोशः—"नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः। "याच्ञाऽभिशस्तिर्याचनाऽर्थना" इत्यमरः। "रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः" इत्यमरः। "घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः" इत्यमरः। "अलकाश्चूर्णकुन्तलाः" इत्यमरः। "उष्णीषः, शिरोवेष्टकिरीटयोः" इत्यमरः ॥ ४२ ॥

तात्पर्यार्थः—मनोरथसिद्धिसूचकस्य वायोरनुकूलत्वात् तुरगखुरोत्था धूलयो राज्ञो दिलीपस्योष्णीषं राज्ञ्याः सुदक्षिणायाश्च कुटिलकेशान् नास्पृशन् ॥ ४२ ॥

भाषाऽर्थः—मनोरथ की सिद्धि को सूचित करने वाली वायु की अनुकूलता (सम्मुख दिशा के तरफ बहने) के कारणसे, घोडों के खुरों से उठी हुई धूलि से "सुदक्षिणा" के घुंघुराले बाल और "दिलीप" के सिरपेंच नहीं छुए गये "ऐसे वे दोनों चले" ॥ ४२ ॥

*मार्गे कमलानां गन्धं जिघ्रतोस्तयोर्गमनमित्याह—*

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥

सञ्जीविनी—सरसीष्विति । सरसीषु वीचिविक्षोभशीतलभूमिसंघट्टनेन शीतलं स्वनिःश्वासमनुकर्तुं शीलमस्येति स्वनिःश्वासानुकारिणम् । एतेन तयोरुत्कृष्टस्त्रीपुंसजातीयत्वमुक्तम् । अरविन्दानामामोदमुपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ॥ ४३ ॥

अन्वयः—सरसीषु, वीचिविक्षोभशीतलं, स्वनिःश्वासानुकारिणम्, अरविन्दानाम्, आमोदम्, उपजिघ्रन्तौ, "तौ जग्मतुः" ॥ ४३ ॥

व्याख्या—सरसीषु = सरःसु, वीचिविक्षोभशीतलं = तरङ्गसङ्घट्टनशीतं, स्वनिःश्वासानुकारिणम् = आत्मनिःश्वासानुकरणशीलम्, एतेन तयोः स्त्रीपुंसयोः पद्मिनीशशजातीयत्वमुक्तम् । अरविन्दानां = कमलानाम्, आमोदम् = अतिनिर्हारिणं, सुगन्धिमित्यर्थः । उपजिघ्रन्तौ = नासया गृह्णन्तौ, "तौ जग्मतुः" ॥ ४३ ॥

समासादि—चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि, अराः, तदाकाराणि दलानि तत्सादृश्यादरास्तान् विन्दन्ति लभन्त इत्यरविन्दानि तेषामरविन्दानाम् (न० लिं०) । शीतः शीतगुणोऽस्यास्तीति शीतलः (पुं०), वीचीनां विक्षोभो वीचिविक्षोभः (त० पु०) तेन शीतलः, वीचिविक्षोभशीतलस्तं वीचिविक्षोभशीतलम् (त० पु०) । आ समन्तान्मोदयतीत्यामोदः (पुं०) तमामोदम् । उपजिघ्रतीत्युपजिघ्रन् (पुं०) उपजिघ्रंश्च, उपजिघ्रन्ती चेति, उपजिघ्रन्तौ (ए० शे०) निःश्वसनं निःश्वासः (पुं०), स्वस्य निःश्वासः स्वनिःश्वासः (त० पु०), अनुकर्तुं शीलमस्येति, अनुकारी, स्वनिःश्वासस्यानुकारी स्वनिःश्वासानुकारी (त० पु०) तं स्वनिःश्वासानुकारिणम् ॥ ४३ ॥

व्याकरणम्—अरविन्दानाम् = अर + विदॢ (लाभे-ऌदित्) + शः "गवादिषु विन्देः संज्ञायाम्" इति शप्रत्ययः, "शे मुचादीनाम्" इति नुमागम आमि रूपम् । शीतलः = शीत + लच् प्रत्ययः "सिध्मादिभ्यश्च" इति वैकल्पिको लच् प्रत्ययः सौ रूपम् । आमोदम् = आङ् + मुद (हर्षे-अकारेत्) + णिच् गुणस्ततः "आमोदि" इत्यस्य धातुसंज्ञा, आमोदि + अच् "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यच् प्रत्ययः "णेरनिटि" इति णेर्लोपोऽमि रूपम् । उपजिघ्रन्तौ = उप + घ्रा (गन्धोपादाने) + लट् तस्य शत्रादेशः "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति जिघ्रादेशो धातोः "उगिदचां सर्वनामस्थानेऽधातोः" इति नुम् ततः "पुमान् स्त्रिया" इत्येकशेष औ रूपम् । निःश्वासः = निस् + श्वस (प्राणने—अकारेत्) + घञ् प्रत्ययः "हलश्च" इति सूत्रेण सौ रूपम् । स्वनिःश्वासानुकारिणं = स्वनिःश्वास + अनु + डुकृञ् (करणे—डुञित्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति भाष्यसम्मतत्वादुपसर्गेऽप्युपपदे णिनिप्रत्ययो वृद्धिरपरौ, अमि रूपम् ॥ ४३ ॥

वाच्यान्तरं—सरसीषु वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणमरविन्दानामामोदमुपजिघ्रद्भ्यां "ताभ्यां जग्मे" ॥ ४३ ॥

कोशः—"कासारः सरसी सरः" इत्यमरः । "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् । सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इत्यमरः । "भङ्गस्तरङ्ग ऊर्म्मिर्वा स्त्रियां वीचिः" इत्यमरः । "सुषीमः शिशिरो जडः । तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः" इत्यमरः । "आमोदः सोऽतिनिर्हारी" इत्यमरः । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः ॥ ४३ ॥

तात्पर्यार्थः—स्वकीयमुखवातसुगन्धेरनुकारिणं कासारतरङ्गसम्पर्कशीतलमेवंभूतं कमलसौरभं घ्राणेन गृह्णन्तौ तौ जग्मतुः ॥ ४३ ॥

भाषाऽर्थः—तालाबों में, लहरों के झकोरों से शीतल, अत एव अपने "मुख की वायु" निःश्वास का नकल करने वाले, कमलों के मनोहर सुगन्ध को सूंघते हुये वे दोनो चले ॥४३॥

*यज्ञे ब्राह्मणेभ्यः प्रदत्ते ग्रामे २ तेषामाशीर्वादग्रहणमित्याह—*

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४ ॥

सञ्जीविनी—ग्रामेष्विति । आत्मविसृष्टेषु स्वदत्तेषु । यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः। यूपा एव चिह्नानि येषां तेषु ग्रामेष्वमोघाः सफला यज्वनां विधिनेष्टवताम्। 'यज्वा तु विधिनेष्टवान्' इत्यमरः । "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः । आशिष आशीर्वादान् । अर्घः पूजाविधिः । तदर्थं द्रव्यमर्घ्यम् । "पादार्घाभ्यां च" इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्घ्यस्यानुपदमन्वक् । अर्घ्यस्वीकारानन्तरमित्यर्थः । प्रतिगृह्णन्तौ स्वीकुर्वन्तौ । पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः ॥ ४४ ॥

अन्वयः—आत्मविसृष्टेषु, यूपचिह्नेषु, ग्रामेषु, यज्वनाम्, अमोघाः, आशिषः, अर्घ्यानुपदम्, प्रतिगृह्णन्तौ, "तौ जग्मतुः" ॥ ४४ ॥

व्याख्या—आत्मविसृष्टेषु=स्वदत्तेषु, यूपचिह्नेषु=यज्ञसम्बन्धिपशुबन्धार्थकसंस्कृतदारुविशेषलक्षणेषु, ग्रामेषु=संवसथेषु, यज्वनां=विधिनेष्टवतां, याज्ञिकानामित्यर्थः । आशिषः=आशीर्वादान्, अर्घ्यानुपदम्=अर्घ्याव्यवहितोत्तरम्, प्रतिगृह्णन्तौ=स्वीकुर्वन्तौ, "तौ जग्मतुः" ॥ ४४ ॥

समासादि—अततीत्यात्मा (पुं०) तेन विसृष्टा आत्मविसृष्टास्तेषु, आत्मविसृष्टेषु (त० पु०)। यूपा एव चिह्नानि येषु ते यूपचिह्नास्तेषु यूपचिह्नेषु (ब० व्री०) । विधिना यजन्तीति यज्वानस्तेषां यज्वनाम् (पुं०) । न मोघा अमोघास्ता अमोघाः । प्रतिगृह्णातीति प्रतिगृह्णन् (पुं०) प्रतिगृह्णँश्च प्रतिगृह्णन्ती चेति प्रतिगृह्णन्तौ (ए० शे०) पदस्य पश्चादनुपदम् (अ० भा०) अर्घः पूजोपचारस्तदर्थं द्रव्यमर्घ्यम्, (न० लिं०) अर्घ्यस्यानुपदमर्घ्यानुपदम् (त० पु०) तदर्घ्यानुपदम् ॥ ४४ ॥

व्याकरणम्—आत्मना=अत (सातत्यगमने—अकारेत्)+मनिण् "सातिभ्यां मनिन् मनिणौ" इत्यौणादिको मनिण् प्रत्यय आदिवृद्धिष्टारूपम् । विसृष्टाः=वि+सृज (विसर्गे—अकारेत्)+क्तप्रत्ययः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षकारोऽन्तादेशः ष्टुत्वं जसि रूपम् । यज्वनां=यज (देवपूजासंगतिकरणदानेषु-अकारेत्) +ङ्वनिप् "सुयजोर्ङ्वनिप्" इति ङ्वनिप् प्रत्यय आमि रूपम् । अमोघाः=नञ्+मोघाः, नञ् समासे "नलोपो नञः" इति नञो नकारलोपः शसि रूपम् । प्रतिगृह्णन्तौ=प्रति+ग्रह(उपादाने—अकारेत्)+लट् तस्य शत्रादेशः "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययः "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति संप्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "श्नाऽभ्यस्तयोरातः" इत्याकारलोपे नस्य णत्वे नुमागमे "पुमान् स्त्रिया" इति पुंस एकशेषे, औ रूपम् । अर्घ्यम्=अर्घ+यत् "पादार्घाभ्यां च" इति यत् प्रत्ययः "यस्येति च" इत्यकारलोपः सौ रूपम् । अनुपदम्=अनु+पद "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु" इति पश्चादर्थेऽव्ययीभावसमासः "अव्ययीभावश्च" इति क्लीवत्वं सौ रूपम् ॥ ४४ ॥

वाच्यान्तरम्—आत्मविसृष्टेषु यूपचिह्नेषु यज्वनाममोघा आशिषोऽर्घ्यानुपदं प्रतिगृह्णद्भ्यां जग्मे ॥ ४४ ॥

कोशः—"समौ संवसथग्रामौ" इति । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इति चामरः । "कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" इत्यमरः । "यज्वा तु विधिनेष्टवान्" इत्यमरः । "मोघं निरर्थकम्" इत्यमरः । "अर्घ्यमर्घार्थे" इत्यमरः ।

देवद्विजनृपादीनां पूजाऽर्थान्युपकरणानि–"आपः क्षीरं कुशाग्राणि दधि सर्पिश्च तन्दुलाः। यवः सिद्धार्थकश्चैव ह्यष्टाङ्गार्घ्यः प्रकीर्त्तितः" ॥ इति ॥ "अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्" इत्यमरः ॥ ४४ ॥

तात्पर्यार्थः–पथि प्रयान्तौ सुदक्षिणादिलीपौ विधिनेष्टवद्भ्यो विप्रेभ्यो विसृष्टेषु यूपलक्षणेषु ग्रामेषु तत्रत्यानां तेषामाशीर्वादानर्घ्यस्वीकारानन्तरं प्रतिगृह्णन्तौ जग्मतुः ॥ ४४ ॥

भाषाऽर्थः—स्वयं "दानमें" दिये हुये यज्ञ के स्तम्भों से चिह्नित ग्रामों में विधिपूर्वक यज्ञ करने वाले ब्राह्मणों के अन्यर्थ "कभी निष्फल न जाने वाले" आशीर्वादों को अर्घ्य स्वीकार करने के अनन्तर ग्रहण करते हुए "वे दोनों चले" ॥ ४४ ॥

*मार्गे वन्यवृक्षाणां नामानि पृच्छतोस्तयोर्गमनमित्याह—*

**हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।**
**नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥**

सञ्जीविनी—हैयङ्गवीनमिति । ह्यस्तनगोदोहोद्भवं घृतं हैयंङ्गवीनम् । 'तत्तु हैयङ्गवीनं स्याद् ह्योगोदोहोद्भवं घृतम्' इत्यमरः । "हैयङ्गवीनं संज्ञायाम्" इति निपातः । तत्सद्यो घृतमादायोपस्थितान्घोषवृद्धान् । 'घोष आभीरपल्ली स्याद्' इत्यमरः । वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ । 'दुह्याच्—' इत्यादिना पृच्छतेर्द्विकर्मकत्वम् । कुलकम् ॥ ४५ ॥

अन्वयः—हैयङ्गवीनम्, आदाय, उपस्थितान्, घोषवृद्धान्, वन्यानां, मार्गशाखिनां, नामानि, पृच्छन्तौ, "तौ जग्मतुः" ॥ ४५ ॥

व्याख्या—हैयङ्गवीनं = ह्योगोदोहोद्भवं, सद्यो घृतमिति यावद् । आदाय = गृहीत्वा "राज्ञे निवेदयितुमिति शेषः । उपस्थितान् = समीप आगतान्, घोषवृद्धान् = आभीरपल्लीस्थविरान् । वन्यानां = काननोत्पन्नानाम्, मार्गशाखिनां = वर्त्मवृक्षाणां, नामानि = नामधेयानि, पृच्छन्तौ = जिज्ञासमानौ, "तौ जग्मतुः" । इति कुलकं समासम् ॥ ४५ ॥

समासादि—दुह्यत इति दोहः क्षीरम् (पुं०) गोर्दोहो गोदोहः (त० पु०) ह्यो गोदोह इति ह्योगोदोहः (सा०स०) तस्य विकारं हैयङ्गवीनम् (न०लिं०) तद् हैयङ्गवीनम् । घोषे वृद्धा घोषवृद्धास्तान् घोषवृद्धान् (त० पु०) । नामान्येव नामधेयानि तानि नामधेयानि (त०पु०) । पृच्छतीति पृच्छन् (पुं०) पृच्छॅश्च पृच्छन्ती चेति पृच्छन्तौ (ए०शे०) । वने भवा वन्याः (पुं०) तेषां वन्यानाम् । शाखाः सन्त्येषामिति शाखिनः (पुं०) मार्ग्यत इति मार्गः (पुं०) तत्र शाखिनो मार्गशाखिनः (त० पु०) तेषां मार्गशाखिनाम् ॥ ४५ ॥

व्याकरणं—हैयङ्गवीनं = ह्योगोदोह + खञ्, "हैयङ्गवीनं संज्ञायाम्" इति ह्योगोदोहस्य हियङ्गुरादेशः खञ् प्रत्ययश्च निपात्येते विकारेऽर्थे, ततः "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्," इति खस्येनादेशः, "तद्धितेष्वचामादेः" इति ञित्वादादिवृद्धिः "ओर्गुणः" इति हियङ्गोरुकारस्य गुणोऽवादेशोऽमि रूपम् । आदाय = आङ् + डुदाञ् (दाने–डुञित्) + क्त्वा, प्रत्यय. "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति क्त्वाप्रत्ययस्य ल्यबादेशः "घुमास्थागापाजहातिसां हलि" इति प्राप्तेत्वं "न ल्यपि" इति निषिध्यतेऽव्ययत्वात् सुपो लुक् । उपस्थितान् = उप + ष्ठा (गतिनिवृत्तौ) + क्तः, प्रत्ययः कर्त्तरि "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्य्यतिभ्यश्च" इति क्तप्रत्ययो धात्वादेः षः सः "घुमास्थागापाजहातिसां हलि" इतीत्वं धातोराकारस्य शसि रूपम् । नामधेयानि = नामन् + धेयः, प्रत्ययः "भागरूपनामभ्यो धेयः" इति स्वार्थे धेयः प्रत्ययो नलोपो जसि रूपम् । पृच्छन्तौ = प्रच्छ (ज्ञीप्सायाम्–अकारेत्) + लट्, तस्य शत्रादेशः "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति संप्रसारणं "सम्प्रसारणाच्च" इति पूर्वरूपं तुदादित्वाच्छप्रत्ययः "अतो गुणे", इति पररूपं तत उगित्वाद् "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमागमः "पुमान् स्त्रिया" इति पुंस-

एकशेष औरूपम् । "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थ्मुषाम् । कर्मयुक् स्यादक-थितं, तथा स्यान्नीहृकृष्वहाम्" इति पृच्छतेर्द्विकर्मकत्वम् ॥ ४५ ॥

वाच्यान्तरं—हैयङ्गवीनमादायोपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामधेया-नि पृच्छद्भ्यां "ताभ्यां जग्मे" ॥ ४५ ॥

कोशः—"तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम्" इत्यमरः । "घोष आभीर पल्ली स्याद्" इत्यमरः । "प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि" इत्यमरः । "आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च" इत्यमरः । "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्य-मरः । "अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः" इत्यमरः । "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः ॥ ४५ ॥

तात्पर्यार्थः—सुदक्षिणादिलीपौ स्वसविधे पूर्वदिनोद्भवं घृतमेवोपहारमादाय समुपस्थि-तानाभीरपल्लीनिवासिन आभीरवृद्धान् किन्नामकोऽसौ मार्गप्ररूढस्तरुः किन्नामकश्च सइत्येवं रूपेण जिज्ञासां कुर्वाणौ जग्मतुः ॥ ४५ ॥

भाषाऽर्थः—ताजा गाय के दूध का मक्खन लेकर उपस्थित हुये घोष (अहीरों के ग्राम) में (रहने वाले) बृद्धों से जङ्गली रास्ते के वृक्षों के नामों को पूछते हुये "वे दोनों चले" ॥४५॥

*तयोर्गच्छतोश्चित्राचन्द्रमसोरिव शोभाऽभूदित्याह—*

काऽप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥

सञ्जीविनी—काऽपीति । व्रजतोर्गच्छतोः शुद्धवेषयोरुज्ज्वलनेपथ्ययोस्तयोः सुदक्षिणादि-लीपयोश्चित्राचन्द्रमसोरिव योगे सति काऽप्यनिर्वाच्याऽभिख्या शोभाऽऽसीद् । 'अभिख्या ना-मशोभयोः' इत्यमरः । "आतश्चोपसर्गे" इत्यङ्प्रत्ययः । चित्रा नक्षत्रविशेषः । शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः ॥ ४६ ॥

अन्वयः—व्रजतोः, शुद्धवेषयोः, तयोः, हिमनिर्मुक्तयोः, चित्राचन्द्रमसोः, इव, योगे, "सति" काऽपि, अभिख्या, आसीत्, ॥ ४६ ॥

व्याख्या—व्रजतोः = गच्छतोः, मार्गे इति शेषः । शुद्धवेषयोः = निर्मलनेपथ्ययोः, त-योः = सुदक्षिणादिलीपयोः, हिमनिर्मुक्तयोः = तुषारत्यक्तयोः, चित्राचन्द्रमसोः = चित्राऽऽख्य-ताराचन्द्रयोः, इव = यथा, योगे = सङ्गतौ, सतीति शेषः । काऽपि = अनिर्वाच्या, अभि-ख्या = शोभा, आसीद् = अभवत् ॥ ४६ ॥

समासादि—अभिख्यानमभिख्या (स्त्री०) । व्रजतीति व्रजन् (पुं०) व्रजंश्च व्रजन्ती चेति व्रजन्तौ (ए०शे०) तयोर्व्रजतोः । शुद्धो वेषो ययोस्तौ शुद्धवेषौ तयोः शुद्धवेषयोः (ब०-व्री०) । हिमेन निर्मुक्तौ हिमनिर्मुक्तौ तयोर्हिमनिर्मुक्तयोः (त० पु० ) । योजनं योगः (पुं०) तस्मिन् योगे । चित्रा च चन्द्रमाश्चेति चित्राचन्द्रमसौ तयोश्चित्राचन्द्रमसोः (द्व०) ॥ ४६ ॥

व्याकरणम्—अभिख्या = अभि + ख्या (प्रकथने) + अङ्, "आतश्चोपसर्गे" इत्यङ् "आ-तो लोप इटि च" इत्याकारलोपष्टाप् प्रत्ययः सौ रूपम् । व्रजतोः = व्रज (गतौ–अकारेत्) + लट्, प्रत्ययस्तस्य शत्रादेशः "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रेण, ततः "पु-मान् स्त्रिया" इत्येकशेषः पुंसओसि रूपम् । शुद्धः = शुधिर् (शौचे–इरित्) + क्तः, प्रत्ययः "झ-षस्तथोर्धोऽधः" इति तकारस्य धत्वम् पूर्वधस्य जश्त्वं सौ रूपम् । निर्मुक्तौ = निर् + मुच्लृ (मोक्षणे–लृदित्) + क्तः, प्रत्ययः "चोः कुः" इति कुत्वम् औ रूपम् । योगे = युजिर्–(योगे–इरित्) + घः, "भावे" इति घप्रत्ययो गुणः "चजोः कु घिण्ण्यतोः" इति कुत्वेन जस्य गो ङिरूपम् । आसीद् = अस (भुवि–अकारेत्) + लङ्, प्रत्ययस्तस्य तिपि धातोराडागमो-वृद्धिः "अस्तिसिचोऽपृक्ते" इतीडागमः ॥ ४६ ॥

वाच्यान्तरं—व्रजतोः शुद्धवेषयोस्तयोर्हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव योगे "सति" कयाऽप्यभिख्ययाऽभूयत ॥ ४६ ॥

कोशः—"अभिख्या नामशोभयोः" इत्यमरः। "आकल्पवेषौ नेपथ्यम् प्रतिकर्म प्रसाधनम्" इत्यमरः। "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्। प्रालेयं मिहिका च" इत्यमरः। "योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु। वपुःस्थैर्य्ये प्रयोगे च विष्कम्भादिषु भेषजे। विश्रब्धघातके द्रव्योपायसन्नहनेष्वपि। कार्मणेऽपि च"इति मेदिनी। "हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः ॥ ४६ ॥

तात्पर्य्यार्थः—यथा शिशिरान्ते चैत्रपूर्णिमायां चित्राचन्द्रमसोः सङ्गतौ सत्यां शोभाऽलौकिकी भवति, तथैव निर्मलवेषयोः सुदक्षिणादिलीपयोरपि शोभाऽभूदिति ॥ ४६ ॥

भाषाऽर्थः-जाते हुये उज्ज्वल वेष वाले उन दोनों ( सुदक्षिणा और दिलीप ) का तुषार से निर्मुक्त हुये चित्रा नक्षत्र और चन्द्रमा के समान योग होने पर अनिर्वचनीय शोभा हुई ॥ ४६ ॥

*पत्न्यै मार्गेऽद्भुतवस्तुजातं दर्शयतो दिलीपस्य गमनमित्याह-*

**तत्तद् भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः।**
**अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥**

सञ्जीविनी–तत्तदिति। प्रियं दर्शनं स्वकर्मकं यस्यासौ प्रियदर्शनः। योगदर्श(१)नीय इत्यर्थः। भूमिपतिः पत्न्यै तत्तदद्भुतं वस्तु दर्शयंल्लङ्घितमतिवाहितमप्यध्वानं न बुबुधे न ज्ञातवान्। बुधः सौम्य उपमोपमानं यस्येति विग्रहः। इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैवास्य ज्ञातृत्वसूचनार्थम् ॥ ४७ ॥

अन्वयः-प्रियदर्शनः, बुधोपमः, भूमिपतिः, तत्तत्, पत्न्यै, दर्शयन्, लङ्घितम्, अपि, अध्वानं, न, बुबुधे ॥ ४७ ॥

व्याख्या-प्रियदर्शनः = हृद्यावलोकनः, बुधोपमः = चन्द्रपुत्रोपमानः, भूमिपतिः = धराऽधिपः, दिलीप इति शेषः। तत्तद् = अद्भुतं वस्तु, पत्न्यै = भार्य्यायै, "सुदक्षिणायै" इति यावद्, दर्शयन् = अवलोकयन्, लङ्घितमपि = अतिवाहितमपि, अध्वानम् = पन्थानं, न = नहि, बुबुधे = अबोधिष्ट ॥ ४७ ॥

समासादि-पातीति पतिः (पुं०) भवन्ति भूतान्यस्यामिति भूमिः (स्त्री०) तस्याः पतिर्भूमिपतिः (त० पु०)। दर्शयतीति दर्शयन् (पुं०)। प्रीणातीति प्रियम् (न० लिं०)। प्रियं दर्शनं यस्य स प्रियदर्शनः (ब०व्री०)। अत्ति बलं पथिकानां यः सोऽध्वा तमध्वानम् (पुं०) बुध्यत इति बुधः (पुं०)। स एवोपमोपमानं यस्य स बुधोपमः (त० पु०) ॥ ४७ ॥

व्याकरणम्-भूमेः = भू (सत्तायां) + मिः, प्रत्ययः "भुव कित्" इति मिप्रत्ययस्तस्य च कित्वं तस्माद् गुणो न ङसो रूपम्। पतिः = पा (रक्षणे) + डतिः, प्रत्ययः "पातेर्डतिः" इत्यौणादिको डतिप्रत्ययो डित्वाट्टिलोपः सौ रूपम्। पत्न्यै = पति + ङीप् "पत्युर्नो यज्ञसंयोगे" इति नकारान्तादेशो नान्तत्वाद् "ऋन्नेभ्यो ङीप्" इति सूत्रेण ङीप्, "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति वार्त्तिकेन संप्रदानसंज्ञा तेन चतुर्थी ङेरूपम्। दर्शयन् = दृशिर् (प्रेक्षणे-इरित्) + णिच् + लट् + शतृ, "हेतुमति च" इति णिच् धातोर्गुणो रपरश्च ततः "दर्शि" धातोः "लटः शतृशानचावप्रथमासमानाधिकरणे" इति लटः शत्रादेशे धातोः शप्प्रत्यये गुणेऽयादेशे "अतो गुणे" इति पररूपैकादेशे ततः सौ "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमागमे संयोगान्तलोपे सुलोपः। प्रियम् = प्रीञ् (तर्पणे कान्तौ च-ञित्) + क "इगुपध-

(१) अत्र 'योगदर्शनीय' इत्यत्र 'भाग्यदर्शन' इति पाठो विद्वज्जनसम्मत।

ज्ञाप्रीकिरः कः” इति कप्रत्ययः कित्वाद् गुणाभावः “अचि श्नुधातुभ्रुवां य्वोरियङुवङौ” इतीयङादेशः सोरमादेशः पूर्वरूपम्। लङ्घितं = लघि (गतौ–इदित्) + क्तः, प्रत्यय इदित्वान्नुम्, “आर्धधातुकस्येड्वलादेः” इतीडागमोऽमि रूपम् । अध्वानम् = अद (भक्षणे–अकारेत्) + क्वनिप्, “अदेर्ध च” इत्युणादिसूत्रेण क्वनिप् प्रत्ययो धातोर्दस्य धादेशोऽमि रूपं ततः “सर्वनामस्थाने चासम्बुद्धौ” इत्युपधादीर्घः । बुबुधे = बुध (अवगमने–अकारेत्) + लिट्, तस्य तादेशे तस्य चैशादेशे धातोर्द्वित्वमभ्यासलोपः ॥ ४७ ॥

वाच्यान्तरम्—प्रियदर्शनेन बुधोपमेन भूमिपतिना तत्तद् “वस्तु” पत्न्यै दर्शयता लङ्घितोऽप्यध्वा न बुबुधे ॥ ४७ ॥

कोशः—“भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा । धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः” इति । “स्वामी, त्वीश्वरः पतिरीशिता । अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः” इति। “पत्नी पाणिगृहीती च द्वितीया सहधर्म्मिणी। भार्य्या जायाऽथ पुंभूम्नि दाराः-स्याद्” इति । “अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्” इति । “अयन वर्त्ममार्गाध्वपन्थानः पदवी सृतिः” इति । “बुधवृद्धौ पण्डितेऽपि” “अपिशब्दात् सौम्येऽपि” इति । “उपमोपमानं स्याद्” इति सर्वत्राप्यमरः ॥ ४७ ॥

तात्पर्य्यार्थः—सौम्यवपुर्दिलीपः सुदक्षिणायै मार्गेऽद्भुतवस्तूनि प्रदर्शयन् “कियद् दूरं समागतोऽस्मीति” न ज्ञातवानिति ॥ ४७ ॥

भाषाऽर्थः—देखने में सुन्दर, “अत एव” चन्द्रपुत्र बुध के समान, राजा “दिलीप” अद्भुत वस्तुओं को रानी “सुदक्षिणा” को दिखलाते हुये, लांघे हुए (पीछे छोड़े हुये) मार्ग को भी न जान सके ॥ ४७ ॥

*सुदक्षिणादिलीपयोर्वसिष्ठाश्रमप्रापणमित्याह—*

**स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।**
**सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥**

सञ्जीविनी—स इति । दुष्प्रापयशा दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः । श्रान्तवाहनो दूरोपगमनात्क्लान्तयुग्यः । महिष्याः सखा महिषीसखः । “राजाहःसखिभ्यष्टच्” इति टच्प्रत्ययः । सहायान्तरनिरपेक्ष इति भावः । स राजा सायं सायंकाले संयमिनो नियमवतस्तस्य महर्षेर्वसिष्ठस्याश्रमं प्रापत्प्राप । पुषादित्वादङ् ॥ ४८ ॥

अन्वयः—दुष्प्रापयशाः, श्रान्तवाहनः, महिषीसखः, सः, सायं, संयमिनः, तस्य, महर्षेः, आश्रमम्, प्रापत् ॥ ४८ ॥

व्याख्या—दुष्प्रापयशाः—अन्यदुर्लभकीर्त्तिः, श्रान्तवाहनः = परिक्लान्तयुग्यः, दूरमार्गगमनजनितायासेन परिश्रान्ततुरङ्गम इति भावः । महिषीसखः = कृताभिषेकपत्नीसहायः, सुदक्षिणासहित इत्यर्थः । सः = दिलीपः, सायं = सायङ्काले, संयमिनः = इन्द्रियनिग्रहवतः, तस्य = पूर्वोक्तस्य, निजकुलगुरोरिति भावः । महर्षेः = अतिसत्यवचसः, वसिष्ठस्येति यावद् । आश्रमम् = पर्णकुटीम्, प्रापत् = प्राप ॥ ४८ ॥

समासादि—दुःखेन प्राप्तुं शक्यं दुष्प्रापम् (न० लिं०) दुष्प्रापं यशो यस्य स दुष्प्रापयशाः (व० व्री०) । उह्यन्ते रथादय एभिरिति वाहनानि (न० लिं०) श्रान्तानि वाहनानि यस्यासौ श्रान्तवाहनः (व० व्री०) । संयमोऽस्त्यस्मिन्निति संयमी तस्य संयमिनः (पुं०) । ऋषति ज्ञानस्य पारं गच्छतीति ऋषी (पुं०) महांश्चासौ ऋषिर्महर्षिः (क० धा०) तस्य महर्षेः। मह्यते पूज्यत इति महिषी (स्त्री०) तस्याः सखा महिषीसखः (त० पु०) ॥ ४८ ॥

व्याकरणं—दुष्प्रापं = दुस + प्र + आप्लृ (व्याप्तौ–लृदित्) + खल्, “ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्” इति खल् प्रत्ययः सौ रूपम् । प्रापत् = प्र + आप्लृ (व्याप्तौ–लृदित्) + लुङ्,

तस्य तिपि धातोश्लेः सिचं बाधित्वा "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" इत्यङ् धातोराडागमो वृद्धिः "इतश्च" इतीकारलोपः। श्रान्तानि = श्रमु (तपसि खेदे च-उदित्) + क्तः, प्रत्ययः "यस्य विभाषा" इतीडभावः "अनुनासिकस्य क्विझलोः क्ङिति" इत्युपधादीर्घो जसि रूपम्। वाहनानि = वह (प्रापणे-अकारेत्) + ल्युट्, "करणाधिकरणयोश्च" इति ल्युट् प्रत्ययः करणे "युवोरनाकौ" इत्यनादेशो जसि रूपम्। सायम् = इत्यव्ययं सायङ्कालेऽर्थे। संयमिनः = संयम + इनिः, "अत इनिठनौ" इतीनिप्रत्ययः "यस्येति च" इत्यकारलोपो ङसिरूपम्। महर्षेः = महद् + ऋषि, "आन्महतः समानाधिकरणजातीययोः" इत्याकारोऽन्तादेशो महच्छब्दस्य ततो गुणो रपरो ङसिरूपम्। तत्रत्य ऋषिपदे तु = ऋषी (गतौ-ईदित्) + किः, "इगुपधात् किः" इत्युणादिसूत्रेण किप्रत्यये रूपसिद्धिः। महिषीसखः = महिषी + सखि, तत्पुरुषसमासे "राजाहःसखिभ्यष्टच्" इति समासान्तष्टच् सौ रूपम् ॥ ४८ ॥

वाच्यान्तरं—दुष्प्रापयशसा श्रान्तवाहनेन महिषीसखेन तेन सायं संयमिनस्तस्य महर्षेराश्रमः प्रापि ॥ ४८ ॥

कोशः—"यशः कीर्त्तिः समज्ञा च" इति। "सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्" इति। "दिनान्ते तु, सायः सन्ध्या पितृप्रसूः" इति। "शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः" इति। "ऋषयः सत्यवचसः" इति। "कृताभिषेका महिषी" इति। "अथ मित्रं सखा सुहृद्" इति सर्वत्राप्यमरः। "अत्यागसहनो बन्धुः सदैवानुगतः सुहृद्। एकक्रियं भवेन्मित्रं समप्राणः सखा मतः" इति कोशान्तरम् ॥ ४८ ॥

तात्पर्य्यार्थः—अन्यदुर्लभकीर्त्तिः सुदक्षिणासहितो दिलीपः सन्ध्यासमये वसिष्ठाश्रमं प्रापत् ॥ ४८ ॥

भाषाऽर्थः—"दूसरों कर के" दुर्लभ यश वाले, थके हुये हैं वाहन जिस के, ऐसे पटरानी सुदक्षिणा के सहित वे राजा दिलीप, सायङ्काल के समय संयम रखने वाले उन पूर्वोक्त कुलगुरु महर्षि वसिष्ठ के आश्रम में पहुंचे ॥ ४८ ॥

तमाश्रमं विशिनष्टि—

वनान्तराडुपावृत्तैः समित्कुशफलाहरैः।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥

सञ्जीविनी—वनान्तरादिति*। वनान्तरादन्यस्माद्वनादुपावृत्तैः प्रत्यावृतैः। समिधश्च कुशाश्च फलानि चाहर्तुं शीलं येषामिति समित्कुशफलाहरास्तैः "आङि ताच्छील्ये" इति हरतेराङ्पूर्वादच्प्रत्ययः। अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः। प्रत्युद्याताः प्रत्युद्गतास्तैः। तपस्विभिः पूर्यमाणम्। (प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति) इति श्रुतेः। यथाऽऽह—(कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति। एवमेतमग्नयः प्रत्याधावन्ति सशकलान्दारूनिवाहरन् इति) ॥ ४९ ॥

अन्वयः—वनान्तराद्, उपावृत्तैः, समित्कुशफलाहरैः, अदृश्याग्निप्रत्युद्यातैः, तपस्विभिः, पूर्य्यमाणम्, "आश्रमं प्रापद्" इति कुलकत्वात्पूर्वश्लोकादाक्षिप्यते ॥ ४९ ॥

व्याख्या—वनान्तराद् = विपिनान्तराद्, अन्यस्माद्वनादित्यर्थः। उपावृत्तैः = प्रतिनिवृत्तैः, समित्कुशफलाहरैः = दारुदर्भफलाहरणशीलैः, अदृश्याग्निप्रत्युद्यातैः = असंलक्ष्यवैतानिकवह्निप्रत्युद्गतैः, तपस्विभिः = तापसैः, पूर्यमाणं = व्याप्तम्, "आश्रमम् प्रापद्," इति पूर्वश्लोकेन सह सम्बन्धः कुलकत्वात ॥ ४९ ॥

समासादि—अन्यद्वनं वनान्तरं तस्माद्वनान्तराद् (अ० भा०)। समिधश्च कुशाश्च फलानि चेति समित्कुशफलानि (द्वन्द्वः), तान्याहर्त्तुं शीलमेषान्ते समित्कुशफलाहराः (पुं०) तैः समित्कुशफलाहरैः। पूर्यत इति पूर्य्यमाणस्तम्पूर्य्यमाणम् (पुं०)। द्रष्टुं योग्या दृश्याः

(पुं०) न दृश्या अदृश्याः (नं० त० पु०)। अदृश्याश्च तेऽग्नय इत्यदृश्याग्नयः (त० पु० क० धा०) तैरदृश्याग्निभिः प्रत्युद्याता इत्यदृश्याग्निप्रत्युद्याताः (त० पु०) तैरदृश्याग्निप्रत्युद्यातैः। तपांसि सन्त्येषु ते तपस्विनस्तैस्तपस्विभिः (पुं०) ॥ ४९ ॥

व्याकरणं—वनान्तराद् = अन्य + सु, वन + सु, अत्रास्वपदविग्रहेण "मयूरव्यंसकादयश्च" इति सूत्रेणान्तरशब्देन सह तत्पुरुषसमासे "उपसर्जनं पूर्वम्" इति वनस्य पूर्वप्रयोगे समासत्वात्प्रातिपदिकत्वेन ङसे रूपम्। उपावृत्तैः = उप + आङ् + वृतु (वर्त्तने-उदित्) + क्तः प्रत्ययो भिसि रूपम्। समित्कुशफलाहरैः = समित्कुशफल + आङ् + हृञ् (हरणे-ञित्) + अच्, "आङि ताच्छील्ये" इत्यच्प्रत्ययो गुणो रपरश्च भिसि रूपम्। पूर्यमाणम् = पॄ (पालनपूरणयोः) + यक् + लट्, "सर्वधातुके यक्" इति यक् "उदोष्ठ्यपूर्वस्य" इत्युत्त्वं रपरत्वं "हलि च" इत्युपधादीर्घो लटः शानजादेशे "आनेमुक्" इति मुगागमे नस्य णत्वेऽमि रूपम्। प्रत्युद्याताः = प्रति + उद् + या (प्रापणे) + क्तः, प्रत्ययः कर्त्तरि "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्य्यतिभ्यश्च" इति सूत्रेण जसि रूपम्। तपस्विभिः = तपस् + विनिः "तपःसहस्राभ्यां विनीनी" इति विनिप्रत्ययो भिसि नलोपः "नलोपः प्रातिपदिकान्तस्य" इति सूत्रेण ॥ ४९ ॥

वाच्यान्तरं—वनान्तरादुपावृत्तैः समित्कुशफलाहरैरदृश्याग्निप्रत्युद्यातैस्तपस्विभिः पूर्यमाणं आश्रमः प्रापि ॥ ४९ ॥

कोशः—"अटव्यरण्यं विपिनं गहनं काननं वनम्" इति। "काष्ठं दार्विन्धनन्त्वेध इध्ममेधः समित्स्त्रियाम्" इति। "अस्त्री कुशं कुथो दर्भः पवित्रम्" इति सर्वत्राप्यमरः। "फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायाञ्च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इति हैमः। "अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इति। "तपस्वी तापसः पारिकाङ्क्षी" इति चामरः ॥ ४९ ॥

तात्पर्य्यार्थः—सन्ध्यासमये सर्वे तापसा विपिनान्तरात् समित्कुशफलान्यादाय स्वं स्वमाश्रमं समागच्छन्ति। बाला यथा प्रवासादायातान् स्वकीयपित्रादीन् दूरादेवावलोक्य मिष्टान्नादीनां लोभेन वर्त्मन्येव प्रत्युद्यान्ति, तथैव तेषां साग्निकानां तापसानां पुत्रस्वरूपा होमाग्नयोऽप्यन्यैरदृष्टाः सन्तो यज्ञकाष्ठादिभोज्यलोभात्तान् प्रत्युद्यान्तीति ॥ ४९ ॥

भाषाऽर्थः—दूसरे जङ्गल से लौटे हुये, समिधा, कुश, और फल के लाने वाले, दूसरों से नहीं दिखाई पड़ते हुये अग्नि के द्वारा अगुवानी किये गये तपस्वियों से भरे हुये "आश्रम में पहुंचे" ॥ ४९ ॥

*आश्रमस्थमृगवर्णनमित्याह—*

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥

सञ्जीविनी—आकीर्णमिति। नीवाराणां भाग एव भागधेयोंऽशः। *भागरूपनामभ्यो धेयः* इति वक्तव्यसूत्रात्स्वाभिधेये धेयप्रत्ययः। तस्योचितैः। अत एवोटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैर्मृगैर्ऋषिपत्नीनामपत्यैरिव। आकीर्णं व्याप्तम् ॥ ५० ॥

अन्वयः—नीवारभागधेयोचितैः, उटजद्वाररोधिभिः, मृगैः, ऋषिपत्नीनाम्, अपत्यैः, इव, आकीर्णम्, (आश्रमम् प्रापत्) ॥ ५० ॥

व्याख्या—नीवारभागधेयोचितैः = तृणधान्यांशयोग्यैः, उटजद्वाररोधिभिः = पर्णशालाद्वारावरोधकारिभिः, मृगैः = हरिणैः, ऋषिपत्नीनां = सत्यव्रचोभार्य्याणाम्, अपत्यैः = पुत्रैः, इव = यथा, आकीर्णं = व्याप्तम्, "आश्रमम् प्रापद्" इति ॥ ५० ॥

समासादि—ऋषन्तीति, ऋषयः (पुं०) तेषाम् पत्न्य ऋषिपत्न्यः (त० पु०) तासामृ-

षिपत्नीनाम् । उटजानां द्वाराणि, उटजद्वाराणि (त० पु०), तानि रोद्धुं शीलमेषान्ते, उटजद्वाररोधिनस्तैरुटजद्वाररोधिभिः (पुं०)। भाग एव भागधेयः (पुं०) नीवाराणां भागधेयो नीवारभागधेयः (त० पु०) तस्योचिता नीवारभागधेयोचिताः (त० पु०) तैर्नीवारभागधेयोचितैः ॥ ५० ॥

व्याकरणम्—आकीर्णम् = आङ् + कॄ (विक्षेपे) + क्तः, प्रत्ययः "ॠत इद्धातोः" इतीत्वं रपरत्वं "हलि च" इत्युपधादीर्घः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति तकारस्य नत्वं ततो णत्वममि रूपम् । ऋषीणाम् = ऋषी (गतौ—ईदित्) + किः, "इगुपधात्किः" इत्युणादिसूत्रेण किप्रत्यय आमि रूपम् । पत्न्यः = पति + ङीप् "पत्युर्नो यज्ञसंयोगे" इति नकारोऽन्तादेशः "ऋन्नेभ्यो ङीप्" इति ङीप् जसि रूपम् । उटजद्वाररोधिभिः = उटजद्वार + रुधिर् (आवरणे—इरित्) + णिनिः, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिरुपधागुणो भिसि रूपम् । भागधेयः = भाग + धेयः "भागरूपनामभ्यो धेयः" इति स्वार्थे धेयप्रत्ययः सौ रूपम् । उचिताः = उच (समवाये—अकारेत्) + क्तः, प्रत्ययो वलादिलक्षण इडागमो जसि रूपम् ॥ ५० ॥

वाच्यान्तरं—नीवारभागधेयोचितैरुटजद्वाररोधिभिर्मृगैर्ऋषिपत्नीनामपत्यैरिवाकीर्णं आश्रमः प्रापि ॥ ५० ॥

कोशः—"ऋषयः सत्यवचसः" इति । "पत्नी पाणिगृहीती च द्वितीया सहधर्म्मिणी । भार्य्या जायाऽथ पुंभूम्नि दाराः स्याद्" इति । "मुनीनां तु, पर्णशालोटजोऽस्त्रियाम्" इति । "स्त्री द्वार्द्वारं प्रतीहारः" इति । "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे" इति । "तृणधान्यानि नीवाराः" इति । "अंशभागौ तु वण्टके" इति सर्वत्राप्यमरः । "उचितं प्रोक्तमभ्यस्ते मिते ज्ञाते समञ्जसे" इति विश्वप्रकाशः । "मृगे कुरङ्गवातायुहरिणाजिनयोनयः" इत्यमरः ॥ ५० ॥

तात्पर्य्यार्थः—ऋषिपत्नीनामपत्यानि यथा तृणधान्यभागग्रहणार्थम् पर्णशालाद्वारं रुद्ध्वा तिष्ठन्ति, तथैव मृगा अपि सर्वत्रासन् ॥ ५० ॥

भाषाऽर्थः—तृणधान्य के भाग को पाने वाले, "तथा" पर्णशाला "कुटी" के द्वार को रोकने वाले, ऋषि पत्नियों के सन्तानों के तरह मृगों से भरे हुये, "आश्रम में पहुंचे ॥५०॥

*आश्रमस्थपक्षिणां सद्यः सेचिततरुमूलजलपानमित्याह—*

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ ५१ ॥

*सञ्जीविनी* । सेकान्ते वृक्षमूलसेचनावसाने मुनिकन्याभिः सेक्त्रीभिः । आलवालेषु जलावापप्रदेशेषु यदम्बु तत्पायिनाम् । 'स्यादालवालमावालमावापः' इत्यमरः । विहङ्गानां पक्षिणां विश्वासाय विश्रम्भाय । 'समौ विश्रम्भविश्वासौ' इत्यमरः । तत्क्षणे सेकक्षण उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिंस्तम् । ह्रस्वार्थे कप्रत्ययः ॥ ५१ ॥

अन्वयः—सेकान्ते, मुनिकन्याभिः, आलवालाम्बुपायिनां, विहङ्गानां, विश्वासाय, तत्क्षणोज्झितवृक्षकम्, "आश्रमं प्रापत्" ॥ ५१ ॥

व्याख्या—सेकान्ते = वृक्षकमूलसेचनावसाने, मुनिकन्याभिः = वाचंयमकुमारीभिः (कर्त्रीभिः) सेक्त्रीभिरिति शेषः । आलवालाम्बुपायिनां = जलावापप्रदेशजलपानशीलानां, विहङ्गानाम् = पक्षिणां, विश्वासाय = विश्रम्भाय, तत्क्षणोज्झितवृक्षकं = तत्समयपरित्यक्तह्रस्वतरुम्, "आश्रमं प्रापत्" ॥ ५१ ॥

समासादि—सेचनं सेकः (पुं०) तस्यान्तः सेकान्तः (त० पु०) तस्मिन् सेकान्ते । मन्तारो वेदशास्त्रार्थतत्वावगन्तार इति मुनयः (पुं०) तेषां कन्याः मुनिकन्याः (त० पु०)

ताभिर्मुनिकन्याभिः । तच्च तत् क्षणं तत्क्षणं (त० पु० क० धा०) तस्मिन्नुज्झितास्तत्क्षणोज्झिताः (त० पु०) ह्रस्वा वृक्षा वृक्षकाः (पुं०) तत्क्षणोज्झिता वृक्षका यस्मिन् स तत्क्षणोज्झितवृक्षकस्तं तत्क्षणोज्झितवृक्षकम् । विश्वसनं विश्वासः (पुं०) तस्मै विश्वासाय । विहायसा गच्छन्तीति विहङ्गाः (पुं०) तेषां विहङ्गानाम् । आलवालेष्वम्बु; आलवालाम्बु (त०पु०) तत्पातुं शीलमेषान्ते,आलवालाम्बुपायिनः (पुं०) तेषामालवालाम्बुपायिनाम्॥५१॥

व्याकरणं—सेकः=षिच (क्षरणे—अकारेत्)+घञ्, प्रत्ययः "भावे" इति सूत्रेण घित्वात् "चजोः कु घिण्ण्यतोः" इति सूत्रेण कुत्वं सौ रूपम् । मुनीनाम्=मन (ज्ञाने-अकारेत्)+इन्, "सर्वधातुभ्य इन्" इत्यौणादिक इन् प्रत्ययः "मनेरुच्च" इत्यौणादिकसूत्रेण धातोरुपधाया उत्त्वमिन्प्रत्ययस्य च कित्वं तस्मादुपधागुणाभाव आमि रूपम् । उज्झिताः+उज्झ (उत्सर्गे—अकारेत्)+क्तः, प्रत्ययः "आर्धधातुकस्येड्वलादेः" इतीडागमो जसि रूपम् । वृक्षकाः=वृक्ष+कन् "ह्रस्वे" इति कन् प्रत्ययो जसि रूपम् । विश्वासाय=वि+श्वस (प्राणने—अकारेत्)+घञ्, "भावे" इति घञ् प्रत्ययो ञित्वादुपधावृद्धिर्ङेरूपम् । विहङ्गानां=विहायस्+गम्लृ (गतौ—लृदित्)+खच्, "विहायसो विह इति वाच्यं-खच्च डिद्वा वाच्यः" इति वार्त्तिकाभ्यां खच् प्रत्ययः स च वैकल्पिको डिद् विहायसो विहादेशो-डित्वाट्टिलोपः "अरुर्द्विषदजन्तस्य मुम्" इति मुमागम आमि रूपम् । आलवालाम्बु+पा (पाने)+णिनि, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः "आतो युक्चिण्कृतोः" इति युगागम आमि रूपम् ॥ ५१ ॥

वाच्यान्तरम्—आलवालाम्बुपायिनां विहङ्गानां विश्वासाय मुनिकन्याभिः सेकान्ते तत्क्षणोज्झितवृक्षकः (आश्रमः प्रापि) ॥ ५१ ॥

कोशः—"अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु" इति मेदिनी । वाचंयमो-मुनिः" इति । "मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने" इत्यमरमेदिनीकोशौ । "कन्या कुमारिकानार्योरोषधीराशिभेदयोः" इति मेदिनी । "कन्या कुमारी" इत्यमरोऽपि । "वृक्षो-महीरुहः शाखी विटपी पादपस्तरुः" इति । "समौ विश्रम्भविश्वासौ" इति । "खगे विहङ्ग-विहगविहङ्गमविहायसः । शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः" इति । "स्यादालवाल-मावालमावापः" इति । "अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्वरम्" इति चामराः ॥५१॥

तात्पर्यार्थः—यत्राश्रमे मुनिकुमारिका ह्रस्ववृक्षमूलसेचनं कृत्वा तत्क्षणे वृक्षमूलं परित्यजन्ति, यतो विश्वस्ता सन्तः पक्षिणस्तत्रत्यं जलं पिबन्तु, इति बुद्ध्या, एवंभूतमाश्रमं-प्रापत् ॥ ५१ ॥

भाषाऽर्थः—वृक्षों के क्यारियों का जल पीने का स्वभाव है जिन्होंका, ऐसे पक्षियों के विश्वास के लिये (अर्थात्-कोई भय नहीं है ऐसा विश्वास दिलाने के लिये) मुनिकन्याओं के द्वारा सीचे जाने के उपरान्त तत्काल ही छोड़े गये हैं छोटे वृक्ष जिसमें "ऐसे आश्रम में पहुँचे ॥ ५१ ॥

*तत्रत्यानां मृगाणां रोमन्थवर्त्तनमित्याह—*

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥

*सञ्जीविनी* । आतपस्यात्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु । 'नीवारास्तृणधान्यानि' इत्यमरः । उटजानां पर्णशालानामङ्गनभूमिषु चत्वरभागेषु 'पर्णशालोटजोऽस्त्रियाम्' इति । "अङ्गनं चत्वराजिरे" इति चामरः । निषादिभिरुपविष्टै-र्मृगैर्वर्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिन्नाश्रमे तम् ॥ ५२ ॥

अन्वयः—आतपात्ययसंक्षिप्तनीवारासु, उटजाङ्गनभूमिषु, निषादिभिः, मृगैः, वर्त्तितरोमन्थम् "आश्रमं प्रापत्" ॥ ५२ ॥

व्याख्या—आतपात्ययसंक्षिप्तनीवारासु = सूर्यप्रभाऽन्ते राशीकृततृणधान्यासु, उटजाङ्गनभूमिषु = पर्णशालाचत्वरभूभागेषु, निषादिभिः = उपवेशिभिः, मृगैः = हरिणैः, वर्त्तितरोमन्थं = कृतचर्वितचर्वणम्, "आश्रमं प्रापत्" ॥ ५२ ॥

समासादि—आ समन्तात् तापयतीत्यातपः (पुं०) तस्यात्यय आतपात्ययः (त० पु०) तस्मिन् सति, क्षिप्ता आतपात्ययसंक्षिप्ताः (त० पु०) ते नीवारा यासु ता आतपात्ययसंक्षिप्तनीवाराः (ब० व्रीं०) तास्वातपात्ययसंक्षिप्तनीवारासु । निषीदितुं शीलमेषान्ते निषादिनस्तैर्निषादिभिः (पुं०) । वर्त्तितो रोमन्थो यत्र स वर्त्तितरोमन्थस्तं वर्त्तितरोमन्थम् (ब० व्री०) । भवन्ति भूतान्यास्विति भूमयः (स्त्री०) अङ्गनस्य भूमयोऽङ्गनभूमयः (त० पु०) उटजानामङ्गनभूमय उटजाङ्गनभूमयस्तासूटजाङ्गनभूमिषु (त० पु०) ॥ ५२ ॥

व्याकरणम्—आतपः = आङ् + तप (सन्तापे—अकारेत्) + णिच् + अच्, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच् प्रत्ययः "णेरनिटि" इति णिलोपः सौ रूपम् । संक्षिप्ताः = सम् + क्षिप (प्रेरणे-अकारेत्) + क्तः, प्रत्ययो जसि रूपम् । निषादिभिः = नि + षद्लृ (विशरणगत्यवसादनेषु—ल्वदित्) + णिनिः, "धात्वादेः षः सः" इति षस्य सत्वं "सुप्यजातौ णिनिस्ताच्छील्ये" इति भाष्यसम्मतत्वादुपसर्गेऽप्युपपदेऽत्र णिनिरुपधावृद्धि "सदिरप्रतेः" इति सूत्रेण "सात्पदाद्योः" इति निषेधे प्राप्तेऽपि धातोः सस्य षत्वम् भिसि रूपम् । वर्त्तितः = वृतु (वर्त्तने-उदित्) + णिच् + क्तः, प्रत्ययः "आर्धधातुकस्येड्वलादेः" इतीडागमः "निष्ठायां सेटि" इति णिलोप उपधागुणः सौ रूपम् । भूमय = भू (सत्तायाम्) + मिः, प्रत्ययः "भुवः कित्" इत्यौणादिको मिप्रत्ययः स च कित् तेन गुणाभावो-जसि रूपम् ॥ ५२ ॥

वाच्यान्तरम्—आतपात्ययसंक्षिप्तनीवारासूटजाङ्गनभूमिषु निषादिभिर्मृगैर्वर्त्तितरोमन्थः "आश्रमः प्रापि" ॥ ५२ ॥

कोशः—"प्रकाशो द्योत आतपः" इति । "स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्" इति । "तृणधान्यानि नीवाराः" इति । "मृगे कुरङ्गवातायुहरिणाजिनयोनयः" इति । "पर्णशालोटजोऽस्त्रियाम्" इति । "अङ्गनं चत्वराजिरे" इति । "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इति सर्वत्राप्यमरः ॥ ५२ ॥

तात्पर्यार्थः—यत्र दिनान्ते, एकत्रराशीकृततृणधान्येषु पर्णशालाचत्वरभूभागेषु सुखोपविष्टामृगाश्चर्वितचर्वणं कुर्वन्ति तमाश्रमं प्रापत् ॥ ५२ ॥

भाषाऽर्थः—घाम के न रहने पर इकट्ठे किये गये हैं नीवार नामक धान्य जिसमें, ऐसी पर्णशाला के आँगन की भूमि में बैठने वाले, हरिण जहां पागुर कर रहे हैं ऐसे आश्रम में पहुंचे ॥ ५२ ॥

*तत्रत्यो हुतहवनीयद्रव्यगन्धयुक्तो धूम इत्याह—*

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥

सञ्जीविनी—अभ्युत्थितेति । अभ्युत्थिताः प्रज्वलिताः । होमयोग्या इत्यर्थः । ( समिद्धेऽग्नावाहुतीर्जुहोति ) इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः । आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनस्तैर्धूमैराश्रमोन्मुखानतिथीन्पुनानं पवित्रीकुर्वाणम् ॥ कुलकम् ॥ ५३ ॥

अन्वयः—अभ्युत्थिताग्निपिशुनैः, पवनोद्धूतैः, आहुतिगन्धिभिः, धूमैः, आश्रमोन्मुखान्, अतिथीन्, पुनानम् "आश्रमं प्रापत्" ॥ ५३ ॥

व्याख्या—अभ्युत्थिताग्निपिशुनैः = प्रज्वलितवह्निसूचकैः, पवनोद्धूतैः = वातोत्क्षिप्तैः, आहुतिगन्धिभिः = हवनीयद्रव्यगन्धवद्भिः, धूमैः = धूम्रैः, आश्रमोन्मुखान् = वसिष्ठस्थानमभिलक्ष्यीकृत्यागन्तुमुत्सुकान्, अतिथीन् = अभ्यागतान् । पुनानम् = पवित्रीकुर्वाणम्, "आश्रमं प्रापत्" ॥ ५३ ॥

समासादि—अङ्गन्तीत्यग्नयः (पुं०) अभ्युत्थिताश्च तेऽग्नयोऽभ्युत्थिताग्नयः (त० पु० क० धा०) तेषां पिशुना अभ्युत्थिताग्निपिशुनाः (त० पु०) तैरभ्युत्थिताग्निपिशुनैः । अतन्ति गच्छन्ति, एकत्र न तिष्ठन्तीत्यतिथयः, यद्वा—न विद्यते द्वितीया तिथिर्येषान्तेऽतिथयस्ताननतिथीन् । आश्रमं उन्मुखा आश्रमोन्मुखास्तानाश्रमोन्मुखान् (त० पु०) । पुनीत इति पुनानस्तं पुनानम् । पुनातीति पवनः (पु०) तेनोद्धूताः पवनोद्धूतास्तैः पवनोद्धूतैः (त० पु०) आहवनमाहुतिः (स्त्री०) तस्या गन्ध आहुतिगन्धः (त० पु०) सोऽस्त्येषामित्याहुतिगन्धिनः (पुं०) तैराहुतिगन्धिभिः ॥ ५३ ॥

व्याकरणम्—अभ्युत्थिताः = अभि + उद् + ष्ठा (गतिनिवृत्तौ) + क्तः, प्रत्ययः कर्त्तरि "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्य्यतिभ्यश्च" इति क्तप्रत्ययो धात्वादेः षः सः "द्यतिस्यतिमास्थामित्ति किति" इति धातोरित्वं जसि रूपम् । "उदः स्थास्तम्भोः पूर्वस्य" इति पूर्वसवर्णो जसि रूपम् । अग्नयः = अगि (गतौ—इकारेत्) + निः, प्रत्यय इदित्वान्नुम् "अङ्गेर्नलोपश्च" इत्यौणादिको निप्रत्ययो नुमो नकारलोपो जसि रूपम् । अतिथीन् = अत (सातत्यगमने—अकारेत्) + इथिन्, प्रत्ययः "ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्टुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः" इत्यौणादिक इथिन् प्रत्ययः शसि रूपम् । पुनानम् = पूञ् (पवने—ञित्) + लट्, तस्य शानजादेशः "क्र्यादिभ्यः श्ना" इति श्ना प्रत्ययः "प्वादीनां ह्रस्वः" इति धातोर्ह्रस्वः "श्नाऽभ्यस्तयोरातः" इत्याकारलोपोऽमि रूपम् । पवनेन = पूञ् (पवने—ञित्) + युच् "बहुलमन्यत्रापि" इत्यौणादिको युच् प्रत्ययः "युवोरनाकौ" इत्यनादेशो धातोर्गुणोऽवादेशश्च टारूपम् । उद्धूताः = उद् + धूञ् (कम्पने—ञित्) + क्तः, प्रत्ययः "यस्य विभाषा" इतीडभावो जसि रूपम् । आहुतेः = आङ् + हु (दानादानयोः) + क्तिन्, कित्वाद् गुणाभावो ङसो रूपम् । आहुतिगन्धिभिः = आहुतिगन्ध + इनिः "अत इनिठनौ" इतीनिप्रत्ययः "यस्येति च" इत्यकारलोपो भिसि रूपम् ॥ ५३ ॥

वाच्यान्तरम्—अभ्युत्थिताग्निपिशुनैः पवनोद्धूतैराहुतिगन्धिभिर्धूमैराश्रमोन्मुखानतिथीन् पुनानः "आश्रमः प्रापि" ॥ ५३ ॥

कोशः—"अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इत्यमरः । "पिशुनं कुङ्कुमेऽपि च । कपिवक्रे च काके ना सूचकक्रूरयोस्त्रिषु" इति मेदिनी । "स्युरावेशिक आगन्तुरतिथिर्ना गृहागते" इत्यमरः । "दूराच्चोपगतं श्रान्तं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः" इति व्यासश्च । "आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे मठे वने" इति मेदिनी । "नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः । गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः ॥ ५३ ॥

तात्पर्य्यार्थः—वसिष्ठादिमुनिकृतहोमगन्धमिश्रितैः पवनोत्क्षिप्तैर्धूमैरतिथीन् पवित्रीकुर्वाणमाश्रमं प्रापद् । इति कुलकं समाप्तम् ॥ ५३ ॥

भाषाऽर्थः—प्रज्वलित अग्नि को सूचित करने वाली "तथा" वायुसे फैले हुये, आहुति के गन्ध से मिले हुये धुंये से आश्रम की ओर आने के लिये उन्मुख अतिथियों को पवित्र करने वाले "आश्रम में पहुंचे ॥ ५३ ॥

*आश्रमप्राप्त्यनन्तरं रथादवतरणमित्याह—*

**अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।**
**तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥**

सञ्जीविनी—अथेति । अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिं धुरं वहन्तीति धुर्या युग्याः । "धुरो यड्ढकौ" इति यत्प्रत्ययः । 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः' इत्यमरः । धुर्यान्रथाश्वान्विश्रामय विनीतश्रमान्कुर्वित्यादिश्याज्ञाप्य तां पत्नीं रथादवारोहयदवतारितवान्स्वयं चावततार 'विश्रमय' इति ह्रस्वपाठे "जनीजृष्०" इति मित्वे "मितां ह्रस्वः" इति सूत्रे " वा चित्तविरागे" इत्यतो 'वा' इत्यनुवर्त्य व्यवस्थितविभाषाऽऽश्रयणाद्ध्रस्वाभाव इति वृत्तिकारः ॥ ५४ ॥

अन्वयः—अथ, सः, यन्तारं, धुर्य्यान् , विश्रामय, इति, आदिश्य, ताम्, पत्नीं, रथाद् , अवारोहयद् , च, "स्वयम्" अवततार ॥ ५४ ॥

व्याख्या—अथ = आश्रमप्राप्त्यनन्तरं, सः = राजा दिलीपः, यन्तारं = सारथिं, धुर्य्यान् = धूर्वहान् , रथस्येति शेषः । अश्वानिति यावद् । विश्रामय = अपगताध्वश्रमं कुरु, इति = इत्याकारकम्, आदिश्य = आदेशङ्कृत्वा, ताम् = पूर्वोक्ताम्, पत्नीं = सहधर्मिणीं, सुदक्षिणामिति भावः, रथात् = स्यन्दनाद् , अवारोहयद् = अवतारितवान् , च, "स्वयम्" अवततार = अवारुरोह ॥ ५४ ॥

समासादि—यच्छतीति यन्ता तं यन्तारम् ( पुं० ) । धुरं वहन्तीति धुर्य्यास्तान् धुर्य्यान् (पुं०) । रमन्तेऽस्मिन्निति रथस्तस्माद् रथात् (पुं०) ॥ ५४ ॥

व्याकरणं—यन्तारं = यमु (उपरमे—उदित्) + तृन्, प्रत्ययः "ऋतो ङिसर्वनामस्थानयोः" इति गुणो रपरः "अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्" इत्युपधादीर्घोऽमि रूपं धातोर्मस्यानुस्वारपरसवर्णौ च ।आदिश्य = आङ् + दिश (अतिसर्जने–अकारेत् ) + क्त्वा, प्रत्ययस्तस्य च "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशः । धुर्य्यान् = धुर् + यत् "धुरो यड्ढकौ" इति यत्प्रत्ययः शसि रूपम् । विश्रामय = वि + श्रमु (तपसि खेदे च–उदित्) + णिच् + लोट्, तस्य सिपो ह्यादेशो धातोरुपधावृद्धिः "जनीजृष्क्नसुरञ्जोऽमन्ताश्च" इति मित्वं "वा चित्तविरागे" इत्यतो वेत्यनुवृत्त्य "मितां ह्रस्वः" इति वैकल्पिको ह्रस्वस्तेन ह्रस्वाभावपक्षे रूपम् "अतो हेः" इति हेर्लुक् । अवारोहयद् = अव + आङ् + रुह (बीजजन्मनि प्रादुर्भावे च–अकारेत् ) + णिच् + लङ्, धातोरुपधागुणस्ततो धातुसंज्ञा ततो लङि स्तिपि शप् पुनर्गुणायादेशौ धातोरडागमः । पत्नीम् = पति + ङीप् "पत्युर्नो यज्ञसंयोगे" इति नकारोऽन्तादेशो नान्तत्वाद् "ऋन्नेभ्यो ङीप्" इति ङीप्, ततोऽमि रूपम् । रथाद् = रमु ( क्रीडायाम्—उदित् ) + क्थन्, "हनिकुषिनीरमिकाशिभ्यः क्थन्" इत्यौणादिकः क्थन् प्रत्ययः कित्वाद् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपो ङसिरूपम् । अवततार = अव + तॄ (प्लवनसन्तरणयोः) + लिट्, तस्य तिपो णलादेशः "ऋच्छत्यॄताम्" इति गुणो रपरो धातोर्द्वित्वमभ्यासलोप उपधावृद्धिः ॥ ५४ ॥

वाच्यान्तरम्—अथ तेन यन्तारं "त्वया" धुर्य्या विश्राम्यन्ताम्" इत्यादिश्य सा पत्नी रथादवारोह्यत स्वयं चावतेरे ॥ ५४ ॥

कोशः—"अथो अथ समुच्चये । मङ्गले संशयारम्भाधिकारानन्तरेषु च । अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि" इति हैमः । "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः । सव्येष्टदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः" इति । "धूर्वहे धुर्य्यधौरेयधुरीणाः सधुरन्धराः"

इति । "पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । भार्या जायाऽथ पुंभूम्नि दाराः स्याद्" इति । "याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः" इति सर्वत्राप्यमरः ॥ ५४ ॥

तात्पर्य्यार्थः—आश्रमप्राप्त्यनन्तरं स राजा दिलीपोऽश्वानां मार्गश्रमं दूरीकर्त्तुं सारथिमाज्ञाप्य सपत्नीको रथादवततार ॥ ५४ ॥

भापाऽर्थः—उसके वाद वह "राजा दिलीप" सारथि को "घोड़ों को विश्राम कराओ" यह आज्ञा देकर उस "अपनी" स्त्री "सुदक्षिणा" को रथ से उतारे और स्वयम् भी उतरे॥५४॥

*मुनयो दिलीपार्हणां चक्रुरित्याह—*

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥

–सञ्जीविनी—सभायां साधवः सभ्याः । "सभाया यः" इति यप्रत्ययः । गुप्ततमेन्द्रियाअत्यन्तनियमितेन्द्रिया मुनयः सभार्याय गोप्त्रे रक्षकाय । नयः शास्त्रमेव चक्षुस्तत्त्वावेदकंप्रमाणं यस्य तस्मै नयचक्षुषे । अत एवार्हते प्रशस्ताय । पूज्यायेत्यर्थः । "अर्हः प्रशंसायाम्" । इति शतृप्रत्ययः । तस्मै राज्ञेऽर्हणां पूजां चक्रुः । 'पूजा नमस्याऽपचितिः सपर्य्याऽर्चाऽर्हणाः समाः' इत्यमरः ॥ ५५ ॥

अन्वयः—सभ्याः, गुप्ततमेन्द्रियाः, मुनयः, सभार्याय, गोप्त्रे, नयचक्षुषे, अर्हते, तस्मै, अर्हणां, चक्रुः ॥ ५५ ॥

व्याख्या—सभ्याः = सभासदः, गुप्ततमेन्द्रियाः = अतिशयरक्षितहृषीकाः, मुनयः = वाचंयमाः, वेदशास्त्रार्थतत्वावगन्तार इति यावत् । सभार्याय = सपत्नीकाय, गोप्त्रे = पालकाय, नयचक्षुषे = नीतिशास्त्रनेत्राय, अर्हते = पूजाऽर्हाय, तस्मै = राज्ञे दिलीपाय, अर्हणां = पूजां, चक्रुः = विदधुः ॥ ५५ ॥

समासादि—सभायां साधवः सभ्याः (पुं०) । भार्यया सहितः सभार्यस्तस्मै सभार्याय । (ब० व्री०) । गोपायतीति गोप्ता तस्मै गोप्त्रे (पुं०) । इन्द्रस्यात्मनो लिङ्गानीतीन्द्रियाणि (न० लिं०) अतिशयेन गुप्तानि गुप्ततमानि (न० लिं०) तानीन्द्रियाणि येषान्ते गुप्ततमेन्द्रियाः (ब० व्री०) अर्हतीत्यर्हन्, तस्मै, अर्हते (पुं०) । मन्तारो वेदशास्त्रार्थतत्वावगन्तार इति मुनयः(पुं०) । नयो नीतिशास्त्रमेव चक्षुर्हिताहितनिर्णयसाधनं यस्यासौ नयचक्षुः (ब० व्री०) तस्मै नयचक्षुषे ॥ ५५ ॥

व्याकरणं—सभ्याः = सभा + यः, "सभाया यः" इति यप्रत्ययः "यस्येति च" इत्याकारलोपो जसि रूपम् । सभार्य्याय = सह + भार्य्या "तेन सहेति तुल्ययोगे इति" बहुव्रीहिसमासे कृते "वोपसर्जनस्य" इति वैकल्पिकः सहस्य सादेशो ङेरूपम् । गोप्त्रे = गुपू (रक्षणे—ऊदित्) + तृन्, प्रत्ययः कर्त्तरि "पुगन्तलघूपधस्य च" इत्युपधागुणो ङेरूपम् । गुप्तानि = गुपू (रक्षणे—ऊदित्) + क्तः, प्रत्ययः "यस्य विभाषा" इतीडभावो जसि रूपम् । गुप्ततमानि = गुप्त + तमप् "अतिशायने तमबिष्ठनौ" इति तमप् प्रत्ययो जसि रूपम् । इन्द्रियाणि = इन्द्र + घच्, "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रदत्तमिति वा" इति घच् प्रत्ययो निपात्यते "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति घस्येयादेशः "यस्येति च" इत्यकारलोपो जसि रूपम् । अर्हणाम् = अर्ह ( पूजायाम्—अकारेत् ) + णिच् + युच्, "ण्यासश्रन्थो युच्" इति युच् प्रत्ययस्तस्यानादेशः "णेरनिटि" इति णिलोपष्टाप्, अमि रूपम् । अर्हते = अर्हत् (पूजायाम्—अकारेत्) + णिच् + लट्, तस्य "अर्हः प्रशंसायाम्" इति शत्रादेशः "णेरनिटि" इति णिलोपस्ततो ङेविभक्तौ रूपम् । चक्रुः = डुकृञ् ( करणे—डुञित् ) + लिट्, तस्य झेरुसादेशे धातोर्द्वित्वमभ्यासस्य "उरत्" इत्यकारादेशो रपरोऽभ्यासहलो लोपः "कुहोश्चुः" इति चुत्वमभ्यासस्य ततो यण् । मुनयः = मन (ज्ञाने—अकारेत्) + इन्, "सर्वधातुभ्य इन्" इतीन् प्रत्ययः "मनेरुच्च" इति धातोरुपधाया उत्वं प्रत्ययस्य कित्वञ्च जसि रूपम् ॥५५॥

वाच्यान्तरं—सभ्यैर्गुप्ततमेन्द्रियैर्मुनिभिः सभार्याय गोप्त्रे नयचक्षुषेऽर्हते तस्मै, अर्हणा चक्रे ॥ ९५ ॥

कोशः "सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते" इति । "पत्नी पाणिगृहीती च द्वितीया सहधर्म्मिणी । भार्या जायाऽथ पुंभूम्नि दाराः स्याद्" इति । "हृषीकं विषयीन्द्रियम्" इति । "पूजा नमस्याऽपचितिः सपर्य्याऽर्चाऽर्हणाः समाः" इति । "वाचंयमो मुनिः" इति सर्वत्राप्यमरः । "मुनिर्यमेङ्गुदीबुद्धपियालागस्तिकिंशुके" इति । "मुनिः पुंसि वशिष्ठादौ वङ्कसेनतरौ जिने" इति विश्वमेदिन्यौ । "नयो नीतौ द्यूतभेदे" इति । "नयो नाये" इति च विश्वामरौ । "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः ॥ ९५ ॥

तात्पर्यार्थः—वशिष्ठाज्ञया मुनयो नीतिमते रक्षकाय सपत्नीकाय राज्ञे दिलीपाय पूजां विदधुः ॥ ९५ ॥

भाषाऽर्थः—सभ्य जितेन्द्रिय मुनियों ने, रानी के सहित, रक्षा करने वाले; नीतिशास्त्र रूपी नेत्र वाले "अत एव" पूज्य उन राजा दिलीप की पूजा की ॥ ९५ ॥

*सायङ्कालीनक्रियान्तेऽरुन्धतीसहितस्य गुरोर्दर्शनमित्याह—*

विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥

सञ्जीविनी—विधेरिति । स राजा सायन्तनस्य सायम्भवस्य । "सायंचिरम्०" इत्यादिना ट्युल्प्रत्ययः । विधेर्जपहोमाद्यनुष्ठानस्यान्तेऽवसानेऽरुन्धत्याऽन्वासितं पश्चादुपवेशनेनोपसेवितम् । कर्मणि क्तः । उपसर्गवशात्सकर्मकत्वम् 'अन्वास्यैनाम्' इत्यादिवदुपपद्यते । तपोनिधिं वशिष्ठम् । स्वाहया स्वाहादेव्या । 'अथाग्नायी स्वाहा च हुतभुक्प्रिया' इत्यमरः । अन्वासितं हविर्भुजमिव ददर्श । (समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेद् ॥) इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम् । अन्वासनं चात्र पतिव्रताधर्मत्वेनोक्तं न तु कर्माङ्गत्वेन । विधेरन्त इति कर्मणः समाप्त्यभिधानाद् ॥ ५६ ॥

अन्वयः—सः, सायन्तनस्य, विधेः, अन्ते, अरुन्धत्या, अन्वासितं, तपोनिधिं, स्वाहया, "अन्वासितं" हविर्भुजम्, इव, ददर्श ॥ ५६ ॥

व्याख्या—सः = राजा दिलीपः, सायन्तनस्य = सन्ध्याकालीनस्य, विधेः = जपहोमाद्यनुष्ठानस्य, अन्ते = अवसाने, समाप्तावित्यर्थः । अरुन्धत्या = अरुन्धतीनाम्न्या स्वपत्न्या, अन्वासितम् = उपासितम्, पश्चादुपवेशनेनेति शेषः । तपोनिधिं = धर्मशेवधिं, वशिष्ठमिति यावद् । स्वाहया = तदाख्ययाऽग्निपत्न्या, "अन्वासितं", हविर्भुजम् = अग्निम्, इव = यथा, ददर्श = विलोकयामास ॥ ५६ ॥

समासादि—विधानं विधिः (पुं०) तस्य विधेः । सायम् भवः सायन्तनस्तस्य सायन्तनस्य (पुं०) । नि निश्चयेन धीयतेऽस्मिन्निति निधिः (पुं०) तपसां निधिस्तपोनिधिः (त०पु०) तं तपोनिधिम् । हविर्भुनक्तीति हविर्भुक् (पुं०) तं हविर्भुजम् ॥ ५६ ॥

व्याकरणं—विधेः = वि + डुधाञ् (धारणपोषणयोः–डुजित्) + किः, "उपसर्गे घोः किः" इति किप्रत्ययो भावे कित्वाद् "आतो लोप इटि च" इत्याकारलोपो ङसो रूपम् । सायन्तनस्य = सायं + ट्युल्, प्रत्ययः "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" इत्यनेन ट्युल्प्रत्ययस्तस्य "युवोरनाकौ" इत्यनादेशे तुडागमोऽपि कृतो ङसो रूपम् । अत्रानद्यतन इति निर्देशात्तुटः प्रागनादेश इति चाप्यवधेयम् । ददर्श = दृशिर् (प्रेक्षणे–इरित्) + लिट्, तस्य तिपो णलादेशो धातोर्द्वित्वमभ्यासर्वणस्य "उरत्" इत्यत्वं ततो रपरत्वमभ्यासहलो लोपो गुणो रपरश्च । निधिः = नि + डुधाञ् (धारणपोषणयोः–डुजित्) + किः, "उपसर्गे घोः किः"

इति क्विप्रत्ययः क्विवादाकारलोपः सौ रूपम् । अन्वासितम् = अनु + आस (उपवेशने-अकारेत्) + क्तः, प्रत्ययः कर्मणि, उपसर्गवशात्सकर्मकत्वम् "अन्वास्यैनामित्यादिवद्, बलादिलक्षण इडागमोऽमि रूपम् । हविर्भुजं = हविष् + भुज (पालनाभ्यवहारयोः-अकारेत्) + क्विप्, "अन्येभ्योऽपि दृश्यते" इति क्विप् प्रत्ययोऽमि रूपम् ॥ ५६ ॥

वाच्यान्तरं—तेन सायन्तनस्य विधेरन्तेऽरुन्धत्याऽन्वासितस्तपोनिधिः स्वाहयाऽन्वासितो हविर्भुगिव ददृशे ॥ ५६ ॥

कोशः—"विधिर्विधाने दैवेऽपि" इति । "विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति चामरमेदिन्यौ । "सायः सन्ध्या पितृप्रसूः" इति । "सायं साये" इति चामरः । "अन्तं स्वरूपे नाशेऽन्तो न स्त्री शेषेऽन्तिके त्रिपु" इति मेदिनी । "तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि च" इति विश्वः । "निधिर्ना शेवधिः" इत्यमरः । "अथाग्नायी, स्वाहा च हुतभुक्प्रिया" इत्यमरः । "हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसकम्" इति मेदिनी ॥ ५६ ॥

तात्पर्यार्थः—सन्ध्याकालीनकृत्यसमाप्तौ, अरुन्धत्योपसेवितं वशिष्ठं स्वाहादेव्योपसेवितमग्निमिव स दिलीपो ददर्श ॥ ५६ ॥

भाषाऽर्थः—वह "राजा दिलीप" सायङ्कालीन अनुष्ठान के समाप्त होने पर अरुन्धती से सेवित तपोनिधि "वशिष्ठ" को स्वाहा देवी से सेवित अग्नि को भांति देखा ॥ ५६ ॥

*सुदक्षिणादिलीपयोः सपत्नीकस्य गुरोः पादाभिवन्दनमित्याह—*

**तयोर्जगृहतुः पादान्राजा राज्ञी च मागधी ।**
**तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७ ॥**

सञ्जीविनी—तयोरिति । मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोररुन्धतीवशिष्ठयोः पादाञ्जगृहतुः । 'पादः, पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । पादग्रहणमभिवादनम् । गुरुपत्नी गुरुश्च कर्तारौ, सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ । प्रीत्या हर्षेण प्रतिननन्दतुः । आशीर्वादादिभिः संभावयाञ्चक्रतुरित्यर्थः ॥ ५७ ॥

अन्वयः—मागधी, राज्ञी, राजा, च, तयोः, पादान्, जगृहतुः, गुरुपत्नी, गुरुः, च, तौ, प्रीत्या, प्रतिननन्दतुः ॥ ५७ ॥

व्याख्या—मागधी = मगधराजसुता, राज्ञी = राजपत्नी, सुदक्षिणेत्यर्थः । राजा = नृपः, दिलीप इत्यर्थः । च = समुच्चयेऽर्थे, तयोः = अरुन्धतीवशिष्ठयोः, पादान् = चरणान्, जगृहतुः = आददतुः, सपत्नीको राजा सपत्नीकं गुरुं नमस्कृतवानिति भावः । गुरुपत्नी = वशिष्ठभार्या, अरुन्धतीत्यर्थः । गुरुश्च = वशिष्ठोऽपि, "कर्तृभूतौ" तौ = सुदक्षिणादिलीपौ "कर्मभूतौ" प्रीत्या = हर्षेण, प्रतिननन्दतुः = अभिनन्दनं चक्रतुः, आशीर्वादादभिरिति शेषः । सपत्नीकोगुरुरपि सपत्नीकाय राज्ञे, आशीर्वादान् ददाविति भावः ॥ ५७ ॥

समासादि—सा च स चेति तौ तयोस्तयोः (ए० शे०) । समृद्ध्या राजते शोभत इति राजा (पुं०) । राज्ञः स्त्री राज्ञी । अथवा राजते शोभते या सा राज्ञी (स्त्री०) । मगधानां राजा मागधस्तस्यापत्यं स्त्री मागधी (स्त्री०) । सा च स चेति तौ तौ तौ (पुं०) गृणातीति गुरुः (पुं०) । गुरोः पत्नी गुरुपत्नी (त० पु०) ॥ ५७ ॥

व्याकरणं-तौ = सा च + स च, "पुमान् स्त्रिया" इति पुंस एकशेष ओसि रूपम् । जगृहतुः = ग्रह (उपादाने-अकारेत्) + लिट्, तस्य तसोऽतुसादेशे धातोर्द्वित्वमभ्यासहलो लोपः "कुहोश्चुः" इति चुत्वं "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणं "सम्प्रसारणाच्च" इति पूर्वरूपम् । राजा = राजृ (दीप्तौ-ऋदित्) + कनिन् "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इत्यौणादिकः कनिन् प्रत्ययः "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधादीर्घो नलोपसुलोपौ । राज्ञी = राजन् + ङीप्, "ऋन्नेभ्यो ङीप्" इति ङीप् ततः सुलोपः ।

मागधी=मगध+अण्+अण्+ङीप्, "द्व्यञ्मगधकलिङ्गसूरमसादण्" इत्यण् प्रत्यय उपधावृद्धिस्ततो मागधशब्दादपत्येऽर्थे "तस्यापत्यम्" इत्यण् "यस्येति च" इत्यकारलोपः "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति ङीप् सुलोपः। तौ=सा च+स च "पुमान् स्त्रिया" इत्येकशेष औ रूपम्। गुरु=गॄ(शब्दे)+कुः "कृग्रोरुच्च" इत्यौणादिकः कुप्रत्ययो धातोरुकारोऽन्तादेशश्च "उरण् रपरः" इति रपरः कित्वाद् गुणाभावः सौ रूपम्। पत्नी=पति+ङीप्, "पत्युर्नो यज्ञसंयोगे" इति नकारोऽन्तादेशो नान्तत्वाद् "ऋन्नेभ्यो ङीप्" इति ङीप् सुलोपः। प्रीत्या=प्रीञ् (तर्पणे कान्तौ च-ञित्)+क्तिन्, प्रत्ययष्टारूपम्। प्रतिननन्दतुः=प्रति+टुनदि (समृद्धौ-द्विवदित)+लिट्, इदित्वान्नुम् ततो लिटस्तसोऽतुसादेशो धातोर्द्वित्वमभ्यासहलो लोपः॥ ९७॥

वाच्यान्तरम्—मागध्या राज्ञ्या राज्ञा च तयोः पादा जगृहिरे, गुरुणा गुरुपत्न्या च प्रीत्या तौ प्रतिननन्दाते॥ ९७॥

कोशः—"पादो मूलोऽस्त्रतुर्य्यांशाङ्घ्रिषु प्रत्यन्तपर्वते" इति हैमः। "पादः, पदङ्घ्रिश्चरणोऽस्त्रियाम्" इति। "राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति चामरः। "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः। "पत्नी पाणिगृहीती च द्वितीया सहधर्म्मिणी। भार्य्या जायाऽथ पुंभूम्नि दाराः स्याद्" इति। "मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः" इति चामरः॥ ९७॥

तात्पर्य्यार्थः—सुदक्षिणादिलीपौ सपत्नीकं गुरुं प्रणेमतुस्ततोऽरुन्धतीवशिष्ठावपि ताभ्यामाशिषो ददतुः॥ ९७॥

भाषाऽर्थः—मगध देश के राजा की लड़की रानी "सुदक्षिणा" और राजा "दिलीप" उन दोनों "अरुन्धती और वशिष्ठ" के चरणों को पकड़े "प्रणाम किये"। तथा गुरु "वशिष्ठ" और गुरुपत्नी "अरुन्धती" ने प्रेम से उन दोनो "सुदक्षिणा और दिलीप" को आशीर्वाद दिया॥९७॥

*वशिष्ठो दिलीपं राज्यविषयककुशलं पृष्टवानित्याह—*

**तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्।**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः॥ ५८॥**

सञ्जीविनी—तमिति। मुनिः। अतिथ्यर्थमातिथ्यम्। "अतिथेर्ञ्यः" इति ञ्यप्रत्ययः। आतिथ्यस्य क्रिया तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम्। राज्यमेवाश्रमस्तत्र मुनिं मुनितुल्यमित्यर्थः। तं दिलीपं राज्ये कुशलं पप्रच्छ पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम्। यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्मवचनः। तथाऽप्यत्र सप्ताङ्गवचनः। 'उपपन्नं ननु शिवं सप्तस्वङ्गेषु' इत्युत्तरविरोधात्। तथाऽऽह मनुः-(स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत्। सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते॥)इति। तत्र (ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥) इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद्ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसंधेयम्। अत एवोक्तं-राज्याश्रममुनिम्' इति॥ ५८॥

अन्वयः—मुनिः, आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं, राज्याश्रममुनिं, तं, राज्ये, कुशलम्, पप्रच्छ॥ ५८॥

व्याख्या—मुनिः=वाचंयमः, वशिष्ठ इत्यर्थः। आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं=गृहागतसत्कारव्यापारविगतस्यन्दनसञ्चलनखेदं, राज्याश्रममुनिं=राज्यरूपाश्रमे मुनितुल्यं, तं=दिलीपं, राज्ये=राज्यविषये, स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलात्मक इत्यर्थः। कुशलं=क्षेमम्, पप्रच्छ=पृष्टवान्॥ ५८॥

समासादि—अतति निरन्तरं गच्छतीत्यतिथिः, अविद्यमाना तिथिर्यस्यागमने सोऽतिथिः

(पुं) (ब० व्री०), अतिथ्यर्थमातिथ्यम् (न० लिं०) तस्य क्रिया, आतिथ्यक्रिया (त० पु०) तया शान्तः, आतिथ्यक्रियाशान्तः (त० पु०) रमन्तेऽस्मिन्निति रथः (पुं०) तस्य क्षोभो-रथक्षोभः (त० पु०) तेन परिश्रमो रथक्षोभपरिश्रमः (त०पु०) आतिथ्यक्रियाशान्तो रथक्षोभ-परिश्रमो यस्य स आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमस्तमातिथ्यक्रियाशान्तरथक्षोभपरिश्र-मम् (ब० व्री०)। राज्ञः कर्म भावो वा राज्यम्, (न० लिं०) राज्यमेवाश्रमो राज्याश्रमः (त० पु०) तस्मिन् मुनी राज्याश्रममुनिस्तं राज्याश्रममुनिं (त० पु०)। मन्ता वेदशास्त्रा-र्थतत्त्वावगन्तेति मुनिः (पुं०) ॥ ५८ ॥

व्याकरणम्—आतिथ्यम् = अतिथि + ञ्यः "अतिथेर्ञ्यः" इति ञ्यप्रत्ययः "तद्धितेष्वचामा-देः" इत्यादिवृद्धिः "यस्येति च" इतीकारलोपः सौ रूपम्। शान्तः = शमु (उपशमे–उदित्) + क्तः, प्रत्ययः "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" इतीडभावो निपात्यते वैकल्पिकः "अनुना-सिकस्य क्विझलोः क्ङिति" इत्युपधादीर्घोऽनुस्वारपरसवर्णौ सौ रूपम्। रथः = रमु (क्रीडा-याम्–उदित्) + क्थन् "हनिकुषिनीरमिकाशिभ्यः क्थन्" इत्यौणादिकः क्थन् प्रत्ययः कि-त्वाद् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः सौ रूपम्। पप्रच्छ = प्रच्छ (ज्ञीप्सायाम्–अकारेत्) + लिट्, तस्य तिपो णलादेशे धातोर्द्वित्व-मभ्यासहलो लोपः। राज्ये = राजन् + यक्, "राजाऽसे" इति वार्त्तिकेन यक् प्रत्ययः "नस्त-द्धिते" इति टिलोपे ङिरूपम्। मुनिः = मन (ज्ञाने–अकारेत्) + इन्, प्रत्ययः "सर्वधातुभ्य-इन्" इतीन् प्रत्ययः "मनेरुच्च" इत्यौणादिकेन धातोरुपधाया उत्वम् प्रत्ययस्य कित्वञ्च सौ रूपम् ॥ ५८ ॥

वाच्यान्तरम्—मुनिनाऽऽतिथ्यक्रियाशान्तरथक्षोभपरिश्रमो राज्याश्रममुनी राज्ये कु-शलं पप्रच्छे ॥ ५८ ॥

कोशः—"क्रमादातिथ्यातिथेये, अतिथ्यर्थेऽत्र साधुनि" इत्यमरः। "क्रिया कर्मणि चेष्टायां-करणे सम्प्रधारणे। आरम्भोपायशिक्षाऽर्थचिकित्सानिष्कृतिष्वपि" इति विश्वः। "याने चक्रि-णि युद्धार्थे शताङ्गः स्यन्दनो रथः" इति। "भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्" इति सर्वत्राप्यमरः। "स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत्। सप्तैतानि समस्तानि लोकेऽ-स्मिन् राज्यमुच्यते" इति मनुः। "आश्रमो ब्रह्मचर्य्यादिचतुष्केऽपि मठेऽपि च" इति विश्वः। "मुनिः पुंसि वशिष्ठादौ वङ्गसेनतरौ जिने" इति विश्वः। "वाचंयमो मुनिः" इति चामरः ॥५८॥

तात्पर्य्यार्थः—वशिष्ठानुज्ञया मुनिकृतातिथिसत्कारव्यापारेणापनीतमार्गश्रमं दिलीपं मु-निर्वशिष्ठो राज्ये स्वाम्यमात्यपुरराष्ट्रकोशवलसुहृदात्मके कुशलं पृष्टवान् ॥ ५८ ॥

भाषाऽर्थः—मुनि "वशिष्ठ" ने अतिथि सत्कार के द्वारा रथ के हिलने से उत्पन्न हुआ, थकावट जिसका दूर होगया है, ऐसे राज्यरूपी आश्रम के विषय में मुनि तुल्य उन "राजा दिलीप" से राज्य "स्वामी–मन्त्री–नगर–देश–खजाना–दण्ड–मित्र–" विषयक कुशल पूंछा॥५८॥

*वशिष्ठस्य कुशलप्रश्नानन्तरं दिलीपस्योत्तरदानोपक्रमः—*

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥

सञ्जीविनी—अथेति। अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरो वदतां वक्तॄणां-वरः श्रेष्ठः "यतश्च निर्धारणम्" इति षष्ठी। अर्थपती राजाऽथर्वणोऽथर्ववेदस्य निधेस्तस्य मुनेः पुरोऽग्रेऽर्थ्यामर्थादनपेताम्। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। वाचमाददे। वक्तुमु-पक्रान्तवानित्यर्थः। अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते। यथाऽऽह कामन्दकः–(त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः। अथर्वविहितं-कुर्यान्नित्यं शान्तिकपौष्टिकम् ॥) इति ॥ ५९ ॥

अन्वयः—अथ, विजितारिपुरः, वदतां वरः, अर्थपतिः, अथर्वनिधेः, तस्य, पुरः, अर्थ्यां, वाचम्, आददे ॥ ५९ ॥

व्याख्या—अथ = वशिष्ठस्य कुशलप्रश्नानन्तरं, विजितारिपुरः, = कृतस्वाधीनारिनगरः, वदतां = जल्पताम् "मध्ये" वरः = श्रेष्ठः, अर्थपतिः = विभवेश्वरः, राजा दिलीप इति भावः। अथर्वनिधेः = अथर्ववेदशेवधेः, अथर्ववेदविदुष इति यावत्। तस्य = वशिष्ठमहर्षेः, पुरः = अग्रतः, अर्थ्याम् = अर्थोपेतां, वाचं = गिरम्, आददे = जगृहे, वक्तुमारम्भं कृतवानित्यर्थः ॥ ५९ ॥

समासादि—नि निश्चयेन धीयतेऽस्मिन्निति निधिः (पुं०) अथर्वस्य निधिरथर्वनिधिः (त० पु०) तस्याथर्वनिधेः। अरीणां पुराण्यरिपुराणि (त० पु०) विजितान्यरिपुराणि येन स विजितारिपुरः (ब० व्री०)। अर्थादनपेताऽर्थ्या तामर्थ्याम् (स्त्री०)। पातीति पतिः (पुं०) अर्थस्य पतिरर्थपतिः (त० पु०)। वक्तीति वाक् (स्त्री०) तांवाचम्। वदन्तीति वदन्तस्तेषां वदताम् (पुं०) ॥ ५९ ॥

व्याकरण—निधिः = नि + डुधाञ् (धारणपोषणयोः–डुञित्) + किः, "उपसर्गे घोः किः" इति किप्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपः सौ रूपम्। विजितानि = वि + जि (जये) + क्तः, प्रत्ययो जसि रूपम्। अर्थ्याम् = अर्थ + यत्, "धर्मपथ्यर्थन्यायादनपेते" इति यत् प्रत्ययः "यस्येति च" इत्यकारलोपष्टाप् अमि रूपम्। पतिः = पा (रक्षणे) + डतिः "पातेर्डतिः" इत्यौणादिको डतिप्रत्ययष्टिलोपः सौ रूपम्। वाचं = वच (परिभाषणे–अकारेत्) + क्विप् "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" इति क्विप् प्रत्यय उपधादीर्घोऽसम्प्रसारणञ्चामि रूपम्। आददे = आङ् + डुदाञ् (दाने–डुञित्) + लिट्, तस्य तप्रत्ययस्यैशादेशे धातोर्द्वित्वमभ्यासह्रस्वः "श्नाऽभ्यस्तयोरातः" इत्याकारलोपः। वदतां = वद (व्यक्तायां वाचि–अकारेत्) + लट्, प्रत्ययस्तस्य "लटः शतृशानचावप्रथमासमानाधिकरणे" इति शत्रादेश आमि रूपं "यतश्च निर्धारणम्" इति षष्ठी। वदतां वरः = "न निर्धारणे" इति षष्ठीसमासनिषेधो निर्धारणे षष्ठीविधानात् ॥ ५९ ॥

वाच्यान्तरम्—अथ विजितारिपुरेण वदतां वरेणार्थपतिनाऽथर्वनिधेस्तस्य पुरोऽर्थ्या वागाददे ॥ ५९ ॥

कोशः—"अथो अथ समुच्चये। मङ्गले संशयारम्भाधिकारानन्तरेषु च। अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि" इति हैमः। "निधिर्ना शेवधिः" इति। "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इति चामरः। "पुरं नपुंसकं गेहे देहपाटलिपुत्रयोः। पुष्पादीनां त्वलावृत्तौ ना गुग्गुले न ना पुरि" इति मेदिनी। "आगारे नगरे पुरम्" इति चामरः। "स्यात्पुरः-पुरतोऽग्रतः" इति। "आत्मवाननपेतोऽर्थादर्थ्यौ" इति चामरः। "अर्थ्यं शिलाजतुन्यर्थ्यो बुधे न्याय्ये च वाच्यवद्" इति मेदिनी। "हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि" इति। "स्वामी, त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभौ परिवृढोऽधिपः" इति। "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इति चामरः। "वरो जामातरि वृतौ देवताऽऽदेरभीप्सिते। षिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमेऽपि नपुंसकम् ॥ वरी प्रोक्ता शतावर्य्यां वरा च स्यात्फलत्रिके। मनागिष्टे वरं क्लीबं केचिदाहुस्तदव्ययम्" इति मेदिनी ॥ ५९ ॥

तात्पर्यार्थः—मुनेर्वशिष्ठस्य कुशलप्रश्नमाकर्ण्य दिलीपस्तं स्वाभिलषितपुत्रप्राप्त्युपायाभिज्ञं विज्ञाय प्रयोजनयुतां वाणीं वक्तुमारब्धवान् ॥ ५९ ॥

भाषाऽर्थः—"गुरु वशिष्ठ के कुशल प्रश्न पूछ चुकने के" बाद, वैरिओं के नगरों के जीतने वाले, बोलने वालों में श्रेष्ठ, विभव के पति "राजा दिलीप" ने, अथर्ववेद के खजाना "अथर्ववेद के विद्वान्" उन "वशिष्ठ ऋषि" के आगे प्रयोजन से युक्त बात छेडी ॥ ५९ ॥

*यस्य त्वं गुरुरसि तस्य राज्ये सर्वत्र कुशलमस्त्येवेत्याह*—

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६० ॥

सञ्जीविनी—उपपन्नमिति । हे गुरो ! सप्तस्वङ्गेषु स्वाम्यमात्यादिषु । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । सप्ताङ्गानि' इत्यमरः । शिवं कुशलमुपपन्नं ननु युक्तमेव । नन्ववधारणे । 'प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु' इत्यमरः । कथमित्यत्राह—यस्य मे दैवीनां-देवेभ्य आगतानां दुर्भिक्षादीनाम् मानुषीणां मनुष्येभ्य आगतानां चौरभयादीनाम् । उभयत्रापि "तत आगतः" इत्यण् । "टिड्ढाणञ्०" इत्यादिना ङीप् । आपदां व्यसनानां त्वं प्रतिहर्ता वारयिताऽसि । अत्राह कामन्दकः—(हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पञ्चविधं दैवं मानुषं व्यसनं ततः ॥ अयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम् ॥) इति ॥ ६० ॥

तत्र मानुषापत्प्रतीकारमाह—

अन्वयः—"हे गुरो !" सप्तसु, अङ्गेषु, मे, शिवम्, उपपन्नं, ननु, यस्य, मे, दैवीनाम्, मानुषीणाम्, आपदां, त्वम्, प्रतिहर्त्ता, "असि" ॥ ६० ॥

व्याख्या—"हे गुरो !" सप्तसु = "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलेति सप्तसङ्ख्याकेषु, अङ्गेषु = राज्याङ्गेषु, मे = मम, शिवं = कल्याणम्, उपपन्नं = युक्तम्, "अस्त्येवेति" शेषः । ननु = इत्यवधारणे, यस्य = भवदीयशिष्यस्य, मे = मम "दिलीपस्य" इत्यर्थः । दैवीनां = देवेभ्य-आगतानां, दुर्भिक्षादीनामिति यावद् । मानुषीणाम् = मनुष्येभ्य आगतानां, चौरभयादीनामिति यावद् । आपदां = विपत्तीनां, त्वम् = भवान् "एव" इति शेषः । प्रतिहर्त्ता = निवारणकर्त्ता, असीति शेषः ॥ ६० ॥

समासादि—देवेभ्य आगता दैव्यः, ( स्त्री० ) तासां दैवीनाम् । मनुष्येभ्य आगता मानुष्यः (स्त्री०) तासां मानुषीणाम् । प्रतिहरतीति प्रतिहर्त्ता (पु०) आपदनम्, आपत् (स्त्री०) तासामापदाम् ॥ ६० ॥

व्याकरणम्—उपपन्नम् = उप + पद (गतौ—अकारेत्) + क्तः, प्रत्ययः "रदाभ्यां निष्ठातो-नः पूर्वस्य च दः" इति दकारतकारयोर्नत्वे सौ रूपम् । दैवीनां = देव + अण् + ङीप्, "तत आगतः" इत्यण् प्रत्ययो णित्वादादिवृद्धिः "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप" इति ङीप् आमि रूपम् । मानुषीणाम् = मनुष्य + अण् + ङीप्, "तत आगतः" इत्यण् प्रत्ययो-णित्वादादिवृद्धिः "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति ङीप् "यस्येति-च" इत्यकारलोपः "हलस्तद्धितस्य" इति यलोप आमि रूपम् । प्रतिहर्त्ता = प्रति + हृञ् (हरणे—ञित्) + तृन्, प्रत्ययः कर्त्तरि गुणो रपरः "ऋदुशनस्पुरुदंसोऽनेहसाञ्च" इत्यनङादेशः "अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्" इत्युपधादीर्घो नलोपसुलोपौ । आपदाम् = आङ् + पद ( गतौ—अकारेत् ) + क्विप्, "सम्पदादिभ्यः क्विप्" इति क्विप् प्रत्यय आमि रूपम् ॥ ६० ॥

वाच्यान्तरम्—मे सप्तस्वङ्गेषु शिवमुपपन्नं, ननु यस्य दैवीनाम् मानुषीणामापदा-न्त्वया प्रतिहर्त्रा भूयते ॥ ६० ॥

कोशः—"प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इति । "श्वःश्रेयसं शिवम्भद्रं कल्याणं-मङ्गलं शुभम्" इति चामरः । "अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके" इति विश्वः । "हुताशनो जलं व्याधिर्दुर्भिक्षं मरणन्तथा । इति पञ्चविधं दैवं मानुषं व्यसनं ततः । अयुक्तकेभ्य-श्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्" इति कामन्द-कीयः । "विपत्त्यां विपदापदौ" इत्यमरः ॥ ६० ॥

तात्पर्यार्थः—मम राज्ये स्वाम्यमात्यादिषु सप्तस्वङ्गेषु कुतो न कुशलं स्याद् ? यस्य मे दैवीमानुषीप्रभृतिविपत्तिनिवारणाय प्रभुस्त्वम् मद्गुरुर्विद्यमानोऽस्यतः सर्वत्र कुशलमेव ॥ ६० ॥

भाषाऽर्थः—"हे गुरो" ! मेरे "राज्य के" सात अङ्गों "स्वामी, मन्त्री, मित्र, खजाना, (पुर) राष्ट्र, किला, सेना," में कुशल क्यों न हो कि जिसके दैवी, "अग्नि, जल, रोग, दुर्भिक्ष, मरण, इन पांच" और मानुषी "ठग, चौर, शत्रु, राजा का कृपापात्र, राजा का लोभ इन पांच" आपत्तियों के नाश करने वाले आप "स्वयं विद्यमान" हैं ॥ ६० ॥

*तत्र मानुषापत्प्रतीकारमाह*—

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥

सञ्जीविनी—तवेति । दूरात्परोक्ष एव प्रशमितारिभिः । मन्त्रान्कृतवान्मन्त्रकृत् । "सुकर्मपापमन्त्रपुण्येषु कृञः" इति क्विप् । तस्य मन्त्रकृतो मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव मन्त्रैः कर्तृभिः। दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्रं।भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव । वयमेव समर्थाः । किमेभिः पिष्टपेषकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा । 'प्रत्यादेशो निराकृतिः' इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव न पौरुषं फलतीति भावः ॥ ६१ ॥

अन्वयः—दूरात्, प्रशमितारिभिः, मन्त्रकृतः, तव, मन्त्रैः, दृष्टलक्ष्यभिदः, मे, शराः, प्रत्यादिश्यन्ते, इव ॥ ६१ ॥

व्याख्या—दूरात् = परोक्ष एव, प्रशमितारिभिः = प्रशान्तरिपुभिः, मन्त्रकृतः = मन्त्रप्रयोक्तुः, तव = भवतः, वशिष्ठस्येत्यर्थः । मन्त्रैः = वेदमन्त्रैः, "कर्तृभिः" दृष्टलक्ष्यभिदः = दृष्टिगोचरलक्षभेदनकर्त्तारः, मे = मम, शराः = बाणाः, प्रत्यादिश्यन्त इव = निराक्रियन्त इव । मानुषीणामापदां विनाशस्तु त्वन्मन्त्रबलसामर्थ्यान्मद्बाणैरेव भवति ॥ ६१ ॥

समासादि—मन्त्रान् "प्रयोगविधिना साध्यान्" करोति "अभीष्टवस्तुलाभाय" प्रयुङ्क्त इति मन्त्रकृत् (पुं०) तस्य मन्त्रकृतः । इयूतीत्यरयः (पुं०) प्रकर्षेण शमिता अरयो यैस्ते प्रशमितारयस्तैः प्रशमितारिभिः (ब०व्री०) । दृष्टञ्च तल्लक्ष्यं दृष्टलक्ष्यं (क० धा०) दृष्टलक्ष्यं भिन्दन्तीति दृष्टलक्ष्यभिद (पुं०) । शृणन्तीति शराः (पुं०) ॥ ६१ ॥

व्याकरणम्—मन्त्र + डुकृञ् (करणे–डुञित्) + क्विप्, "सुकर्मपापमन्त्रपुण्येषु कृञः" इति क्विप् "ह्रस्वस्य पिति कृति तुक्" इति तुगागमो ङसो रूपम् । दूराद् = "दूरान्तिकार्थेभ्यो द्वितीया च" इति पञ्चमी विभक्तिः। मन्त्रैः = मन्त्र + भिस्, "कर्तृकरणयोस्तृतीया" इति कर्तरि तृतीया । प्रशमिताः = प्र + शमु (उपशमे—उकारेत्) + क्तः, प्रत्ययः "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" इति वैकल्पिकपक्षे "आर्धधातुकस्येड्वलादेः" इतीडागमो जसि रूपम् । अरयः = ऋ (गतौ) + इः, "अच इः" इत्युणादिसूत्रेण, इप्रत्ययो गुणो जसि रूपम् । प्रत्यादिश्यन्ते = प्रति + आङ् + दिश (अतिसर्जने—अकारेत्) + यक् + लट्, कर्मणि तस्य झप्रत्ययस्यान्तादेशः "सार्वधातुके यक्" इति यक् प्रत्ययः कित्वाद् गुणाभावः । दृष्टं = दृशिर् (प्रेक्षणे—इरित्) + क्तः, प्रत्ययः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षत्वं ततः-ष्टुत्वं सौ रूपम् । दृष्टलक्ष्यभिदः = दृष्टलक्ष्य + भिदिर् (विदारणे—इरित्) + क्विप्, प्रत्ययः-कित्वादुपधागुणाभावो जसि रूपम् । शराः = शॄ (हिंसायाम्) + अप्, "ऋदोरप्" इत्यप् प्रत्ययः "ऋच्छत्यॄताम्" इति गुणो जसि रूपम् ॥ ६१ ॥

वाक्यान्तरं—दूरात् प्रशमितारयो।मन्त्रकृतस्तव मन्त्रा दृष्टलक्ष्यभिदो मे शरान् प्रत्यादिशन्तीव ॥ ६१ ॥

कोशः-"मन्त्रो देवादिसाधने । वेदांशे गुप्तवादे।च" इति हैमः । "दूर विप्रकृष्टकम्" इत्य-

मरः । "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इति च । "लक्ष्यं लक्ष्यं शरव्यं च" इति । "प्रत्यादेशो निराकृतिः" इति । "पृषत्कबाणविशिखा, अजिह्मगखगाशुगाः । कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः" इति चामरः ॥ ६१ ॥

तात्पर्यार्थः—परोक्ष एव वैरिणो विनाशयन्ति त्वत्प्रयुक्ता मन्त्रा अतस्तदपेक्षया प्रत्यक्षलक्ष्यभेदिनो मे बाणा व्यर्था एव, अर्थाद्—दूरादेव वैरिविनाशिनां त्वत्प्रयुक्तमन्त्राणां सामर्थ्यादेव मद्बाणाः प्रत्यक्षलक्ष्यं भिन्दन्ति, अतस्तदपेक्षया व्यर्थाः पिष्टपेषका इव । सर्वं तव मन्त्रबलादेव सिद्ध्यति न तु मद्बाहुबलादिति भावः ॥ ६१ ॥

भाषाऽर्थः—मन्त्र के प्रयोग करने वाले आप के जो दूर ही से (परोक्ष ही में) वैरियों के नाश करने वाले मन्त्र हैं, वे प्रत्यक्ष ही में वेधने वाले मेरे बाणों को व्यर्थ से करते हैं ॥ ६१ ॥

संप्रति दैविकापत्प्रतीकारमाह—

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ ६२ ॥

सञ्जीविनी—हविरिति । हे होतः ! त्वया विधवदग्निष्वावर्जितं प्रक्षिप्तं हविराज्यादिकं कर्तृ । अवग्रहो वर्षप्रतिबन्धः । "अवे ग्रहो वर्षप्रतिबन्धे" इत्यप्प्रत्ययः । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः । तेन विशोषिणां विशुष्यतां सस्यानां वृष्टिर्भवति वृष्टिरूपेण सस्यान्युपजीवयतीति भावः । अत्र मनुः-(अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत प्रजाः ॥ इति ॥ ६२ ॥

अन्वयः—हे होतः ! त्वया, विधिवद्, अग्निषु, आवर्जितं, हविः, अवग्रहविशोषिणां, सस्यानां, वृष्टि, भवति ॥ ६२ ॥

व्याख्या-हे होतः ! = हवनकर्तः!, त्वया = भवता, विधिवद् = यथाविधि, अग्निषु = वह्निषु, आवर्जितं = हुतं, हविः = सर्पिःप्रभृति हवनद्रव्यं, (कर्तृ), अवग्रहविशोषिणां = वृष्टिविघातेन शोषणशीलानां, सस्यानां = धान्यानां "वृक्षादीनाम् फलानाम्" । वृष्टिः = वर्षणम्, भवति = जायते, "वृष्टिरूपेण सस्यानि समुत्पादयन्तीति भावः ॥ ६२ ॥

समासादि—हूयत इति हविः (न० लिं०) जुहोतीति होता तत्सम्बुद्धौ हे होतः! (पुं०)। विधिमर्हति विधिवद् (अव्ययः) । अङ्गन्तीत्यग्नयः (पुं०) तेषु अग्निषु। वर्षणं वृष्टिः (स्त्री०)। अवग्रहणमवग्रहः (पुं०) तेन विशेषेण शोष्टुं शीलमेषान्तेऽवग्रहविशोषिणस्तेषामवग्रहविशोषिणाम् (पुं०) ॥ ६२ ॥

व्याकरणं—हविः = हु (दानादनयोः) + इसिः "अर्चिशुचिहुसृपिच्छदिच्छर्दिभ्य इसिः" इत्यौणादिक इसिप्रत्यय इदिद् धातोर्गुणोऽवादेशश्च सौ रूपम् । आवर्जितम् = आङ् + वृजी (वर्जने—ईदित्) + णिच् + क्तः, प्रत्ययो धातोर्णिचि प्रत्यये परे धातोरुपधागुणो रपरश्च ततो वलादिलक्षण इडागमः "निष्ठायां सेटि" इति णिचो लोपः सौ रूपम् । होतः = हु (दानादानयोः) + तृन्, प्रत्ययः कर्तरि धातोर्गुणस्ततः "ऋतो ङिसर्वनामस्थानयोः" इति सम्बुद्धौ गुणो रपरः सुलोपो विसर्गश्च । विधिवद् = विधि + वतिः "तदर्हम्" इति वतिप्रत्ययोऽव्ययत्वात्सुपो लुक् । अग्निषु = अगि (गत्यर्थकः–इदित्) + निः, प्रत्यय इदित्वान्नुम् "अङ्गेर्नलोपश्च" इत्युणादिसूत्रेण निप्रत्ययो धातोर्नलोपः सुपि रूपम् । वृष्टिः = वृषु (सेचने—उदित्) + क्तिन्, प्रत्ययः ष्टुत्वं सौ रूपम् । भवति = भू (सत्तायाम्) + शप् + लट्, तस्य तिपि धातोर्गुणः "कर्तरि शप्" इति शप् अवादेशः । अवग्रहेण = अव + ग्रह (उपादाने—अकारेत्) + अप्, "अवे ग्रहो वर्षप्रतिबन्धे" इति सूत्रेण घञभावपक्षेऽप् प्रत्ययष्टारूपम् । विशोषिणां = वि + शुष (शोषणे—अकारेत्) + णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिर्भाष्यकारसम्मतत्वात् ततो धातोरुपधागुण आमि रूपम् ॥ ६२ ॥

वाच्यान्तरं—हे होतस्त्वया विधिवदग्निष्वावर्जितेन हविषाऽवग्रहविशोषिणां सस्यानां-वृष्ट्या भूयते ॥ ६२ ॥

कोशः—"हविः सर्पिषि होतव्ये" इति हैमः । "विधिर्विधाने दैवेऽपि" इति । अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इति । "वृष्टिर्वर्षणम्" इति । "तद्विघातेऽवग्राहावग्रहौ समौ" इति । "वृक्षादीनां फलं सस्यम्" इति चामरः ॥ ६२ ॥

तात्पर्यार्थः—हे यज्ञकर्त्तः! त्वमाज्यादिकं यदग्नौ मत्कल्याणार्थं जुहोषि, तदेव वृष्टिर्भूत्वा सस्यानामुपजीवकम् भवति—अतोऽस्मद्राज्ये कुतो दैवीनाम् मानुषीणाञ्चापदां सम्भवः-स्यात् ॥ ६२ ॥

भाषाऽर्थः—हे हवन करने वाले! "गुरो!" आप से विधिपूर्वक अग्नि में दी हुई आहुति अकाल से सूखते हुये धानों "वृक्षादिकों के फलों" के सम्बन्ध में वृष्टि रूप होती है ॥ ६२ ॥

*स्वप्रजानां सर्वतो भावेन सुखित्वे त्वद्ब्रह्मवर्चसं हेतुरित्याह*—

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥

सञ्जीविनी—पुरुषायुषेति । आयुर्जीवितकालः । पुरुषस्यायुः पुरुषायुषम् । वर्षशतमित्यर्थः । (शतायुर्वै पुरुषः) इति श्रुतेः । "अचतुरविचतुरसुचतुर०" इत्यादिसूत्रेणाच्प्रत्ययान्तो निपातः । मदीयाः प्रजाः पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । निरातङ्का निर्भयाः । 'आतङ्को भयमाशङ्का' इति हलायुधः। निरीतयोऽतिवृष्ट्यादिरहिता इति यत्तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसंपत्तिरेव हेतुः । "व्रताध्ययनसंपत्तिरित्येतद् ब्रह्मवर्चसम्" इति हलायुधः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । "ब्रह्महस्तिभ्यां वर्चसः" इत्यच्प्रत्ययः । (अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥) इति कामन्दकः ॥ ६३ ॥

अन्वयः—मदीयाः, प्रजाः, पुरुषायुषजीविन्यः, निरातङ्काः, निरीतयः, "सन्तीति" यत्, तस्य, त्वद्ब्रह्मवर्चसम्, एव, हेतुः, ॥ ६३ ॥

व्याख्या—मदीयाः = मत्सम्बन्धिन्यः, प्रजाः = जनाः, पुरुषायुषजीविन्यः = वर्षशतजीवनशीलाः, "शतायुर्वै पुरुषः" इति श्रुतेः । निरातङ्काः = निर्भयाः, निरीतयः = अतिवृष्ट्यादिपद्रवाधारहिताः, "सन्तीति" शेषः । यत्, तस्य = सर्वस्य, त्वद्ब्रह्मवर्चसम् = भवद्व्रताध्ययनसम्पत्तिः, एव = निश्चयेन, हेतुः = कारणं, "वर्तते" इति शेषः, ॥ ६३ ॥

समासादि—पुरुषस्यायुः पुरुषायुषम् (त० पु० समासान्तः) । पुरुषायुषं जीवितुं शीलं यासान्ताः पुरुषायुषजीविन्यः (स्त्री०)। निर्गत आतङ्को याभ्यस्ता इति निरातङ्काः (ब०व्री०)। निर्गता ईतयो याभ्यस्ता निरीतयः (ब० व्री०) मम इमा मदीयाः (स्त्री०) । प्रकर्षेण जायन्त इति प्रजा (स्त्री०) । ब्रह्मणो वर्चो ब्रह्मवर्चसम् (त० पु० समासान्तः) तव ब्रह्मवर्चसं त्वद्ब्रह्मवर्चसम् (त० पु०) ॥ ६३ ॥

व्याकरणम्—पुरुषायुषम् = पुरुष + आयुष् + अच्, "अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः" इति तत्पुरुषसमासान्तोऽत्राच् प्रत्ययो निपात्यते सौ रूपम् । पुरुषायुषजीविन्यः = पुरुषायुष + जीव (प्राणने—अकारेत्) + णिनिः + ङीप्; "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययः "ऋन्नेभ्यो ङीप्" इति ङीप् प्रत्ययो जसि रूपम् । निरातङ्काः = निर् + आतङ्क + टाप्, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति बहुव्रीहिसमासष्टाप् जसि रूपम् । ईतयः = ईङ् (गतौ—ङित्) + क्तिन्, प्रत्ययो जसि रूपम् । निरीतयः = निर् + ईति, पूर्ववत् । मदीयाः = अस्मद् +

छः+टाप्, "युष्मदस्मदोरन्यतरस्यां खञ्च" इति चाच्छः प्रत्ययः "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति छस्येयादेशः "प्रत्ययोत्तरपदयोश्च" इति मपर्यन्तस्य मादेशष्टाप् जसि रूपम् । प्रजाः=प्र+जनी (प्रादुर्भावे—ईदित्)+डः+टाप्, "उपसर्गे च संज्ञायाम्" इति डप्रत्ययष्टिलोपष्टाप् जसि रूपम् । ब्रह्मवर्चसम्=ब्रह्मन्+वर्चस्+अच्, "ब्रह्महस्तिभ्यां वर्चसः" इत्यच् प्रत्ययः समासान्तः सौ रूपम् । त्वद्ब्रह्मवर्चसं=युष्मद्+ब्रह्मवर्चस "प्रत्ययोत्तरपदयोश्च" इति मपर्यन्तस्य त्वादेशः सौ रूपम् ॥ ६३ ॥

वाच्यान्तरम्—मदीयाभिः प्रजाभिः पुरुषायुपजीविनीभिर्निरातङ्काभिर्निरीतिभिः "भूयत-इति" तस्य त्वद्ब्रह्मवर्चसेनैव हेतुना "भूयते" ॥ ६३ ॥

कोशः—"आयुर्जीवितकालः" इत्यमरः । "रुक्तापशङ्कास्वातङ्कः" इति । "आतङ्को भयमाशङ्का" इत्यमरहलायुधौ । "ईतिर्डिम्बप्रवासयोः" इत्यमरः । डिम्बो विप्लवः स च सप्तविधस्तद्यथा—"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः शुकाः । स्वचक्रं परचक्रञ्च सप्तैता ईतयः-स्मृताः" इति । "प्रजा स्यात्सन्ततौ जने" इति । "हेतुर्ना कारणं बीजम्" इति चामरः । "व्रताध्ययनसम्पत्तिरित्येतद् ब्रह्मवर्चसम्" इति हलायुधः ॥ ६३ ॥

तात्पर्यार्थः—मदीयाः प्रजास्त्वदनुष्ठितव्रतवेदवेदाङ्गाध्ययनसम्पत्त्यैव दीर्घजीविन्यो निर्भयाः सप्तविधोपद्रवेनातिवृष्ट्यनावृष्ट्यादिकेन रहिताः सन्ति नान्येन हेतुना ॥ ६३ ॥

भाषाऽर्थः—जो मेरी प्रजायें, पुरुष की आयु "सौ वर्ष" तक जीने वाली, निर्भय, और ईति "अतिवर्षा, सूखा, चूहा, टीडी, सुआ, "पक्षी" राजाओं की चढाई से वची हुई हैं" । सो इन सवों का कारण आपका ब्रह्मतेज "सदाचार वेद वेदाङ्गाध्ययन से उत्पन्न पुण्य" ही है ॥ ६३ ॥

*भवादृशेन मद्गुरुणा सर्वं मे सुखं भवतीत्याह—*

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६४ ॥

सञ्जीविनी—त्वयैवमिति । ब्रह्मा योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वयवमुक्तप्रकारेण चिन्त्यमानस्यानुध्यायमानस्य । अत एव निरापदो व्यसनहीनस्य मे संपदः सानुस्यूतयोऽविच्छिन्ना इति यावत् । कथं न स्युः । स्युरेवेत्यर्थः ॥ ६४ ॥

अन्वयः—ब्रह्मयोनिना, गुरुणा, त्वया, एवं, चिन्त्यमानस्य, "अत एव" निरापदः, मे, सम्पदः, सानुबन्धाः, कथं, न, स्युः ॥ ६४ ॥

व्याख्या—ब्रह्मयोनिना=परमेष्ठिपुत्रेण, वशिष्ठेनेत्यर्थः । गुरुणा=पूज्येन, आचार्य्येणेत्यर्थः । त्वया=भवता, एवम्=उक्तप्रकारेण, चिन्त्यमानस्य=स्मर्य्यमाणस्य, निरापदः=विपद्रहितस्य, मे=मम, सम्पदः=सम्पत्तयः, सानुबन्धाः=अविच्छिन्नाः, कथं=केन प्रकारेण, न=नहि, स्युः=भवेयुः, अपि तु स्युरेवेति भावः ॥ ६४ ॥

समासादि—चिन्त्यत इति चिन्त्यमानस्तस्य चिन्त्यमानस्य (पुं०) । गृणातीति गुरुः (पुं०) तेन गुरुणा । ब्रह्मा योनिः कारणं यस्य स ब्रह्मयोनिः (ब० व्री०) तेन ब्रह्मयोनिना । अनुबध्नातीत्यनुबन्धः (पुं०) तेन सहिताः सानुबन्धाः (ब० व्री०) । केन प्रकारेणेति कथम् (अ०) । निर्गता आपदो यस्मात् स निरापद् (ब० व्री०) तस्य निरापदः ॥ ६४ ॥

व्याकरणं—चिन्त्यमानस्य=चिति (स्मृत्याम्-इदित्)+णिच्+यक्+लट्, इदित्वान्नुम् "सार्वधातुके यक्" इति यक् प्रत्ययः "णेरनिटि" इति णिचो लोपः "लटः शतृशानचावप्रथमासमानाधिकरणे" इति लट. शानजादेशः "आने मुक्" इति मुगागमो ङसो रूपम् । गुरुणा=गॄ (शब्दे)+कु "कृग्रोरुच्च" इत्यौणादिकः कुप्रत्ययो धातोरुत्वं रपरत्वं गारूप्म् । ब्रह्मा=बृहि (वृद्धौ-इदित)+मनिन्, इदित्वान्नुम् "बृंहेर नलोपश्च" इत्यौणादिको मनिन् प्रत्य-

यो धातोर्नलोपोऽमागमश्च ततो यण् सौ रूपम्। योनिः=यु (मिश्रणामिश्रणयोः)+निः "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" इत्यौणादिको नित् निप्रत्ययो धातोर्गुणः सौ रूपम् । सानुबन्धाः=अनुबन्ध+सह, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिसमासः "वोपसर्जनस्य" इति सहस्य सादेशो वैकल्पिकस्ततष्टाप् प्रत्ययो जसि रूपम्। कथं=किम्+थमुः "किमश्च" इति थमुप्रत्ययः "किमः कः" इति कादेशः "तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वम् "अव्ययादाप्सुपः" इति सुपो लुक् । स्युः=अस (भुवि-अकारेत्)+लिङ्, प्रत्ययस्तस्य झेर्जुसादेशः "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमः "लिङः सलोपोऽनन्त्यस्य" इति यासुटः-सकारलोपः "श्नसोरल्लोपः" इति धातोरकारलोपः "उस्यपदान्तात्" इति पररूपत्वम् । निरापदः=निर+आपद् "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिसमास उत्तरपदलोपोऽपि ङसो रूपम् ॥ ६४ ॥

वाच्यान्तरम्—ब्रह्मयोनिना त्वया गुरुणैवं चिन्त्यमानस्य निरापदो मे सानुबन्धाभिःसम्पद्भिः कथं न भूयेत ॥ ६४ ॥

कोशः—"गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः । "बृहदस्य शरीरं यदप्रमेयं प्रमाणतः । बृहद्भिस्तीर्णमित्युक्तं ब्रह्मा तेन स उच्यते" इति साम्बपुराणम् । "ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" इत्यमरः। "योनिः स्त्रीपुंसयोश्च स्यादाकरे भगमन्दिरे" इति मेदिनी । "अनुबन्धस्तु बन्धे स्याद्दोषोत्पादे विनश्वरे । मुख्यानुयायिबाले च प्रकृतस्यानुवर्त्तने" इति मेदिनी । सम्पद् भूतौ गुणोत्कर्षे हारभेदेऽपि च स्त्रियाम्" इति । "सम्पदि । संपत्तिः श्रीश्च लक्ष्मीश्च" इति मेदिन्यमरश्च । "विपत्त्यां विपदापदौ" इत्यमरः ॥ ६४ ॥

तात्पर्यार्थः—ब्रह्मपुत्रेण भवता गुरुणा स्मर्य्यमाणस्य मे कुतो दुःखं स्यात्? कुतश्च न स्थिरा सम्पत्तिः स्याद्? अपि तु केवलं सम्पत्तिरेव स्यात् ॥ ६४ ॥

भाषाऽर्थः—"जब" ब्रह्मपुत्र आप "मेरे" गुरु हैं । और "सर्वदा" उक्त प्रकार से "मेरे कल्याण की" चिन्ता किया करते हैं । "तो फिर" आपत्ति से रहित मेरी सम्पत्ति "निरन्तर" अविच्छिन्न "स्थिर" क्यों न रहे ॥ ६४ ॥

संप्रत्यागमनप्रयोजनमाह—

किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥

सञ्जीविनी—किन्त्विति । किन्तु तवैतस्यां वध्वां स्नुषायाम् । 'वधूर्जाया स्नुषा चैव' इत्यमरः । अदृष्टा सदृश्यनुरूपा प्रजा येन तं मां सद्वीपाऽपि । रत्नानि सूयत इति रत्नसूरपि । "सत्सूद्विष०" इत्यादिना क्विप् । मेदिनी नावति न प्रीणाति । अवधातू रक्षणगतिप्रीत्याद्यर्थेषूपदेशादत्र प्रीणने । रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥६५॥

अन्वयः—किन्तु, तव, एतस्यां, वध्वाम्, अदृष्टसदृशप्रजम्, मां, सद्वीपा, रत्नसूः अपि, मेदिनी, न, अवति ॥ ६५ ॥

व्याख्या—किन्तु, तव=भवतः, एतस्याम्=अस्याम्, "पुरोवर्तिन्याम्" इत्यर्थः । वध्वां=स्नुषायां सुदक्षिणायामिति यावद् । अदृष्टसदृशप्रजम्=अनवलोकितानुरूपसन्ततिम्, मां=दिलीपं सद्वीपा=सप्तद्वीपसहिता, रत्नसूः=हीरकादिमहामणिप्रसविनी, अपि, मेदिनी=मही, न=नहि, अवति=प्रीणाति । पुत्ररत्नाभावतो रत्नसूरियं वसुधा मां न प्रीणातीति भावः ॥ ६५ ॥

समासादि—उह्यतेऽसाविति वधूः (स्त्री०) तस्यां वध्वाम् । प्रकर्षेण जायत इति प्रजा (स्त्री०) न दृष्टेत्यदृष्टा (न० त०) अदृष्टा सदृशी प्रजा येन सोऽदृष्टसदृशप्रजः (ब०व्री०) तमदृष्टसदृशप्रजम् । द्विर्गता आपो येषु तानि द्वीपानि (ब० व्री०)तैः सह वर्तमाना सद्वीपा

(ब० व्री०)। रमयन्तीति रत्नानि (न० लिं०) तानि सूयत इति रत्नसूः। (स्त्री०) मधुकैटभयोर्मेदोयोगान् मेदिनी, [स्त्री०] ॥ ६५ ॥

व्याकरणं—वध्वां=वह (प्रापणे—अकारेत्) ऊः "वहो धश्च" इत्यौणादिक ऊप्रत्ययो धातोर्हस्य धत्वं ङिरूपम्। अदृष्टा=नञ्+दृशिर् (प्रेक्षणे—इरित्)+क्तः, प्रत्ययः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वं ष्टुत्वं ततो नञ् समासे "नलोपो नञः" इति नलोपष्टाप् सौ रूपम्। प्रजा=प्र+जनी (प्रादुर्भावे—ईदित्)+डः "उपसर्गे च संज्ञायाम्" इति डप्रत्ययष्टिलोपष्टाप् सौ रूपम्। अदृष्टसदृशप्रजम्=अदृष्टा+सदृशी+प्रजा, बहुव्रीहिसमासः "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति पुंवद्भावः "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वोऽमि रूपम्। अवति=अव (रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यालिङ्गनहिंसादानभागवृद्धिषु—अकारेत्)+लट्, प्रत्ययस्तस्य तिवादेशे शपि रूपम्। द्वीपानि=द्वि+अप्, बहुव्रीहिसमासः "ऋक्पूरब्धूःपथामानक्षे" इति बहुव्रीहिसमासान्तोऽप्रत्ययः "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इतीत्वम् "आदेः परस्य" इत्यादेराकारस्य जसि रूपम्। सद्वीपा=द्वीप+सह, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिसमासः "वोपसर्जनस्य" इति सहस्य सादेशष्टाप् सौ रूपम्। रत्नानि=रमु (क्रीडायाम्—उदित्)+णिच्+नः, "रमेस्त च" इत्यौणादिको नप्रत्ययो धातोस्तकारोऽन्तादेशश्च "णेरनिटि" इति णिलोपो जसि रूपम्। रत्नसू=रत्न+षूङ् (प्राणिप्रसवे—ङित्)+क्विप्, "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप् प्रत्ययो धात्वादेः षः सः सौ रूपम्। मेदिनी=ञिमिदा (स्नेहने—ञिकाराकारेत्)+घञ्+इनिः+ङीप्, "अकर्तरि च कारके संज्ञायाम्" इति घञ् प्रत्यय उपधागुणः "अत इनिठनौ" इतीनिप्रत्ययः "ऋन्नेभ्यो ङीप्" इति ङीप् ततः सोर्हल्ङ्यादिलोपः ॥ ६५ ॥

वाच्यान्तरं—किन्तु तवैतस्यां वध्वामदृष्टसदृशप्रजोऽहं सद्वीपया रत्नस्वाऽपि मेदिन्या न, अव्ये ॥ ६५ ॥

कोशः—"वधूर्जाया स्नुषा स्त्री" इति। समाः स्नुषाजनीवध्वः" इति चामरः। "प्रजा स्यात् सन्ततौ जने" इति। "भूमेरर्धं क्षारसिन्धोरुदक्स्थं, जम्बूद्वीपं प्राहुराचार्यवर्याः। अर्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये, क्षारक्षीराद्यम्बुधीनां निवेशः॥ शाकं ततः शाल्मलमत्र कौशं, क्रौञ्चञ्च गोमेदकपुष्करे च। द्वयोर्द्वयोरन्तरमेकमेकं, समुद्रयोर्द्वीपमुदाहरन्ति" इति सिद्धान्तशिरोमणिः। "रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च" इत्यमरः। "कनकं कुलिशं नीलं पद्मरागञ्च मौक्तिकम्। एतानि पञ्च रत्नानि रत्नशास्त्रविदो विदुः॥ "सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम्। रत्नपञ्चकमाख्यातं, शेषं वस्तु प्रचक्षते" इति वा। "मुक्ताफलं हिरण्यञ्च वैदूर्य्यम् पद्मरागकम्। पुष्परागञ्च गोमेदं नीलं गारुत्मतं तथा। प्रवालयुक्तान्युक्तानि महारत्नानि वै नव" इति ग्रन्थान्तरम्। "गोत्रा कुः पृथिवी पृथ्वी क्षमाऽवनिर्मेदिनी मही" इत्यमरः ॥ ६५ ॥

तात्पर्य्यार्थः—यद्यपि मच्छासनाधीनायां मह्यां महारत्नानि समुत्पद्यन्ते, परन्तु सुदक्षिणायां सर्वरत्नेषु श्रेष्ठस्य पुत्ररत्नस्याभावात् तानि महारत्नानि सन्तोषाय न प्रभवन्तीति ॥ ६५ ॥

भाषाऽर्थ—परन्तु आपकी इस शिष्य वधू में "अपने" सदृश सन्तान होती हुई न देखने वाले मुझको द्वीपों के सहित रत्नों को पैदा करने वाली पृथ्वी भी नहीं भाती ॥ ६५ ॥

तदेव प्रतिपादयति—

*पुत्राभावेन पितॄणां दुःखेन पिण्डग्रहणं भविष्यतीत्याह*—

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥

संजीविनी—नूनमिति । मत्तः परं मदनन्तरम् "पञ्चम्यास्तसिल्" पिण्डविच्छेददर्शिनः पिण्डदानविच्छेदमुत्प्रेक्षमाणाः । वंशोद्भवा वंश्याः पितरः । स्वधेत्यव्ययं पितृभोज्ये वर्तते । तस्याः संग्रहे तत्परा आसक्ताः सन्तः श्राद्धे पितृकर्मणि । 'पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः' इत्यमरः । प्रकामभुजः पर्याप्तभोजिनो न भवन्ति नूनं सत्यम् । 'कामं प्रकामं पर्याप्तम्' इत्यमरः । निर्धना ह्यापद्धनं कियदपि संगृह्णन्तीति भावः ॥ ६६ ॥

अन्वयः—मत्तः, परम्, पिण्डविच्छेददर्शिनः, वंश्याः, स्वधासङ्ग्रहतत्पराः, "सन्तः" श्राद्धे, प्रकामभुजः, नूनं, न, "भवन्ति" ॥ ६६ ॥

व्याख्या—मत्तः = मत्, परम् = अनन्तरम्, पिण्डविच्छेददर्शिनः = पिण्डदानविश्लेषदर्शनशीलाः, वंश्याः = वंशोद्भवाः, "पितरः" इति यावत् । स्वधासङ्ग्रहतत्पराः = पितृभोज्यसङ्ग्रहणासक्ताः, "सन्तः" इति शेषः । श्राद्धे = पितृकर्मणि, प्रकामभुजः = पर्याप्तभोजिनः, नूनं = निश्चितं, न = नहि, "भवन्ति" इति शेषः ॥ ६६ ॥

समासादि—मदिति मत्तः (अ०) उश्यत इति वंशः (पुं०) तत्र भवा वंश्याः (पुं०) पिण्डस्य विच्छेदः पिण्डविच्छेदः (त० पु०) तं द्रष्टुं शीलं येषान्ते पिण्डविच्छेददर्शिनः (पुं०) प्रकामं भुञ्जत इति प्रकामभुजः (पुं०) । श्रद्धाऽस्ति यत्र तच्छ्राद्धम् (न० लिं०) तस्मिञ्छ्राद्धे । स्वधायाः सङ्ग्रहः स्वधासङ्ग्रहः (त० पु०) तत्र तत्पराः स्वधासङ्ग्रहतत्पराः (त० पु०) ॥ ६६ ॥

व्याकरणं—मत्तः = अस्मद् + तसिल्, "पञ्चम्यास्तसिल्" इति तसिल् प्रत्ययः "प्रत्ययोत्तरपदयोश्च" इति मपर्यन्तस्य मादेशोऽव्ययत्वात् सुपो लुक् । वंशः = वश (कान्तौ—अकारेत्) + घञ्, "अकर्तरि च कारके संज्ञायाम्" इति घञ् प्रत्ययः "आच्छीनद्योर्नुम्" इत्यत्र "नुम्" इति योगविभागान्नुमागमः "नश्चापदान्तस्य झलि" इत्यनुस्वारः सौ रूपम् । वंश्याः = वंश + यत्, "दिगादिभ्यो यत्" इति यत् प्रत्ययः "यस्येति च" इत्यकारलोपो जसि रूपम् । पिण्डविच्छेददर्शिनः = पिण्डविच्छेद + दृशिर् (प्रेक्षणे—इरित्) + णिनिः, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिरुपधागुणो रपरो जसि रूपम् । प्रकामभुजः = प्रकाम + भुज (पालनाभ्यवहारयोः—अकारेत्) + क्विप्, "अन्येभ्योऽपि दृश्यते" इति क्विप् प्रत्ययो जसि रूपम् । श्राद्धे = श्रद्धा + णः, "प्रज्ञाश्रद्धाऽर्चाभ्यो णः" इति णप्रत्यय आदिवृद्धिः "यस्येति च" इत्याकारलोपो ङिरूपम् ॥ ६६ ॥

वाच्यान्तरम्—मत्तः परं पिण्डविच्छेददर्शिभिः स्वधासङ्ग्रहतत्परैर्वंश्यैः श्राद्धे प्रकामभुग्भिर्न भूयते ॥ ६६ ॥

कोशः—"नूनमवश्यं निश्चये द्वयम्" इति । "नूनं निश्चिततर्कयोः" इत्यमरविश्वौ । "परः-श्रेष्ठारिदूरान्योत्तरे क्लीबन्तु केवले" इति मेदिनी । "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः सन्तानः" इत्यमरः । "पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि" इति मेदिनी । "कामं प्रकामं पर्याप्तम्" इति । "पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः" इति चामरः । "सङ्ग्रहो वृहत्युत्तुङ्गे ग्रहसंक्षेपयोरपि" इति मेदिनी ॥ ६६ ॥

तात्पर्य्यार्थः—पुत्ररहितं मामवलोक्यातः परं न पिण्डप्राप्तिसम्भव इति विचारयन्तो मत्पितरः सम्यक्तरेण तृप्तिक्षमं श्राद्धे पिण्डं भोक्तुं नोत्सहन्ते ॥ ६६ ॥

भाषार्थः—मेरे बाद पिण्ड का लोप देखने वाले, स्वधा इकट्ठी करने में लगे हुये, मेरे पूर्वज श्राद्ध में इच्छा पूर्वक भोजन करने के लिये निश्चय उत्साह नहीं कर रहे हैं ॥ ६६ ॥

* पुत्राभावेन पितॄणां दुःखेन जलग्रहणं भविष्यतीत्याह*—

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥

सञ्जीविनी—मत्परमिति। मत्परं मदनन्तरम्। "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इत्यनेन पञ्चमी। दुलभ दुर्लभ्यं मत्वा मयाऽऽवर्जितं मद्दत्तं पयः पूर्वैः पितृभिः स्वनिःश्वासैर्दुःखजैः कवोष्णमीषदुष्णं यथा तथोपभुज्यते। नूनमिति वितर्के। कवोष्णमिति कुशब्दस्य कवादेशः 'कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिपु तद्वति' इत्यमरः॥ ६७॥

अन्वयः—मत्परं, दुर्लभम्, मत्वा, "इदानीम्" मया, आवर्जितम्, पयः, पूर्वे, स्वनिःश्वासैः, कवोष्णं, "यथा स्यात्तथा" उपभुज्यते, नूनम्॥ ६७॥

व्याख्या—मत्परम् = मदनन्तरं, दुर्लभं = दुष्प्रापम्, मत्वा = ज्ञात्वा, "इदानीम्" मया = दिलीपेन, आवर्जितं = दत्तम्, पयः = वारि, पूर्वैः = प्राचीनैः "पितृभिः" इत्यर्थः। स्वनिःश्वासैः = आत्ममुखवायुभिः, "दुःखजैः" इति शेषः। "कारणभूतैः"। कवोष्णम् = ईषदुष्णं, "यथा स्यात्तथा" उपभुज्यते = पीयते, नूनम् = इति वितर्के॥ ६७॥

समासादि—मत्तः परम् मत्परम् (त० पु०)। दुःखेन लब्धुं योग्यं दुर्लभम् (न० लिं०) निःश्वसनानि निःश्वासाः (पुं०) स्वस्य निःश्वासाः स्वनिःश्वासाः (त० पु०) तैः स्वनिःश्वासैः। ईषदुष्णं कवोष्णम् (न० लि०)॥ ६७॥

व्याकरणम्—मत्परम् = अस्मद् = पर, "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी ततस्तत्पुरुषसमासः "प्रत्ययोत्तरपदयोश्च" इति मपर्य्यन्तस्य मादेशः सौ रूपम्। दुर्लभं = दुर् + डुलभष् (प्राप्तौ—डुषित्) + खल्, "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खल् प्रत्ययः सौ रूपम्। मत्वा = मनु (अवबोधने—उदित्) + क्त्वा, "समानकर्तृकयोः पूर्वकाले" इति क्त्वा प्रत्ययः कित्वाद् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपोऽव्ययत्वात्सुपो लुक्। आवर्जितम् = आङ् + वृजी (वर्जने—ईदित्) + क्तः, प्रत्ययः "आर्धधातुकस्येड्वलादेः" इतीडागम उपधागुण सौ रूपम्। निःश्वासाः = निस् + श्वस (प्राणने—अकारेत्) + घञ्, "भावे" इति घञ् प्रत्यय उपधावृद्धिर्जसि रूपम्। कवोष्णं = कु + उष्णं, तत्पुरुषसमासे "कवं चोष्णे" इति कोः कवादेश ईषदर्थे सौ रूपम्। उपभुज्यते = उप + भुज (पालनाभ्यवहारयोः—अकारेत्) + यक् + लट्, "सार्वधातुके यक्" इति यक् प्रत्ययः कर्मणि कित्वाद् गुणाभावो लटस्तादेशः॥ ६७॥

वाच्यान्तरम् = मत्परं दुर्लभं मत्वा मयाऽऽवर्जितम् पयः पूर्वे "पितरः" स्वनिःश्वासैः कवोष्णमुपभुञ्जते नूनम्॥ ६७॥

कोशः—"परः श्रेष्ठारिदूरान्योत्तरे क्लीवन्तु केवले" इति मेदिनी। "नूनं निश्चिततर्कयोः" इति विश्वः। "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्। पयः कीलालममृतं जीवनं भुवनं वनम्" इति। "पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान्" इति चामरः। "पूर्वे स्युः पूर्वजाः पूर्वे ज्ञातयः" इति धरणिः। "प्राक् पूर्वमग्रतः" इति च। "स्वो ज्ञातावात्मनि स्वं त्रि-ष्वात्मीये स्वोऽस्त्रियां धने" इति। "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति" इति चामरः॥ ६७॥

तात्पर्यार्थः—मदनन्तरं जलदातुः पुत्रस्याभावं पश्यन्तोऽत एव दुःखजन्यैर्निजनिःश्वासैः कोष्णीभूतमिदानीं मद्दत्तं पयो मत्पितरः पिबन्ति॥ ६७॥

भाषार्थ—मेरे बाद "जल को" दुर्लभ समझ कर "इस समय मुझसे दिये हुये जल को "मेरे" पूर्वज "पितृगण" अपने "दुःखजन्य" निःश्वासों से थोड़ा गरम "जैसे हो वैसे" पीते हैं। "ऐसा मैं" अनुमान "करता हूँ"॥ ६७॥

*पितृणानुद्धृतस्य दिलीपस्य दुःखप्रकाशनमित्याह—

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः॥ ६८॥

सञ्जीविनी—स इति । इज्या याग: "मृजयजोर्भावे क्यप्" इति क्यप्प्रत्ययः । तथा विशुद्धात्मा विशुद्धचेतनः प्रजालोपेन संतत्यभावेन निमीलितः। कृतनिमीलनः सोऽहम् । लोक्यत इति लोकः। न लोक्यत इत्यलोकः, लोकश्चालोकश्चात्र स्त इति, लोकश्चासावलोकश्चेति वा, लोकालोकश्चक्रवालोऽचल इव । 'लोकालोकश्चक्रवालः' इत्यमरः । प्रकाशत इति प्रकाशश्च देवर्णविमोचनाद् । न प्रकाशत इत्यप्रकाशश्च पितॄणाविमोचनात् । पचाद्यच् । अस्मीति शेषः । लोकालोकोऽप्यन्तः सूर्यसंपर्कांद्बहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम् ॥ ६८ ॥

अन्वयः—इज्याविशुद्धात्मा, प्रजालोपनिमीलितः, अहं, लोकालोकः, अचलः, इव, प्रकाशः, च, अप्रकाशः, च, "अस्मि" ॥ ६८ ॥

व्याख्या—इज्याविशुद्धात्मा = यज्ञपवित्रान्तःकरणः, प्रजालोपनिमीलितः = सन्तत्यदर्शनकृतनयनपक्ष्मसङ्कोचः, सः = एवम्भूतः, अहं = दिलीपः, लोकालोकः = चक्रवालः, "सप्तद्वीपवत्या भूमेः प्राकारभूतो गिरिरित्यर्थः । अचलः = शैलः, इव = यथा, प्रकाशश्च = देवर्णविमोचनाद् द्योतश्च, दीप्त इत्यर्थः । पर्वतपक्षे-द्योत आतप इत्यर्थः । अप्रकाशश्च = पितॄणाविमोचनाददीप्तश्च, म्लान इत्यर्थः, पर्वतपक्षेऽन्धकार इत्यर्थः । अस्मीति शेषः ॥ ६८ ॥

समासादि—अततीत्यात्मा (पुं०) यजनमिज्या (स्त्री०) तया विशुद्ध इज्याविशुद्धः (त० पु०) इज्याविशुद्ध आत्मा यस्य स इज्याविशुद्धात्मा (ब० व्री०) । प्रकर्षेण जायत इति प्रजा (स्त्री०) तस्या लोपः प्रजालोपः (त० पु०) तेन निमीलितः प्रजालोपनिमीलितः (त० पु०) प्रकर्षेण काशत इति प्रकाशः (पुं०) । न प्रकाशोऽप्रकाशः (न० त०) । "अन्तः" लोक्यते "सूर्यरश्मिभिः स्पृश्यमानत्वाद्" इति लोकः (पुं०) । तथा "बहिः सूर्यकिरणैरस्पृश्यमानत्वाद्" न लोक्यत इत्यलोकः (न० त०) । लोकश्चासावलोकश्चेति लोकालोकः (त० क० धा०) । चलतीति चलः (पुं०) न चलोऽचलः (न० त०) ॥ ६८ ॥

व्याकरणम्—इज्या = यज (देवपूजासङ्गतिकरणदानेषु—अकारेत्) + क्यप्, "व्रजयजोर्भावे क्यप्" इति क्यप् प्रत्ययः कित्वाद् "वचिस्वपियजादीनां किति" इति यकारस्य सम्प्रसारणमित्वं "सम्प्रसारणाच्च" इति पूर्वरूपं टाप् सौ रूपम्। विशुद्धः = वि + शुध (शौचे-अकारेत्) + क्तः, प्रत्ययः कित्वाद् गुणाभावः "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं सौ रूपम् । आत्मा = अत (सातत्यगमने—अकारेत्) + मनिण् , "सातिभ्यां मनिन्मनिणौ" इत्यौणादिको मनिण् प्रत्ययो णित्वादुपधावृद्धिः सौ रूपम् । प्रजा = प्र + जनी (प्रादुर्भावे—ईदित्) + डः, "उपसर्गे च संज्ञायाम्" इति डप्रत्ययो डित्वाट्टिलोपष्टाप् सौ रूपम् । निमीलितः = नि = मील (निमेषणे—अकारेत्) + क्तः, प्रत्ययो वलादिलक्षण इडागमः सौ रूपम् । प्रकाशः = प्र + काश्ट (दीप्तौ—ऋदित्) + अच्, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यच् प्रत्ययः-पचादित्वात् सौ रूपम् । अप्रकाशः = नञ् + प्रकाश, "नलोपो नञः" इति नञ्समासत्वान्नञो नलोपः सौ रूपम्। लोकः = लोकृ (दर्शने—ऋदित्) + घञ्, "हलश्च" इति घञ् प्रत्ययः-सौ रूपम् । अलोकः = नञ् + लोक, "नलोपो नञः" इति नञ्समासत्वान्नञो नलोपः । अचलः = नञ् + चल (सञ्चलने—अकारेत्) + अच्, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच् प्रत्ययो नञ्समासे "नलोपो नञः" इति नञो नलोपः सौ रूपम् ॥ ६८ ॥

वाच्यान्तरम्—इज्याविशुद्धात्मना प्रजालोपनिमीलितेन तेन मया लोकालोकेनाचलेनेव प्रकाशेन चाप्रकाशेन च भूयते ॥ ६८ ॥

कोशः—"इज्या दानेऽध्वरेऽर्चायां सङ्गमे स्त्री गुरौ त्रिषु" इति मेदिनी । "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च" इति धरणिः । "प्रजा स्यात् सन्ततौ जने" इति । "प्रकाशो द्योत आतपः" इति चामरः । "प्रकाशोऽतिप्रसिद्धे स्यात् प्रहासातपयोः स्फुटे" इति विश्वः । "लोकालोकश्चक्रवालः" इति । "अद्रिगोत्र-

गिरिग्रावाचलशैलशिलोच्चयाः” इति चामरः ॥ ६८ ॥

तात्पर्यार्थः—अहं दिलीपो यज्ञकरणेन देवर्णविमोचनात् प्रसन्नो विकसितनेत्रोऽस्मि, किन्तु सन्ततेरभावादत एव पितृणाविमोचनादप्रसन्नोऽत एव निमीलितनयनश्चास्मीत्यतो लोकालोकाचलस्येव मे स्थितिः सम्प्रत्यस्ति ॥ ६८ ॥

भापाऽर्थः—यज्ञ करने के कारण से शुद्ध चित्तवाला तथा—पुत्रके न दिखाई पड़ने (न होने) से आँख मूंदे हुये "अन्धा" जैसा मैं "दिलीप" लोकालोक पर्वत की भांति प्रकाशवान् "दीप्तिमान्" और अप्रकाशवान् "मलिन" हो रहा हूं ॥ ६८ ॥

ननु तपोदानादिसम्पन्नस्य किमपत्यैरित्यत्राह—

**लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।**
**संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ ६९ ॥**

सञ्जीविनी—लोकान्तरेति । समुद्भवत्यस्मादिति समुद्भवः कारणम् । तपोदाने समुद्भवोयस्य तत्तपोदानसमुद्भवं यत्पुण्यं तल्लोकान्तरे परलोके सुखं सुखकरम् । शुद्धवंशे भवा शुद्धवंश्या संततिर्हि परत्र परलोके, इह च लोके शर्मणे सुखाय । 'शर्मशातसुखानि च' इत्यमरः । भवतीति शेषः ॥ ६९ ॥

अन्वयः—तपोदानसमुद्भवं "यत्" पुण्यं, "तद्" लोकान्तरसुखं, शुद्धवंश्या, सन्ततिः, हि, इह, परत्र, च, शर्म्मणे, "भवति" ॥ ६९ ॥

व्याख्या—तपोदानसमुद्भवं = कृच्छ्रचान्द्रायणादिव्रतदानकारणकं; "यत्" पुण्यं = सुकृतं, "तद्" लोकान्तरसुखम् = परलोकसुखकारकम्, "अस्ति" इति शेषः । शुद्धवंश्या = पवित्रवंशोद्भवा, सन्ततिः = प्रजा, पुत्र इति यावद् । हि = यतः, इह = अस्मिन्, लोक इति यावत् । परत्र = परस्मिन्, परलोक इत्यर्थः । च, शर्मणे = सुखाय, "भवति" इति शेषः ॥ ६९ ॥

समासादि—लोक्यतेऽस्मिन्निति लोकः (पुं०) सुखयतीति सुखम् (न० लिं०) अन्यो लोको लोकान्तरम् (त० पु०) तत्र सुखं लोकान्तरसुखं (त० पु०) । समुद्भवत्यस्मादिति समुद्भवः (पुं०) कारणं, तपश्च दानञ्चेति तपोदाने (द्वन्द्वः) तपोदाने समुद्भवो यस्य तत् तपोदानसमुद्भवम् (ब० व्री०) शुद्धश्चासौ वंशः शुद्धवंशः (क० धा०) तत्र भवा शुद्धवंश्या (स्त्री०)। परस्मिन्निति परत्र (अ०) । अस्मिन्निति, इह (अ०) ॥ ६९ ॥

व्याकरणं—लोकः = लोकृ (दर्शने—ऋदित्) + घञ्, "हलश्च" इति घञ् प्रत्ययोऽधिकरणे सौ रूपम् । लोकान्तरम् = अन्य + सु—लोक + सु, अत्रास्वपदविग्रहेण "मयूरव्यंसकादयश्च" इति सूत्रेणान्तरशब्देन सह तत्पुरुषसमासे "उपसर्जनं पूर्वम्" इति लोकस्य पूर्वप्रयोगे समासत्वात्प्रातिपदिकत्वेन सौ रूपम् । समुद्भवः = सम् + उद् + भू (सत्तायाम्) + अप्, "ऋदोरप्" इत्यप् प्रत्ययो धातोर्गुणावादेशौ सौ रूपम् । सन्ततिः = सम् + तनु (विस्तारे—उदित्) + क्तिन्, प्रत्ययः कित्वाद् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः सौ रूपम् । शुद्धः = शुध (शौचे—अकारेत्) + क्तः, प्रत्यय. कित्वाद् गुणाभावः "झषस्तथोर्धोऽधः" इति तस्य धत्वं धस्य जश्त्वं सौ रूपम् । शुद्धवंश्या = शुद्धवंश + यत्, "दिगादिभ्यो यत्" इति यत्प्रत्ययो भवार्थे ततष्टाप् सौ रूपम् । परत्र = पर + त्रल्, "सप्तम्यास्त्रल्" इति त्रल्प्रत्ययः स्वार्थेऽव्ययत्वात्सुपो लुक् । इह = इदम् + हः, "इदमो हः" इति हप्रत्ययः स्वार्थे "इदम इश्" इतीदम इशादेशः शित्ततोऽव्ययत्वात् सुपो लुक् ॥ ६९ ॥

वाच्यान्तरं—तपोदानसमुद्भवेन "येन" पुण्येन "तेन" लोकान्तरसुखेन "भूयते" शुद्धवंश्यया सन्तत्या हि, इह परत्र च शर्मणे "भूयते" ॥ ६९ ॥

कोशः = "लोको जनेऽपि भुवने" इति मेदिनी । "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृ-

षः” इति। “तपः कृच्छ्रादिकर्म च” इति चामरः। “तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमाञ्छिशिरमाघयोः” इति मेदिनी च। “त्यागो विहापितं दानमुत्सर्जनविसर्जने” इति। “प्रजा स्यात् सन्ततौ जने” इति चामरः। “सन्ततिः स्यात् पङ्क्तौ गोत्रे, पारम्पर्ये च पुत्रयोः” इति मेदिनी च। “वशोऽन्ववायः।सन्तानः” इति। “शर्मशातसुखानि च” इति चामरः ॥६९॥

तात्पर्यार्थः-पुण्यं केवलं परलोके सुखावहम्, परन्तु-सन्ततिस्तूभयलोकमध्ये सुखकरी, अतः पुण्यापेक्षया सन्ततेरेवाधिकं सुखास्पदत्वम् ॥.६९ ॥

भाषाऽर्थः-तप और दान है कारण जिसका ऐसा जो पुण्य, वह परलोक में सुख देने वाला होता है। परन्तु पवित्र वंश में उत्पन्न हुई सन्तति इस लोक और परलोक दोनों ही में सुख के लिये होती है ॥ ६९ ॥

*समर्थोऽपि कथमनपत्यं मां ज्ञात्वा भवान्न दूयत इत्याह—*

**तया हीनं विधातर्मां कथं ? पश्यन्न दूयसे ।**
**सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ७० ॥**

सञ्जीविनी—तयेति। ‘हे’ विधातः ! स्रष्टः!, तया संतत्या हीनमनपत्यं माम्। स्नेहात्प्रेम्णा स्वयमेव सिक्तं जलसेकेन बर्धितं बन्ध्यमफलम् ‘बन्ध्योऽफलोऽवकेशी च’ इत्यमरः। आश्रमस्य वृक्षकं वृक्षपोतमिव। पश्यन्कथं? न दूयसे न परितप्यसे। विधातरित्यनेन समर्थोऽप्युपेक्षस इति गम्यते ॥ ७० ॥

अन्वयः—“हे” विधातः !, तया, हीनम्, मां, स्नेहात्, स्वयम्, एव, सिक्तम्, बन्ध्यम्, आश्रमवृक्षकम्, इव, पश्यन्, कथं, न, दूयसे, ॥ ७० ॥

व्याख्या—“हे” विधात ! = हे विश्वस्रष्ट. ! प्रजापते !, इति भावः। तया = सन्तत्या, हीनं = रहितम्, अपुत्रमिति भावः। मां = दिलीपं, स्नेहात् = प्रेम्णा, स्वयम् = आत्मना, एव = निश्चयेन, सिक्तं = जलदानेन संवर्धितम्, बन्ध्यम् = फलरहितम्, आश्रमवृक्षकम् = मठह्रस्वपादपम्, इव = यथा, पश्यन् = विलोकयन्, कथं = केन प्रकारेण, न = नहि दूयसे = परितप्यसे ॥ ७० ॥

समासादि—विशेषेण दधातीति विधाता (पुं०)तत्सम्बुद्धौ हे विधातः !। केन प्रकारेणेति कथम् (अ०)। पश्यतीति पश्यन्। (पुं०)। वन्धे साधुर्बन्ध्यस्तं बन्ध्यम् (पुं०)। आसमन्ताद् श्राम्यन्ति तपस्यन्त्यस्मिन्नित्याश्रमः (पुं०) ह्रस्वो वृक्षो वृक्षकः (पुं०) आश्रमस्य वृक्षकःआश्रमवृक्षकः (त० पु०) तमाश्रमवृक्षकम् ॥ ७० ॥

व्याकरणं—हीनम् = ओहाक् (त्यागे = ओकित्)+क्तः, प्रत्ययः “ओदितश्च” इति निष्ठातस्य नत्वम् “ईहल्यघोः” इत्याकारस्येत्वं सौ रूपम्। विधातः = वि+डुधाञ् (धारणपोषणयोः—डुजित्)+तृन्, प्रत्ययः कर्त्तरि “ऋतो ङिसर्वनामस्थानयोः” इति गुणो रपरः-सुलोपो विसर्गश्च। कथं = किम्+थमुः, “किमश्च” इति थमुप्रत्ययः।“किमः कः” इति कादेशोऽव्ययत्वात् सुपो लुक्। पश्यन् = दृशिर् (प्रेक्षणे—इरित्)+लट्, “लटः शतृशानचावप्रथमासमानाधिकरणे” इति लटः शत्रादेशस्ततः शप् प्रत्ययः “पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः” इति धातोः पश्यादेशो नुमागमः-सुलोपसंयोगान्तलोपौ। दूयसे = दूङ् (परितापे-ङित्)+लट्, तस्य थासादेशस्तस्य च “थासः से” इति सयादेशः “दिवादिभ्यः श्यन्” इति श्यन् प्रत्यय.। सिक्तं = पिच (क्षरणे-अकारेत्)+क्तः, प्रत्ययः “धात्वादेः ष. सः” इति सः “चोः कुः” इति कुत्वं सौ रूपम्। बन्ध्यम् = वन्ध+यत्, “तत्र साधुः” इति यत् प्रत्ययः “यस्येति च” इत्यकार लोपोऽमि रूपम्। आश्रमः = आङ्+श्रमु (तपसि खेदे च—उदित्)+घञ्, “हलश्च” इत्यधिकरणे घञ् प्रत्ययः “नोदात्तोपदेशस्य मान्तस्यानाचमेः” इति ञित्वात्प्रासोपधावृद्धिर्निपध्यते

सौ रूपम् । वृक्षकः = वृक्ष + कः, "ह्रस्वे" इति स्वार्थे कप्रत्ययः सौ रूपम् ॥ ७० ॥

वाच्यान्तरं—हे विधातः ! तया हीनं मां स्नेहात् स्वयमेव सिक्तमाश्रमवृक्षकमिव पश्यता "त्वया" कथं न दूयते ॥ ७० ॥

कोशः—"स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इति । "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इति । "वन्ध्योऽफलोऽवकेशी च" इति चामरः । "वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रियाम्" इति मेदिनी च । "आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे मठे वने" इति मेदिनी । "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः ॥ ७० ॥

तात्पर्य्यार्थः—यथाऽऽत्मना जलदानेन सम्वर्धितमपि फलरहितमाश्रमवृक्षशिशुं विलोक्य भवान् दुःखी भवति, तथैव पुत्ररहितं मां दृष्ट्वा कथं न परितापो भवतां हृदि भवति ॥ ७० ॥

भाषार्थः—हे विधातः ! सन्तान से हीन मुझे स्नेह से स्वयम् सींचे हुये फल से रहित आश्रम के छोटे वृक्ष की भांति देखते हुये किस कारण से आप दुःखी नहीं होते हो ॥ ७० ॥

*दिलीपस्य स्वकीयापुत्रत्वस्यासह्यपीडत्वकथनमित्याह*—

असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१ ॥

सञ्जीविनी—असह्यपीडमिति । हे भवगन् ! मे ममान्त्यमृणं पैतृकमृणम् । अनिर्वाणस्य मज्जनरहितस्य । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः । दन्तिनो गजस्य । अरुर्मर्म तुदतीत्यरुन्तुदं मर्मस्पृक् 'व्रणोऽस्त्रियामीर्ममरुः' इति । 'अरुंतुदन्तु मर्मस्पृक्' इति चामरः । "विध्वरुषोस्तुदः" इति खश्प्रत्ययः । "अरुर्द्विषद्०" इत्यादिना मुमागमः । आलानं बन्धनस्तम्भमिव । 'आलानं बन्धनस्तम्भे' इत्यमरः । असह्या सोढुमशक्या पीडा दुःखं यस्मिंस्तदवेहि । दुःसहदुःखजनकं विद्धीत्यर्थः । 'निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि' इति पालकाप्ये । ( ऋणं देवस्य यागेन ऋषीणां दानकर्मणा । सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत् ) ॥ ७१ ॥

अन्वयः—हे भगवन् !, मे, अन्त्यम् , ऋणम् , अनिर्वाणस्य, दन्तिनः, अरुन्तुदम् , आलानम् , इव, असह्यपीडम् , अवेहि ॥ ७१ ॥

व्याख्या—हे भगवन् ! = षडैश्वर्य्यशालिन् !, मे = मम "दिलीपस्य" इत्यर्थः । अन्त्यं = देवर्षिपितृसम्बन्धिन ऋणस्य चरमम् , ऋणम् = पित्र्युद्धारम् , अनिर्वाणस्य = गजस्य, निर्वाणसंज्ञकमज्जनकर्मरहितस्येत्यर्थः । दन्तिनः = हस्तिनः । अरुन्तुदम् = मर्मस्पृग्गम् , आलानम् = बन्धनस्तम्भम् , इव = यथा, असह्यपीडं = दुःसहव्यथाकरम् , अवेहि = जानीहि ॥ ७१ ॥

समासादि—भगानि षडैश्वर्याणि सन्त्यस्मिन्निति भगवांस्तत्सम्बुद्धौ हे भगवन् ! (पुं०) । सोढुं योग्या सह्या (स्त्री०) न सह्येत्यसह्या (न० त० पु०) असह्या पीडा यस्मिँस्तदसह्यपीडं तदसह्यपीडम् (ब० व्री०) । अन्ते भवमन्त्यम् (न० लिं०) तदन्त्यम् । अरुर्मर्म तुदतीत्यरुन्तुदं तदरुन्तुदम् (न० लिं०) । आलायते बध्यतेऽस्मिन्नित्यालानम् (न० लिं०) । न विद्यते निर्वाणं यत्र सोऽनिर्वाणः (ब० व्री०) तस्यानिर्वाणस्य । दन्तौ स्तोऽस्येति दन्ती (पुं०) तस्य दन्तिनः ॥ ७१ ॥

व्याकरणम्—असह्या = नञ् + षह (मर्षणे = अकारेत् ) + यत् , धात्वादेः षः सः "शकिसहोश्च" इति यत् प्रत्ययो नञ्समासः "नलोपो नञः" इति नञो नकारलोपष्टाप् सौ रूपम् । असह्यपीडम् = असह्या + पीडा, बहुव्रीहिसमासः "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति पुंवद्भावः "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वोऽमि रूपम् । भगवन् = भग + मतुप्, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मस्य वत्वं सम्बुद्धौ नुम् संयोगान्तलोपः । अन्त्यम् = अन्त + यत्,

"दिगादिभ्यो यत्" इति यत् प्रत्ययः "यस्येति च" इत्यकारलोपोऽसि रूपम् । अवेहि = अव+आङ्+इण् (गतौ—णित्)+लोट्, तस्य सिपः "सेर्ह्यपिच्च" इति ह्यादेशो गुण एकादेशः "ओमाङोश्च" इति पररूपत्वम् । अरुन्तुदम् = अरुष्+तुद (व्यथने—अकारेत्)+खश्, "विध्वरुषोस्तुदः" इति खश् प्रत्ययः "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः संयोगान्तसलोपोऽनुस्वारपरसवर्णावमि रूपम् । आलानम् = आङ्+ला (आदाने)+ल्युट्, "ल्युट् च" इत्यधिकरणे ल्युट् प्रत्ययः "युवोरनाकौ" इत्यनादेशः सौ रूपम् । अनिर्वाणस्य = नञ्+निर्+वा (गतिगन्धनयोः)+क्तः, प्रत्ययः "निर्वाणोऽवाते" इति निष्ठातस्य नत्वं निपातनाण्णत्वमपि नञ्समासे ततो नञो नकारलोपे ङसो रूपम् । दन्तिनः = दन्त+इनिः "अत इनिठनौ" इतीनिप्रत्ययः "यस्येति च" इत्यकारलोपो ङसो रूपम् ॥ ७१ ॥

वाच्यान्तरं—हे भगवन् ! मेऽन्त्यमृणमनिर्वाणस्य दन्तिनोऽरुन्तुदमालानमिवासह्यपीडं त्वयाऽवेयताम् ॥ ७१ ॥

कोशः = "पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम्। स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत्" इत्यमरः । "भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु । माहात्म्यैश्वर्य्ययत्नेषु धर्मे मोक्षे च ना रवौ" इति मेदिनी । "माहात्म्यस्य समग्रस्य धैर्यस्य यशसः श्रियः । कामस्याथप्रयत्नस्य षण्णां भग इति श्रुतिः" । इति । "स्यादृणं पर्य्युदञ्चनम् । उद्धारः" इत्यमरः। "ऋणं देवस्य यागेन ऋषीणां पाठकर्मणा। सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेद्" इति ग्रन्थान्तरम् । "अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः" इति । "व्रणोऽस्त्रियामीर्ममरुः" इति । "अरुन्तुदन्तु मर्मस्पृग्" इति । "आलानं बन्धनस्तम्भे" इति चामरः । "निर्वाणो निर्वृतौ मोक्षे विनाशे गजकर्मणि" इति यादवः । "निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि" इति पालकाप्यशास्त्रम् । "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः" इत्यमरः ॥ ७१ ॥

तात्पर्यार्थः—हे भगवन् ! मम सम्प्रति पैतृकमृणं तथा दुःसहदुःखकरं भवति यथा स्नानकर्मरहितस्य गजस्य मर्मस्पृग् बन्धनस्तम्भोऽसह्यदःखो भवति ॥ ७१ ॥

भाषाऽर्थः—हे भगवन् ! मेरे अन्तिम "पैतृक" ऋण को विना स्नान किये हुये हाथी के मर्म को दुख देने वाले बांधने के खम्भे की तरह असह्य पीडा "पहुचाने" वाला "आप" समझैं ॥ ७१ ॥

*दिलीपस्य पुत्रप्राप्तौ प्रयत्नं कर्तुं वशिष्ठं प्रति कथनमित्याह—

तस्मान्मुच्ये यथा तात ! संविधातुं तथाऽर्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥

सञ्जीविनी—तस्मादिति । हे तात ! तस्मात्पैतृकादृणाद्यथा मुच्ये मुक्तो भवामि । कर्मणि लट् । तथा संविधातुं कर्तुमर्हसि । हि यस्मात्कारणादिक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् । तद्राजत्वाद्बहुष्वणो लुक् । दुरापे दुष्प्राप्येऽर्थे । सिद्धयस्त्वदधीनास्त्वदायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इत्यनेन कृद्योगे षष्ठीनिषेधात् ॥ ७२ ॥

अन्वयः—"हे" तात !, तस्माद्, यथा, मुच्ये, तथा, संविधातुं, "त्वम्" अर्हसि, हि, इक्ष्वाकूणां, दुरापे, अर्थे, सिद्धयः, त्वदधीनाः, ॥ ७२ ॥

व्याख्या—हे तात ! = हे पितः !, तस्मात् = पैतृकादृणात् "पुत्रोत्पत्तिकरणाद्" इति यावद् । यथा = येन प्रकारेण, मुच्ये = मुक्तो भवामि, तथा = तेन प्रकारेण, संविधातुं = कर्तुं, "त्वम्" अर्हसि = योग्योऽसि, हि = यस्मात्कारणाद्, इक्ष्वाकूणाम् = इक्ष्वाकुवंशोद्भवानां, दुरापे = दुष्प्रापे, अर्थे = प्रयोजने, सिद्धयः = कार्यसिद्धयः, त्वदधीनाः = त्वदायत्ताः, "सन्ति" इति शेषः ॥ ७२ ॥

समासादि—येन प्रकारेणेति यथा (अ०)। तेन प्रकारेणेति तथा (अ०)। इक्ष्वाकोरपत्यानीक्ष्वाकवस्तेपामिक्ष्वाकूणाम् (पुं०)। दुःखेनाप्तुमर्हो दुष्प्रापः (पुं) तत्र दुरापे। अधि-उपरि-इनो यासां ता अधीनाः (स्त्री०) तव-अधीनास्त्वदधीनाः (त० पु०) ॥ ७२ ॥

व्याकरणम्—मुच्ये = मुच्लृ (मोक्षणे-लृदित्)+लट्, प्रत्ययः कर्मणि "सार्वधातुके यक्" इति यक् प्रत्ययो लट इडादेशः कित्वाद् गुणाभावः। यथा = यद्+थाल् "प्रकारवचने थाल्" इति थाल् प्रत्ययः "त्यदादीनामः" इत्यत्वम् पररूपत्वमव्ययत्वात् सुपो लुक्। संविधातुं = सम्+डुधाञ् (धारणपोषणयोः—डुञित्)+तुमुन्, "समानकर्तृकेपु तुमुन्" इति तुमन् प्रत्ययोऽव्ययत्वात्सुपो लुक्। तथा = तद्+थाल्। पूर्वोक्तयथावद्रूपसिद्धिर्बोध्या। अर्हसि = अर्ह (पूजायाम्-अकारेत्)+लट्, तस्य सिवादेशः शपि रूपम्। इक्ष्वाकूणाम् = इक्ष्वाकु+अञ्, "जनपदशब्दात्क्षत्रियादञ्" इत्यञ् प्रत्ययस्तत आमि "तद्राजस्य बहुपु तेनैवास्त्रियाम्" इति बहुत्वेऽञो लुगमि रूपम्। दुराप = दुर्+आप्लृ (व्याप्तौ-लृदित्)+खल्, "ईपद्दुःसुषु कृच्छ्राकृच्छ्रार्थेपु खल्" इति खल् प्रत्ययो ङिरूपम्। त्वदधीनाः = युष्मद्+अधीन+टाप्, तत्पुरुषसमासे "प्रत्ययोत्तरपदयोश्च" इति मपर्यन्तस्य त्वादेशे ततष्टाप् जसि रूपम्। सिद्धयः = पिधु (संराद्धौ-उदित्)+क्तिन्, प्रत्ययः "झपस्तथोर्धोऽधः" इति तकारस्य धत्वं पूर्वधस्य जश्त्वेन दश्च जसि रूपम् ॥ ७२ ॥

वाच्यान्तरं—हे तात! तस्माद् यथा मया मुच्यते तथा संविधातुं "त्वया" अर्ह्यते हि, इक्ष्वाकूणां दुरापेऽर्थे सिद्धिभिस्त्वदधीनाभिर्भूयते ॥ ७२ ॥

कोशः—"तातस्तु जनकः पिता" इति। "तातोनुकम्प्ये जनके" इत्यमरमेदिनीकोशौ। "अर्थो हेतौ प्रयोजने। निवृत्तौ विपये वाच्ये प्रकारद्रव्यवस्तुपु" इति हैमः। "अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ" इत्यमरः ॥ ७२ ॥

तात्पर्यार्थः—हे तात! इक्ष्वाकुकुलजातानां राज्ञां दुष्करकार्यसिद्धयस्त्वदधीनाः, अतः पैतृकादृणाद् यथा मुक्तो भवामि तथा कर्तु त्वं योग्यो भव, अर्थादुद्धरेति भावः ॥ ७२ ॥

भाषाऽर्थः—हे तात! उस "पैतृक ऋण" से जिस प्रकार से मैं छुटकारा पाऊं, उस प्रकार से "उसे" करने के लिये आप योग्य हो। क्योंकि इक्ष्वाकु कुल के राजाओं के कठिन कार्य के विषय में सिद्धियां आप के अधीन हैं ॥ ७२ ॥

*दिलीपप्रश्नं श्रुत्वा वशिष्ठस्य तदुपरि विचार इत्याह—*

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।
क्षणमात्रमृपिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥

सञ्जीविनी—इतीति। इति राज्ञा विज्ञापित ऋपिर्ध्यानेन स्तिमिते लोचने यस्य स ध्यानस्तिमितलोचनो निश्चलाक्षः सन्क्षणमात्रं सुप्तमीनो ह्रद इव तस्थौ ॥ ७३ ॥

अन्वयः—इति, राज्ञा, विज्ञापितः, ऋपिः, ध्यानस्तिमितलोचनः, "सन्" क्षणमात्रं, सुप्तमीनः, ह्रदः, इव, तस्थौ ॥ ७३ ॥

व्याख्या—इति = इत्थं, राज्ञा = नृपेण "दिलीपेन" इत्यर्थः। विज्ञापितः = निवेदितः, ऋपिः = सत्यवचाः "महर्पिर्वसिष्ठः" इति यावद्, ध्यानस्तिमितलोचनः = चिन्तननिश्चलाक्षः, "सन्" इति शेपः। क्षणमात्रं = त्रिंशत्कलाप्रमाणं, क्रियाविशेपणमिदम्। सुप्तमीन. = निद्रितमत्स्यः, ह्रदः = सर., इव = यथा, तस्थौ = स्थितवान् ॥ ७३ ॥

समासादि—राजते शोभत इति राजा (पुं०) तेन राज्ञा। लोच्येते आभ्यामिति लोचने (न०लि०) ध्यानेन स्तिमिते ध्यानस्तिमिते (त० पु०) ध्यानस्तिमिते लोचने यस्यासौ ध्यानस्तिमितलोचनः (व० व्री०)। क्षणं प्रमाणमस्येति क्षणमात्रम् (न० लि०)। ऋपतीति

ऋषिः (पुं०)। मीयन्त इति मीनाः (पुं०) सुप्ता मीना यत्रासौ सुप्तमीनः (ब० व्री०)। ह्रादन्ते यत्र जलजन्तवोऽगाधजलत्वात् स ह्रदः (पुं०)॥ ७३ ॥

व्याकरणं—विज्ञापितः = वि + ज्ञा (जनोप्रादुर्भावे) + णिच् + क्तः, प्रत्ययः "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुगागम इडागमः "निष्ठायां सेटि" इति णिलोपः सौ रूपम्। राज्ञा = राजृ (दीप्तौ-ऋदित्) + कनिन्, "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इत्यौणादिकः कनिन् प्रत्ययष्टाविभक्तौ "अल्लोपोऽनः" इत्यनोऽकारलोपो जनोर्ज्ञः। ध्यानं = ध्यै (चिन्तायाम्) + ल्युट् "ल्युट् च" इति भावे ल्युट् प्रत्ययस्तस्यानादेशः "आदेच उपदेशेऽशिति" इत्यात्वं धातोरैकारस्य सौ रूपम्। स्तिमिते = ष्टिम (आर्द्रीभावे-अकारेत्) + क्तः, धात्वादे षः सः "आर्धधातुकस्येड्वलादेः" इतीडागम औरूपम्। लोचने = लोचृ (दर्शने-ऋदित्) + ल्युट्, "ल्युट् च" इति करणे ल्युट् प्रत्ययस्तस्यानादेश औरूपम्। क्षणमात्रं = क्षण + मात्रच्, "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति प्रमाणेऽर्थे मात्रच् प्रत्ययः सौ रूपम्। ऋषिः = ऋषी (गतौ-ईदित्) + किः, "इगुपधात् किः" इत्यौणादिकः किप्रत्ययः कित्वाद् गुणाभावः सौ रूपम्। तस्थौ = ष्ठा (गतिनिवृत्तौ) + लिट्, तस्य तिपो णलादेशो धातोर्द्वित्वमभ्यासस्य ह्रस्वो हलो लोपश्चर्त्वम् "आत औ णलः" इत्यौत्वं वृद्धिः। सुप्ताः = ञिष्वप् (शये-ञीत्) + क्तः, प्रत्ययो धात्वादेः षः सः "वचिस्वपियजादीनां किति" इति सम्प्रसारणं "सम्प्रसारणाच्च" इति पूर्वरूपत्वं जसि रूपम्। मीनाः = मीञ् (हिंसायाम्-ञित्) + नक् "फेनमीनौ" इत्यौणादिको नक् प्रत्ययो जसि रूपम्। ह्रदः = ह्राद (अव्यक्ते शब्दे-अकारेत्) + अच्, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच् प्रत्ययः "पृषोदरादीनि यथोपदिष्टम्" इति ह्रस्वः सौ रूपम्॥ ७३ ॥

वाच्यान्तरम्—इति राज्ञा विज्ञापितेन, ऋषिणा ध्यानस्तिमितलोचनेन "सता" क्षणमात्रं सुप्तमीनेन ह्रदेनेव तस्थे ॥ ७३ ॥

कोशः—"राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति। "लोचनं नयनं नेत्रमीक्षणंचक्षुरक्षिणी। दृग्दृष्टी" इति। "अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला। तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम्" इति सर्वत्रामरः। "क्षणः कालविशेषे स्यात् पर्वण्यवसरे मुदे। व्यापारविकलत्वे च वरतन्त्रत्वमध्ययोः" इति हैमोऽपि। "ऋषयः सत्यवचसः" इति। "ऋषिर्वेदे वसिष्ठाद्यौ दीधितौ च पुमानयम्" इत्यमरमेदिन्यौ। "पृथुरोमा झषो मत्स्यो मीनो-वैसारिणोऽण्डजः। विसारः शकली" इति। "तत्रागाधजलो ह्रदः" इति चामरः॥ ७३ ॥

तात्पर्यार्थः—दिलीपस्य प्रार्थना श्रवणानन्तरम् ऋषिर्वसिष्ठो नेत्रे निमील्य समाधिस्थः-सन् ध्यानचक्षुषा पुत्राभावकारणं विचारयामास ॥ ७३ ॥

भाषाऽर्थः—इस प्रकार से राजा "दिलीप" से निवेदन किये गये "वसिष्ठ" ऋषि ध्यान से दोनों आंखें मूंदे हुये क्षण मात्र, सोई मछलियां है जिसमें ऐसे अगाध जलाशय की भांति स्थित रहे ॥ ७३ ॥

*वसिष्ठस्य ध्यानचक्षुषा पुत्रप्रतिबन्धकारणं विज्ञाय दिलीपं प्रति कथनमित्याह—*

सोऽपश्यत्प्रणिधानेन संततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥

सञ्जीविनी—स इति। स मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणो भुवो भर्तुर्नृपस्य संततेः स्तम्भकारणं संतानप्रतिबन्धकारणमपश्यत्। अथानन्तरमेनं नृपं प्रत्यबोधयत्। स्वदृष्टं ज्ञापितवानित्यर्थः। एनमिति "गतिबुद्धिप्रत्यवसानार्थ०" इत्यादिनाऽणिकर्तुः कर्मत्वम् ॥ ७४ ॥

अन्वयः—प्रणिधानेन, भावितात्मा, भुवः, भर्तुः, सन्ततेः, स्तम्भकारणम्, अपश्यत्,

अथ, एनम् , प्रत्यबोधयत् ॥ ७४ ॥

व्याख्या—प्रणिधानेन = समाधिना, "चित्तस्य समाहित्येत्यर्थः । भावितात्मा = पवित्रान्तःकरणः, सः = महर्षिर्वशिष्ठः, = भूमेः, भर्त्तुः = स्वामिनः, "दिलीपस्य" इति भावः । सन्ततेः = पुत्रस्य, स्तम्भकारणम् = प्रतिबन्धहेतुम् , अपश्यद् = दृष्टवान्, अथ = पश्चात् , सन्तानप्रतिबन्धकारणदर्शनानन्तरमिति यावद् । एनं = दिलीपम् , प्रत्यबोधयत् = प्रतिज्ञापितवान् ॥ ७४ ॥

समासादि—प्रणिहितिः प्रणिधानम् (न० लि०) तेन प्रणिधानेन । स्तम्भनं स्तम्भः (पुं०) कार्य्यतेऽनेनेति कारणम् (न० लिं०) स्तम्भस्य कारणं स्तम्भकारणं तत्स्तम्भकारणम् । (त० पु०) । अततीत्यात्मा (पुं०) भावित आत्मा यस्यासौ भावितात्मा (ब० व्री०) भवतीति भूः (स्त्री०) तस्या भुवः । भरतीति भर्त्ता (पुं०) तस्य भर्त्तुः ॥ ७४ ॥

व्याकरणम्—अपश्यद् = दृशिर् (प्रेक्षणे–इरित् ) + लङ्, प्रत्ययः कर्त्तरि तस्य तिवादेशे शपि धातोरडागमे "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति पश्यादेशः । प्रणिधानेन = प्र + नि + डुधाञ् (धारणपोषणयोः—डुञित् ) + ल्युट्, "ल्युट् च" इति ल्युट् प्रत्ययो नपुंसके भावे ततः "युवोरनाकौ" इत्यनादेशः "नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इति नेर्नस्य णत्वं सौ रूपम् । सन्ततेः = सम् + तनु (विस्तारे—उदित् ) + क्तिन्, प्रत्ययः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकनकारलोपः सम्बन्धे षष्ठ्या ङसो रूपम् । स्तम्भः = स्तन्भु (रोधने—उदित् ) + घञ्, "भावे" इति घञ् प्रत्ययो नस्यानुस्वारपरसवर्णौ सौ रूपम् । कारणं = डुकृञ् (करणे—डुञित् ) + णिच् + ल्युट्, णिचिप्रत्यये धातोर्वृद्धौ रपरत्वे "ल्युट् च" इति करणे ल्युट् प्रत्ययः "णेरनिटि" इति णिलोपो योरनादेशः सौ रूपम् । भावितः = भू (सत्तायाम् ) + णिच् + क्तः, प्रत्ययो णिचि धातोर्वृद्धिरावादेशश्च ततो वलादिलक्षण इडागमः "निष्ठायां सेटि" इति णिलोपः सौ रूपम् । आत्मा = अत (सातत्यगमने—अकारेत) + मनिण्, "सातिभ्यां मनिन्मनिणौ" इत्यौणादिको मनिण् प्रत्यय उपधावृद्धिः सौ रूपम् । भुवः = भू (सत्तायाम् ) + क्विप्, "अन्येभ्योऽपि दृश्यते" इति कर्त्तरि क्विप् प्रत्ययो ङसो रूपम् । "कर्तृकर्मणोः कृति" इति कृद्योगे षष्ठी । भर्त्तुः = भृञ् ( भरणे—ञित् ) + तृन् , प्रत्ययः कर्त्तर्यार्धधातुकत्वाद् गुणो रपरस्ततो ङसि "ऋत उत्" इत्युकार एकादेशो रपरः "रात्सस्य" इति सलोपो रेफस्य विसर्गः । एनम् = एतद् + अम् , "द्वितीयाटौस्स्वेनः" इत्येनादेशः "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ" इत्यण्यन्तावस्थायाः कर्त्तुः कर्मत्वम् । प्रत्यबोधयत् = प्रति + बुध (अवगमने—अकारेत् ) + णिच् + लङ्, तस्य तिवादेशो णिचि धातोरुपधागुणोऽडागमः "सार्वधातुकार्धधातुकयोः" इतिगुणोऽयादेशः ॥ ७४ ॥

वाच्यान्तरम्—प्रणिधानेन भावितात्मना तेन भुवो भर्त्तुः सन्ततेः स्तम्भकारणमदृश्यत, अथैषः प्रत्यबोध्यत ॥ ७४ ॥

कोशः—"प्रणिधानं प्रयत्ने स्यात्समाधौ च प्रवेशने" इति । सन्ततिः स्यात्पङ्क्तौ गोत्रेपारम्पर्ये च पुत्रयोः" इति च मेदिनी । हेतुर्ना कारणं बीजम्" इत्यमरः । "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च" इति धरणिः । 'भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः । "भर्त्ता स्वामिनि पुंसि स्यात् त्रिषु धातरिपोष्टरि" इति मेदिनी । "अथो अथ समुच्चये । मङ्गले संशयारम्भाधिकारानन्तरेषु च । अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि" इति हैमः ॥ ७४ ॥

तात्पर्यार्थ—समाधिस्थः सन् ऋषिर्वसिष्ठो ध्यानचक्षुषा राज्ञो दिलीपस्य सन्तानप्रतिबन्धकारणं स्वयं निरीक्ष्य तदनन्तरं तं बोधितवान् ॥ ७४ ॥

भाषाऽर्थः—चित्त की एकाग्रता द्वारा शुद्ध अन्तःकरण वाले उन "वसिष्ठ ऋषि" ने, पृथ्वी के पालन करने वाले "राजा दिलीप" की सन्तति के प्रतिबन्ध "न होने" के कारण को देखा, उसके बाद इन "राजा दिलीप" को भी बतलाया ॥ ७४ ॥

*वशिष्ठस्य राज्ञः सन्तानप्रतिबन्धकारणकथनमित्यत्राह*—

**पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः।**
**आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥**

सञ्जीविनी—पुरेति। पुरा पूर्वं शक्रमिन्द्रमुपस्थाय संसेव्योर्वीं प्रति भुवमुद्दिश्य यास्यतो-गमिष्यतस्तव पथि वर्त्मनि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत। तत्र स्थितेत्यर्थः ॥ ७५ ॥

अन्वयः—पुरा, शक्रम्, उपस्थाय, उर्वीम्, प्रति, यास्यतः, तव, पथि, कल्पतरुच्छायाम्, आश्रिता, सुरभिः, आसीत् ॥ ७५ ॥

व्याख्या-पुरा=आदौ, शक्रं=दिवस्पतिम्, इन्द्रमिति यावद्। उपस्थाय=उपस्थानं कृत्वा, "संसेव्य" इत्यर्थः। उर्वीम्प्रति=वसुन्धरामुद्दिश्य, यास्यतः=गमिष्यतः, "भूलोकमुद्दिश्य स्वर्गतः परावर्तमानस्य" इति भावः। तव=भवतः, "दिलीपस्य" इत्यर्थः। पथि=अध्वनि, "स्वर्गलोकमण्डलमार्गे" इति भावः। कल्पतरुच्छायां=देवतरोरधोभागे, "मन्दारपारिजातकसन्तानकल्पवृक्षहरिचन्दनैकतरदेवतरोश्छायाम्" इति भावः। आश्रिता=सेविता, तत्र स्थितेति भावः। सुरभिः=कामधेनुः, आसीद्=अभवत् ॥ ७५ ॥

समासादि-शक्नोतीति शक्रः (पुं०) तं शक्रम्। ऊर्णोतीत्युर्वी विस्तीर्णत्वात् (स्त्री०) तामुर्वीम्। यास्यतीति यास्यन् (पुं०) तस्य यास्यतः। कल्पस्थायी तरुः कल्पतरुः (त० पु०) तस्य छाया कल्पतरुच्छाया (त० पु०) तां कल्पतरुच्छायाम्। आ समन्ताच्छ्रितेत्याश्रिता (त० पु०)। पतन्त्यनेनेति पन्थाः (पुं०) तस्मिन् पथि ॥ ७५ ॥

व्याकरणं-शक्रं=शक्लृ (शक्तौ-लृदित्)+रक्, "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाश्शीङ्हासिसिधिशुभिभ्यो रक्" इत्यौणादिको रक् प्रत्ययोऽमि रूपम्। उपस्थाय=उप+ष्ठा (गति निवृत्तौ)+क्त्वा, "धात्वादेः षः सः" इति सः "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशः "घुमास्थागापाजहातिसां हलि" इति धातोराकारस्य प्राप्तमित्वं "न ल्यपि" इति निषिध्यते ततोऽव्ययत्वात्सुपो लुक्। उर्वीम्=ऊर्णुञ् (आच्छादने-ञित्)+कुः, "महति ह्रस्वश्च" इत्यौणादिकः कुप्रत्ययो धातोर्नुलोपो ह्रस्वश्च महत्यर्थे गम्यमाने "वोतो *गुणवचनात्*" इति ङीप् अमि रूपं, "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" इति प्रतियोगेऽत्र कर्मप्रवचनीयत्वं "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया। यास्यतः=या (प्रापणे)+लृट्, "लृटः सद्वा" इति शत्रादेशः "स्यतासी लृलुटोः" इति स्यप्रत्ययो ङसो रूपम्। आसीत्=अस (भुवि-अकारेत्)+लङ्, तस्य तिपि धातोराडागमः "अस्तिसिचोऽपृक्ते" इतीडागमः। कल्पतरोः=कल्पस्थायी+तरुः, "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति वार्त्तिकेन स्थायिपदस्य लोपो ङसो रूपम्। कल्पतरु+छाया, "विभाषा सेनासुराच्छायाशालानिशानाम्" इति वैकल्पिकं क्लीबत्वं, तेन पक्षेऽमि रूपम्। आश्रिता=आङ्+श्रिञ् (सेवायां-ञित्)+क्तः, "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति निर्देशात् कर्त्तरि क्तप्रत्ययष्टाप् सौ रूपम्। पथि=पत्लृ (गतौ-लृदित्)+इनिः "पतेस्थश्च" इत्यौणादिक इनिप्रत्ययो धातोस्थकारोऽन्तादेशश्च ततो ङि प्रत्यये "भस्य टेर्लोपः" इति टिलोप ॥ ७५ ॥

वाच्यान्तरम्-पुरा शक्रमुपस्थायोर्वीम्प्रति यास्यतस्तव पथि कल्पतरुच्छायामाश्रित-

या सुरभ्याऽभूयत ॥ ७५ ॥

कोशः-"स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा" इति । "जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः" इति । "सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा" इति । "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इति चामरः । "छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्" इति विश्वमेदिन्यौ । "सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । गन्धोत्पले सौरभेय्यां शल्लकीमातृभेदयोः । सुगन्धे च मनोज्ञे च वाच्यवत् सुरभिः स्मृतः" इति विश्वः । "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इत्यमरः ॥ ७५ ॥

तात्पर्यार्थः-स्वर्गाद् भूलोकमागच्छता त्वया वर्त्मनि सुरतरुच्छायायां निषण्णा कामधेनुर्दृष्टा ॥ ७५ ॥

भाषार्थः-पहले "किसी समय में" इन्द्र का दर्बार करके पृथ्वी की ओर लौटते हुए तुम्हारे मार्ग में कल्पवृक्ष की छाया का सेवन करती हुई कामधेनु थी ॥ ७५ ॥

ततः किमित्याह—

*कामधेनोः प्रदक्षिणाकरणे हेतुं प्रदर्शयन्नाह—*

धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियाऽर्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥

सञ्जीविनी—धर्मेति । ऋतुः पुष्पं रज इति यावत् । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां धर्मस्यर्त्वभिगमनलक्षणस्य लोपाद् भ्रंशाद्भयं तस्मात्स्मरन्ध्यायन् । ( मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् ॥ ) इति शास्त्रात्प्रदक्षिणक्रियाऽर्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादिसत्कारं नाचरो नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः—(ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा) इति । अकरणे दोषमाह पराशरः- (ऋतुस्नाता तु यो भार्यां स्वस्थः सन्नोपगच्छति । बालगोघ्नापराधेन विध्यते नात्र संशयः ॥ ) इति । तथा च—(ऋतुस्नातां तु यो भार्यासन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ) इति ॥ ७६ ॥

अन्वयः—ऋतुस्नाताम्, इमां, राज्ञीं, धर्मलोपभयात्, स्मरन्, प्रदक्षिणक्रियाऽर्हायां, तस्यां, त्वं, साधु, न, आचरः; ॥ ७६ ॥

व्याख्या—ऋतुस्नातां = रजोदर्शननिमित्तककृतस्नानाम्, इमाम् = अग्रे स्थितां, राज्ञीं = पत्नीं, सुदक्षिणामित्यर्थः । धर्मलोपभयाद् = ऋतुकालाभिगमनरूपाचारभ्रंशभीत्या, स्मरन् = अनुचिन्तयन्, प्रदक्षिणक्रियाऽर्हायाम् = प्रदक्षिणकरणयोग्यायां, शास्त्रादिति शेषः । तस्याम् = पूर्वोक्तायां, धेन्वामिति यावत्, त्वम् = भवान्, "दिलीपः" इति भावः । साधु = चारु, प्रदक्षिणादिसत्कारमित्यर्थः । न = नहि, आचरः = विहितवान्, असीति शेषः ॥ ७६ ॥

समासादि—धरति विश्वमिति धर्मः (पुं) तस्य लोपो धर्मलोपः (त० पु०) धर्मलोपाद् भयं धर्मलोपभयं (त०पु०) तस्माद् धर्मलोपभयात् । समृद्धया राजते या सा राज्ञी (स्त्री०) तां राज्ञीम् । ऋच्छतीति ऋतुः (पुं०) तेन "निमित्तेन" स्नाता ऋतुस्नाता (त० पु०) तामृतुस्नाताम् । स्मरतीति स्मरन् (पुं०) प्रगतं दक्षिणं प्रदक्षिणं (त० पु०) तस्य क्रिया प्रदक्षिणक्रिया (त० पु०) अर्हति या सा, अर्हा (स्त्री०) प्रदक्षिणक्रियायामर्हा प्रदक्षिणक्रियाऽर्हा (त० पु०) तस्यां प्रदक्षिणक्रियाऽर्हायाम् । साध्नोति यत् तत् साधु (न० लिं०) क्रियाविशेषणमदः ॥७६॥

व्याकरणं—धर्मः = धृञ् ( धारणे—नित् ) + मन् "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्" इत्यौणादिको मन् प्रत्यये धातोर्गुणो रपरश्च सौ रूपम् । राज्ञी = रा

(दीप्तौ—ऋदित्)+कनिन्, "कनिन् युवृषितक्षिराजिधन्वद्युप्रतिदिवः" इत्यौणादिकः कनिन् प्रत्ययः "ऋन्नेभ्यो ङीप्" इति नान्तत्वाद् ङीप्, "अल्लोपोऽनः" इत्यकारलोपो जग्धोऽमि रूपम्। ऋतुना=ऋ (गतिप्रापणयोः)+तु, "अर्तेश्च तुः" इत्यौणादिकस्तु प्रत्ययः स च कित् तेन गुणाभावष्टारूपम्। स्नाता=ष्णा (शौचे)+क्तः, प्रत्ययो धात्वादेः षः सः स्त्रियां टाप् सौ रूपम्। स्मरन्=स्मृ(चिन्तायाम्)+लट्, तस्य शत्रादेश उगित्वान्नुम् सौ रूपम्। साधु=साध (संसिद्धौ—अकारेत्)+उण्, कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इत्युण् प्रत्ययः सौ रूपम्। आचरः=आङ्+चर (गत्यर्थः—अकारेत्)+लङ्, तस्य सिबादेशे धातोरडागमे शपि रूपम्॥ ७६॥

वाच्यान्तरम्—ऋतुस्नातामिमां राज्ञीं धर्मलोपभयात् स्मरता "सता" त्वया प्रदक्षिणक्रियाऽर्हायां तस्यां साधु नाचर्य्यत॥ ७६॥

कोशः—"ऋतुः स्त्रीकुसुमेऽपि च" इति। "ऋतुर्वर्षाऽऽदिषट्सु च। आर्तवे मासि च पुमान्" इति चामरमेदिन्यौ। "धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे" इति मेदिनी। "दरस्त्रासो, भीतिर्भीः साध्वसं भयम्" इत्यमरः। "क्रिया तूपायचेष्टयोः। आरम्भे निष्कृतौ पूजासम्प्रधारणकर्मसु। शिक्षाचिकित्साकरणे" इति मेदिनी। "साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्" इति मेदिनी॥ ७६॥

तात्पर्यार्थः—पथि तां कामधेनुं दृष्ट्वाऽपि ऋतुकालाभिगमनधर्मनाशभीत्या राज्ञीं चिन्तयन् सन्, त्वं तस्यां प्रदक्षिणादिसत्कारविधिं न विहितवान्॥ ७६॥

भाषार्थः—ऋतुकाल (रजोदर्शन) निमित्तक स्नान की हुई, इस रानी सुदक्षिणाको धर्म के लोप के भय से स्मरण करते हुये तुमने प्रदक्षिण क्रिया के योग्य उस कामधेनु के विषय में उचित "प्रदक्षिणादि सत्कार" नहीं किया॥ ७६॥

*अनादृतायाः सुरभेर्दिलीपाय शापप्रदानमित्याह—*

**अवजानासि मां यस्मात्ततस्ते न भविष्यति।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥ ७७॥**

सञ्जीविनी—अवजानासीति। यस्मात्कारणान्मामवजानासि तिरस्करोषि। अतः कारणान्मत्प्रसूतिं मम संततिमनाराध्यासेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप। 'शप आक्रोशे'॥ ७७॥

अन्वयः—यस्माद्, माम्, अवजानासि, अतः, मत्प्रसूतिम्, अनाराध्य, ते, प्रजा, न, भविष्यति, इति, सा, त्वां, शशाप॥ ७७॥

व्याख्या—यस्माद्=यतः, कारणादिति यावद्। माम्=प्रदक्षिणक्रियाऽर्हां, सुरभिम्, इति यावत्। अवजानासि=तिरस्करोषि। अतः=एतस्मात्, कारणादिति यावद्। मत्प्रसूतिम्=मम सन्ततिं, "सौरभेयीं नन्दिनीमिति भाव."। अनाराध्य=असेवयित्वा, ते=तव, प्रजा=सन्ततिः, न=नहि, भविष्यति=उत्पत्स्यते, इति=इत्थं, सा=कामधेनुः, त्वां=भवन्तं "दिलीपमिति भावः"। शशाप=शप्तवती। मदवज्ञारूपापराधेन मदात्मजासेवनं विना न ते प्रजा भविष्यतीति सा त्वां शशापेति भावः॥ ७७॥

समासादि—एतस्मादित्यतः (अ०)। मम प्रसूतिर्मत्प्रसूतिस्ताम् मत्प्रसूतिम् (त०पु०)। न आराध्येत्यनाराध्य (न० त०)। प्रकर्षेण जायत इति प्रजा (स्त्री०)॥ ७७॥

व्याकरणम्—अवजानासि=अव+ज्ञा (अवबोधने)+लट्, तस्य सिबादेशे "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययः शित्वाद् "ज्ञाजनोर्जा" इति धातोर्जादेशः। अतः=एतद्+तसिल् "पञ्चम्यास्तसिल्" इति तसिल्प्रत्ययो वैकल्पिकः "एतदोऽन्" इत्यनादेशः "नलोपः प्रातिपदिकान्तस्य" इति नलोपोऽव्ययत्वात्सुपो लुक्। प्रसूतिः—प्र+षूङ् (प्राणिप्रसवे—ङित्)

+क्विन्, प्रत्ययः सौ रूपम्। मत्प्रसूतिम्=अस्मद्+प्रसूति, तत्पुरुषसमासे "प्रत्ययोत्तरपदयोश्च" इति मपर्यन्तस्य मादेशोऽमि रूपम्। आराध्य=आङ्+राध (संसिद्धौ=अकारेत्)+क्त्वा, "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशः। अनाराध्य=नञ्+आराध्य, "नलोपो नञः" इति नञ्समासे नञो नकारलोपः "तस्मान्नुडचि" इति नुडागमः। प्रजा=प्र+जनी (प्रादुर्भावे-ईदित्) +डः, "उपसर्गे च संज्ञायाम्" इति डप्रत्ययष्टिलोपष्टाप् सौ रूपम्। शशाप=शप (आक्रोशे—अकारेत्)+लिट्, तस्य तिपो णलादेशे ततो द्वित्वमभ्यासहलो लोपः "अत उपधायाः" इत्युपधावृद्धिः ॥ ७७ ॥

वाच्यान्तरं—यस्मात् "त्वया" अहमवज्ञायेऽतो मत्प्रसूतिमनाराध्य ते प्रजया न भविष्यत इति तया त्वं शेपे॥ ७७ ॥

कोशः—"प्रसूतिरुद्भवेऽपि स्यात्तनये दुहितर्यपि" इति मेदिनी। "प्रजा स्यात् सन्ततौ जने" इत्यमरः ॥ ७७ ॥

तात्पर्यार्थः—यस्मात्प्रदक्षिणक्रियाऽर्हामपि मामवजानास्यतो यावन्मद्दुहितरं न सेविष्यसे तावत ते प्रजाऽपि न भविष्यतीति सा कामधेनुस्त्वामशपत् ॥ ७७ ॥

भाषाऽर्थः—तूने मेरा अनादर किया इस कारण से मेरी सन्तति की आराधना किये विना तुझे सन्तान नही होगा ऐसा उस "कामधेनु" ने तुम्हें शाप दिया ॥ ७७ ॥

कथं तदस्माभिर्न श्रुतमित्याह—

स शापो न त्वया राजन्न च सारथिना श्रुतः।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥

सञ्जीविनी—स इति। हे राजन्! स शापस्त्वया न श्रुतः सारथिना च न श्रुतः। अश्रवणे हेतुमाह-क्रीडाऽर्थमागता उद्दामानो दाम्न उद्गता दिग्गजा यस्मिंस्तथोक्ते। आकाशगङ्गाया मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ॥ ७८ ॥

अन्वयः—हे राजन्!, सः, शापः, त्वया, न, श्रुतः, च, सारथिना, न, "श्रुतः" उद्दामदिग्गजे, आकाशगङ्गायाः, स्रोतसि, नदति, "सति" ॥ ७८ ॥

व्याख्या—हे राजन्!=हे नृप! हे दिलीप! इति यावत्। सः=पूर्वोक्तः, शापः=आक्रोशः, "प्रजा ते न भविष्यति" इत्यात्मकः। त्वया=भवता, न=नहि, श्रुतः=शुश्रुवे। च=पुनः, सारथिना=सूतेन, न=नहि, "श्रुतः" इति शेषः। उद्दामदिग्गजे=उच्छृङ्खलदिङ्नागे, आकाशगङ्गायाः=वियद्गङ्गायाः, "मन्दाकिन्याः" इति यावत्। स्रोतसि=प्रवाहे, नदति=शब्दायमाने, अव्यक्तं हरहरेतिशब्दं कुर्वतीति भावः। "सति" इति शेषः। सुरनदीप्रवाहशब्दतुमुले कामधेनुशब्दस्य विलीनत्वात् त्वया न श्रुत इत्यर्थः ॥ ७८ ॥

समासादि—शपनं शापः (पुं०)। समृद्ध्या राजते शोभते इति राजा तत्सम्बुद्धौ हे राजन् (पुं०)। रथेन सहितः सरथः (ब० व्री०) तस्यापत्यं सारथिस्तेन सारथिना (पुं०)। अश्रावीति श्रुतः (पुं०)। नदतीति नदत् (न० लिं०) तस्मिन्नदति। आ समन्तात् काशन्ते नक्षत्राणि यत्र स आकाशः (पुं०) तत्र स्थिता गङ्गा आकाशगङ्गा (त० पु०) तस्या आकाशगङ्गायाः। स्रवतः स्रवतीति स्रोतः (न० लिं०) तस्मिन् स्रोतसि। दाम्न उद्गता उद्दामानः (त० पु०); दिशां गजा दिग्गजाः "ऐरावतादयः" (पुं०) उद्दामानो दिग्गजा यत्र तदुद्दामदिग्गजं तस्मिन्नुद्दामदिग्गजे (ब० व्री०) ॥ ७८ ॥

व्याकरणं—शापः=शप (आक्रोशे—अकारेत्)+घञ्, "भावे" इति घञ् प्रत्ययो ञित्वादुपधावृद्धिः सौ रूपम्। राजन्=राजृ (दीप्तौ—ऋदित्)+कनिन्, "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इत्यौणादिकः कनिन् प्रत्ययः सम्बुद्धौ सौ रूपम्। सरथः=सह+रथ, "वोपसर्जनस्य" इति बहुव्रीहिसमासे सहस्य सादेशः सौ रूपम्। सारथिना=सरथ+

इञ्, "अत इञ्" इत्यपत्यार्थे इञ् प्रत्ययो ञित्वादादिवृद्धिष्टारूपम् । श्रुतः = श्रु (श्रवणे) + क्तः, प्रत्ययः कित्वाद् गुणाभावः सौ रूपम् । नदति = णद (अव्यक्ते शब्दे) + लट्, तस्य शत्रादेशः क्लीबविषयत्वान्नुमभावो ङिरूपम् । आकाशः = आङ् + काश्ट (दीप्तौ—ऋदित्) + घञ्, "हलश्च" इति घञ् प्रत्ययः सौ रूपम् । स्रोतसि = स्रु (गतौ) + असुन्, "स्रुरीभ्यां तुट् च" इत्यौणादिकोऽसुन् प्रत्ययस्तस्य तुडागमश्च धातोर्गुणो ङिरूपम् । उद्दामानः = उद् + दामन्, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति पञ्चमीतत्पुरुषो जसि रूपम् ॥ ७८ ॥

वाच्यान्तरं—हे राजन् ! तं शापं त्वं नाश्रौषीः सारथिश्च नाश्रौषीः, उद्दामदिग्गज आकाशगङ्गायाः स्रोतसि नदति सति ॥ ७८ ॥

कोशः—"राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति । "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः । सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः" इति । "मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका" इति । "स्रोतोऽम्बुसरणं स्वतः" इति । "ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः" इति सर्वत्राप्यमरः ॥ ७८ ॥

तात्पर्य्यार्थः—हे राजन् ! त्वं तं शापं न श्रुतवान्, तथा सारथिरपि न श्रुतवान्, यतो मन्दाकिन्याः प्रवाहेऽवगाहमानानामुद्धतबन्धनानामैरावतप्रभृतीनां दिग्गजानां महानव्यक्तशब्द आसीत् ॥ ७८ ॥

भाषाऽर्थः—हे राजन् ! उस शाप को तुम ने और सारथि ने भी नहीं सुना । क्योंकि "स्नान करने के लिये आये हुये "अत एव" बन्धन से छूटे हुये "ऐरावत आदि" दिग्गजों का आकाशगङ्गा (मन्दाकिनी) के प्रवाह में अव्यक्त शब्द हो रहा था ॥ ७८ ॥

अस्तु प्रस्तुते किमायातमित्यत्राह—

ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥

सञ्जीविनी—ईप्सितमिति । तदवज्ञानात्तस्या धेनोरवज्ञानादपमानादात्मनः स्वस्याप्तुमिष्टमीप्सितं मनोरथम् । आप्नोतेः सन्नन्तात्क्त ईकारश्च । सार्गलं सप्रतिबन्धं विद्धि जानीहि । तथा हि । पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति ॥ ७९ ॥

अन्वयः—तदवज्ञानाद्, आत्मनः, ईप्सितं, सार्गलं, विद्धि, हि, पूज्यपूजाव्यतिक्रमः, श्रेयः, प्रतिबध्नाति ॥ ७९ ॥

व्याख्या—तदवज्ञानात् = सुरभेस्तिरस्क्रियायाः, अपमानादिति यावद् । आत्मनः = स्वस्य, दिलीपस्येत्यर्थः । ईप्सितम् = अभीष्टं, "सन्ततिरूपम्" इति यावत् । सार्गलम् = प्रतिबन्धसहितं, विद्धि = अवेहि, त्वमिति शेषः । हि = यतः, पूज्यपूजाव्यतिक्रमः = पूजाऽर्हार्चाऽतिक्रमणं, श्रेयः = शुभम्, प्रतिबध्नाति = निरुणद्धि ॥ ७९ ॥

समासादि—आप्तमिष्टमीप्सितं तदीप्सितम् (न० लि०) । तस्या अवज्ञानं तदवज्ञानम् (त० पु०) तस्मात्तदवज्ञानाद् । अर्गलेन सहितं सार्गलं (ब० व्री०) तत् सार्गलम् । अततीत्यात्मा तस्यात्मनः (पुं०) । इदमनयोरतिशयेन प्रशस्यमिति श्रेयस्तच्छ्रेयः (न० लि०) । पूजितुं योग्याः पूज्याः (पुं०) तेषां पूजा पूज्यपूजा (त० पु०) तस्या व्यतिक्रमः पूज्यपूजाव्यतिक्रमः (त० पु०) ॥ ७९ ॥

व्याकरणम्—ईप्सितम् = आप्लृ (व्याप्तौ—लृदित्) + सन् + क्तः, "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सन् प्रत्ययः "आप्ज्ञप्यृधामीत्" इति धातोराकारस्येत्वं "सन्यङोः" इत्यजादित्वात्प्सेत्यस्य द्वित्वम् "अत्र लोपोऽभ्यासस्य" इत्यभ्यासस्य लोपस्ततः सन्नन्तस्य धातुत्वात् क्तप्रत्यय इडागमोऽमि रूपम् । अवज्ञानम् = अव + ज्ञा (अवबोधने) + ल्युट्, "ल्युट् च" इति ल्युट् प्रत्ययः सौ रूपम् । विद्धि = विद (ज्ञाने—अकारेत्) + लोट्,

तस्य सिपो हिः, अदादित्वाच्छपो लुक् "हुझल्भ्यो हेर्धिः" इति हेर्धिः। सार्गलं = सह + अर्गल, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिसमासः "वोपसर्जनस्य" इति सहस्य सादेशोऽमि रूपम्। आत्मनः = अत (सातत्यगमने—अकारेत्) + मनिण्, "सातिभ्यां मनिन्मनिणौ" इति मनिण् प्रत्यय औणादिको णित्वादुपधावृद्धिर्ङसो रूपम्। प्रतिबध्नाति = प्रति + बन्ध (बन्धने-अकारेत्) + लट्, तस्य तिबादेशः "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययः। श्रेयः = प्रशस्य + ईयसुन्, "द्विवचनविभज्योपपदे तरबीयसुनौ" इतीयसुन् प्रत्ययः "प्रशस्यस्य श्रः" इति प्रशस्यस्य श्रादेशो गुणोऽमि रूपम्। पूज्याः = पूज (पूजायाम्—अकारेत्) + ण्यत्, "ऋहलोर्ण्यत्" इति ण्यत् प्रत्ययो जसि रूपम्। पूजा = पूज (पूजायाम्—अकारेत्) + अङ्, "चिन्तिपूजिकथिकुम्बिचर्चश्च" इत्यङ् टाप् सौ रूपम्। व्यतिक्रमः = वि + अति + क्रमु (पादविक्षेपे—उदित्) + घः, "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः सौ रूपम् ॥७९॥

वाच्यान्तरं—तदवज्ञानादीप्सितं सार्गलं "त्वया" विद्यतां, हि पूज्यपूजाव्यतिक्रमेण श्रेयः प्रतिबध्यते ॥ ७९ ॥

कोशः—"अभीष्टेऽभीप्सितम्" इति। "अनादरः परिभवः परीभावस्तिरस्क्रिया। रीढाऽवमाननावज्ञाऽवहेलनमसूर्क्षणम्" इति। "तद्विष्कम्भेऽर्गलं न ना" इति चामरः। "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि" इति मेदिनी। "श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्" इति मेदिनी। "पूज्यः प्रतीक्ष्यः" इति। "पूजानमस्याऽपचितिः सपर्य्याऽर्चाऽर्हणाः समाः" इति चामरः ॥ ७९ ॥

तात्पर्यार्थः—तस्या धेनोरनादरतस्ते सन्तानरूपस्य मनोरथस्य प्रतिबन्धो जातो यतः पूज्यानां पूजालङ्घनं कल्याणम् प्रतिबध्नात्येव ॥ ७९ ॥

भाषार्थः— उस कामधेनु का अनादर करने से अपने "सन्तानरूप" मनोरथ को तुम रुका हुआ समझो। क्योंकि पूज्यों की पूजा का उल्लङ्घन करना कल्याण को रोकता है ॥७९॥

तर्हि गत्वा तामाराधयामि। सा वा कथं चिदागमिष्यतीत्याशा न कर्त्तव्येत्याह—

**हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः।**
**भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥**

सञ्जीविनी—हविष इति। सा च सुरभिरिदानीं दीर्घं सत्रं चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविरर्थं भुजङ्गावरुद्धद्वारं ततो दुष्प्रवेशं पातालमधितिष्ठति। पाताले तिष्ठतीत्यर्थः। "अधिशीङ्स्थाऽऽसां कर्म" इति कर्मत्वम् ॥ ८० ॥

अन्वयः—सा, च, इदानीं, दीर्घसत्रस्य, प्रचेतसः, हविषे, भुजङ्गपिहितद्वारम्, पातालम्, अधितिष्ठति ॥ ८० ॥

व्याख्या—सा = सुरभिः, च = पुनः, इदानीम् = अस्मिन् काले, दीर्घसत्रस्य = बहुसमयसाध्ययज्ञविशेषकारिणः, प्रचेतसः = पाशिनः, वरुणस्येति यावद्। हविषे = दध्याज्यादिहविःसामग्रीसम्पादनार्थम्, भुजङ्गपिहितद्वारम् = भुजगावरुद्धप्रतीहारम्, "अत एव दुष्प्रवेशम्" पातालम् = पाताललोकम्, अधितिष्ठति = अध्यास्ते "पाताले वर्त्तते" इति भावः ॥ ८० ॥

समासादि—हूयतेऽदो हविः (न० लि०) तस्मै हविषे। दीर्घं सत्रं यस्य स दीर्घसत्रस्तस्य दीर्घसत्रस्य (ब० व्री०)। अस्मिन् काले इदानीम् (अ०)। प्रकृष्टं चेतो यस्यासौ प्रचेतास्तस्य प्रचेतसः (पुं०)। भुजाभ्यां गच्छन्तीति भुजङ्गाः (पुं०) तैः पिहितं भुजङ्गपिहितं (त० पु०) भुजङ्गपिहितं द्वारं यस्य तद् भुजङ्गपिहितद्वारं तद् भुजङ्गपिहितद्वारम् (ब० व्री०)। पतन्त्यस्मिन्निति पातालम् (न० लि०) तत्पातालम् ॥ ८० ॥

व्याकरणं—हविषे = हु (दानादानयोः) + इसि, "अर्चिशुचिहुसृपिच्छदिच्छादिभ्य इसिः" इत्यौणादिक इसिप्रत्यये धातोर्गुणोऽवादेशः सस्य षत्वं ङे रूपम्। इदानीम् = इद-

म्+दानीं, "दानीञ्च" इति दानीम् प्रत्ययः। "इदम इश्" इतीदम इशादेशोऽव्ययत्वात् सुपो लुक्। प्रचेतसः=प्रकृष्ट+चेतस्, "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिसमासे कृष्टपदलोपे ङसो रूपम्। भुजङ्गैः=भुज+गम्लृ (गतौ—लृदित्)+खच्, "गमे: सुपि वाच्यः" इति खच् प्रत्ययः "खच्च डिद्वा वाच्यः" इति खचो वैकल्पिकं डित्वं तेन टिलोपः "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमो भिसि रूपम्। पिहितम्=अपि+डुधाञ् (धारणपोषणयोः—डुञित्)+क्तः, प्रत्ययः "दधातेर्हिः" इति धातोर्ह्यादेशः "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यपेरकारलोपः सौ रूपम्। द्वारं=द्वृ (आवरणे)+घञ्, प्रत्ययः कर्मणि बाहुलकाद् वृद्धिः सौ रूपम्। पातालम्=पत्लृ (गतौ—लृदित्)+आलञ्, "पतिचण्डिभ्यामालञ्" इत्यौणादिक आलञ् प्रत्ययो ञित्वादुपधावृद्धिरमि रूपम्, "अधिशीङ्स्थाऽऽसां कर्म" इति कर्मत्वं "कर्मणि द्वितीया" इति द्वितीया। अधितिष्ठति=अधि+ष्ठा (गतिनिवृत्तौ)+लट्, तस्य तिपि शप्प्रत्यये "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति तिष्ठादेशः ॥ ८० ॥

वाच्यान्तरं—तया चेदानीं दीर्घसत्रस्य प्रचेतसो हविषे भुजङ्गपिहितद्वारं पातालमधिष्ठीयते ॥ ८० ॥

कोश.—"हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसकम्" इति। "सत्त्रं यज्ञे सदादानाच्छादनारण्यकैतवे" इति च मेदिनी। "प्रचेता वरुणः पाशी" इति। "सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इति। "स्त्री द्वार्द्वारं प्रतीहारः" इति। "अधोभुवनपातालबलिसद्मरसातलम्" इति चामरः॥ ८० ॥

तात्पर्यार्थः—सा च कामधेनुः सम्प्रति बहुसमयसाध्ययज्ञकर्त्तुर्वरुणस्य यज्ञे दध्याज्यादिहविःसामग्रीसम्पादनार्थम् भुजङ्गावरुद्धप्रवेशमार्गे पाताले तिष्ठतीत्यतस्तत्र गन्तुमशक्यम्॥८०॥

भाषार्थः—और वह कामधेनु इस समय बहुत समय में पूर्ण होने वाले यज्ञ के कर्त्ता वरुण के हवि "दधि घृत आदि" के लिये सापों से रुके हुए द्वार वाले पाताल लोक में रहती है ॥ ८० ॥

तर्हि का गतिरित्याह—

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥

सञ्जीविनी—सुतामिति। तस्याः सुरभेरियं तदीया। तां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः शुद्धः। सह पत्न्या वर्तत इति सपत्नीकः सन्। "नद्यृतश्च" इति कप्प्रत्ययः। आराधय। हि यस्मात्कारणात्सा प्रीता तुष्टा सती। कामान्दोग्धीति कामदुघा भवति। "दुहः कब्घश्च" इति कप्प्रत्ययो घादेशश्च॥ ८१ ॥

अन्वयः—तदीयां, सुतां, सुरभेः, प्रतिनिधिं, कृत्वा, शुचिः, "भूत्वा" सपत्नीकः, "सन्" आराधय, हि, सा, प्रीता, "सती" कामदुघा, "भवति" ॥ ८१ ॥

व्याख्या—तदीयां=सुरभिसम्बन्धिनीं, सुताम्=आत्मजां, नन्दिनीमिति यावत्। सुरभेः=कामधेनोः, प्रतिनिधिम्=प्रतिच्छायां, स्थानापन्नामिति यावत्। कृत्वा=विधाय, शुचिः=शुद्धः, "भूत्वा" इति शेषः। सपत्नीकः=भार्यासहितः, "सन्" इति शेषः। आराधय=आराधनां कुरु, हि=यतः, सा=नन्दिनी, प्रीता=प्रसन्ना, "सती" इति शेषः। कामदुघा=अभीष्टफलप्रसविनी, "भवति" इति शेषः। कामधेनोरभावे तदीयां सुतां सेवस्व सैव तवाभीष्टदायिनी भविष्यति ॥ ८१ ॥

समासादि—सूयतेऽसौ सुता (स्त्री०) तां सुताम्। तस्या इयं तदीया (स्त्री०) तां तदीयाम्। प्रतिनिधानं प्रतिनिधिः (पुं०) तं प्रतिनिधिम्। पत्न्या सह वर्त्तते यः स सपत्नीकः

(व० श्री०)। कामान् दोग्धीति कामदुघा (स्त्री०) ॥ ८१ ॥

व्याकरणं—सुतां=षुञ् (प्रसवैश्वर्ययोः)+क्तः, प्रत्ययः कर्मणि "धात्वादेः षः सः" इति षस्य सः स्त्रियां टाप् प्रत्ययोऽमि रूपम्। तदीयां=तद्+छः+टाप्, "त्यदादीनि च" इति वृद्धिसंज्ञा ततः "वृद्धाच्छः" इति छप्रत्ययः "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इतीयादेशष्टाप् अमि रूपम्। कृत्वा=डुकृञ् (करणे—डुञित्)+क्त्वा, "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्ययोऽव्ययत्वात्सुपो लुक्। प्रतिनिधिम्=प्रति+नि+डुधाञ् (धारणपोषणयोः—डुञित्)+किः, "उपसर्गे घोः किः" इति किप्रत्ययः "आतो लोप इटि च" इत्याकारलोपोऽमि रूपम्। आराधय=आङ्+राध (संसिद्धौ—अकारेत्)+णिच्+लोट्, तस्य सिपो ह्यादेशः शपि राधिधातोर्गुणायादेशौ "अतो हेः" इति हेर्लुक्। सपत्नीकः=सह+पत्नी+कप्, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिसमासः "वोपसर्जनस्य" इति सहस्य सादेशः "नद्यृतश्च" इति कप् सौ रूपम्। प्रीता=प्रीञ् (तर्पणे कान्तौ च—ञित्)+क्तः, प्रत्ययः कित्वाद् गुणाभावष्टाप् सौ रूपम। कामदुघा=काम+दुह (प्रपूरणे—अकारेत्)+कप्+टाप्, "दुहः कब्घश्च" इति कप्प्रत्ययो धातोर्हस्य घादेशश्च टाप् सौ रूपम् ॥ ८१ ॥

वाच्यान्तरं—तदीयां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिना सपत्नीकेन त्वयाऽऽराध्यतां हि तया प्रीतया सत्या कामदुघया भूयते ॥ ८१ ॥

कोशः—"आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी। आहुर्दुहितरं सर्वे" इत्यमरः। "सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति। चम्पके च वसन्ते च तथा जातीफले पुमान् ॥ स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु। विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्" इति मेदिनी। "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्चा पुंसि प्रतिनिधिः" इत्यमरः। "शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु" इति मेदिनी। "पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी। भार्या जायाऽथ पुंभूम्नि दाराः स्याद्" इति। हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः" इति चामरः ॥ ८१ ॥

तात्पर्य्यार्थः—तस्याः पाताललोकस्थितायाः कामधेनोः सुतां नन्दिनीनाम्नीं तत्स्थानापन्नां कृत्वा पवित्रमनाः सुदक्षिणासहितस्त्वं शुश्रूषस्व यतस्त्वत्सेवया सा प्रसन्ना सती तत्राभीष्टफलदायिनी भविष्यति ॥ ८१ ॥

भाषाऽर्थः—उस कामधेनु की लड़की को उसी के "स्थान पर" प्रतिनिधि करके तुम शुद्ध मन होकर रानी के सहित उसकी सेवा करो, क्योंकि वह "नन्दिनी" प्रसन्न होती हुई मनोरथ को पूरा करने वाली होती है ॥ ८१ ॥

*कामधेनुसुताया नन्दिन्या वनादागमनमित्यत्राह*—

इति वादिन एवास्य होतुराहुतिसाधनम्।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥

सञ्जीविनी—इतीति। इति वादिनो वदत एव होतुर्हवनशीलस्य। "तृन्" इति तृन्प्रत्ययः। अस्य मुनेराहुतीनां साधनं कारणम्। नन्दयतीति व्युत्पत्त्या नन्दिनीनामानिन्द्याऽगर्ह्या प्रशस्ता धेनुर्वनादाववृते प्रत्यागता। (अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्) इति भावः ॥ ८२ ॥

अन्वयः—इतिवादिनः, एव, होतुः, अस्य, आहुतिसाधनं, नन्दिनी, नाम, अनिन्द्या, धेनुः, वनाद्, आववृते ॥ ८२ ॥

व्याख्या—इतिवादिनः=एवं कथयतः, एव, होतुः=हवनकर्तुः, "हवनशीलस्य" इति यावद्। अस्य=मुनेः "वशिष्ठस्य" इत्यर्थः। आहुतिसाधनं=हवनसामग्रीकारणं, न-

न्दिनी=नन्दिनीत्याख्या, नाम=प्रसिद्धावव्ययमेतद्, अनिन्द्या=अगर्ह्या, प्रशस्तेति यावद्। धेनुः=नवसूतिका "कामधेनुसुता" इत्यर्थः। वनाद्=विपिनाद्, आववृते=प्रत्याजगाम ॥ ८२ ॥

समासादि—इति वदितुं शीलमस्येतीवादी तस्येतिवादिनः (पुं०)। जुहोतीति होता (पुं०) तस्य होतुः। आहवनानीत्याहुतयः (स्त्री०)। साध्यतेऽनेनेति साधनम् (न० लिं०) आहुतीनां साधनमाहुतिसाधनम् (त० पु०)। निन्दितुं योग्या निन्द्या (स्त्री०) न निन्द्या अनिन्द्या (न० त० पु०)। नन्दनं नन्दः (पुं०) सोऽस्त्यस्यामिति नन्दिनी (स्त्री०) धीयतेऽसौ सुतैरिति धेनुः (स्त्री०) ॥ ८२ ॥

व्याकरणम्—इतिवादिनः=इति+वद (व्यक्तायां वाचि-अकारेत्)+णिनिः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः प्रत्ययो णित्त्वादुपधावृद्धिर्ङसो रूपम्। होतुः=हु (दानादानयोः)+तृन्, "तृन्" इति कर्त्तरि तृन् प्रत्ययो गुणो ङसि "उरत्" इत्युदेकादेशो रपरः-संयोगान्तलोपो रेफस्य विसर्गः। आहुतिः=आङ्+हु (दानादानयोः)+क्तिन्, प्रत्ययः-सौ रूपम्। साधनं=साध (संसिद्धौ—अकारेत्)+ल्युट्, "ल्युट् च" इति करणे ल्युट्प्रत्ययः "युवोरनाकौ" इत्यनादेशः सौ रूपम्। अनिन्द्या=नञ्+णिदि (कुत्सायाम्-इदित्)+ण्यत्+टाप् "णो नः" इति णस्य नः, इदित्वान्नुम् "ऋहलोर्ण्यत्" इति ण्यत् प्रत्ययष्टाप् ततो-नञ्समासे "नलोपो नञः" इति नञो नकारलोपः सौ रूपम्। नन्दिनी=टुनदि (समृद्धौ-टुविदित्)+घञ्+इनिः+ङीप्, इदित्वान्नुम् "भावे" इति घञ् प्रत्ययः "अत इनिठनौ" इतीनि प्रत्ययः "ऋन्नेभ्यो ङीप्" इति नान्तत्वाद् ङीप् सौ रूपम्। धेनुः=धेट् (पाने-टित्)+नुः, "धेट इच्च" इत्यौणादिको नु प्रत्ययः "आदेच उपदेशेऽशिति" इति धातोरात्वं ततो धातोराकारस्येत्वं ततो गुणः सौ रूपम्। आववृते=आङ्+वृतु (वर्त्तने-अकारेत्)+लिट्, तस्य तादेशः "ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन" इति कित्त्वं धातोर्द्वित्वमभ्यासस्य "उरत्" इत्यत्वं रपरत्वं च हलादिलोपः "लिटस्तझयोरेशिरेच्" इत्येत्वम् ॥ ८२ ॥

वाच्यान्तरम्—इतिवादिन एव होतुराहुतिसाधनेन नन्दिन्या नामानिन्द्यया धेन्वा वनादाववृते ॥ ८२ ॥

कोशः—"इति स्वरूपे सान्निध्ये विवक्षानियमेऽपि च। हेतौ प्रकारप्रत्यक्षप्रकर्षेष्ववधारणे ॥ एवमर्थे समाप्तौ स्याद्" इति हैमः। "एवौपम्येऽवधारणे" इति विश्वः। "मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने। निर्वर्त्तनोपकरणानुव्रज्यासु च साधनम्" इति। "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इति। "धेनुः स्यान्नवसूतिका" इति। "अटव्यरण्यं विपिनं गहनं काननं वनम्" इति चामरः ॥ ८२ ॥

तात्पर्यार्थः—इत्थं दिलीपं प्रति कामधेनुस्थानापन्नायास्तत्सुताया नन्दिनीनाम्न्याः सेवां कर्तुं कथयतस्तस्य वशिष्ठस्य यज्ञ आहुतिसामग्रीदध्याज्यादिसाधनं नन्दिनी नाम धेनुर्वनात् प्रत्याजगाम। तद्वर्णनक्षण एव नन्दिनीदर्शनेन तत्कार्यसिद्धिरविलम्बेन भविष्यतीति सूचिता ॥ ८२ ॥

भाषाऽर्थः—इस प्रकार से कहते हुए ही उन वशिष्ठम हर्षिकी आहुति का साधन "नन्दिनी" नाम से प्रसिद्ध "नई व्याई हुई" धेनु वन से लौटकर आई ॥ ८२ ॥

सम्प्रति धेनुं विशिनष्टि—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ ८३ ॥

सञ्जीविनी—ललाटेति। पल्लववत्स्निग्धा चासौ पाटला च। संध्यायामप्येतद्विशेषणं योज्यम्। ललाट उदयो यस्य स ललाटोदयः। तमाभुग्नमीषद्वक्रम्। 'आविद्धं कुटिलं भुग्नं वेल्लितं-

चक्रमित्यपि' इत्यमरः। "ओदितश्च" इति निष्ठातस्य नत्वम्। श्वेतरोमाण्येवाङ्कस्तं बिभ्रती। नवं शशिनं बिभ्रती सन्ध्येव स्थिता ॥ ८३ ॥

अन्वयः—पल्लवस्निग्धपाटला, ललाटोदयम्, आभुग्नं, श्वेतरोमाङ्कं, बिभ्रती, नवं, शशिनम्, "बिभ्रती" सन्ध्या, इव, "स्थिता ॥ ८३ ॥

व्याख्या—पल्लवस्निग्धपाटला = किसलयमसृणश्वेतमिश्ररक्तवर्णा; "सन्ध्यापक्षेऽपीदमेव विशेषणम्"। ललाटोदयम् = भालस्थलोन्नतिकम् "भालोद्भूतम्" इति यावद्। आभुग्नम् = ईषत्कुटिलं, श्वेतरोमाङ्कं = धवललोमलक्षणम्, बिभ्रती = दधाना, नवं = नूतनं, "द्वितीयातिथावुदितम्" इति भावः। शशिनं = चन्द्रमं, "बिभ्रती" सन्ध्या = पितृप्रसूः, सन्ध्या काल इति यावद्। इव = यथा, "स्थिता" इति शेषः ॥ ८३ ॥

समासादि—उदयनमुदयः (पुं०) ललाट उदयो यस्य स ललाटोदयः (ब० व्री०) तं ललाटोदयम्। आ ईषद् भुग्नमाभुग्नम् (न० लिं०) 'स्निग्धा चासौ पाटला स्निग्धपाटला (क० त० पु०) पल्लव इव स्निग्धपाटला पल्लवस्निग्धपाटला (त०पु०)। बिभ्रतीति बिभ्रती (स्त्री०)। श्वेतानि च तानि रोमाणि श्वेतरोमाणि (क० त० पु०) श्वेतरोमाण्येवाङ्कः श्वेतरोमाङ्कः (त०पु०) तं श्वेतरोमाङ्कम्। सम्यग् ध्यायन्त्यस्यामिति सन्ध्या (स्त्री०)। शशोऽस्त्यस्मिन्निति शशी तं शशिनम् (पुं०) ॥ ८३ ॥

व्याकरणम्—उदयः = उद् + इण् (गतौ–णित्) + अच्, "एरच्" इति भावेऽच्प्रत्ययो धातोर्गुणायादेशौ सौ रूपम्। आभुग्नम् = आङ् + भुजो (कौटिल्ये—ओदित्) + क्तः, प्रत्ययः "ओदितश्च" इति निष्ठातस्य नत्वं नत्वस्यासिद्धत्वाज्झलि "चोः कुः" इति कुत्वममि रूपम्। स्निग्धः = ष्णिह (स्नेहने–अकारेत्) + क्तः, प्रत्ययः "वा द्रुहमुहष्णुहष्णिहाम्" इति वैकल्पिकं हस्य धत्वं "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं जश्त्वं च सौ रूपम्। बिभ्रती = डुभृञ् (धारणपोषणयोः—डुजित्) + लट् + शतृ + ङीप्, तस्य शत्रादेशे जुहोत्यादित्वाद् शपः श्लुः "श्लौ" इति द्वित्वम् "भृञामित्" इत्यभ्यासस्येत्वं रपरत्वमभ्यासहलोलोपो जश्त्वं च ततो यणादेशः "उगितश्च" इति ङीप् सौ रूपम्। सन्ध्या = सम् + ध्यै (चिन्तायाम्) + अङ्, "आदेच उपदेशेऽशिति "इत्यात्वम् "आतश्चोपसर्गे" इत्यङ् प्रत्ययोऽधिकरणे "आतो लोप इटि च" इत्याकारलोपष्टाप् सौ रूपम्। शशिनं = शश + इनिः, "अत इनिठनौ" इति मत्वर्थीय इनिप्रत्ययो "यस्येति च" इत्यकारलोपोऽमि रूपम् ॥ ८३ ॥

वाच्यान्तरम्—पल्लवस्निग्धपाटलया ललाटोदयमाभुग्नं श्वेतरोमाङ्कं बिभ्रत्या नवं शशिनं बिभ्रत्या सन्ध्ययेव स्थितया "नन्दिन्या वनादावव्रते" ॥ ८३ ॥

कोशः—"ललाटमलिकं गोधिः" इत्यमरः। "उदयस्तु पुमान् पूर्वपर्वते च समुन्नतौ" इति मेदिनी। "आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि" इति। "पल्लवोऽस्त्री किसलयम्" इति। "चिक्कणम् मसृणं स्निग्धम्" इति। "श्वेतरक्तस्तु पाटलः" इति। "शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः। अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इति चामरः। "श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचिः। वलक्षस्तु सितः शावः कदलीकुसुमोपमः॥ अर्जुनस्तु सितः-कृष्णलेशवान् कुमुदच्छविः। पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः" इति च शब्दार्णवः। "तनूरुहं रोम लोम" इति। "कलङ्काङ्कौ लाञ्छनञ्च चिन्हं लक्ष्म च लक्षणम्" इति। "सन्ध्या पितृप्रसूः" इति। "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः। नूत्नश्च" इति चामरः ॥ ८३ ॥

तात्पर्यार्थः—नूतनपल्लववत् चिक्कणश्वेतमिश्ररक्तवर्णा यथा सन्ध्या द्वितीयाचन्द्रं धारयन्ती स्थिता तथैव नन्दिन्यपि ललाटोद्भूतमीषद्वक्रं श्वेतरोमाङ्कं धारयन्ती मुनिसमीपे वनात्परावृत्य स्थिता ॥ ८३ ॥

भावार्थः—पल्लव के तरह चिक्कण श्वेत युक्त लाल रङ्ग वाली, ललाट में उत्पन्न, हुये,

कुछ टेढे, सफेद रोयें रूपी चिन्ह को धारण करती हुई, अत एव द्वितीया के चन्द्रमा को धारण करती हुई सन्ध्या के समान, वह नन्दिनी (वन से लौट कर आई) ॥ ८३ ॥

*पुनरपि धेनुवर्णनप्रसङ्गेनाह—*

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥

सञ्जीविनी—भुवमिति । कोष्णेन किंचिदुष्णेन । "कवं चोष्णे" इति चकारात्कादेशः । अवभृथादप्यवभृथस्नानादपि मेध्येन पवित्रेण । 'पूतं पवित्रं मेध्यं च' इत्यमरः । वत्सस्यालोकेन प्रदर्शनेन प्रवर्तिना प्रवहता प्रस्नवेन क्षीराभिष्यन्दनेन भुवमभिवर्षन्ती सिञ्चन्ती । कुण्डमिवोध आपीनं यस्याः सा कुण्डोध्नी । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । "ऊधसोऽनङ्" इत्यनङादेशः । "बहुव्रीहेरूधसो ङीष्" ॥ ८४ ॥

अन्वयः—कोष्णेन, अवभृथाद्, अपि, मेध्येन, वत्सालोकप्रवर्त्तिना, प्रस्नवेन, भुवम्, अभिवर्षन्ती, कुण्डोध्नी, "नन्दिनी, वनाद्, आववृते," ॥ ८४ ॥

व्याख्या—कोष्णेन = ईषदुष्णेन, अवभृथाद् = दीक्षाऽन्ताद्, यज्ञे दीक्षायाः समापकादिष्टिपूर्वकस्नानविशेषादित्यर्थः । अपि = समुच्चये, मेध्येन = पूतेन, वत्सालोकप्रवर्त्तिना = शक्रत्करिपुत्रदर्शनप्रवहता, प्रस्नवेन = अभिष्यन्दनेन, क्षीरस्येति शेषः । भुवं = भूमिम्, अभिवर्षन्ती = सिञ्चन्ती, कुण्डोध्नी = स्थाल्युपमापीनवती, "सा नन्दिनी वनादाववृते" इति पूर्वश्लोकेनान्वीयते ॥ ८४ ॥

समासादि—भवतीति भूस्तां भुवम् (स्त्री०) । ईषदुष्णं कोष्णं (त०पु०) तेन कोष्णेन (न०लिं०) । कुण्डमिवोध आपीनमस्याः सा कुण्डोध्नी (स्त्री०) (ब०व्री) । मेधनार्हो मेध्यः (पुं०) तेन मेध्येन । अवभ्रियतेऽनेनेत्यवभृथः (पुं०) तस्मादवभृथात् । प्रकर्षेण स्नवनं-प्रस्नवः (पुं०) तेन प्रस्नवेन । अभिवर्षतीत्यभिवर्षन्ती (स्त्री०) । आ समन्ताल्लोकनमालोकः (पुं०), प्रकर्षेण वर्तितुं शीलमस्येति प्रवर्त्ती (पुं०), वत्सस्यालोको वत्सालोकः (त०पु०) तेन प्रवर्ती वत्सालोकप्रवर्ती तेन वत्सालोकप्रवर्तिना (त० पु०) ॥ ८४ ॥

व्याकरणम्—भुवम् = भू (सत्तायाम्) + क्विप्, "अन्येभ्योऽपि दृश्यते" इति कर्त्तरि क्विप् प्रत्ययोऽमि रूपम् "अभिरभागे" इति कर्मप्रवचनीयसंज्ञा "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया बोध्या । कोष्णेन = कु + उष्ण + टा, तत्पुरुषसमासे "कवं चोष्णे" इति चकारादीषदर्थे कोः कादेशो गुणः । कुण्डोध्नी = कुण्ड + उधस् + ङीप्, बहुव्रीहिसमासे "ऊधसोऽनङ्" इत्यनङादेशः "बहुव्रीहेरूधसो ङीप्" इति ङीप् "अल्लोपोऽनः" इत्युपधाऽकारलोपः सौ रूपम् । मेध्येन = मेधृ (सङ्गमे-ऋदित्) + ण्यत् + टा, "ऋहलोर्ण्यत्" इतिण्यत् प्रत्ययष्टाविभक्तेरिनादेशः । अवभृथाद् = अव + डुभृञ् (धारणपोषणयोः-डुञित्) + क्थन्, "अवे भृञः" इत्यौणादिकः क्थन् प्रत्ययः कित्वाद् गुणाभावो ङसो रूपम् । प्रस्नवेन = प्र + ष्णु (प्रस्रवणे) + अप्, "धात्वादेः षः सः" इति षस्य सः "ऋदोरप्" इत्यप् प्रत्ययो भावे धातोर्गुणावादेशौ टारूपम् । अभिवर्षन्ती = अभि + वृषु (सेचने-उदित्) + लट् + शतृ + ङीप्, लटः शत्रादेशे शपि "पुगन्तलघूपधस्य च" इत्युपधागुणे रपरत्वे "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमागमे "उगितश्च" इति ङीप् सौ रूपम् । आलोकः = आङ् + लोकृ (दर्शने-ऋदित्) + घञ्, "भावे" इति घञ् प्रत्ययः सौ रूपम् । प्रवर्ती = प्र + वृतु (वर्तने) + णिनिः, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिर्भाष्यकारसंमतत्वादुपधागुणः सौ रूपम् ॥ ८४ ॥

वाच्यान्तरं—कोष्णेनावभृथादपि मेध्येन वत्सालोकप्रवर्त्तिना प्रस्नवेन भुवमभिवर्षन्त्या कुण्डोध्न्या "वनादाववृते" ॥ ८४ ॥

कोशः—"भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इति । "कोष्णं कवोष्णं मन्दो-

ष्णम्" इति। "पिठरः स्थाल्युखा कुण्डम्" इति। "ऊधस्तु क्लीबमापीनम्" इति। "पूतं पवित्रं मेध्यञ्च" इति। "दीक्षाऽन्तोऽवभृथो यज्ञे" इति। "शकृत्करिस्तु वत्सः स्याद्" इति सर्वत्राप्यमरः। "पुत्रादौ तर्णके वर्षे वत्सो वत्सं तु वक्षसि" इति च रुद्रः। "आलोकस्तु पुमान् द्योते दर्शने बन्दिभाषणे" इति मेदिनी ॥ ८४ ॥

तात्पर्यार्थः—ईषदुष्णेन यज्ञान्तस्नानार्थकजलादपि पवित्रेण वत्सदर्शनेन प्रवहता क्षीराभिष्यन्दनेन पृथ्वीं सिञ्चन्ती, अत एव-स्थालीसदृशपीनस्तनी नन्दिनी वनादाववृते ॥८४॥

भाषाऽर्थः—कुछ गरम, यज्ञ के अन्त में इष्टि पूर्वक स्नानार्थ जल से भी पवित्र, बछडे के देखने से बहते हुये दूध के टपकनेसे पृथिवी को सींचती हुई, अत एव-वटुलोईकी भांति मोटे स्तनों वाली "नन्दिनी वन से लौटी" ॥ ८४ ॥

नन्दिन्याः खुरोद्धूतरजसां पूतत्ववर्णनपूर्वकं तां विशिनष्टि—

**रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात्।**
**तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥**

सञ्जीविनी—रज इति। खुरोद्धूतैरन्तिकात्समीपे गात्रं स्पृशद्भिः। "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात्पञ्चमी। रजसां कणैः। महीं क्षियत ईष्टे इति महीक्षित्तस्य। तीर्थाभिषेकेण जातां तीर्थाभिषेकजाम्। शुद्धिमादधाना कुर्वाणा। एतेन वायव्यं स्नानमुक्तम्। उक्तं च मनुना—(आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम्। आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजःस्मृतम्॥ इति ॥ ८५ ॥

अन्वयः—खुरोद्धूतैः,अन्तिकाद्, गात्रं, स्पृशद्भिः, रजःकणैः, महीक्षितः, तीर्थाभिषेकजां, शुद्धिम्, आदधाना, "वनादाववृते" ॥ ८५ ॥

व्याख्या—खुरोद्धूतैः=शफोत्थैः, अन्तिकात्=समीपे, गात्रं=वपुः, स्पृशद्भिः=स्पर्शं कुर्वद्भिः, रजःकणैः=रेण्वतिसूक्ष्मांशैः, महीक्षितः=नृपस्य, दिलीपस्येति यावत्। तीर्थाभिषेकजां=अध्वराभिषेचनसम्भवां, शुद्धिं=पवित्रताम्, आदधाना=कुर्वाणा, एतेन वायव्यं स्नानमुक्तं, "वनादाववृते" इति पूर्वेणान्वयः ॥ ८५ ॥

समासादि—रज्यन्ते वस्त्रादीन्येभिरिति रजांसि (न० लिं०) तेषां कणा रजःकणास्तैः रजःकणैः (त० पु०)। खुरन्ति विलिखन्ति क्ष्मामिति खुराः (पुं०) तैरुद्धूताः खुरोद्धूतास्तैः खुरोद्धूतैः (त० पु०)। स्पृशन्तीति स्पृशन्तस्तैः स्पृशद्भिः (पुं०)। गच्छतीति गात्रं (न० लिं०)। अभिषेचनमभिषेकः (पुं०) तीर्थस्याभिषेकस्तीर्थाभिषेकः (त० पु०)। तस्माज्जाता तीर्थाभिषेकजा तां तीर्थाभिषेकजां (स्त्री०)। शोधनं शुद्धिस्तां शुद्धिम् (स्त्री०)। आधत्त इत्यादधाना (स्त्री०)। महीं क्षियतीति महीक्षित् तस्य महीक्षितः (पुं०) ॥८५॥

व्याकरण—रजसां=रञ्ज(रागे-अकारेत्)+असुन्, "भूरञ्जिभ्यां कित्" इत्यौणादिकोऽसुन् प्रत्ययस्तस्य च कित्वम् "अनिदितां हल उपधायाः क्ङिति" इति नलोप आमि रूपम्। खुरैः=खुर (छेदने-अकारेत्)+कः, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः कित्वाद् गुणनिषेधो भिसि रूपम्। उद्धूताः=उद्+धूञ् (कम्पने—ञित्)+क्तः, प्रत्ययो जसि रूपम्। स्पृशद्भिः=स्पृश ( स्पर्शने—अकारेत् )+लट्+शतृ+भिस्, लटः शत्रादेशो तुदादित्वाच्छप्रत्यये तस्य च ङित्वादुपधागुणाभावे भिसि रूपम्। गात्रं=गम्लृ (गतौ—लृदित्)+त्रन् "गमेरा च" इत्यौणादिकस्त्रन् प्रत्ययो धातोराकारोऽन्तादेशोऽमि रूपम्। अन्तिकाद्=अन्तिक+ङसि, "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात पञ्चमी। अभिषेकः=अभि+षिच (क्षरणे—अकारेत्)+घञ्, "धात्वादेः षः सः" इति सः "भावे" इति घञ् प्रत्ययः "चजोः कु घिण्ण्यतोः" इति कुत्वमुपधागुणः "उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इति धात्वादेः स-

स्य षः सौ रूपम् । तीर्थाभिषेकजां=तीर्थाभिषेक+जनी (प्रादुर्भावे-ईदित्) +डः, "सप्त-म्यामजातौ" इति डप्रत्ययो डित्वाट्टिलोपष्टाप् अमि रूपम् । शुद्धि=शुध(शौचे—अकारेत्)+क्तिन्, "स्त्रियां क्तिन्" इति क्तिन् प्रत्ययः कित्वाद् गुणाभावः "झषस्तथो-र्धोऽधः" इति तकारस्य धत्वं पूर्वधस्य जश्त्वेन दोऽमि रूपम् । आदधाना=आङ्+डु-धाञ् (धारणपोषणयोः—डुञित्)+लट्+शानच्, लटः शानजादेशे श्लौ प्रत्यये धातोर्द्वित्वे-ऽभ्यासस्य ह्रस्वजश्त्वे "श्नाभ्यस्तयोरातः" इत्याकारलोपष्टाप् सौ रूपम् । महीक्षितः= मही+क्षि (निवासगत्योः)+क्विप् "अन्येभ्योऽपि-दृश्यते" इति क्विप् प्रत्ययः पित्वाद् "ह्रस्वस्य पिति कृति तुक्" इति तुगागमो ङसो रूपम् ॥ ८५ ॥

वाच्यान्तरं—खुरोद्धूतैरन्तिकाद् गात्रं स्पृशद्भी रजःकणैर्महीक्षितस्तीर्थाभिषेकजां शुद्धि-मादधानया "वनादाववृते" ॥ ८६ ॥

कोशः—"रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः" इति । "सूक्ष्मं, श्लक्ष्णं दभ्रं कृशं-तनु । स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः" इति । "शफं क्लीवे खुरः पुमान्" इति । "अथ कलेवरम् । वपुः संहननं गात्रं शरीरं वर्ष्म विग्रहः । कायो देहः क्लीवपुंसोः स्त्रियां मूर्त्ति-स्तनुस्तनूः" इति । "समीपे निकटासन्नसन्निकृष्टसनीडवत् । सदेशाभ्याशसविधसमर्याद-सवेशवत् ॥ उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इति सर्वत्रामरः । तीर्थं शा-स्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी । "रा-जा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः ॥ ८५ ॥

तात्पर्य्यार्थः—खुरोत्थैरत एव समीपवर्त्तित्वाद् राज्ञो दिलीपस्य गात्रं स्पृशद्भिः पांशुभिः पवित्रजलाभिषेकजनितां शुद्धिं विदधती "नन्दिनी वनादाववृते" ॥ ८५ ॥

भाषाऽर्थः—खुरों से उठी हुई, अत एव समीप होने के कारण से शरीर को स्पर्श करती-हुई, धूलि के कणों से राजा दिलीप की, ऋषियों से सेवित तीर्थ सम्बन्धी जल में स्नान करने से उत्पन्न शुद्धि को करती हुई "नन्दिनी वन से लौटी ॥ ८५॥

*तां दृष्ट्वा वशिष्ठः पुनर्दिलीप प्रत्याह—*

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥

सञ्जीविनी—तामिति । निमित्तज्ञः शकुनज्ञस्तपोनिधिर्वसिष्ठः पुण्यं दर्शनं यस्यास्तां तां-धेनुं दृष्ट्वा । आशंसितं मनोरथः । नपुंसके भावे क्तः । तत्राबन्ध्यं सफलं प्रार्थनं यस्य स तम् । अबन्ध्यमनोरथमित्यर्थः । याजयितुं योग्य याज्यं पार्थिवं पुनरब्रवीत् ॥ ८६ ॥

अन्वयः— निमित्तज्ञः, तपोनिधिः, पुण्यदर्शनां, तां, दृष्ट्वा, आशंसितावन्ध्यप्रार्थनं, याज्यम्, पुनः, अब्रवीत् ॥ ८६ ॥

व्याख्या—निमित्तज्ञः=लक्ष्मविद्, शुभाशुभलक्षणज्ञ इति भावः । "शकुनज्ञः" इति-यावत् । तपोनिधिः=धर्मशेवधिः, वशिष्ठ इत्यर्थः । पुण्यदर्शनाम्=पवित्रावलोकनां, तां=नन्दिनीं, दृष्ट्वा=वीक्ष्य, आशंसितावन्ध्यप्रार्थनम्=मनोरथसफलावेदनकं, सफलाभिलापमिति भावः । याज्यं=याजनयोग्यं "यजमानं दिलीपम्" इति भावः । पुनः=भूयः, अब्रवीद्=उवाच । नन्दिनीसेवावर्णनसमये तदागमनरूपशकुनेन दिलीपस्य सफलीभविष्यन्तम् मनोरथं ज्ञात्वा आहेति भावः ॥ ८६ ॥

समासादि—पुण्यं दर्शनं यस्याः सा पुण्यदर्शना तां पुण्यदर्शनाम् (ब० व्री०) । निमित्तं-जानातीति निमित्तज्ञः (पुं०) । निधीयतेऽस्मिन्निति निधिः (पुं०) तपसां निधिस्तपोनिधिः (त०पु०) । याजयितुं योग्यो याज्यः (पुं०) तं याज्यम् । "अफलम् बध्नातीति बन्ध्या (स्त्री०) न बन्ध्येत्यबन्ध्या (न० त० पु०) आशंसितेऽबन्ध्या आशंसितावन्ध्या (त०पु०) आशंसि-

तावन्ध्या प्रार्थना यस्य स आशंसितावन्ध्यप्रार्थनः (ब० व्री०) तमाशंसितावन्ध्यप्रार्थनम्॥८६॥

व्याकरणम्—पुण्यम् = पूञ् (पवने—जित्) + यत्, "पूञो यण्णुग्ह्रस्वश्च" इत्युणादिसूत्रेण यत् प्रत्ययो धातो णुगागमो ह्रस्वश्च सौ रूपम्। दर्शनं = दृशिर् (प्रेक्षणे—इरित्) + ल्युट्, "ल्युट् च" इति ल्युट् प्रत्ययस्तस्य चानादेशो धातोर्लघूपधलक्षणो गुणादेशो रपरश्च सौ रूपम्। दृष्ट्वा = दृशिर् (प्रेक्षणे—इरित्) + क्त्वा "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्ययः कित्वाल्लघूपधलक्षणगुणाभावः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वं ष्टुत्वं चाव्ययत्वात्सुपो लुक्। निमित्तज्ञः = निमित्त + ज्ञा (अवबोधने) + कः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः कित्वात् "आतो लोप इटि च" इत्याकारलोपः सौ रूपम्। निधिः = नि + डुधाञ् (धारणपोषणयोः—डुञित्) + किः, "उपसर्गे घोः किः" इति किप्रत्ययः "आतो लोप इटि च" इत्याकारलोपः सौ रूपम्। याज्यं = यज (देवपूजासङ्गतिकरणदानेषु—अकारेत्) + णिच्, "हेतुमति च" इति णिच् प्रत्ययो णित्वादुपधावृद्धिः, याजि + यत्, "अचो यत्" इति यत् प्रत्यये "णेरनिटि" इति णिलोपेऽमि रूपम्। आशंसिते = आङ् + शंसु (स्तुतौ—उदित्) + क्तः, प्रत्ययः "नपुंसके भावे क्तः" इति सूत्रेण ततो वलादिलक्षण इडागमो ङिरूपम्। वन्ध्या = वन्ध (बन्धने—अकारेत्) + यक्, "अघ्न्यादयश्च" इत्यौणादिको यक् प्रत्ययो निपातनात् "अनिदितां हल उपधायाः क्ङिति" इति प्राप्तनलोपाभावो निपात्यते टाप् सौ रूपम्। अवन्ध्या = नञ् + वन्ध्या, नञ्समासे "नलोपो नञः" इति नलोपः। प्रार्थना = प्र + अर्थ (उपयाच्ञायाम्—अकारेत्) + णिच्, ततः, अर्थि + युच्, "ण्यासश्रन्थो युच्" इति इति युच्प्रत्ययोऽनादेशश्च "णेरनिटि" इति णिलोपष्टाप् सौ रूपम्। अब्रवीद् = ब्रूञ् (व्यक्तायां वाचि—ञित्) + लङ्, प्रत्ययस्तस्य तिबादेशोऽडागमः "ब्रुव ईट्" इति तिप इडागमो धातोर्गुणावादेशौ॥ ८६॥

वाच्यान्तरं—निमित्तज्ञेन तपोनिधिना पुण्यदर्शनां तां दृष्ट्वाऽऽशंसितावन्ध्यप्रार्थनो याज्यः पुनरौच्यत॥ ८६॥

कोशः—"पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः" इति विश्वः। "निमित्तं हेतुलक्ष्मणोः" इत्यमरः। "तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि च" इति विश्वः। "निधिर्ना शेवधिः" इत्यमरः। "वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रियाम्" इति मेदिनी। "याच्ञाऽभिशस्तिर्याचनाऽर्थना" इत्यमरः॥ ८६॥

तात्पर्यार्थः—शकुनशास्त्रवेत्ता वशिष्ठो मुनिस्तां नन्दिनीमवलोक्यात एव सफलमनोरथं दिलीपं संभाव्य तम्प्रति पुनरुवाच॥ ८६॥

भाषाऽर्थः—शकुनशास्त्र के जानने वाले, तपोनिधि "वशिष्ठजी" ने, पवित्र (सुन्दर) दर्शनवाली, "उस नन्दिनी" को देखकर "पुत्रप्राप्तिरूप" मनोरथ के विषय में सफल है प्रार्थना जिसकी, ऐसे, यज्ञकराने के योग्य (यजमान) "राजा दिलीप" से फिर बोले॥ ८६॥

*किमब्रवीदित्याकाङ्क्षायां सफलमनोरथत्वे हेतुं प्रदर्शयन्नाह—*

**अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः।**
**उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत्॥ ८७॥**

सञ्जीविनी—अदूरवर्तिनीमिति। हे राजन्! आत्मनः कार्यस्य सिद्धिमदूरवर्त्तिनीं शीघ्रभाविनीं विगणय विद्धि। यद्यस्मात्कारणात्कल्याणी मङ्गलमूर्तिः। "बह्वादिभ्यश्च" इति ङीप्। इयं धेनुर्नाम्नि कीर्तिते कथिते सत्येवोपस्थिता॥ ८७॥

अन्वयः—राजन्!, आत्मनः, सिद्धिम्, अदूरवर्त्तिनीं, विगणय, यत्, कल्याणी, इयं, नाम्नि, कीर्त्तिते, "सति" एव, उपस्थिता॥ ८७॥

व्याख्या—हे राजन्! = हे नृप!, हे दिलीप! इति यावत्। आत्मनः = प्रयत्नस्य, पुत्र-

प्राप्तिरूपस्येति यावत् । सिद्धिं=निष्पत्तिं, फलस्येति शेषः । अदूरवर्त्तिनीं=समीपस्थायिनीं, स्वल्पकालभाविनीमिति यावद् । विगणय=अवेहि, यद्=यस्मात्कारणात्, कल्याणी=मङ्गलमूर्तिः, कल्याणकारिणीति भावः । इयं=पुरोवर्त्तिनी, नन्दिनीति यावद् । नाम्नि=स्वकीयनन्दिनीत्यभिधाने, कीर्त्तिते=उच्चारिते, "सति" इति शेषः । एव=अवधारणे, तत्काल एव न तु विलम्बादिति भावः । उपस्थिता=उपागता, ॥ ८७ ॥

समासादिः—न दूरमदूरं तस्मिन्नदूरे (न०त० पु०), अदूरे वर्त्तितुं शीलमस्याः साऽदूरवर्त्तिनी तामदूरवर्त्तिनीम् (स्त्री०) । समृद्ध्या राजत इति राजा तत्सम्बुद्धौ हे राजन् ! (पुं०) अततीत्यात्मा तस्यात्मनः (पुं०) । कल्याणगुणविशिष्टा स्त्री कल्याणी (स्त्री०) । नम्यतेऽभिधीयतेऽर्थोऽनेनेति नाम तस्मिन् नाम्नि (न० लिं०) ॥ ८७ ॥

व्याकरणम्—अदूरवर्त्तिनीं=नञ्+दूर+वृतु (वर्त्तने-उदित्)+णिनिः, "सुप्यजातौ णिनिस्ताच्छील्ये" इति ताच्छील्येऽर्थे णिनिप्रत्ययः "पुगन्तलघूपधस्य च" इत्युपधागुणस्ततः स्त्रियाम् "ऋन्नेभ्यो ङीप्" इति ङीप् प्रत्ययोऽमि रूपम् । सिद्धिं=षिधु (संराद्धौ-उदित्)+क्तिन्, "स्त्रियाम्" इति क्तिन् प्रत्ययो भावे कित्वाद् गुणाभावः "झषस्तथोर्धोऽधः" इति तकारस्य धकारः पूर्वधस्य जश्त्वममि रूपम् । विगणय=वि+गण (सङ्ख्याने)+णिच्+लोट्, "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्"इति णिच् प्रत्ययस्तस्यार्धधातुकत्वाद् "अतो लोपः"इति धातोरन्त्याकारस्य लोपः "अचः परस्मिन् पूर्वविधौ"इति सूत्रेणाल्लोपस्य स्थानिवद्भावाद् णित्वनिमित्तकोपधावृद्ध्यभावस्ततः "सनाद्यन्ता धातवः" इति धातुसंज्ञायां धातुत्वाल्लोटः सिपि शप् प्रत्ययस्तस्य सार्वधातुकत्वाद् गुणायादेशौ "सेर्ह्यपिच्च" इति ह्यादेशः "अतो हेः" इति हेर्लुक् । उपस्थिता=उप+ष्ठा (गतिनिवृत्तौ)+क्तः, धात्वादेः षः सः "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्त्तरि क्तप्रत्ययः "द्यतिस्यतिमास्थामित्ति किति" इति धातोराकारस्येत्वं ततः स्त्रियां टाप् सौ रूपम् । कल्याणी=कल्याण+ङीप्, "बह्वादिभ्यश्च" इति ङीप् प्रत्ययो वैकल्पिकोऽत्र गुणवाचके गुणित्वस्वीकारात् कल्याणविशिष्टेत्यर्थलाभः सौ रूपम् । नाम्नि=णम (प्रह्वत्वे शब्दे-अकारेत्)+मनिन्, "नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् धामन्" इत्यौणादिको मनिन् प्रत्ययो धातोर्मलोपो दीर्घश्च निपात्यन्ते ङिविभक्तौ "विभाषा ङिश्योः" इत्यनोऽकारलोपो वैकल्पिकः । कीर्त्तिते=कॄत (संशब्दने-अकारेत्)+णिच्+क्तः, चुरादित्वाण्णिच् प्रत्ययः "उपधायाश्च" इति धातोरुपधाभूतस्य ऋृत इत्वं रपरत्वम् "उपधायाञ्च" इति दीर्घो द्वित्वं तकारस्य, ततः क्तप्रत्यये वलादिलक्षण इडागमः "निष्ठायां सेटि" इति णिलोपो ङिरूपम् ॥ ८७ ॥

वाच्यान्तरं—हे राजन् ! (त्वया) आत्मनः सिद्धिरदूरवर्त्तिनी विगण्यतां, यत् कल्याण्याऽनया नाम्नि कीर्त्तित एवोपस्थितयाऽभूयत ॥ ८७ ॥

कोशः—"सिद्धिः स्त्री योगनिष्पत्तिपादुकाऽन्तर्धिवृद्धिषु" इति मेदिनी । "राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः । "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च" इति धरणिः । "आख्याऽऽह्वे अभिधानं च नामधेयं च नाम च" इत्यमरः । "यत्तद्यतस्ततो हेतौ" इत्यमरः ॥ ८७ ॥

तात्पर्य्यार्थः—हे राजन् ! त्वमात्मनोऽभीष्टसिद्धिं शीघ्रभाविनीं विद्धि, यतो नामसङ्कीर्त्तनक्षण एव तव मङ्गलमूर्त्तिरियं धेनुरकस्मादुपागता ॥ ८७ ॥

भाषाऽर्थः—हे महाराज ! आप अपने पुत्रप्राप्ति रूप कार्य की सिद्धि को निकट आई हुई समझें । क्योंकि यह (सामने आती हुई) कल्याणमूर्त्ति नन्दिनी नाम लेते ही उपस्थित हुई ॥ ८७ ॥

*पुत्रप्राप्त्यथ नन्दिनीपरिचर्य्यामुपदिशन्नाह*—

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

सञ्जीविनी—वन्यवृत्तिरिति । वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः-सन् । इमां गां शश्वत्सदा । आ प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव कर्तुः । अनुगमनेनानुसरणेन । अभ्यसनेनानुष्ठातुरभ्यासेन विद्यामिव प्रसादयितुं प्रसन्नां कर्तुमर्हसि ॥ ८८ ॥

अन्वयः—वन्यवृत्तिः, (सन्) इमां, गां, शश्वद्, आत्मानुगमनेन, अभ्यसनेन, विद्याम्, इव, प्रसादयितुम्, अर्हसि ॥ ८८ ॥

व्याख्या—वन्यवृत्तिः = अरण्योद्भवाजीवः, कन्दमूलादिभक्षणेन प्राणधारणं कुर्वाणः सन्नित्यर्थः । इमाम् = एनां, सम्मुखस्थामित्यर्थः । गां = धेनुं, नन्दिनीमिति यावद् । शश्वद् = अभीक्ष्णं, तत्प्रसादावधि प्रत्यहमविच्छेदेनेत्यर्थः । आत्मानुगमनेन = स्वकर्तृकानुसरणेन, अभ्यसनेन = पुनःपुनरुपस्थितिकरणेन, अनुष्ठातुरिति शेषः । विद्यां = न्यायादिशास्त्रज्ञानम्, इव = यथा, प्रसादयितुं = सन्तोषयितुं, सन्तुष्टां कर्तुमिति यावद् । अर्हसि = योग्योऽसि ॥८८॥

समासादि—वने साधु वन्यं वनोद्भवं कन्दमूलादिकं वृत्तिर्भोजनं यस्य स वन्यवृत्तिः (ब० व्री०) । आत्मनोऽनुगमनमात्मानुगमनं तेन आत्मानुगमनेन (त० पु०) । गच्छतीति गौस्तां गाम् (स्त्री०) । विदन्त्यनया विद्या तां विद्यां (स्त्री०) ॥ ८८ ॥

व्याकरणं—वन्यं = वन + यत् "तत्र साधुः" इति यत् प्रत्ययः "यस्येति च" इत्यकारलोपः-सौ रूपम् । अनुगमनम् = अनु + गम्लृ (गतौ-ऌदित्) + ल्युट्, "ल्युट् च" इति भावे ल्युट् प्रत्ययो योरनादेशः सोरमादेशः । गां = गम्लृ (गतौ-ऌदित्) + डोस्, "गमेर्डोस्" इत्यौणादिको डोस् प्रत्ययः "टेः" इति टिलोपस्ततो गो + अम् "औतोऽम्शसोः" इत्याकार एकादेशोऽमि पूर्वरूपम् । विद्यां = विद (ज्ञाने-अकारेत्) + क्यप् + टाप् + अम्, "संज्ञायां समजनिपदनिपतमनविदषुञ्शीङ्भृञिणः" इति क्यप् प्रत्ययः कित्वाद् गुणाभावः । अभ्यसनेन = अभि + असु (क्षेपणे-उकारेत्) + ल्युट्, "ल्युट् च" इति भावे ल्युट् प्रत्ययो योरनादेशष्टारूपम् । प्रसादयितुं = प्र + षद्लृ (विशरणगत्यवसादनेषु-ऌदित) + णिच्, "हेतुमति च" इति णिच् प्रत्ययो णित्वादुपधावृद्धिस्ततः "सनाद्यन्ता धातवः" इति धातुसंज्ञा सादि + तुमुन् "तुमुन्ण्वुलौ क्रियायां क्रियाऽर्थायाम्" इति तुमुन् प्रत्ययस्ततो वलादिलक्षण इडागम आर्धधातुकत्वाद् गुणायादेशौ "कृन्मेजन्तः" इति मान्तत्वादव्ययत्वेन सुपो लुक् । अर्हसि = अर्ह (पूजायाम्-अकारेत्) + लट्, तस्य सिपि शप् प्रत्ययः ॥ ८८ ॥

वाच्यान्तरं—(त्वया) वन्यवृत्तिना (सता) शश्वदात्मानुगमनेनेयं गौरभ्यसनेन विद्येव प्रसादयितुमर्ह्यते ॥ ८८ ॥

कोशः—"वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः" इति । "वृत्तिर्विवरणाजीवकैशिक्यादिप्रवर्तने" इति च मेदिनी । "मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत् समाः" इत्यमरः । "आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे । परमात्मनि जीवेऽर्के हुताशनसमीरयोः । स्वभावे" इत्यनेकार्थसङ्ग्रहः । "गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च" इति मेदिनी ॥ ८८ ॥

तात्पर्यार्थः—प्रतिदिनमभ्यसनेन यथा जनो विद्यां तोषयितुं समर्थो भवति तथैव त्वमपि कन्दमूलादिकं वनोद्भूतं भक्षयित्वा मुनिवृत्तिः सन् यावन्न प्रसन्ना भवति तावदात्मानुसरणेनेमां नन्दिनीं कामधेनुसुतां प्रसादयितुमुद्यतो भव ॥ ८८ ॥

भाषाऽर्थः—तुम वन में उत्पन्न हुये कन्दमूलादि खाकर निरन्तर इस गायके पीछे २ चल

कर के, जैसे निरन्तर अभ्यास से विद्या प्रसन्न की जाती है उसी तरह से इसे प्रसन्न करने के लिये योग्य हो ॥ ८८ ॥

गवानुसरणप्रकारमाह—

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९ ॥

सञ्जीविनी—प्रस्थितायामिति। अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि। "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु। तिष्ठेत्यर्थः। निषण्णायामुपविष्टायां निषीदोपविश। विध्यर्थे लोट्। पीतमम्भो यया तस्यां पीताम्भसि सत्यामपः पिबेः पिब ॥ ८९ ॥

अन्वयः—अस्यां, प्रस्थितायां, (त्वम्) प्रतिष्ठेथाः, स्थितायां, स्थितिम्, आचरेः, निषण्णायां, निषीद, पीताम्भसि, (सत्याम्) अपः, पिबेः ॥ ८९ ॥

व्याख्या—अस्याम् = एतस्यां, पुरःस्थितायां नन्दिन्यामिति यावत्। प्रस्थितायां = प्रयातायां, वन इति शेषः। सत्यामिति सर्वत्र योज्यम्। प्रतिष्ठेथाः = प्रयाहि, तदनुप्रस्थितो भवेति भावः। अत्र सर्वत्र क्रियया कर्तुराक्षेपेण त्वमिति पदं योज्यम्। स्थितायां = प्रयाणमकुर्वाणायां, सत्यां, स्थितिमाचरेः = गमननिरोधं कुरु, तिष्ठेत्यर्थः। स्वस्येति शेषः। निषण्णायाम् = उपविष्टायां, सत्यां, भूमाविति शेषः। निषीद = उपविश, पीताम्भसि = आचमितजलायां, कृतजलपानायामित्यर्थः। सत्याम्, अपः = जलं, पिबेः = आचम, पानं कुरुष्वेत्यर्थः। त्वमस्याश्छायावदनुसरणं कुरुष्वेति भावः ॥ ८९ ॥

समासादि—आप्नोति, आप्यते वा, अम्भः (न०लि०), पीतमम्भो यया सा पीताम्भस्तस्यां पीताम्भसि (ब० व्री०)। आप्नुवन्ति, आप्यन्ते वेति, आपस्ता अपः (स्त्री०) ॥ ८९ ॥

व्याकरणम्—प्रस्थितायां = प्र + ष्ठा (गतिनिवृत्तौ–) + क्तः, धात्वादेः षस्य सः "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्य्यतिभ्यश्च" इति कर्तरि क्तप्रत्ययः "द्यतिस्यतिमास्थामित्ति किति" इतीत्वं टाप् ङिरूपम्। प्रतिष्ठेथाः = प्र + ष्ठा (गतिनिवृत्तौ) + विधिलिङ्, शपि "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति तिष्ठादेशः "समवप्रविभ्यः स्थः" इत्यात्मनेपदं बोध्यम्। स्थितिं = ष्ठा (गतिनिवृत्तौ)- क्तिन्, "स्त्रियाम्" इति क्तिन् प्रत्ययः "द्यतिस्यतिमास्थामित्ति किति" इति धातोराकारस्येत्वममि रूपम्। आचरेः = आङ् + चर (गतिभक्षणयोः–अकारेत्) + विधिलिङ्, तस्य सिबादेशे "कर्तरि शप्" इति शप् प्रत्ययः "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमः "लिङः सलोपोऽनन्त्यस्य" इति यासुटः सकारलोपः "अतो येयः" इति "या" इत्यस्येयादेशो गुणः "लोपो व्योर्वलि" इति यलोपः "इतश्च" इति सिप इकारलोपः सस्य रुत्वविसर्गौ। निषण्णायां = नि + षद्लृ (विशरणगत्यवसादनेषु–लृदित्) + क्तः, प्रत्ययः कर्तरि धात्वादेः षस्य सः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति तकारदकारयोर्नकारः "सदिरप्रतेः" इति पुनःसस्य षत्वम् "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति पूर्वनस्य णत्वं ततः परनस्य ष्टुत्वेन णत्वं टाप् ङिरूपम्। निषीद = नि + षद्लृ (विशरणगत्यवसादनेषु–लृदित्) + लोट्, विध्यर्थे तस्य सिपि कर्तरि शप् "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति धातोः सीदादेशः "अतो गुणे" इति पररूपः "सेर्ह्यपिच्च" इति सिपो ह्यादेशः "अतो हेः" इति हेर्लुक्। "पीताम्भसि" इत्यत्र–पीतम् = पा (पाने) + क्तः, "द्यतिस्यतिमास्थामित्ति किति" इतीत्वं ततः सोरमादेशः। अम्भः = आप्लृ (व्याप्तौ–लृदित्) + असुन्, "उदके नुम् भौ च" इत्यौणादिकोऽसुन् प्रत्ययो धातोर्ह्रस्वो मान्तादेशो नुमागमश्च ततोऽनुस्वारपरसवर्णौ सौ रूपम्। पिबेः = पा (पाने) + लिङ्, विध्यर्थे तस्य सिपि कर्तरि शप्

प्रत्ययः "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति पिबादेशो यासुडागमः सलोपस्तत इयादेशो गुणो यलोपः सिप इकारलोपो रुत्वविसर्गौ। अपः=आपूऌ ( व्याप्तौ-ऌदित )+क्विप्, "आप्नोतेर्ह्रस्वश्च" इत्यौणादिकः क्विप् प्रत्यये धातोर्ह्रस्वः शसि रूपम् ॥ ८९ ॥

वाच्यान्तरम्—अस्यां प्रस्थितायां (त्वया) प्रतिष्ठीयेत, स्थितायां स्थितिराचर्येत, निषण्णायां निषद्यतां, पीताम्भसि (सत्याम्) आपः पीयेरन् ॥ ८९ ॥

कोशः—"अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्" इति। "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इति चामरः ॥ ८९ ॥

तात्पर्यार्थः—हे राजन्! त्वमस्याश्छायावत् परिचर्यां कुरु, तद् यथा—एषा यदा गन्तुमुद्यता सती प्रयाणं करोतु तदैव त्वमपि तदनु प्रयाणं कुरु। यदा च क्व चित् स्थिता भवतु चेत् तदा त्वमपि तावत् स्थितो भव। यदा च क्व चिदुपविष्टा स्यात् तदा त्वमपि तत्रैव समुपविश। यदा च तृषाऽऽर्त्ता क्व चित् सलिलं पिबतु तदैव त्वमपि सलिलं पिब। न तु, तृषाऽऽर्त्तोऽपि कदाचित् ततः प्राग् जलं पिब ॥ ८९ ॥

भाषाऽर्थः—हे राजन्! इस (नन्दिनी) के चलने पर तुम (इसके पीछे २) चलो, ठहरने पर ठहरो, बैठने पर बैठो, पानी पीने पर पानी पीओ ॥ ८९ ॥

*साम्प्रतं नन्दिनीपरिचर्यायां सुदक्षिणयाऽनुष्ठास्यमानं कर्म ब्रुवन्नाह*—

वधूर्भक्तिमती चैनामर्चितामा तपोवनात्।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥

सञ्जीविनी—वधूर्जाया च भक्तिमती गन्धादिभिरर्चितामेनां प्रातरा तपोवनात्। आङ् मर्यादायाम्। पदद्वयं चैतत्। अन्वेत्वनुगच्छतु। सायमपि प्रत्युद्व्रजेत्प्रत्युद्गच्छेत्। विध्यर्थे लिङ् ॥ ९० ॥

अन्वयः—वधूः, भक्तिमती, प्रयता, च, (सती) अर्चिताम्, एनाम्, प्रातः, आ, तपोवनाद्, अन्वेतु, सायम्, अपि, प्रत्युद्व्रजेद् ॥ ९० ॥

व्याख्या—वधूः=स्नुषा, शिष्यपत्न्यां पुत्रवधूवद्व्यवहारात् सुदक्षिणेत्यर्थो बोध्यः। भक्तिमती=श्रद्धावती, प्रयता=पवित्रा, बाह्याभ्यन्तरशुद्धियुक्तेत्यर्थः। च=अपि, समुच्चयार्थकश्चशब्दोऽत्र बोध्यः। सतीति शेषः। अर्चिताम्=पूजितां, गन्धपुष्पादिभिरिति शेषः। एनां=पूर्वोक्तां, नन्दिनीमिति यावत्। प्रातः=प्रभाते, काल इति शेषः। आ तपोवनाद्=आतपोवनम्, मर्यादायामाङो योगे पञ्चमीविधानाद् वशिष्ठमहर्षेस्तपोवनसीमापर्यन्तमित्यर्थो ज्ञेयः। अन्वेतु=अनुयातु। नन्दिन्याः पश्चाद्गमनं करोत्विति भावः। सायं=सन्ध्यासमये। अपि=अन्वाचयार्थकोऽपिः। प्रत्युद्व्रजेत्=प्रत्युद्यायात्, प्रातर्वनगमनसमये नन्दिन्या अनुगमनं तपोवनसीमाप्रदेशपर्यन्तं करोतु, सायमागमनसमये तपोवनसीमाप्रदेशं गत्वा तदीयं स्वागतं करोत्विति भावः ॥ ९० ॥

समासादि—वहतीति वधूः (स्त्री०)। भजनं भक्तिः (स्त्री०), भक्तिरस्त्यस्यामिति भक्तिमती (स्त्री०)। तपनं, तप्यतेऽनेन वेति तपः (न० लिं), वनतीति वनं (न० लि०) तपसे वनं तपोवनं तस्मात् तपोवनात् (त० पु०) ॥ ९० ॥

व्याकरणं—वधूः=वह (प्रापणे-अकारेत्)+ऊः, "वहो धश्च" इत्यौणादिक ऊप्रत्ययो हस्य धादेशः सौ रूपम्। भक्तिः=भज (सेवायाम्—अकारेत्)+क्तिन्, प्रत्ययो भावे "चोः कुः" इति कुत्वं चर्त्वं सौ रूपम्। भक्तिमती=भक्ति+मतुप्+ङीप्, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् प्रत्ययः "उगितश्च" इति ङीप् सुलोपः। अर्चिताम्=अर्च (पूजायाम्—अकारेत्) +क्तः, कर्मणि प्रत्ययो वलादिलक्षण इडागमष्टाप् अमि रूपम्। तपः=तप

(सन्तापे-अकारेत्)+असुन्, "सर्वधातुभ्योऽसुन्" इत्यौणादिकोऽसुन् प्रत्ययो भावे करणे वा सौ रूपम् । वनं=वन (सम्भक्तौ—अकारेत्)+अच्, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच् प्रत्ययः कर्त्तरि सोरमादेशः पूर्वरूपम्। तपोवनाद्=तपोवन+ङसि, अत्रा-ङो योगे पञ्चमी,"आङ् मर्यादावचने"इति मर्यादायामाङः कर्मप्रवचनीयसंज्ञा "पञ्चम्यपाङ्परि-भिः" इति कर्मप्रवचनीयसंज्ञकतयाऽऽङो योगे तपोवनशब्दात् पञ्चमी ङसे रूपम् । प्रयता= प्र+यम (उपरमे—अकारेत्)+क्तः, "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्य-श्च" इति यमेरकर्मकत्वात्कर्तरि क्तप्रत्ययः कित्वाद् "अनुदात्तोपदेशवनतितनोत्यादीनामनुना-सिकलोपो झलि क्ङिति" इत्यनुनासिकमकारलोपः स्त्रीत्वविवक्षायां टाप् सोर्लुक् "हल्ङ्या-ब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इति सूत्रेण। अन्वेतु=अनु+इण् (गतौ—णित्)+लोट्, तस्य तिपि शपो लुकि "सार्वधातुकार्धधातुकयोः" इति गुणे "एरुः" इति तिप इकारस्योकारे रूपसिद्धिः । प्रत्युद्व्रजेद्=प्रति+उद्+व्रज (गतौ=अकारेत्)+लिङ्, विध्यर्थे तस्य तिपि कर्तरि शप् "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमः "लिङः सलोपोऽनन्त्यस्य" इति सकारलोपः "अतो येयः" इतीयादेशः "लोपो व्योर्वलि" इति यकारलोपो यणादिकार्ये पदसिद्धिः ॥ ९० ॥

वाच्यान्तरं—वध्वा च भक्तिमत्या प्रयतया "सत्या" अर्चितैषा प्रातरातपोवनादन्वी-यतां सायमपि प्रत्युद्व्रज्येत ॥ ९० ॥

कोशः—"वधूर्जाया स्नुषा स्त्री च" इत्यमरः । "भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धावि-भागयोः" इत्यनेकार्थसङ्ग्रहः । "स्यादर्हिते नमस्यितनमसितपूजायितार्चितापचितम्" इत्य-मरः । "आङीषदर्थेऽभिव्याप्तौ सीमाऽर्थे धातुयोगजे" इत्यमरः। "तपः कृच्छ्रादिकर्मणि । धर्मे लोकप्रभेदे च" इत्यनेकार्थसङ्ग्रहः । "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः । "पवित्रः प्रयतः पूतः" इत्यमरः । "सायं साये, प्रगे प्रातः प्रभाते" इत्यमरः ॥ ९० ॥

तात्पर्यार्थः—वधूः सुदक्षिणाऽपि श्रद्धासमन्विता, बाह्याभ्यन्तरशुद्धिमती सती यथा-ऽधिगतगन्धादिभिः पूजोपकरणैः पूजितामेनां नन्दिनीं प्रातःकाले तपोवनसीमापर्यन्तमन्वेतु सायङ्कालेऽपि वनात् तदागमनसमये तपोवनसीमाप्रदेशे स्वागतार्थं स्थिता सती चैनामभि-नन्द्य स्वाश्रममानयतु ॥ ९० ॥

भाषाऽर्थः—और वधू "सुदक्षिणा" भक्ति "श्रद्धा" से युक्त पवित्र मन होकर "गन्धा-दिकों से" पूजित इस "नन्दिनी" के पीछे २ प्रातः काल तपोवन की सीमा तक "व-न में पहुचाने के लिये" जावै, और सायङ्काल को भी "तपोवन की सीमा पर जाकर इस-का" स्वागत करै ॥ ९० ॥

*नन्दिनीपरिचर्याऽवधिं निर्दिशन्नाह*—

**इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।**
**अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥**

सञ्जीविनी—इतीति। इत्यनेन प्रकारेण त्वमा प्रसादात्प्रसादपर्यन्तम् । आङ्मर्यादाऽभि-विध्योः" इत्यस्य वैभाषिकत्वादसमासत्वम् । अस्या धेनोः परिचर्यापरः शुश्रूषापरो भव । ते तवाविघ्नं विघ्नस्याभावोऽस्तु । "अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभाव०" इत्यादिनाऽ-र्थाभावेऽव्ययीभावः । पितेव पुत्रिणां सत्पुत्रवताम् । प्रशंसायामिनिप्रत्ययः । धुर्यग्रे स्थेया-स्तिष्ठेः । आशीरर्थे लिङ् । "एर्लिङि" इत्याकारस्यैकारादेशः । त्वत्सदृशो भवत्पुत्रोऽस्त्विति भावः ॥ ९१ ॥

अन्वयः—इति, त्वम्, आ, प्रसादाद्, अस्याः, परिचर्यापरः, भव, ते, अविघ्नम्, अस्तु, पिता, इव, पुत्रिणां, धुरि, स्थेयाः ॥ ९१ ॥

व्याख्या—इति = इत्थम् "अमुना प्रकारेणेत्यर्थः। त्वम् = भवान्, आप्रसादाद् = प्रसादपर्यन्तं, यावन्न प्रसन्ना भूत्वा पुत्राप्तिरूपं वरं प्रयच्छेत् तावदिति भावः। अस्याः = नन्दिन्याः, कामधेनुसुताया इति यावत्। परिचर्यापरः = उपासनातत्परः, भव = भवेः, ते = तव, अविघ्नं = विघ्नाभावः, अस्तु = स्यात्, पिता = जनकः, इव = यथा, पुत्रिणां = सत्सुतवतां, धुरि = यानमुखे, अग्रे, इति भावः। स्थेयाः = तिष्ठताद्, अस्याः प्रसादाप्तिपर्यन्तं त्वं पूर्वोक्तप्रकारेणेमां प्रेमतः परिचरतु, तथा तव धेनुपरिचर्याऽवसरे विघ्नानामनुत्पत्तिरस्तु, अपि च, यथा तव पिता त्वादृशं सुतमवाप्य सत्पुत्रवतां श्लाघ्योऽभूत् तथैव त्वमपि, स्वसदृशं सूनुमवाप्नोतु—इति मदीया आशिषः सन्तीति भावः॥ ९१॥

समासादि—प्रसदनं प्रसादस्तस्मात्प्रसादाद् (पुं०)। परिचरणं परिचर्या (स्त्री०) तस्यां परः परिचर्यापरः (त० पु०)। विघ्नानामभावोऽविघ्नम् (अ० भा०)। पातीति पिता (पुं०)। पुनन्ति पूयन्ते वा पुत्राः (पुं०)। प्रशस्ताः पुत्राः सन्त्येषामिति पुत्रिणस्तेषां पुत्रिणाम् (पुं०)॥ ९१॥

व्याकरणम्—प्रसादात् = प्र + षद्लृ (विशरणगत्यवसादनेषु—लृदित्) + घञ्, "भावे" इति घञ् प्रत्ययो धात्वादेः षः सः "अत उपधायाः" इत्युपधावृद्धिस्तत आङ्योगे "आङ् मर्यादावचने, इत्याङः कर्मप्रवचनीयत्वेन "पञ्चम्यपाङ्परिभिः" इति पञ्चमी "आङ्मर्यादाऽभिविध्योः" इत्यस्य वैभाषिकत्वादसमासत्वं ङसे रूपम्। परिचर्यायाम् = परि + चर (गतिभक्षणयोः—अकारेत्) + यक् + शः + टाप्, "परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानम्" इति वार्त्तिकेन शप्रत्ययो यक् च निपात्येते "अतो गुणे" इति पररूपएकादेशष्टाप् ङिरूपम्। भव = भू (सत्तायाम्) + लोट्, तस्य सिपि धातोः शप्प्रत्यये गुणावादेशौ "सेर्ह्यपिच्च" इति सिपो ह्यादेशः "अतो हेः" इति हेर्लुक्। अविघ्नं = नञ् + विघ्न, अत्रास्वपदविग्रहेण "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु" इति नञा सह समासे "नलोपो नञः" इति नञो नकारलोपे "अव्ययीभावश्च" इत्यव्ययत्वात् प्राप्तं सुपो लुकं बाधित्वा "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इति सोरमादेशः "अव्ययीभावश्च" इति क्लीबत्वम्। अस्तु = अस (भुवि—अकारेत्) + लोट्, तस्य तिपि धातोः शप् प्रत्ययस्तस्यादादित्वाल्लुक् "एरुः" इति तिप इकारस्योकारः। स्थेयाः = ष्ठा (गतिनिवृत्तौ) + लिङ्, आशीरर्थे लिङः सिपि धात्वादेः षः सः "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमः "किदाशिषि" इति यासुटः कित्वेन "एर्लिङि" इति धातोरेत्वं "लिङः सलोपोऽनन्त्यस्य" इति यासुटः सकारलोपः सस्य रुत्वविसर्गौ। पुत्रिणाम् = पुत्र + इनिः, "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति वार्त्तिकबलेन प्रशंसायाम् "अत इनिठनौ" इतीनिप्रत्यय आमि णत्वे रूपम्॥ ९१॥

वाच्यान्तरम्—इति त्वया, आप्रसादादस्याः परिचर्यापरेण भूयतां; तेऽविघ्नेन भूयताम्, पुत्रिणां धुरि पितेव स्थीयताम्॥ ९१॥

कोशः—"प्रसादस्तु प्रसन्नता" इति। "आङीषदर्थेऽभिव्याप्तौ सीमाऽर्थे धातुयोगजे" इति। "वरिवस्या तु शुश्रूषा परिचर्य्याऽप्युपासना" इति चामरः। "परः श्रेष्ठारिदूरान्योत्तरे क्लीबन्तु केवले" इति मेदिनी। "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः। "धूर्यानमुखभारयोः" इत्यनेकार्थसङ्ग्रहः। "आत्मजस्तनयः सूनुः सुतः पुत्रः" इत्यमरः॥ ९१॥

तात्पर्यार्थः—इत्युक्तप्रकारेण त्वमस्या नन्दिन्याः प्रसन्नताऽवाप्तिपर्य्यन्तं शुश्रूषां कुरु, तव परिचर्याकरणकाले विघ्ननाशो भवतु, आत्मतुल्यसत्पुत्रशाली भव॥ ९१॥

भाषार्थः—इस प्रकार से तुम जब तक यह नन्दिनी प्रसन्न न होवै, तब तक इसकी से-

वा करने में तत्पर रहो, तुम्हारे विघ्नों का अभाव रहै (अर्थात् तुम्हे विघ्नों का सामना न करना पड़े), पिता के समान तुम भी अच्छे पुत्र वालों में मुख्य हो (अर्थात् तुम्हें अपने समान पुत्र प्राप्त हो) ॥ ९१ ॥

*राज्ञो दिलीपस्य सप्रेम गुरोराज्ञाग्रहणमाह*—

तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२ ॥

सञ्जीविनी—तथेतीति । देशकालज्ञः । देशोऽग्निसंनिधिः, कालोऽग्निहोत्रावसानसमयः । विशिष्टदेशकालोत्पन्नमार्षज्ञानमव्याहतमिति जानन् । अत एव प्रीतिमाञ्शिष्योऽन्तेवासी राजा सपरिग्रहः सपत्नीकः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । आनतो विनयनम्रः सन् शासितुर्गुरोरादेशमाज्ञां तथेति प्रतिजग्राह स्वीचकार ॥ ९२ ॥

अन्वयः—देशकालज्ञः, "अत एव" प्रीतिमान्, शिष्यः, सपरिग्रहः, आनतः, "सन्" शासितुः, आदेशं, तथा, इति, प्रतिजग्राह ॥ ९२ ॥

व्याख्या—देशकालज्ञः = वह्निसन्निध्यग्निहोत्रान्तसमयाभिज्ञः, "अग्निसन्निधौ तथाऽग्निहोत्रावसानसमये ब्रह्मपुत्रेण महर्षिणा वसिष्ठेन प्रोक्तं "तव पुत्रो भविष्यति" इत्याकारकं वचनं श्रुत्वा जातविश्वास इति भावः । "अत एव" प्रीतिमान् = हर्षयुक्तः, अवश्यंभाविपुत्रोत्पत्त्या प्रहृष्टचित्त इति भावः । शिष्यः = छात्रः, दिलीप इति यावत् । सपरिग्रहः = सपत्नीकः, सुदक्षिणासहित इत्यर्थः । आनतः = विनयावनतः, सन्निति शेषः । शासितुः = शासनकर्त्तुः, गुरोर्वसिष्ठस्येति यावद् । आदेशम् = आज्ञां, "नन्दिनीपरिचर्यां सपत्नीकस्त्वं सादरं कुरु" इत्यात्मकमिति भावः । तथेति = तेन प्रकारेणैवास्तु तवादेशपालनमिति, उक्त्वेति शेषः । प्रतिजग्राह = अङ्गीचकार, स्वीकृतवानित्यर्थः ॥ ९२ ॥

समासादि—तेन प्रकारेणेति तथा (अ०) । प्रीतिरस्त्यस्मिन्निति प्रीतिमान् (पुं०) । परिग्रहेण सहितः सपरिग्रहः (ब० व्री०) । देशश्च कालश्चेति देशकालौ (द्व०), तौ जानातीति देशकालज्ञः (पुं०) । शासितुं योग्यः शिष्यः (पुं०) । शास्तीति शासिता तस्य शासितुः (पुं०) । आ समन्तान्नत आनतः (पुं०) ॥ ९२ ॥

व्याकरणं—तथा = तद् + थाल्, "प्रकारवचने थाल्" इति थाल् प्रत्ययः "त्यदादीनामः" इत्यकारोऽन्तादेशोऽव्ययत्वात्सुपो लुक् । प्रतिजग्राह = प्रति + ग्रह (उपादाने अकारेत्) + लिट्, तस्य तिपो णलादेशे धातोर्द्वित्वेऽभ्यासस्य हलो लोपे "कुहोश्चुः" इति चुत्वे "अत उपधायाः" इत्युपधावृद्धौ रूपसिद्धिः । प्रीतिः = प्रीञ् (तर्पणे कान्तौ च-ञित्) + क्तिन् प्रत्ययः सौ रूपम् । प्रीतिमान् = प्रीति + मतुप्, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् प्रत्यय उगित्वान्नुम् उपधादीर्घः सोर्हल्ङ्याब्भ्यो लोपः । सपरिग्रहः = सह + परिग्रह, बहुव्रीहिसमासे "वोपसर्जनस्य" इति सहस्य सादेशः सौ रूपम् । आदेशम् = आङ् + दिश (अतिसर्जने-अकारेत्) + घञ्, "भावे" इति घञ् प्रत्यय उपधागुणोऽमि रूपम् । देशकालज्ञः = देशकाल + ज्ञा (अवबोधने-) + क, "आतोऽनुपसर्गे कः" इति कप्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपः सौ रूपम् । शिष्यः = शासु (अनुशिष्टौ-उदित्) + क्यप्, "एतिस्तुशास्वृदृजुषः क्यप्" इति क्यप् प्रत्ययः "शास इदङ्हलोः" इत्युपधाया इत्वं "शासिवसिघसीनां च" इति षत्वं सौ रूपम् । शासितुः = शासु (अनुशिष्टौ-उदित्) + तृच्, कर्तरि प्रत्ययो वलादिलक्षण इडागमो ङसि प्रत्यये "ऋत उत्" इत्युत्वं रपरत्वं "रात्सस्य" इति सस्य लोपो रेफस्य विसर्गः । आनतः = आङ् + णम (प्रह्वत्वे शब्दे-अकारेत्) + क्तः, "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्य्यतिभ्यश्च" इति कर्त्तरि क्तः प्रत्ययः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकमकारलोपः सौ रूपम् ॥ ९२ ॥

वाच्यान्तरं—देशकालज्ञेन "अत एव" प्रीतिमता शिष्येण सपरिग्रहेणानतेन "सता" शासितुरादेशस्तथेति प्रतिजगृहे ॥ ९२ ॥

कोशः—"मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः" इति । "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इति । "छात्रान्तेवासिनौ शिष्ये" इति । "अवाग्रेऽवनतानते" इति सर्वत्राप्यमरः ॥ ९२ ॥

तात्पर्यार्थः—अग्निसन्निधिरिति देशस्य तथाऽग्निहोत्रावसानमिति समयस्य च ज्ञाता, अर्थादित्थंभूते देशे काले च महर्षिणोक्तं वचनं पुत्रप्राप्तिर्भविष्यतीत्याकारकं कदाऽपि मृषा न भविष्यत्यत एव प्रसन्नः सुदक्षिणासहितो दिलीपो विनयावनतकन्धरः सन् निजगुरोर्नन्दिनीपरिचर्याकरणरूपामाज्ञां "यथा भवदीयाऽऽज्ञा तथैव करिष्ये" इत्युक्त्वा स्वीचकार ॥ ९२ ॥

भाषाऽर्थः—देश और काल के जानने वाले अत एव प्रसन्न शिष्य राजा दिलीप पत्नी "सुदक्षिणा" के सहित विनय से नम्र "होते हुये" उपदेश करने वाले गुरु की आज्ञा को "वैसा ही हो" यह कह कर स्वीकार किया ॥ ९२ ॥

*अथ रात्रिकालं विज्ञाय दिलीपशयनार्थं वसिष्ठानुशासनमाह*—

अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।
सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम् ॥ ९३ ॥

सञ्जीविनी—अथेति । अथ प्रदोषे रात्रौ दोषज्ञो विद्वान् । 'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः । सूनृतवाक् सत्यप्रियवाक् । 'प्रियं सत्यं च सूनृतम्' इति हलायुधः । स्रष्टुः सूनुर्ब्रह्मपुत्रो मुनिः । अनेन प्रकृतकार्यनिर्वाहकत्वं सूचयति । ऊर्जितश्रियं विशांपतिं मनुजेश्वरम् । "द्वौ विशौ वैश्यमनुजौ" इत्यमरः । संवेशाय निद्रायै । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । विससर्जाज्ञापयामास ॥ ९३ ॥

अन्वयः-अथ, प्रदोषे, दोषज्ञः, सूनृतवाक्, स्रष्टुः, सूनुः, ऊर्जितश्रियं, विशांपतिं, संवेशाय, विससर्ज ॥ ९३ ॥

व्याख्या—अथ = अनन्तरं, तथाऽस्त्वित्युक्त्वा गुरोराज्ञाग्रहणानन्तरमिति भावः । प्रदोपे = रजनीमुखे, रात्रिप्रथमयाम इति भावः । दोषज्ञः = विद्वान्, सर्वविषयकदोषज्ञानवान् सर्वज्ञ इति यावत् । सूनृतवाक् = प्रियसत्यवचनः, स्रष्टुः = प्रजापतेः, ब्रह्मण इति यावत् । सूनुः = पुत्रः, मानसपुत्रो वसिष्ठ इत्यर्थः । ऊर्जितश्रियं = प्रवृद्धशोभं, पुत्रप्राप्त्युपायाकर्णनेन प्रसन्नवदनमिति भावः । विशांपतिं = मनुजानां स्वामिनं, राजानं दिलीपमित्यर्थः । संवेशाय = स्वापार्थं, विससर्ज = व्यसृजत्, निद्रायै समादिशदित्यर्थः ॥ ९३ ॥

समासादि—दोषं जानातीति दोषज्ञः (पुं०) । संवेशनं संवेशस्तस्मै संवेशाय (पुं०) । सूनृता वाग्यस्य स सूनृतवाक् (ब० व्री०) । सृजतीति स्रष्टा तस्य स्रष्टुः (पुं०) । ऊर्जिता श्रीर्यस्य स ऊर्जितश्रीस्तमूर्जितश्रियम् (ब० व्री०) ॥ ९३ ॥

व्याकरणं—दोषज्ञः = दोष + ज्ञा (अवबोधने) + कः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपः सौ रूपम् । संवेशाय = सम् + विश (प्रवेशने) + घञ्, "भावे" इति घञ् प्रत्ययः "पुगन्तलघूपधस्य च" इत्युपधागुणः "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति वार्तिकेन संप्रदानसंज्ञा "सम्प्रदाने चतुर्थी" इति चतुर्थी ततो ङेरूपम् । सूनृतवाक् = सूनृता + वाक्, बहुव्रीहिसमासे "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति पुंवद्भावः सौ रूपम् । स्रष्टुः = सृज (विसर्गे—अकारेत्) + तृच्, "ण्वुल्तृचौ" इति तृच् प्रत्ययः कर्त्तरि "सृजिदृशोर्झल्यमकिति" इत्यमागमो यणादेशः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति जस्य षः ष्टुत्वं ततो ङसि परे "ऋत उत्" इत्युत्वं रपरत्वं "रात्सस्य" इति सकारलोपो रेफस्य विसर्गः । विससर्ज = वि +

सृज (विसर्गे-अकारेत्)+लिट्, तस्य तिपो णलादेशे धातोर्द्वित्वे "उरत्" इत्यभ्यासस्यात्वे रपरत्वेऽभ्यासहलो लोप उपधागुणे रूपसिद्धिः ॥ ९३ ॥

वाच्यान्तरम्—अथ प्रदोषे दोषज्ञेन सूनृतवाचा स्रष्टुः सूनुनोर्जितश्रीर्विशांपतिः संवेशाय विससृजे ॥ ९३ ॥

कोशः—"मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इति । "प्रदोषो रजनीमुखम्" इति । "विद्वान् विपश्चिद्दोषज्ञः" इति । "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इति । "द्वौ विशौ वैश्यमनुजौ" इति । "स्वामी, त्वीश्वरः पतिरीशिता । अधिभूर्नायको-नेता प्रभुः परिवृढोऽधिपः" इति । "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी" इति सर्वत्राप्यमरः । "प्रियं सत्यञ्च सूनृतम्" इति हलायुधः । "वाग्वाचे, भारत्यां वचने स्त्रियौ" इति कोशान्तरम् । "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः । "श्रीर्वेषरचना शोभा भारती सरलद्रुमे । लक्ष्म्यां त्रिवर्गसम्पत्तौ विषोपकरणे मतौ" इति विश्वमेदिन्यौ ॥ ९३ ॥

तात्पर्यार्थः—तथाऽस्त्वित्युक्त्वा पुत्राशिकामनया नन्दिनीपरिचर्याऽऽत्मकवशिष्ठमुनिनिर्देशग्रहणानन्तरं रात्रेः प्रथमप्रहरे सर्वज्ञः सत्यप्रियभाषणशीलो ब्रह्मणो मानसपुत्रो वशिष्ठो-राजानं दिलीपं शयनार्थमादिदेश ॥ ९३ ॥

भाषाऽर्थः—उसके (गुरु वशिष्ठ की आज्ञा ग्रहण करने के) बाद रात्रि के प्रथम प्रहर होने पर (प्रत्येक विषय के) दोषों को जानने वाले (सर्वज्ञ) तथा सत्य और प्रिय भाषी ब्रह्मा के (मानस) पुत्र (वशिष्ठ ऋषि) ने राजा दिलीप को सोने के लिये आज्ञा दी ॥ ९३ ॥

*महर्षेर्वशिष्ठस्य दिलीपाय मुनिजनार्हसामग्रीसम्पादनमाह*—

**सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।**
**कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥ ९४ ॥**

सञ्जीविनी—सत्यामिति । कल्पविद्व्रतप्रयोगाभिज्ञो मुनिः । तपःसिद्धौ सत्यामपि । तपसैव राजयोग्याहारसंपादनसामर्थ्ये सत्यपीत्यर्थः । नियमापेक्षया तदाप्रभृत्येव व्रतचर्यापेक्षया । अस्य राज्ञो वन्यामेव। संविधीयतेऽनयेति संविधाम् । कुशादिशयनसामग्रीम् । "आतश्चोपसर्गे" इति कप्रत्ययः । "अकर्तरि च कारके संज्ञायाम्" इति कर्मार्थत्वम् । कल्पयामास संपादयामास ॥ ९४ ॥

अन्वयः—कल्पविद्, मुनिः, तपःसिद्धौ, सत्याम्, अपि, नियमापेक्षया, अस्य, वन्याम्, एव, संविधां, कल्पयामास ॥ ९४ ॥

व्याख्या—कल्पविद्=व्रतप्रयोगविज्ञः, मुनिः=वाचंयमः, वसिष्ठ इति यावत् । तपःसिद्धौ=कृच्छ्रादिकर्मजन्याणिमाद्यैश्वर्ये, सत्यामपि=विद्यमानायामपि, कृच्छ्रचान्द्रायणादिव्रतचरणेन राजोचितभोजनसामग्रीसम्पादनसामर्थ्ये सत्यपीत्यर्थः । नियमापेक्षया=व्रतचर्यापेक्षया, तदाप्रभृत्येव नन्दिनीपरिचर्याऽऽत्मकव्रतचर्यापेक्षयेत्यर्थः। अस्य=राज्ञः, दिलीपस्येति भावः । वन्यां=वनोद्भवाम्, एव=अवधारणे, संविधां=कुशादिशयनसामग्रीं, कल्पयामास=सम्पादयामास । अस्मिन् सर्गे प्रारम्भत एतावच्छ्लोकावधि सर्वत्रानुष्टुप्छन्द एव, तल्लक्षणं यथा—"श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः" इति ॥ ९४ ॥

समासादि—अस्तीति या सा सती (स्त्री०) तस्यां सत्याम्। तपसां सिद्धिस्तपःसिद्धिः (त० पु०) तस्यां तपःसिद्धौ । नियमनं नियमः (पुं) तस्यापेक्षा नियमापेक्षा (त० पु०) तया नियमापेक्षया । मन्ता वेदशास्त्रार्थतत्त्वावगन्तेति मुनिः (पुं०)। कल्पनं कल्पः (पुं०)तं वेत्तीति कल्पवित् (पुं०)। वने साध्वी वन्या तां वन्याम् (स्त्री)। सम्यक् प्रकारेण विधीयतेऽन-

येति संविधा तां संविधाम् (स्त्री०) ॥ ९४ ॥

व्याकरणं—सत्याम् = अस (भुवि—अकारेत्) + लट् + शतृ + ङीप्, "उगितश्च" इति ङीप् ङिरूपम्। नियमः = नि + यम (उपरमे—अकारेत्) + अप्, "यमः समुपनिविषु च" इत्यप् प्रत्ययः सौ रूपम्। मुनिः = मनु (अवबोधने—उकारेत्) + इः, "मनेरुच्च" इत्यौणादिक इप्रत्ययो धातोरुपधाया उत्वं सौ रूपम्। कल्पः = कृपू (सामर्थ्ये-ऊदित्) + घञ्, "भावे" इति घञ्प्रत्ययः "पुगन्तलघूपधस्य च" इत्युपधागुणो रपरत्वं ततः "कृपो रो लः" इति रफस्य लत्वं सौ रूपम्। कल्पयामास = कृपू (सामर्थ्ये—ऊदित्) + णिच् + लिट्, धातोर्णिचि प्रत्यये धातोरुपधागुणः "कृपो रो लः" इति रेफस्य लत्वे "सनाद्यन्ता धातवः" इति धातुसंज्ञा ततो लिटि तस्य णलादेशे "इजादेश्च गुरुमतोऽनृच्छः" इति धातोराम् प्रत्ययो धातोर्गुणायादेशौ "आमः" इति लिटो लुक् ततः "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परस्यास्तेरनुप्रयोगस्ततोऽस्तेर्द्वित्वमभ्यासहलादिकार्यं रूपसिद्धिः। संविधां = सम् + वि + डुधाञ् (धारणपोषणयोः-डुञित्) + कः + टाप्, "आतश्चोपसर्गे" इति सूत्रेण "अकर्त्तरि च कारके संज्ञायाम्" इति संज्ञास्वीकारात्करणेऽर्थे कप्रत्ययः "आतो लोप इटि च" इत्याकारलोपस्ततष्टाप् अमि रूपम् ॥ ९४ ॥

वाच्यान्तरं—कल्पविदा मुनिना तपःसिद्धौ सत्यामपि नियमापेक्षयाऽस्य वन्यैव संविधा कल्पयाञ्चक्रे ॥ ९४ ॥

कोशः—"सन् साधौ धीरशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्" इति मेदिनी। "तपः कृच्छ्रादि कर्म च" इत्यमरः। "सिद्धिस्तु, मोक्षे निष्पत्तियोगयोः" इति हैमः। "सिद्धिः स्त्री योगनिष्पत्तिपादुकाऽन्तर्धिवृद्धिषु" इति च मेदिनी। "नियमो व्रतमस्त्री" इत्यमरः। "नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते" इति च मेदिनी। "वाचंयमो मुनिः" इत्यमरः। "कल्पे विधिक्रमौ" इति। "कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने" इति चामरमेदिन्यौ। "वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः" इति मेदिनी। "विधा विधौ प्रकारे च" इति। "विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ" इति चामरविश्वौ ॥ ९४ ॥

तात्पर्यार्थः—व्रतप्रयोगकुशलो महर्षिर्वसिष्ठस्तपश्चर्योपात्तसिद्धया राजोचिताहारादिसामग्रीसम्पादनसामर्थ्ये सत्यपि नन्दिनीपरिचर्य्याऽऽत्मकव्रतचर्यापेक्षयाऽस्य दिलीपस्य वनवासिजनसुलभकुशादिशयनसामग्रीमेव सम्पादयामास ॥ ९४ ॥

भाषार्थः—व्रत के प्रयोग के जानने वाले मुनि "वशिष्ठजी" ने तप की सिद्धि "राजाओं के उपभोग योग्य सामग्री सम्पादन करने की सामर्थ्य" रहते हुये भी "नन्दिनी की सेवा रूप" व्रत का विचार कर के इन "राजा दिलीप" के लिये वन में उत्पन्न हुए "वनवासियों के उपभोग करने के योग्य" ही सामग्री का प्रबन्ध किया ॥ ९४ ॥

*वशिष्ठाज्ञया पर्णशालायां पत्न्या सह प्रसुप्तस्य दिलीपस्य ब्राह्ममुहूर्त्ते निद्रात्यागमाह*—

निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥ ९५ ॥

सञ्जीविनी—निर्दिष्टामिति। स राजा कुलपतिना मुनिकुलेश्वरेण वसिष्ठेन निर्दिष्टां पर्णशालामध्यास्याधिष्ठाय। तस्यामधिष्ठानं कृत्वेत्यर्थः। "अधिशीङ्स्थाऽऽसां कर्म" इत्यनेनाधारस्य कर्मत्वम्। कर्मणि द्वितीया। प्रयतो नियतः परिग्रहः पत्नी द्वितीयो यस्येति स तथोक्तः।

कुशानां शयने संविष्टः सुप्तः सन्। तस्य वसिष्ठस्य शिष्याणामध्ययनेनापररात्रे वेदपाठेन निवेदितमवसानं यस्यास्तां निशां निनाय गमयामास । अपररात्रेऽध्ययने मनुः—(निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्) । (न चापररात्रमधीत्य पुनः स्वपेद्) इति गौतमश्च । प्रहर्षिणीवृत्तमेतत्। तदुक्तम्-(म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्) ॥ ९५ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये वसिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः ।

---

अन्वयः—सः, कुलपतिना, निर्दिष्टां, पर्णशालाम्, अध्यास्य, प्रयतपरिगृहद्वितीयः, कुशशयने, संविष्टः, "सन्" तच्छिष्याध्ययननिवेदितावसानां, निशां, निनाय ॥ ९५ ॥

व्याख्या—सः, = पूर्वोक्तः, राजा दिलीप इति यावत्। कुलपतिना = मुनिकुलप्रभुणा, वशिष्ठेनेत्यर्थः । निर्दिष्टाम् = आज्ञप्तां, पर्णशालाम् = पर्णकुटीं, पत्रादिनिर्मितगृहम्, अध्यास्य = अध्युष्य, तस्यामधिवासं कृत्वेत्यर्थः । प्रयतपरिगृहद्वितीयः = पवित्रपत्नीसहायः, वंशादिना विशुद्धया भार्यया सुदक्षिणयाऽनुगम्यमान इति भावः । कुशशयने = दर्भशय्यायां, संविष्टः = सुप्तः, "सन्" इति शेषः । तच्छिष्याध्ययननिवेदितावसानां = वसिष्ठछात्रवेदपाठज्ञापितान्तां, वशिष्ठमहर्षेश्छात्राणां वेदाध्ययनेन सूचितावसानामित्यर्थः । निशां = रजनीं, निनाय = यापयामास । अस्मिन् पद्ये प्रहर्षिणीवृत्तं तल्लक्षणं यथा श्रुतबोधे—"आद्यं चेत् त्रितयमथाष्टमं नवान्त्यं, सोपान्त्यं गुरु विरतौ सुभाषिते स्यात् । विश्रामो भवति महेशनेत्रदिग्भिर्विज्ञेया ननु सुभगे प्रहर्षिणी सा" इति । अन्यदपि—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्"

| मगण | नगण | जगण | रगण | गुरु |
|---|---|---|---|---|
| ऽऽऽ | ।।। | ।ऽ। | ऽ।ऽ | ऽ |

इति । तदुदाहरणं यथाऽत्रैव-निर्दिष्टां कुलप—तिना स—पर्णशा—लाम्, इति ॥ ९५ ॥

समासादि—पातीति पतिः (पुं०) कुलस्य पतिः कुलपतिस्तेन कुलपतिना (त० पु०) । पर्णानां शाला पर्णशाला (स्त्री०) तां पर्णशालाम् (त० पु०) । परिगृह्यतेऽसौ परिगृहः (पुं०) । द्वयोः पूरणो द्वितीयः (पुं०)। प्रयतः परिगृहो द्वितीयो यस्य स प्रयतपरिग्रहद्वितीयः (ब०व्री०)। शासितुं योग्याः शिष्याः (पुं०) तस्य शिष्यास्तच्छिष्याः (त० पु०) तेषामध्ययनं तच्छिष्याध्ययनम् (त० पु०) तच्छिष्याध्ययनेन निवेदितं तच्छिष्याध्ययननिवेदितम् (त० पु०) तच्छिष्याध्ययननिवेदितमवसानं यस्याः सा तच्छिष्याध्ययननिवेदितावसाना तां तच्छिष्याध्ययननिवेदितावसानाम् (ब० व्री०) । शेतेऽस्मिन्निति शयनं (न०लि०) कुशानां शयनं कुशशयनं तस्मिन् कुशशयने (त० पु०) ॥ ९५ ॥

व्याकरणं—निर्दिष्टां = निर् + दिश (अतिसर्जने—अकारेत्) + क्तः, कर्मणि क्तप्रत्ययः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वं ष्टुत्वं कित्वाद् गुणाभावष्टाप् अमि रूपम् । पर्णशालाम् = पर्णशाला + अम्, अत्राध्यासनक्रियाया आधारस्य पर्णशालाशब्दस्य "अधिशीङ्स्थाऽऽसां कर्म" इति कर्मत्वे "कर्मणि द्वितीया" इति द्वितीया । प्रयतः + प्र + यस (उपरमे—अकारेत्) + क्तः, "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्त्तरि क्तप्रत्ययः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः सौ रूपम् । परिग्रहः = परि + ग्रह (उपादाने—अकारेत्) + अप्, "ग्रहवृदृनिश्चिगमश्च" इत्यप् प्रत्ययः सौ रूपम् । द्वितीयः = द्वि + तीयः, "द्वेस्तीयः" इति तीयप्रत्ययः । निवेदितं = नि + विद (ज्ञाने-अकारेत्) + णिच् + क्तः, धातोर्णिचि लघूपधगुणे ततः पुनः "स-

नाद्यन्ता धातवः” इति धातुसंज्ञा ततः क्तप्रत्यये वलादिलक्षण इडागमे “निष्ठायां सेटि” इति णेर्लोपे सोरमादेशे रूपम् । अवसानम् = अव + षो (अन्तकर्मणि) + ल्युट्, “ल्युट् च” इति ल्युट् प्रत्ययो योरनादेशः “आदेच उपदेशेऽशिति” इत्यात्वं सोरमादेशे रूपम् । संविष्टः = सम् + विश (प्रवेशने—अकारेत्) + क्तः, भावे क्तप्रत्ययः कित्वाद् गुणाभावः शत्य षत्वं-ष्टुत्वं च सौ रूपम् । शयनं = शीङ् (स्वप्ने—ङित्) + ल्युट्, “ल्युट् च” इत्यधिकरणे ल्युट् प्रत्ययो योरनादेशे धातोर्गुणोऽयादेशश्च सोरमादेशे रूपम् । निनाय = णीञ् (प्रापणे—ञित्) + लिट्, धात्वादेर्णस्य नत्वे लिटस्तिपो णलादेशे धातोर्द्वित्वेऽभ्यासकार्ये “अचो ञ्णिति” इति वृद्धिरायादेशः ॥ ९५ ॥

वाच्यान्तरं—तेन कुलपतिना निर्दिष्टां पर्णशालामध्यास्य प्रयतपरिगृहद्वितीयेन कुशशयने निविष्टेन “सता” तच्छिष्याध्ययननिवेदितावसाना निशा निन्ये ॥९५॥

कोशः—“कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम्” इति मेदिनी । “सजातीयैः कुलम्” इति चामरः । “स्वामी, त्वीश्वरः पतिरीशिता । अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः” इत्यमरः । “मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः” इति ग्रन्थान्तरम् । “मुनीनां तु, पर्णशालोटजोऽस्त्रियाम्” इत्यमरः । “पवित्रः प्रयतः पूतः” इत्यमरः । “पत्नीपरिजनादानमूलशापाः परिग्रहाः” इति । “परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे” इति चामरमेदिन्यौ । “द्वितीया तिथिगेहिन्योर्द्वितीयः पूरणो द्वयोः” इति हेमचन्द्रः । “छात्रान्तेवासिनौ शिष्ये” इति । “सातिस्त्ववसाने स्याद्” इति । “स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि” इति । “शयनं सुरते निद्राशय्ययोश्च नपुंसकम्” इति । ‘अस्त्री कुशं कुथो दर्भः” इति । “अथ शर्वरी । निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा” इति चामरः ॥ ९५ ॥

तात्पर्यार्थः—स राजा दिलीपः कुलपतिना “सजातीयमुनिगणस्वामिना वशिष्ठेनादिष्टायां-पर्णशालायामधिवासं कृत्वा वंशचरित्रादिना शुद्धया पत्न्या सुदक्षिणया सह कुशनिर्मितशय्यायां सुप्तो वशिष्ठछात्राणां श्रुतेरध्ययनेन संसूचिततुर्ययामां रात्रिं यापयामास ॥ ९५ ॥

भाषार्थः—उन राजा दिलीप ने कुलपति “दश सहस्र मुनियों को अन्नादि देकर वेद पढ़ाने वाले ब्रह्मर्षि वशिष्ठ जी” की बताई हुई पर्णकुटी “पत्तों से बनी हुई कुटी” में निवास करके “वंश आदि से” शुद्ध धर्मपत्नी सुदक्षिणा के साथ कुशों से बनी हुई शय्या पर सोये हुये, वशिष्ठजी के विद्यार्थियों के वेदाध्ययन करने से ज्ञात होगया है प्रातः काल का होना जिसका ऐसी रात को बिताई ॥ ९५ ॥

इत्थं श्री व्रजमोहनात्मजनुषा गोस्वामिविद्वद्वर-
श्रीदामोदरशास्त्रिशिष्यपदवीभाजाऽच्युतानुग्रहाद् ।
श्रीब्रह्मान्वितशङ्करेण विहिता व्याख्या सुधाऽऽख्या नवा
पूर्त्तिं श्रीरघुवंशनामकमहाकाव्याद्यसर्गेऽभ्यगाद् ॥ १ ॥

इति श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिणामन्तेवासिना मिश्रोपाह्वसरयूपारीणपङ्क्तिपावनान्ववायावतंसविविधकलाकोविदश्रौतस्मार्त्तकर्मनिष्ठगौतमगोत्रोद्भवश्रीव्रजमोहनशर्मतनुजन्मना श्रीब्रह्मशङ्करशर्मणा कृतया सुधाऽऽख्यया व्याख्ययाऽन्वितः श्रीमहाकविकालिदासकृतौ श्रीरघुवंशमहाकाव्ये दिलीपस्य वशिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः समाप्तः ।

# अथ द्वितीयः सर्गः ।

आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि ! त्वाम् ॥

*अथ निशानयनानन्तरं प्रभाते दिलीपस्य वशिष्ठाज्ञया वनं गन्तुं धेनुमोचनमाह—*

**अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।**
**वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥**

सञ्जीविनी—अथेति । अथ निशानयनानन्तरं यशोधनः प्रजानामधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहयित्र्या प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या । तां तथोक्ताम् । पीतं पानमस्यास्तीति पीतः । पीतवानित्यर्थः । "अर्शआदिभ्योऽच्" इत्यच्प्रत्ययः । "पीता गावो भुक्ता ब्राह्मणाः" इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धो वत्सो यस्यास्तामृषेर्धेनुं वनाय वनं गन्तुम् । "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इत्यनेन चतुर्थी । मुमोच मुक्तवान् । जायापदसामर्थ्यात्सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसन्धेयम् । तथाहि श्रुतिः-(पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः ॥) इति । यशोधन इत्यनेन पुत्रवत्ताकीर्तिलोभाद्राजानहं गोरक्षणे प्रवृत्त इति गम्यते । अस्मिन्सर्गे वृत्तमुपजातिः-(अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः) इति ॥ १ ॥

अन्वयः—अथ, यशोधनः, प्रजानाम्, अधिपः, प्रभाते, जायाप्रतिग्राहितगन्धमाल्याम्, पीतप्रतिबद्धवत्साम्, ऋषेः, धेनुं, वनाय, मुमोच ॥ १ ॥

व्याख्या—अथ = रात्र्यपगमानन्तरं, यशोधनः = कीर्तिवित्तः, अतिकीर्त्तिशालीत्यर्थः । प्रजानां = जनानाम्, अधिपः = प्रभुः, दिलीप इत्यर्थः । प्रभाते = प्रत्यूषे, प्रातःकाल इत्यर्थः । जायाप्रतिग्राहितगन्धमाल्याम् = भार्यासुदक्षिणास्वीकारितचन्दनपुष्पमालाम्, पीतप्रतिबद्धवत्सां = पयःपानानन्तरनिबद्धतर्णकाम्, ऋषेः = सत्यवचसः, वशिष्ठस्येत्यर्थः । धेनुं = नवसूतिकां गां, कामधेनुसुतां नन्दिनीनामिकां गामित्यर्थः । वनाय = वनं गन्तुं, विपिनगमनायेत्यर्थः । मुमोच = मुक्तवान्, अथ प्रातः काले दिलीपः सुदक्षिणापूजितां वसिष्ठधेनुं वनं गन्तुं मुक्तवानित्यर्थः ॥ १ ॥

समासादि—यश एव धनं यस्यासौ यशोधनः (ब० व्री०) । प्रकर्षेण जायन्त इति प्रजास्तासां प्रजानाम् (स्त्री०) । अध्यधिकं पातीत्यधिपः (पुं०) । भातुं प्रवृत्तम् प्रभातं तस्मिन् प्रभाते (न० लिं०) । मल्यतेऽदो माल्यम् (न० लिं०) । गन्धश्च माल्यञ्च गन्धमाल्ये (द्वन्द्वः), जायतेऽस्यामिति जाया (स्त्री०), तया प्रतिग्राहिते जायाप्रतिग्राहिते (त० पु०), जायाप्रतिग्राहिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तां जायाप्रतिग्राहितगन्धमाल्यां (ब० व्री०) । पीतं पानमस्यास्तीति पीतः (पुं०), पूर्वं पीतः पश्चात् प्रतिबद्धः पीतप्रतिबद्धः (त० पु०), पीतप्रतिबद्धो वत्सो यस्याः सा पीतप्रतिबद्धवत्सा तां पीतप्रतिबद्धवत्सां (ब० व्री०) । धीयते सुतैरिति धेनुस्तां धेनुम् (स्त्री०) ॥ १ ॥

व्याकरण—यशोधनः = बहुव्रीहिसमासः । प्रजानाम् = प्र + जनी (प्रादुर्भावे–ईदित्) + डः + टाप्, "उपसर्गे च संज्ञायाम्" इति डप्रत्ययष्टिलोपष्टाप् सम्बन्धे षष्ठी, आमि रूपम् । अधिपः = अधि + पा (रक्षणे) + कः, "आतश्चोपसर्गे" इति कप्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपः सौ रूपम् । प्रभाते = प्र + भा (दीप्तौ) + क्तः, "आदिकर्मणि क्तः कर्त्तरि च" इत्यादिकर्मणि क्तप्रत्ययो ङिरूपम् । जाया = जनी (प्रादुर्भावे—ईदित्) + यक् +

टाप्, "जनेर्यक्" इत्यौणादिको यक् प्रत्ययः "ये विभाषा" इत्यात्वं टाप् सोर्हल्ङ्यादिलोपः। प्रतिग्राहिते = प्रति + ग्रह (उपादाने—अकारेत्) + णिच् + क्तः, धातोर्णिचि "अत उपधायाः" इत्युपधावृद्धिः "सनाद्यन्ता धातवः" इति धातुत्वात् क्तप्रत्यये वलादिलक्षण इडागमे "निष्ठायां सेटि" इति णेर्लोप औ रूपम्। माल्यम् = मल (धारणे—अकारेत्) + ण्यत्, "ऋहलोर्ण्यत्" इति ण्यत् प्रत्ययो णित्वादुपधावृद्धिः सोरमादेशे रूपम्। वनाय = वन + ङे, "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी। पीतः = पा (पाने) + क्तः + अच्, कर्मणि क्तप्रत्ययः कित्वाद् "घुमास्थागापाजहातिसां हलि" इति धातोराकारस्येत्वम् "अर्शआदिभ्योऽच्" इत्यच् प्रत्ययः सौ रूपम्। प्रतिबद्धः = प्रति + बन्ध (बन्धने—अकारेत्) + क्तः, कित्वाद्, "अनिदितां हल उपधायाः क्ङिति" इत्युपधानकारलोपः "झषस्तथोर्धोऽधः" इति तकारस्य धत्वं ततो जश्त्वेन दः सौ रूपम्। धेनुं = धेट् (पाने–टित्) + नुः, "धेट इच्च" इत्यौणादिको नु प्रत्ययो धातोरित्त्वं तेन "आदेच उपदेशेऽशिति" इत्यात्वाभावो गुणेऽमि रूपम्। मुमोच = मुच्लृ (मोक्षणे—लृदित्) + लिट्, तस्य तिपो णलादेशो धातोर्द्वित्वेऽभ्यासकार्ये "पुगन्तलघूपधस्य च" इत्युपधागुणः ॥ १ ॥

वाच्यान्तरम्—अथ प्रभाते यशोधनेन प्रजानामधिपेन जायाप्रतिग्राहितगन्धमाल्या पीतप्रतिबद्धवत्सा, ऋषेर्धेनुर्वनाय मुमुचे ॥ १ ॥

कोशः—"मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इति। "प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि। प्रभातञ्च" इति। "प्रजा स्यात् सन्ततौ जने" इति। "स्वामी, त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इति। भार्या जायाऽथ पुंभूम्नि दाराः स्याद्" इति। "माल्यं मालास्रजौ मूर्ध्नि" इति। "अटव्यरण्यं विपिनं गहनं काननं वनम्" इति। "वत्सौ तर्णकवर्षौ द्वौ" इति। "शकृत्करिस्तु वत्सः स्याद्" इति सर्वत्राप्यमरः। "पोडन् षड्दशनो वत्सः" इति कोशान्तरम्। "यशः कीर्तिः समज्ञा च" इति। "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इति। "धेनुः स्यान्नवसूतिका" इति। "ऋषयः सत्यवचसः" इति चामरः ॥ १ ॥

तात्पर्यार्थः—निशाऽवसानानन्तरं प्रातः काले प्रजापालको यशस्विमुख्यो राजा दिलीपो राज्ञ्या सुदक्षिणया गन्धमाल्यादिभिः साधु सम्पूज्य, वत्समपि यथेच्छं क्षीरं पाययित्वा ततस्तं बद्ध्वा च, वने स्वच्छन्दं विचरणार्थं वशिष्ठस्य धेनुं नन्दिनीनाम्नीममुचत् ॥ १ ॥

भाषाऽर्थः—रात के बीत जाने पर प्रातःकाल प्रजाओं के पालन करने वाले यश को ही धन समझने वाले राजा दिलीप ने रानी सुदक्षिणा के द्वारा पूजन करने में प्राप्त चन्दन और पुष्पों की माला को धारण की हुई दूध पी चुकने के बाद जिसका बछड़ा बांध दिया गया है, ऐसी ऋषि वशिष्ठ की नई ब्याई हुई नन्दिनी नाम की गौ को जंगल में चराने के लिये खोल दिया ॥ १ ॥

*गोचारणाय वनं जिगमिषोर्दिलीपस्य पश्चात् सुदक्षिणाया अनुगमनमाह—*

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥

सञ्जीविनी—तस्या इति। पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः। 'स्वैरिणी पांसुला' इत्यमरः। "सिध्मादिभ्यश्च" इति लच्प्रत्ययः। अपांसुलानां पतिव्रतानां धुर्यग्रे कीर्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी। खुरन्यासैः पवित्राः पांसवो यस्य तम्। 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः। तस्या धेनोर्मार्गम्। स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदवाक्यस्यार्थमभिधेयमिव। अन्वगच्छदनुसृतवती च। यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा साऽपि गोखुरक्षुण्णमेव मार्गमनुससारेत्यर्थः। धर्मपत्नीत्यत्राश्ववासादिवत्तादर्थ्ये

षष्ठीसमासः प्रकृतिविकाराभावात्। पांसुलपथप्रवृत्तावप्यपांसुलानामिति विरोधालंकारो-ध्वन्यते ॥ २ ॥

अन्वयः—अपांसुलानां, धुरि, कीर्त्तनीया, मनुष्येश्वरधर्मपत्नी, खुरन्यासपवित्रपांसुं, तस्याः, मार्गं, स्मृतिः, श्रुतेः, अर्थम्, इव, अन्वगच्छत् ॥ २ ॥

व्याख्या—अपांसुलानाम् = अस्वैरिणीनां, पतिव्रतानामित्यर्थः। धुरि = अग्रे, कीर्त्तनीया = परिसङ्ख्याऽनीया, परिगणनीयेति यावत्। सर्वासां पतिव्रतानामग्रगण्येति भावः। मनुष्येश्वरधर्मपत्नी = नरपतिपाणिगृहीती, दिलीपपत्नी सुदक्षिणेत्यर्थः। खुरन्यासपवित्रपांसुं = शफविक्षेपपूतरेणुं, तस्याः = पूर्वोक्तायाः, वनं गच्छन्त्या नन्दिन्या इति भावः। मार्गं = पन्थानं, स्मृतिः = धर्मसंहिता, मनुप्रभृतिभिर्वेदार्थस्मरणपूर्वकं रचिता मन्वादिस्मृतिरिति यावद्। श्रुतेः = वेदस्य, वेदवाक्यस्येत्यर्थः। अर्थम् = अभिधेयम्; इव = यथा, अन्वगच्छद् = अनुययौ, अनुसरणं कृतवतीति यावद् ॥ २ ॥

समासादि—खुरन्ति विलिखन्ति क्ष्मामिति खुराः (पुं०), न्यसनानि न्यासाः (पुं०), पुनन्तीति पवित्राः (पुं०), पंसन्तीति पांसवः (पुं०), खुराणां न्यासाः खुरन्यासाः (त० पु०), तैः खुरन्यासैः पवित्राः खुरन्यासपवित्राः (त० पु०), खुरन्यासपवित्राः पांसवो यस्य स खुरन्यासपवित्रपांसुस्तं खुरन्यासपवित्रपांसुम् (ब० व्री०)। पांसवः पापानि सन्त्यासामिति पांसुलाः (स्त्री०), न पांसुला इत्यपांसुलास्तासामपांसुलानाम् (न० त० पु०)। कीर्त्तयितुं योग्या कीर्त्तनीया (स्त्री०)। मृज्यते वितृणीक्रियते पादैरिति मार्गः (पुं०) तं मार्गम्। मनोरपत्यानि पुमांसो मनुष्याः (पुं०), इष्ट इतीश्वरः (पुं०), धरति विश्वमिति धर्मः (पुं०), पत्युर्यज्ञे संयोगो यथा, दम्पत्योः सहाधिकारात् सा पत्नी (स्त्री०), धर्मस्य पत्नी धर्मपत्नी (त० पु०), मनुष्येष्वीश्वरो मनुष्येश्वरः (त० पु०), तस्य धर्मपत्नी मनुष्येश्वरधर्मपत्नी (त० पु०)। श्रूयते धर्मोऽनयेति श्रुतिः (स्त्री०), तस्याः श्रुतेः। स्मरणं वेदवाक्यार्थस्येति स्मृतिः (स्त्री०) ॥ २ ॥

व्याकरणं—न्यासाः = नि + असु (क्षेपणे–उदित्) + घञ्, "भावे" इति घञ् प्रत्ययः "अत उपधायाः" इत्युपधावृद्धिर्जसि रूपम्। पवित्राः = पूञ् (पवने–ञित्) + इत्रः, "अशित्रादिभ्य इत्रोत्रौ" इत्यौणादिक इत्रप्रत्ययो धातोर्गुणावादेशौ जसि रूपम्। पांशवः = पशि (नाशने—इदित्) + उण्, इदित्वान्नुमागमे "अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च" इत्यौणादिक उण् प्रत्ययो धात्वादेर्दीर्घत्वं च निपातनाज्जसि रूपम्। "तालव्या अपि दन्त्याश्च शंबशूकरपांशवः" इति शभेदात् "पांसुः" दन्त्यान्तश्चेति चाप्यत्रावधेयम्। पांसुलाः = पांसु + लच् + टाप्, "सिध्मादिभ्यश्च" इति लच्प्रत्ययष्टाप् जसि रूपम्। अपांसुलानां = नञ् + पांसुला, नञ्समासत्वाद् "नलोपो नञः" इति नञो नकारलोप आमि रूपम्। कीर्त्तनीया = कॄत (संशब्दने—अकारेत्) + णिच् + अनीयर् + टाप्, "उपधायाश्च" इतीत्वं रपरत्वम् "उपधायां च" इति दीर्घः "तव्यत्तव्यानीयरः" इत्यनीयर् प्रत्ययः कर्मणि टाप् सोर्लुक्। मनुष्याः = मनु + यत्, "मनोर्जातावञ्यतौ षुक् च" इति यत् प्रत्ययः षुगागमो जसि रूपम्। ईश्वरः = ईश (ऐश्वर्ये—अकारेत्) + वरच्, "स्थेशभासपिसकसो वरच्" इति वरच् प्रत्ययः सौ रूपम्। अन्वगच्छद् = अनु + अट् + गम्लृ (गतौ—ऌदित्) + लङ्, धातोर्लङि तिपि शपि "इषुगमियमां छः" इति धातोश्छकारान्तादेशस्तुगागमे धातोरडागमे रूपम् ॥ २ ॥

वाच्यान्तरम्—अपांसुलानां धुरि कीर्त्तनीयया मनुष्येश्वरधर्मपत्न्या खुरन्यासपवित्रपांसुस्तस्या मार्गः स्मृत्या श्रुतेरर्थ इवान्वगम्यत ॥ २ ॥

कोशः—"शफं क्लीबे खुरः पुमान्" इति। "पवित्रः प्रयतः पूतः" इति। "रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः" इति। "पुंश्चली चर्षणी बन्धक्यसती कुलटेत्वरी। स्वैरिणी

-पांशुला च स्याद्" इति। "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इति। "मनुष्या-मानुषा मर्त्या मनुजा मानवा नराः" इति। "स्वामी, त्वीश्वरः पतिरीशिता" इति। "धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः" इति। "पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी। भार्या जायाऽथ पुंभूम्नि, दाराः स्याद्" इति। "श्रुतिः स्त्री वेद आम्नायः" इति। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति। "स्मृतिस्तु धर्मसंहिता" इति सर्वत्राप्यमरः ॥२॥

तात्पर्यार्थः—सकलपतिव्रताऽग्रगण्या दिलीपपत्नी सुदक्षिणा यथा मन्वादिस्मृतिर्वेदवाक्यस्यार्थमनुसरति तथैव नन्दिनीखुरक्षुण्णमार्गमनुसृतवतीति भावः ॥ २ ॥

भाषाऽर्थः—पतिव्रताओं में सर्वप्रथम गिनी जाने वाली राजा दिलीप की पत्नी सुदक्षिणा ने नन्दिनी के खुरों के रखने से पवित्र धूलि वाले मार्ग का, उसी भांति अनुसरण किया कि जैसे मन्वादि स्मृतियां वेद के वाक्यों के अर्थों का अनुसरण करती हैं ॥ २ ॥

*अनुगच्छन्त्याः सुदक्षिणाया दिलीपकर्तृकपरावर्त्तनमाह*—

**निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः।**
**पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥**

सञ्जीविनी—निवर्त्येति। दयालुः कारुणिकः। 'स्याद्दयालुः कारुणिकः' इत्यमरः। "स्पृहिगृहि०" इत्यादिनाऽऽलुच्प्रत्ययः। यशोभिः सुरभिर्मनोज्ञः। 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः। राजा तां दयितां निवर्त्य सौरभेयीं कामधेनुसुतां नन्दिनीम्। धरन्तीति धराः। पचाद्यच्। पयसां धराः पयोधराः स्तनाः। 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। अपयोधराः पयोधराः संपद्यमानाः पयोधरीभूताः। अभूततद्भावे च्विः। "कुगतिप्रादयः" इति समासः। पयोधरीभूताश्चत्वारः समुद्रा यस्यास्ताम्। "अनेकमन्यपदार्थे" इत्यनेकपदार्थग्रहणसामर्थ्यात्त्रिपदो बहुव्रीहिः। गोरूपधरामुर्वीमिव जुगोप ररक्ष। भूरक्षणप्रयत्नेनेव ररक्षेति भावः। धेनुपक्षे-पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्रा यस्याः सा तथोक्ताम्। दुग्धतिरस्कृतसागरामित्यर्थः ॥ ३ ॥

अन्वयः—दयालुः, यशोभिः, सुरभिः, राजा, तां, दयितां, निवर्त्य, सौरभेयीं, पयोधरीभूतचतुःसमुद्रां, गोरूपधराम्, उर्वीम्, इव, जुगोप ॥ ३ ॥

व्याख्या—दयालुः = कारुणिकः, दीनजनरक्षणशील इति भावः। यशोभिः = कीर्त्तिभिः, सुरभिः = मनोज्ञः, परमकीर्त्तिशालीति यावद्। राजा = नृपः, दिलीप इत्यर्थः। तां = पूर्वोक्ताम्, अनुगामिनीमिति भावः। दयितां = वल्लभां, सुदक्षिणामित्यर्थः। निवर्त्य = परावर्त्य, सौरभेयीं = कामधेनुसुतां, नन्दिनीमिति यावत्। पयोधरीभूतचतुःसमुद्राम् = ऊधोभूतोदधिचतुष्टयां, "धेनुपक्षे" दुग्धतिरस्कृतचतुःसागरां, गोरूपधरां = सौरभेयीस्वभावधारिणीं, गोमूर्त्तिं दधानामिति यावद्। उर्वीं = पृथ्वीम्, इव = यथा, जुगोप = पालयामास, पृथ्वीपालनसमेन प्रयत्नेन रक्षणतत्परोऽभूदिति भावः ॥ ३ ॥

समासादि—निवर्त्तयित्वेति निवर्त्य (अ०)। राजते शोभत इति राजा (पुं०)। दय्यतेऽस्मेति दयिता (स्त्री०) तां दयिताम्। दयाशीलो दयालुः (पुं०)। सुरभेरपत्यं स्त्री चेत् सौरभेयी तां सौरभेयीम् (स्त्री०)। "भूमिपक्षे" धरन्तीति धराः (पुं०), पयसां धराः पयोधराः (त०पु०), न पयोधरा अपयोधरा अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः (त०पु०), पयोधरीभूताश्चत्वारः समुद्रा यस्याः सा पयोधरीभूतचतुःसमुद्रा तां पयोधरीभूतचतुःसमुद्रां (ब० स्त्री०)। "गोपक्षे" न अधरा अनधरा अनधरा अधराः सम्पद्यमाना अधरीभूताः (त०पु०), पयसाऽधरीभूताः पयोऽधरीभूताः (त० पु०) पयोऽधरीभूताश्चत्वारः समुद्रा यस्याः सा, तां तथोक्ताम्। धरति या सा धरा (स्त्री०), गच्छतीति गौः (स्त्री०), तस्या रूपं गोरूपं (त० पु०), गोरूपस्य धरा गोरूपधरा तां गोरूपधराम् (त० पु०)। ऊर्णोतीत्युर्वी तामुर्वीम् (स्त्री०) ॥३॥

व्याकरणं—निवर्त्य=नि+वृतु (वर्तने—उदित्)+णिच्+क्त्वा+ल्यप्, "हेतुमति च" इति धातोर्णिचि लघूपधलक्षणे गुणे रपरे "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति क्त्वाप्रत्ययस्य ल्यबादेशः "णेरनिटि" इति णेर्लोपे "क्त्वातोसुन्कसुनः" इत्यव्ययत्वात्सुपो लुकि रूपम्। दयितां=दय (दानगतिरक्षणहिंसाऽऽदानेषु—अकारेत्)+क्तः, "निष्ठा" इति क्तप्रत्ययो वलादिलक्षण इडागमष्टाप् अमि रूपम्। दयालुः=दया+आलुच्, "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" इत्यालुच् प्रत्ययः सौ रूपम्। सौरभेयीं=सुरभि+ढक्+ङीप्, "स्त्रीभ्यो ढक्" इति ढक्प्रत्ययः "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति ढस्य एयादेशः "यस्येति च" इतीकारलोपः "किति च" इत्यादिवृद्धिः "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति ङीप् अमि रूपम्। धराः=धृञ् (धारणे—ञित्)+अच्, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यच्प्रत्ययो धातोर्गुणो रपरश्च जसि रूपम्। पयोधरीभूताः=पयोधर+च्वि+भूत, "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" इति भुवो योगे च्विप्रत्ययः स्वार्थे ततः "अस्य च्वौ" इतीत्वम् "ऊर्यादिच्विडाचश्च" इति गतिसंज्ञा "कुगतिप्रादयः" इति समासे समासत्वात्प्रातिपदिकसंज्ञा जसि रूपम्। एवमेव धेनुपक्षे—"अधरीभूताः" इत्यत्रापि रूपसिद्धिर्बोध्या। जुगोप=गुपू (रक्षणे—ऊदित्)+लिट्, "आयादय आर्धधातुके वा" इति वैकल्पिकपक्षे लिटस्तिपो णलादेशे धातोर्द्वित्वेऽभ्यासकार्ये "कुहोश्चुः" इति चुत्वे लघूपधलक्षणे गुणे रूपसिद्धिः ॥ ३ ॥

वाच्यान्तरं—दयालुना यशोभिः सुरभिणा राज्ञा दयितां निवर्त्य सा सौरभेयी पयोधरीभूतचतुःसमुद्रा गोरूपधरोर्वीव जुगुपे ॥ ३ ॥

कोशः—"राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति। "अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इति। "स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः" इति। "माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी स्यात्" इति सर्वत्राप्यमरः। "सुरभिः स्यान्मनोज्ञेऽपि" इति विश्वः। "यशः कीर्त्तिः समज्ञा च" इति। "स्त्री स्तनाब्दौ पयोधरौ" इति। "दुग्धं क्षीरं पयः समम्" इति। "अधस्तादपि चाधरः" इति सर्वत्राप्यमरः। "अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्" इति च मेदिनी। "समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः। उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः" इत्यमरः। "रूपन्तु श्लोकशब्दयोः। पशावाकारे सौन्दर्ये नाणके नाटकादिके। ग्रन्थावृत्तौ स्वभावे च" इति हैमः। "वसुधोर्वी वसुन्धरा" इत्यमरः ॥ ३ ॥

तात्पर्यार्थः—परमः कृपालुर्नृपो दिलीपः प्रकृतिसुकुमाराङ्गीं क्लेशासहां सुदक्षिणां तपोवनसीमाप्रदेशात्परावर्त्य नन्दिनीव्याजेन साक्षादुपस्थितायाः समुद्रसदृशैश्चतुर्भिः स्तनैरुपलक्षितायाः क्षितेरिव तस्याः पालनतत्परोऽभूत् ॥ ३ ॥

भाषाऽर्थः—दया से युक्त कीर्त्तियों से सुशोभित राजा दिलीप प्यारी पटरानी सुदक्षिणा को लौटा कर जिसके दूध से चारों समुद्र तिरस्कृत है ऐसी उस नन्दिनी की, चार समुद्रों को चार स्तनों के रूप में धारण की हुई गौ के रूप में उपस्थित पृथ्वी की भाँति रक्षा करने लगे ॥३॥

*सुदक्षिणापरावर्त्तनानन्तरं स्वानुचरवर्गस्यापि दिलीपकर्तृकपरावर्तनमाह—*

**व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः।**
**न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥**

सञ्जीविनी—व्रतायेति। व्रताय धेनोरनुचरेण। न तु जीवनायेति भावः। तेन दिलीपेन शेषोऽवशिष्टोऽप्यनुयायिवर्गोऽनुचरवर्गो न्यषेधि निवर्तितः। शेषत्वं सुदक्षिणाऽपेक्षया। कथं तर्ह्यात्मरक्षणमत आह—न चेति। तस्य दिलीपस्य शरीररक्षा चान्यतः पुरुषान्तरान्न। कुतः। हि यस्मात्कारणान्मनोः। प्रसूयत इति प्रसूतिः संततिः स्ववीर्यगुप्ता स्ववीर्येणैव रक्षिता।

नहि स्वनिर्वाहकस्य परापेक्षेति भावः ॥ ४ ॥

अन्वयः—व्रताय, धेनोः, अनुचरेण, तेन, शेषः, अपि, अनुयायिवर्गः, न्यषेधि, तस्य, शरीररक्षा, च, अन्यतः, न, हि, मनोः, प्रसूतिः, स्ववीर्यगुप्ता, "भवति" ॥ ४ ॥

व्याख्या—व्रताय = नियमाय, नन्दिनीपरिचर्याऽऽत्मकं व्रतं कर्तुमिति यावद् । धेनोः = गोः, नवसूतिकाया नन्दिन्या इति यावद् । अनुचरेण = सहायेन, सेवकेनेत्यर्थः । व्रतमपेक्ष्य गोरक्षणे तत्परेण न तु स्वजीवनार्थमिति भावः । तेन = पूर्वोक्तेन, दिलीपेनेति यावद् । शेषः = अवशिष्टः, अपि = समुच्चये, अनुयायिवर्गः = अनुचरसङ्घः, न्यषेधि = निषेधितः, निवर्त्तित इति यावत् । तस्य = पूर्वोक्तस्य, दिलीपस्येति यावद् । शरीररक्षा = गात्ररक्षणं, च = अन्वाचये, अन्यतः = अन्यस्मात्, पुरुषान्तरादिति यावद् । न = नहि, भवतीति शेषः । हि = यतः, मनोः = वैवस्वताख्यमनोः, प्रसूतिः = सन्ततिः, मनुवंशोद्भवराजवृन्दमिति भावः । स्ववीर्यगुप्ता = आत्मपराक्रमरक्षिता, भवतीति शेषः ॥ ४ ॥

समासादि—व्रियत इति व्रतम् (न० लिं०) तस्मै व्रताय । अनु पश्चाच्चरतीत्यनुचरः (पुं०) तेनानुचरेण । धीयतेऽसौ धेनुः (स्त्री०) तस्या धेनोः । शिष्यतेऽसौ शेषः (पुं०) । वृज्यत इति वर्गः (पुं०) । अनु पश्चाद् यातुं शीलमेषान्तेऽनुयायिनः (पुं०), तेषां वर्गोऽनुयायिवर्गः (त० पु०) । अन्यस्मादित्यन्यतः (अ०) । शीर्यतेऽदः शरीरं (न० लिं०), रक्षणं रक्षा (स्त्री०), शरीरस्य रक्षा शरीररक्षा (त० पु०) । मन्यत इति मनुः (पुं०) तस्य मनोः । प्रसूयत इति प्रसूतिः (स्त्री०) । स्वस्य वीर्य स्ववीर्यं (त० पु०), तेन गुप्ता स्ववीर्यगुप्ता (त० पु०) ॥ ४ ॥

व्याकरणं—व्रताय = वृञ् (वरणे–ञित्) + अतच्, "पृषिरञ्जिभ्यां कित्" इत्यौणादिकोऽतच् प्रत्ययः स च किद्, अत्र बाहुलकाद् वृञ्वृङ्भ्यामपि भवति, कित्वाद् गुणाभावस्ततो यणादेशे ङेरूपम्, अत्र "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति सम्प्रदानसंज्ञा ततः सम्प्रदाने चतुर्थी । न्यषेधि = नि + षिध (गत्याम्—अकारेत्) + लुङ्, धात्वादेः षः सः, "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि लुङ् तस्य च "भावकर्मणोः" इति तङि तादेशे ततोऽडागमे च्लौ "चिण् भावकर्मणोः" इति च्लेश्चिणादेशे "चिणो लुक्" इति तप्रत्ययस्य लुकि "प्राक् सितादड्व्यवायेऽपि" इति धात्वादेः सस्य षत्वमुपधागुणे रूपसिद्धिः । शेषः = शिष्लृ (विशेषणे—लृदित्) + घञ्, "भावे" इति घञ् प्रत्ययः "अकर्तरि च कारके संज्ञायाम्" इति कर्मार्थत्वस्वीकारात् कर्मणि, तत उपधागुणः सौ रूपम् । अनुयायिनाम् + अनु + या (प्रापणे) + णिनिः, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिर्णित्वाद् "आतो युक् चिण्कृतोः" इति युगागम आमि रूपम् । वर्गः = वृजी (वर्जने—ईदित्) + घञ्, "अकर्तरि च कारके संज्ञायाम्" इति घञ् प्रत्यय उपधागुणः "चजोः कु घिण्यतोः" इति कुत्वेन जस्य गः सौ रूपम् । अन्यतः = अन्य + तसिल्, "पञ्चम्यास्तसिल्" इति तसिल् प्रत्ययः "तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वात् सुपो लुक् । शरीरं = शॄ (विशरणे) + ईरन्, "कॄशॄपॄकटिपटिशौटिभ्य ईरन्" इत्यौणादिक ईरन् प्रत्ययो धातोर्गुणो रपरश्च ततः सोरमादेशे पूर्वरूपम् । रक्षा = रक्ष (पालने–अकारेत्) + अः + टाप्, "गुरोश्च हलः" इत्यप्रत्ययस्ततष्टाप् सोर्हल्ङ्याब्भ्यो दिलोपे रूपसिद्धिः । गुप्ता = गुपू (रक्षणे—ऊदित्) + क्तः + टाप्, कर्मणि "निष्ठा" इति क्तप्रत्ययः कित्वाद् गुणाभावः "यस्य विभाषा" इतीडभावष्टाप् सौ रूपम् । मनोः = मन (ज्ञाने–अकारेत्) + उः, "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" इत्यौणादिक उप्रत्ययो ङसो रूपम् । प्रसूतिः = प्र + पूङ् (प्राणिप्रसवे—ङित्) + क्तिन्, "स्त्रियाम्" इति क्तिन् प्रत्ययो बाहुलकात्कर्मणि धात्वादेः षः सः कित्वाद् गुणाभावः "तितुत्रतथसिसुसरकसेषु च" इतीडभावः सौ रूपम् ॥ ४ ॥

वाच्यान्तरं—व्रताय धेनोरनुचरः स शेषमप्यनुयायिवर्गं न्यषेधीदन्यतश्च न तस्य शरीर-

रक्षया "भूयते" हि मनोः प्रसूत्या स्ववीर्यगुप्तया "भूयते" ॥ ४ ॥

कोशः—"नियमो व्रतमस्त्री"इति । "अनुप्लवः सहायश्चानुचरोऽभिसरः समाः" इति । "धेनुः स्यान्नवसूतिका" इति सर्वत्राप्यमरः । "धेनुर्गोमात्रके दोग्ध्र्याम्" इति हैमोऽपि । "शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपि च । शेषा निर्माल्यदाने स्यात्" इति हैमः । "वपुः संहननं गात्रं शरीरं वर्ष्म विग्रहः । कायो देहः क्लीबपुंसोः" इति । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इति सर्वत्राप्यमरः । "वीर्यं प्रभावे शुक्रे च तेजःसामर्थ्ययोरपि" इति मेदिनी । "प्रसूतिः प्रणवोत्पत्तिपुत्रेषु दुहितर्यपि" इत्यनेकार्थसङ्ग्रहः ॥ ४ ॥

तात्पर्यार्थः—नन्दिनीपरिचर्य्याऽऽत्मकव्रतपालनार्थं वनं नन्दिनीमनुगच्छन् राजा दिलीपः प्रथमं सुदक्षिणां निवर्त्त्य तदनन्तरमवशिष्टं स्वानुचरवृन्दमपि निजानुगमनाद् निषेधितवान्, ननु परिचारकगणं विना कथमात्मरक्षा भविष्यतीति वाच्यं, तन्न, वैवस्वतमनुवंश्यानां राज्ञां स्वकीयबाहुबलेनैव सर्वत्रात्मसंरक्षणाद्, अतः स्वशरीररक्षणे पुरुषान्तरस्यानावश्यकतामालक्ष्य स्वानुचरवर्गपरावर्त्तनमुचितमेव ॥ ४ ॥

भाषाऽर्थ —"सेवा रूप" व्रत "पालन करने" के लिये नन्दिनी की सेवा करने वाले "अत एव सेवक की भांति पीछे २ चलने वाले उन "राजा दिलीप" ने, "सुदक्षिणा" के लौटाने के बाद" बचे हुये अनुचर वर्ग को भी पीछे पीछे आने से रोका । उन "राजा दिलीप को शरीर की रक्षा करने के लिये दूसरे पुरुष की जरूरत नहीं थी । क्योंकि "वैवस्वत" मनु के वंश में उत्पन्न राजा लोग अपने ही पराक्रम से आत्मरक्षा कर लेते थे ॥४॥

*श्लोकद्वयेन दिलीपकर्तृकनन्दिनीपरिचर्य्याप्रकारमाह—*

**आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।**
**अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ।। ५ ।।**

सञ्जीविनी—आस्वादवद्भिरिति । सम्राण्मण्डलेश्वरः । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राड्' इत्यमरः । स राजा आस्वादवद्भी रसवद्भिः । स्वादयुक्तैरित्यर्थः । तृणानां कवलैर्ग्रासैः । "ग्रासस्तु कवलः पुमान्' इत्यमरः । कण्डूयनैः खर्जनैः । दंशानां वनमक्षिकाणां निवारणैः । 'दंशस्तु वनमक्षिका' इत्यमरः । अव्याहतैरप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च । तस्या धेन्वाः समाराधनतत्परः शुश्रूषाऽऽसक्तोऽभूत् । तदेव परं प्रधानं यस्येति तत्परः । 'तत्परे प्रसितासक्तौ' इत्यमरः ॥ ५ ॥

अन्वयः—सम्राट्, सः, आस्वादवद्भिः, तृणानां, कवलैः, कण्डूयनैः, दंशनिवारणैः, अव्याहतैः, स्वैरगतैः, च, तस्याः, समाराधनतत्परः, अभूत् ॥ ५ ॥

व्याख्या—सम्राड् = मण्डलेश्वरः, चक्रवर्त्तीति यावत् । सः = पूर्वोक्तः, राजा दिलीप इति यावद् । आस्वादवद्भिः = रसवद्भिः, स्वादयुक्तैरित्यर्थः । तृणानाम् = अर्जुनानां, घासानामिति भावः । कवलैः = ग्रासैः, स्वहस्तेन दत्तैरिति शेष । कण्डूयनैः = खर्जनैः, गात्रस्येति शेषः । दंशनिवारणैः = वनमक्षिकाऽपसारणैः, अव्याहतैः = अप्रतिहतैः, प्रतिबन्धरहितैरित्यर्थः । स्वैरगतैः = स्वच्छन्दगमनैः, च = समुच्चयार्थं, तस्याः = पूर्वोक्तायाः, नन्दिन्या इति यावत् । समाराधनतत्परः = सन्तोषणासक्तः, नन्दिनीपरिचर्य्यामेव प्राधान्येन स्वकीयं कर्त्तव्यं कर्म मन्यमानस्तत्तोषणे दत्तचेता इति भावः । अभूद् = बभूव ॥ ५ ॥

समासादि—आ समन्तात् स्वदनमित्यास्वादः (पुं०) स विद्यते येषु त आस्वादवन्तस्तैरास्वादवद्भिः (पुं०) । केन वलन्त इति कवलाः (पुं०) तैः कवलै । तृण्यन्त इति तृणानि तेषां तृणानाम् (न० लिं०)। कण्डूतय इति कण्डूयनानि तैः कण्डूयनैः (न० लिं०) । दशन्तीति दंशाः (पुं०), तेषां निवारणानि दंशनिवारणानि तैर्दंशनिवारणैः (त० पु०) । न व्याहतानीत्यव्याहतानि तैरव्याहतैः (न० त० पु०) । स्वेन स्वातन्त्र्येण, ईर्ते इति स्वैरः (पुं० ...)-

गतानि स्वैरगतानि तैः स्वैरगतैः (त०पु०)। सम्यक् प्रकारेण राजतीति सम्राट् (पुं०)। तदेक परं प्रधानं यस्य स तत्परः (ब० व्री०) समाराधने तत्परः समाराधनतत्परः (त० पु०) ॥९॥

व्याकरणम्—आस्वादः = आङ् + ष्वद (आस्वादने-अकारेत्) + घञ्, "भावे" इति घञ् प्रत्ययो ञित्वप्रयुक्तोपधावृद्धिर्धात्वादेः षः सः सौ रूपम्। आस्वादवद्भिः = आस्वाद + मतुप्, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् प्रत्ययः "झयः" इति मतुपो मस्य वो भिसि रूपम्। कवलैः = क + टा + वल (तृप्तौ-अकारेत्) + अच्, पचादित्वाद् नन्दिग्रहीत्यादिनाऽच् प्रत्ययः "उपपदमतिङ्" इत्युपपदसमासे समासत्वात् प्रातिपदिकसंज्ञा ततः सुपो लुकि पुनः कृदन्तत्वात्प्रातिपदिकत्वेन भिसि रूपम्। तृणानां = तृणु (अदने-उदित्) + घञ्, "अकर्तरि च कारके संज्ञायाम्" इति घञ् प्रत्ययः "संज्ञापूर्वको विधिरनित्यः" इति लघूपधलक्षणो न गुण आमि रूपम्। कण्डूयनैः = कण्डूञ् (गात्रविघर्षणे-ञित्) + यक् + ल्युट्, "कण्ड्वादिभ्यो यक्" इति स्वार्थे यक् प्रत्ययो भावे "ल्युट् च" इति ल्युट् प्रत्ययो योरनादेशः "अतो गुणे" इति पररूपं भिसि रूपम्। दंशानां = दंश (दंशने—अकारेत्) + अच्, पचादित्वादच् प्रत्यय आमि रूपम्। निवारणानि = नि + वृङ् (संभक्तौ-ङित्) + णिच्, (वारि) + ल्युट्, भावे ल्युट् प्रत्ययेऽनादेशे "णेरनिटि" इति णेर्लोपे नस्य णत्वे जसि रूपम्। अव्याहतैः = नञ् + वि + आङ् + हन (हिंसागत्योः—अकारेत्) + क्तः, कर्मणि क्तप्रत्यये "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपे नञ्समासे नञो नलोपे भिसि रूपम्। स्वैरेण = स्व + टा + ईर (गतौ कम्पने च—अकारेत्) + अच्, पचादित्वादच् प्रत्यय उपपदसमासे ततः प्रातिपदिकत्वेन सुपो लुकि "स्वादीरेरिणोः" इति वृद्धौ टारूपम्। गतानि = गम्लृ (गतौ—लृदित्) + क्तः, "नपुंसके भावे क्तः" इति भावे क्तप्रत्ययः कित्वादनुनासिकलोपो जसि रूपम्। सम्राट् = सम् + राज् (दीप्तौ—ऋदित्) + क्विप्, "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप् प्रत्यये व्रश्चेति जस्य षत्वे ततो जश्त्वेन डः "मो राजि समः क्वौ" इति मस्य म एव नत्वनुस्वारः सौ रूपम्। समाराधने = सम + आङ् + राध (संसिद्धौ—अकारेत्) + ल्युट्, भावे ल्युट् प्रत्ययो योरनादेशो ङिरूपम्। अभूद् = अट् + भू (सत्तायाम्) + लुङ्, भूतार्थे लुङि तस्य तिपि धातोरडागमे च्लौ तस्य सिचः "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति लुक् ततस्तिप इकारलोपे "भूसुवोस्तिङि" इति गुणनिषेधः ॥ ९ ॥

वाच्यान्तरं—सम्राजा तेनास्वादवद्भिस्तृणानां कवलैः कण्डूयनैर्दंशनिवारणैरव्याहतैः स्वैरगतैश्च तस्याः समाराधनतत्परेणाभावि ॥ ९ ॥

कोशः—"ग्रासस्तु कवलः पुमान्" इति। "तृणमर्जुनम्" इति। "कण्डूः खर्जूश्च कण्डूया" इति। "दंशस्तु वनमक्षिका" इति सर्वत्राप्यमरः। "वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे" इति विश्वः। "चान्वाचयसमाहारेतरेतरसमुच्चये" इति। "स्वैरः स्वच्छन्दमन्दयोः" इति। "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः, स सम्राड्" इति। "आराधनं साधने स्यादवाप्तौ तोषणेऽपि च" इति। "तत्परे प्रसितासक्तौ" इति चामरः। "परः श्रेष्ठारिदूरान्योत्तरे क्लीबन्तु केवले" इति मेदिनी ॥ ९ ॥

तात्पर्यार्थः—राजसूययज्ञकारी चक्रवर्त्ती राजा दिलीपः स्वहस्तोपनीतानां सुस्वादुकोमलतृणानां ग्रासप्रदानेन, गात्रखर्जनैर्वनमक्षिकाऽपवारणेन, निरर्गलस्वच्छन्दगमनेन च तस्यास्तोषणासक्तो बभूव ॥ ९ ॥

भाषाऽर्थः—चक्रवर्त्ती वे "महाराज दिलीप" स्वाद युक्त "कोमल २" तृणों के ग्रासों से, शरीर के खुजाने से, वन के मच्छड़ों के "बैठने पर उसे" उड़ाने से, और विना रुकावट के स्वच्छन्द फिरने देने से उस "नन्दिनी" को प्रसन्न करने में तत्पर हुये ॥ ९ ॥

*पुनरपि गवानुसरणप्रकारमाह*—

**स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः।**
**जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत्॥ ६॥**

सञ्जीविनी—भूपतिस्तां गां स्थितां सतीं स्थितः सन्। स्थितिरूर्ध्वावस्थानम्। प्रयातां-प्रस्थितामुच्चलितः प्रस्थितः। निषेदुषीं निषण्णाम्। उपविष्टामित्यर्थः। "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः। "उगितश्च" इति ङीप्। आसनबन्ध उपवेशने धीरः। स्थितः। उपविष्टः सन्नित्यर्थः। जलमाददानां जलं पिबन्तीं जलाभिलाषी। जलं पिबन्नित्यर्थः। इत्थं-छायेवान्वगच्छदनुसृतवान्॥ ६॥

अन्वयः—भूपतिः, तां, स्थितां, (सतीं), स्थितः, (सन्), प्रयातां, (सतीम्), उच्चलितः, (सन्), निषेदुषीं, (सतीम्), आसनबन्धधीरः, (सन्), जलम्, आददानां, (सतीं), जलाभिलाषी, (सन्, इत्थं,) छाया, इव, अन्वगच्छत्॥ ६॥

व्याख्या—भूपतिः = पृथ्वीश्वरः, राजा दिलीप इत्यर्थः। तां = पूर्वोक्तां, धेनुमिति यावद्। स्थिताम् = ऊर्ध्वमवतिष्ठमानां, निवृत्तगतिकामिति भावः। "क्व चित् सतीमिति शेषः" सर्वत्राग्रेऽपि योजनीयः। स्थितः = ऊर्ध्वमवतिष्ठमानः, निवृत्तगमन इति भावः। सन्निति शेषः-सर्वत्राग्रेऽपि ज्ञेयः। प्रयातां = प्रगच्छन्तीं, पुनः प्रस्थानं विदधानामिति भावः। उच्चलितः = प्रयातः, प्रस्थानं कुर्वाण इति भावः। निषेदुषीम् = उपविष्टाम्, आसनबन्धधीरः = यात्रानिवर्त्तन (आसन) बन्धनस्वैरः, वीरासनविरचनस्वच्छन्दोऽर्थादुपविष्ट इति भावः। जलं = सलिलम्, आददानां = पिबन्तीमिति यावद्। जलाभिलाषी = वारिस्पृहावान्, पिबन्नित्यर्थः। इत्थमित्यस्याक्षेपः कर्त्तव्यः। छाया = प्रतिबिम्बं, धेनोरिति शेषः। इव = यथा, अन्वगच्छद् = अनुससार, अनुसरणं कृतवानिति भावः॥ ६॥

समासादि–निषसादेति निषेदुषी (स्त्री०) तां निषेदुषीम्। आस्यतेऽनेनेत्यासनं (न०लिं०), बन्धनं बन्धः (पुं०), धियं रातीति धीरः (पुं०), आसनस्य बन्ध आसनबन्धः (त० पु०), तत्र धीर आसनबन्धधीरः (त० पु०)। जलत्यपवारयति तापात् तज्जलं (न० लिं०), तमभिलषितुं शीलमस्यासौ जलाभिलाषी (पुं०)। आदत्त इत्याददाना तामाददानाम् (स्त्री०)। छ्यतीति छाया (स्त्री०)। भवतीति भूः (स्त्री०), पातीति पतिः (पुं०), भुवः पतिर्भूपतिः (त० पु०)॥ ६॥

व्याकरणं—स्थितः = ष्ठा (गतिनिवृत्तौ) + क्तः, "द्यतिस्यतिमास्थामित्ति किति" इतीत्वे सौ रूपम्। स्थितां = ष्ठा (गतिनिवृत्तौ) + क्त + टाप्, पूर्ववत् सिद्धिरमि रूपम्। उच्चलितः = उद् + चल (सञ्चलने—अकारेत्) + क्तः, "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्य्यतिभ्यश्च" इति कर्त्तरि क्तः प्रत्ययो वलादिलक्षण इडागमः सौ रूपम्। प्रयातां = प्र + या (प्रापणे) + क्तः + टाप्, "गत्यर्था०" इत्यादिना कर्त्तरि क्तः प्रत्ययस्ततष्टाप् अमि रूपम्। निषेदुषीं = नि + षद्लृ (विशरणगत्यवसादनेषु—लृदित्) + लिट् + क्वसुः + ङीप्, "भाषायां सदवसश्रुवः" इति लिटः क्वस्वादेशो धातोरादेः षस्य सो धातोर्द्वित्वे "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्येत्वाभ्यासलोपौ "सदिरप्रतेः" इति सस्य षत्वं ततः स्त्रियाम् "उगितश्च" इति ङीप्, अत्र "अकृतव्यूहाः पाणिनीयाः" इति परिभाषाबलेनान्तरङ्गोऽपि वलादिलक्षण इडागमो न प्रवर्तते ततः "वसोः सम्प्रसारणम्" इति सम्प्रसारणं "सम्प्रसारणाच्च" इति पूर्वरूपम् "आदेशप्रत्यययोः" इति क्वसोः सस्य षत्वममि पूर्वरूपम्। आसनम् = आसु (उपवेशने—उदित्) + ल्युट्, "करणाधिकरणयोश्च" इति करणे ल्युट् तस्यानादेशः सोरमादेशो रूपम्। बन्धनं = बन्ध (बन्धने-अकारेत्) + घञ्, भावे घञ् प्रत्ययः सौ रूपम्। धीरः = धी + रा (दाने) + कः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः "आतो लोप इटि च" इत्याकारलोपः सौ रूप-

म्। जलं = जल (अपवारणे—अकारेत्) + अच्, पचादित्वादच् प्रत्ययः सोरमादेशे रूपम्। जलाभिलाषो = जल + अम् + अभि + लष (कान्तौ—अकारेत्) + णिनिः, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिरुपधावृद्धिरुपपदसमासत्वात्प्रातिपदिकावयवस्य सुपो लुकि सौ "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधादीर्घे रूपम्। आददानाम् = आङ् + डुदाञ् (दाने—डुञित्) + लट् + शानच् + टाप्, लटः शानजादेशे धातोर्द्वित्वेऽभ्यासह्रस्वे "आतो लोप इटि च" इत्याकारलोपेऽमि रूपम्। छाया = छो (छेदने) + णः + टाप्, "श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च" इति णप्रत्ययो णित्वाद् "आतो युक् चिण्कृतोः" इति युगागमष्टाप् सौ रूपम्। अन्वगच्छद् = अनु + अट् + गम्लृ (गतौ—लृदित्) + लङ्, लङस्तिपि धातोरडागमे शपि "इषुगमियमां छः" इति छान्तादेशे तुकि चुत्वे रूपम्॥ ६॥

वाच्यान्तरम्—भूपतिना सा स्थिता सती स्थितेन सता प्रयातोच्चलितेन निषेदुष्यासनबन्धधीरेण जलमाददाना जलाभिलाषिणा छाययेवान्वगम्यत॥ ६॥

कोषः—"आसनं विष्टरे हस्तिस्कन्धे यात्रानिवर्त्तने। आसनो जीवकतरावासनी पण्यवीथिका" इत्यनेकार्थसङ्ग्रहः। "बन्ध आधौ च बन्धने" इत्यपि। "धीरो ज्ञे धैर्यसंयुते। स्वैरे, धीरन्तु घुसृणे" इति च। "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः। "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यपि। "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इति। "स्वामी, त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इति चामरः॥ ६॥

तात्पर्यार्थः—राजा दिलीपो यदा सा धेनुः क्व चित् स्थिताऽभवत् तदैव स्थितोऽभवद्, यदा प्रस्थिताऽभवत् तदैव तदनु प्रस्थितोऽभवद्, यदोपविष्टाऽभवत् तदैवोपविष्टोऽभवद्, यदा जलमगृह्णात् तदैव स्वयमपि जलग्रहणमकरोदित्युक्तप्रकारेण तच्छायासदृशस्तदीयानुसरणं कृतवान्॥ ६॥

भाषार्थः—पृथ्वीपति "राजा दिलीप" ने उस नन्दिनी की, ठहरती हुई की ठहरते हुये, चलती हुई की चलते हुये, बैठती हुई की बैठते हुये, जल पीती हुई की जल पीते हुये, इस प्रकार से छाया की भाँति अनुसरण किया॥ ६॥

*राजचिह्नरहितस्यापि तस्य केवलं तेजोविशेषाद् राजत्वमाह*—

**स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः।**
**आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः॥ ७॥**

सञ्जीविनी—स इति। न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतामपि तेजोविशेषेण प्रभावातिशयेनानुमिताम्। सर्वथा राजैवायं भवेदित्यूहितां राजलक्ष्मीं दधानः स राजा। अनाविष्कृतदानराजिर्बहिरप्रकटितमदरेखः। अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः। तथाभूतो द्विपेन्द्र इव आसीत्॥ ७॥

अन्वयः—न्यस्तचिह्नाम्, अपि, तेजोविशेषानुमितां, राजलक्ष्मीं, दधानः, सः, अनाविष्कृतदानराजिः, अन्तर्मदावस्थः, द्विपेन्द्रः, इव, आसीत्॥ ७॥

व्याख्या—न्यस्तचिह्नाम् = परित्यक्तलक्षणां, छत्रचामरादिरहिताम्, अपि = समुच्चये, तेजोविशेषानुमितां = दीप्त्यतिशयतर्किता, राजलक्ष्मीं = नृपश्रियं, दधानः = बिभ्राणः, धारयन्नित्यर्थः। सः = पूर्वोक्तः, राजा दिलीप इत्यर्थः। अनाविष्कृतदानराजिः = बहिरप्रकटितमदलेखः, अन्तर्मदावस्थः = अभ्यन्तरदानदशः, द्विपेन्द्रः = गजेन्द्रः, इव = यथा, आसीद् = अभवत्॥ ७॥

समासादि—न्यस्तानि चिह्नानि यस्याः सा न्यस्तचिह्ना तां न्यस्तचिह्नाम् (ब० व्री०)। लक्षति पश्यति नीतिज्ञमिति लक्ष्मीः (स्त्री०), राजते शोभत इति राजा (पुं०), राज्ञो ल-

क्ष्मी राजलक्ष्मी तां राजलक्ष्मीम् (त० पु०)। तेजसो विशेषस्तेजोविशेषः (त० पु०), तेनानुमिता तेजोविशेषानुमिता तां तेजोविशेषानुमिताम् (त० पु०)। धत्त इति दधानः (पु०)। न आविष्कृता अनाविष्कृता (न० त० पु०), द्यत्यनेनेति दानं (न०लि०), दानस्य राजिर्दानराजिः (त० पु०), अनाविष्कृता दानराजिर्यस्यासावनाविष्कृतदानराजिः (ब०व्री०)। माद्यत्यनेनेति मदः (पुं०), अवस्थानमवस्था (स्त्री०), मदस्यावस्था मदावस्था (त० पु०), अन्तरन्तर्गता मदावस्था यस्यासावन्तर्मदावस्थः (ब० व्री०)। इन्दतीतीन्द्रः (पुं०)। द्वाभ्यां पिबन्तीति द्विपाः (पुं०), तेष्विन्द्रो द्विपेन्द्रः (त०पु०) ॥ ७ ॥

व्याकरणं—न्यस्तानि = नि+असु (क्षेपणे-उदित्)+क्तः, कर्मणि क्तः प्रत्ययः "यस्य विभाषा" इतीडभावो जसि रूपम्। लक्ष्मीः = लक्ष (दर्शनाङ्कनयोः—अकारेत्)+ईः, "लक्षेर्मुट् च" इत्यौणादिक ईप्रत्ययस्तस्य च मुडागमः सौ रूपम्। अनुमिता = अनु+माङ् (माने-ङित्)+क्तः, कर्मणि क्तप्रत्ययः कित्वाद् "द्यतिस्यतिमास्थामित्ति किति" इतीत्वं ततष्टाप् सौ रूपम्। दधानः = डुधाञ् (धारणपोषणयोः—डुञित्)+लट्+शानच्। आसीद् = अस (भुवि-अकारेत्)+लङ्, तस्य तिपि धातोराडागमः "अस्तिसिचोऽपृक्ते" इतीडागमः। अनाविष्कृता = नञ्+आविस्+डुकृञ् (करणे—डुञित्)+क्तः+टाप्, कर्मणि क्तप्रत्ययः, आविसः सस्य रुत्वे विसर्गे "इदुदुपधस्य चाप्रत्ययस्य" इति विसर्गस्य षत्वे नञ् समासे नञो नकारलोपे रूपम्। दानं = दो (अवखण्डने)+ल्युट्, "करणाधिकरणयोश्च" इति करणे ल्युट् प्रत्ययस्तस्यानादेशे "आदेच उपदेशेऽशिति" इत्याकारान्तादेशे सोरमादेशे रूपम्। मदस्य = मदी (हर्षे-ईदित्)+अप्, "मदोऽनुपसर्गे" इत्यप्प्रत्ययो-ङसो रूपम्। अवस्था = अव+ष्ठा (गतिनिवृत्तौ)+अङ्, धात्वादेः षः सः "आतश्चोपसर्गे" इत्यङ् प्रत्ययष्टाप् व्यवस्थायामिति निर्देशात् "स्थागापापचो भावे" इति क्तिन् प्रत्ययस्तु न भवति, सौ रूपम्। इन्द्रः = इदि (परमैश्वर्ये-इदित्)+रन् "ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः" इत्यौणादिको रन् प्रत्यय इदित्वान्नुमागमः सौ रूपम्। द्विपाः = द्वि+पा (पाने)+कः, "सुपि स्थः" इत्यत्र सुपीति योगविभागात् कप्रत्ययः कित्वाद् "आतो लोप इटि च" इत्याकारलोपे जसि रूपम् ॥ ७ ॥

वाच्यान्तर—न्यस्तचिह्नामपि तेजोविशेषानुमितां राजलक्ष्मीं दधानेन तेनानाविष्कृतदानराजिनाऽन्तर्मदावस्थेन द्विपेन्द्रेणेवाभूयत ॥ ७ ॥

कोशः—"कलङ्काङ्कौ चिह्नं लक्ष्म च लक्ष्मणम्" इति। "राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति चामरः। "लक्ष्मीः सम्पत्तिशोभयोः। ऋद्ध्यौषधौ च पद्मायां वृद्धिनामौषधेऽपि च" इति मेदिनी। "तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि" इति। "मदो दानम्" इति। "लेखास्तु राजयः" इति चामरः। "राजी रेखायां पङ्क्तौ च" इति हैमोऽपि। "विशेषः कालिकोऽवस्था" इति। "द्विरदोऽनेकपो द्विप.। मतङ्गजो गजो नागः" इति। "व वा यथा तथैवैवं साम्ये" इति चामरः ॥ ७ ॥

तात्पर्यार्थः—यथा कश्चिद् गजेन्द्रो दानलेखा अप्रकटयन्नपि स्वतेजोविशेषेण निजान्तर्गतां मदावस्थां सर्वान् बोधयति तथैवासावपि राजा दिलीपो गृहीतनन्दिनीपरिचर्य्याऽऽत्मकव्रततया छत्रचामरादिराजचिह्नैरात्मनो राजश्रियमदर्शयन्नपि प्रभावातिशयेनैव स्वकीयं चक्रवर्त्तित्वमनुमापयति स्म ॥ ७ ॥

भाषाऽर्थ—यद्यपि छत्र चामरादि चिह्नों से भूषित नहीं हैं तथाऽपि अपने तेज की अधिकता से ही जानी जाती हुई राजलक्ष्मी को धारण करते हुये, प्रगट रूप से नहीं दिखाई पड़ रहा है मद की रेखा जिसके, अत एव भीतर में मौजूद है मद की अवस्था जिसकी, ऐसे गजराज की भांति मालूम पडते थे ॥ ७ ॥

*धनुर्धृत्वा दिलीपो नन्दिनीमनुससारेत्याह*—

**लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।**
**रक्षाऽपदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥**

सञ्जीविनी—लतेति । लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिताये केशास्तैरुपलक्षितः । "इत्थंभूतलक्षणे" इति तृतीया । स राजा । अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा सन् । 'धनुषश्च' इत्यनङादेशः । मुनिहोमधेनो रक्षाऽपदेशाद्रक्षणव्याजाद् । वन्यान्वने भवान्दुष्टसत्त्वान्दुष्टजन्तून् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । विनेष्यञ्शिक्षयिष्यन्निव दावं वनम् । 'वने च वनवह्नौ च दवो दाव इहेष्यते' इति यादवः । विचचार । वने चचारेत्यर्थः । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति दावस्य कर्मत्वम् ॥ ८ ॥

अन्वयः—लताप्रतानोद्ग्रथितैः, केशैः, (उपलक्षितः),सः, अधिज्यधन्वा, (सन्), मुनिहोमधेनोः, रक्षाऽपदेशाद्, वन्यान्, दुष्टसत्त्वान्, विनेष्यन्, इव, दावं, विचचार ॥ ८ ॥

व्याख्या—लताप्रतानोद्ग्रथितैः=वल्लीदीर्घशाखापत्रोद्गुम्फितैः, लतानां कुटिलतन्तुसदृशशाखादिभिरुन्नमय्य गुम्फितैरित्यर्थः । केशैः=वालैः, उपलक्षितः । सः=पूर्वोक्तः, राजा दिलीप इति यावद् । अधिज्यधन्वा=शिञ्जिनीसनाथीकृतशरासनः, आरोपितमौर्वीकधनुष्मानिति यावत् । सन्निति शेषः । मुनिहोमधेनोः=वशिष्ठहवनगव्याः, नन्दिन्या इत्यर्थः। रक्षाऽपदेशाद्=रक्षणव्याजाद्, वन्यान्=काननसमुद्भवान्, दुष्टसत्त्वान्=हिंस्रजन्तून्, सिंहादीनिति यावद् । विनेष्यन्=शिक्षयिष्यन्, इव=यथा, दावं=वनं, विचचार=व्यचरद्, वनें विचरणं कृतवानित्यर्थः । अधिज्यधन्वनो दिलीपस्य गोचारणं वने यदभूत् तत्तु सिंहादीञ् शिक्षयितुमेवेत्युत्प्रेक्षा ॥ ८ ॥

समासादि—लतन्तीति लताः (स्त्री०), प्रतन्यन्तेऽमी प्रतानाः (पुं०), लतानां प्रतानालताप्रतानाः (त० पु०), तैरुद्ग्रथिता लताप्रतानोद्ग्रथिताः (त०पु०), तैर्लताप्रतानोद्ग्रथितैः । अधिरोपिता ज्या यत्र तदधिज्यम् (ब०व्री०), अधिज्यं धनुर्यस्यासावधिज्यधन्वा (ब०व्री०) । दुनोतीति दावः (पुं०) तं दावम् । रक्षणं रक्षा (स्त्री०), अपदेशनमपदेशः (पुं०), रक्षाया अपदेशो रक्षाऽपदेशस्तस्माद्रक्षाऽपदेशाद् (त० पु०) । मन्ता वेदशास्त्रार्थतत्त्वावगन्तेति मुनिः (पुं०), हवनं होमः (पुं०), धीयतेऽसौ धेनुः (स्त्री०), होमस्य धेनुर्होमधेनुः (त० पु०), मुनेर्होमधेनुर्मुनिहोमधेनुस्तस्या मुनिहोमधेनोः (त० पु०) । वने साधवो वन्याः (पुं०), तान्वन्यान् । विनेष्यतीति विनेष्यन् (पुं०) । सीदन्त्येषु गुणाद्या इति सत्त्वाः (पुं०), दुष्यन्तीति दुष्टाः (पुं), दुष्टाश्च ते सत्त्वा दुष्टसत्त्वास्तान् दुष्टसत्त्वान् (त० क० धा०) ॥ ८ ॥

व्याकरणं—लताः=लतिः सौत्रो धातुर्वेष्टनार्थस्तस्माद् "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच् प्रत्ययष्टाप् जसि रूपम् । प्रतानाः=प्र+तनु (विस्तारे—उदित्)+घञ्, बाहुलकात्कर्मणि "भावे" इति घञ् प्रत्यय उपधावृद्धिर्जसि रूपम् । उद्ग्रथितैः,=उद्+ग्रन्थ (सन्दर्भे—अकारेत्)+क्तः, कर्मणि क्तप्रत्ययः क्त्वाद् "अनिदितां हल उपधायाः क्ङिति" इति नकारलोपो वलादिलक्षण इडागमो भिसि रूपम् । केशैः=केश+भिस्, "इत्थम्भूतलक्षणे" इति तृतीया । अधिज्यम्=अधिरोपिता+ज्या, "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति वार्त्तिकेन बहुव्रीहिसमास उत्तरपदलोपे "गोस्त्रियोरुपसर्जनस्य" इति ज्याशब्दस्य ह्रस्वत्वे सौ रूपम् । अधिज्यधन्वा=अधिज्य+धनुष्, बहुव्रीहिसमासे धनुषश्च" इत्यनङादेशे समासान्ते सौ "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधादीर्घः सुलोपश्च । विचचार=वि+चर (गतिभक्षणयोः—अकारेत्)+लिट्, तिपो णलादेशे धातोर्द्वित्वेऽभ्यासहलो लोप उपधावृद्धौ रूपम् । दावं=टुदु (उपतापे—ट्वित्)+णः, "दुन्योरनुपसर्गे"

इति णप्रत्ययो धातोर्णित्वाद् वृद्धावावादेशेऽमि रूपम् । अपदेशः=अप+दिश (अतिसर्जने—अकारेत्)+घञ्, "भावे" इति घञ् प्रत्ययो धातोर्गुणः सौ रूपम् । विनेष्यन्=वि+णीञ् (प्रापणे—ञित्)+स्य+लृट्+शतृ, "णो नः" इति धात्वादेर्णस्य नस्ततो धातोर्लृटः "लृटः सद्वा" इति सत्संज्ञके शत्रादेशे "स्यतासी लृलुटोः" इति धातोः स्यप्रत्यये "अतो गुणे" इति पररूपे "आदेशप्रत्यययोः" इति सस्य षत्वे "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमागमे हल्ङ्यादिलोपे संयोगान्तलोपे च सौ रूपम् । सत्त्वाः=षद्लृ (विशरणगत्यवसादनेषु—लृदित्)+त्वन्, "अन्येभ्योऽपि दृश्यते" इत्यौणादिकस्त्वन् प्रत्ययो धात्वादेः षः सो धातोर्दस्य चर्त्वेन तकारो जसि रूपम् ॥ ८ ॥

वाच्यान्तरं—लताप्रतानोद्ग्रथितैः केशैस्तेनाधिज्यधन्वना सता मुनिहोमधेनो रक्षाऽपदेशाद्वन्यान् दुष्टसत्त्वान् विनेष्यतेव दावो विचेरे ॥ ८ ॥

कोशः—"वल्ली तु व्रततिर्लता" इति । "ग्रथिते गुम्फितं दृब्धम्" इति । "चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः" इति । "ज्या मौर्वी शिञ्जिनी गुणः" इति । "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽपि" इति । "दवदावौ वनारण्यवह्नी" इति चामरः । "अपदेशः पुमांल्लक्ष्ये निमित्तव्याजयोरपि" इति विश्वः । "वाचंयमो मुनिः" इत्यमरः । "धेनुर्गोमात्रके दोग्ध्र्यां गवि" इत्यनेकार्थसङ्ग्रहः । "वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः" इति । "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु" इति च मेदिनी ॥ ८ ॥

तात्पर्यार्थः—स राजा दिलीपो वनोद्भवलतानां कुटिलतन्तुनिभशाखादिभिरुद्ग्रथितान् केशान् दधानो यतो नन्दिनीछायेव तस्या अनुसरणशीलो धनुष्पाणिर्यद् वने विचरणं कृतवांस्तद् गोरक्षणव्याजेन दुष्टपशूनां सिंहादीनां शिक्षणार्थमिवेत्युत्प्रेक्षा ॥ ८ ॥

भाषार्थः—लताओं के लम्बे २ "अत एव" टेढ़े २ सूत के समान" शाखादिकों से ऊपर को उठकर अरुझे हुये शिर के बालों से "लक्ष्य किये जाते हुये" वे राजा दिलीप प्रत्यञ्चा चढ़े हुये धनुष् को धारण किये हुये वशिष्ठ महर्षि के होम की सामग्री घृतादि सम्पन्न करने के लिये जो नन्दिनी है, उसकी रक्षा करने के व्याज से वनैले दुष्ट "व्याघ्रादि" जीवों का शासन करने के लिये मानो जङ्गल में घूम रहे थे ॥ ८ ॥

'विसृष्ट'—इत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिमतया द्रुमादयोऽपि राजोपचारं चक्रुरित्याह—

**विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।**
**उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥**

सञ्जीविनी—विसृष्टेति । विसृष्टाः पार्श्वानुचराः पार्श्ववर्तिनो जना येन तस्य । पाशभृता वरुणेन समस्य तुल्यस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । अनुभावोऽनेन सूचितः । तस्य राज्ञः पार्श्वयोर्द्रुमाः । उन्मदानामुत्कटमदानां वयसां खगानाम् । 'खगबाल्यादिनोर्वयः' इत्यमरः । विरावैः शब्दैः । आलोकस्य शब्दं वाचकमालोकयेति शब्दं जयशब्दमित्यर्थः । 'आलोको जयशब्दः स्याद्' इति विश्वः । उदीरयामासुरिवावदन्निव । इत्युत्प्रेक्षा ॥ ९ ॥

अन्वयः—विसृष्टपार्श्वानुचरस्य, पाशभृता, समस्य, तस्य, पार्श्वद्रुमाः, उन्मदानां, वयसां, विरावैः, आलोकशब्दम्, उदीरयामासुः, इव ॥ ९ ॥

व्याख्या—विसृष्टपार्श्वानुचरस्य=त्यक्तान्तिकवर्त्तिसेवकस्य, पाशभृता=पाशधारिणा, वरुणेनेति यावत् । समस्य=सदृशस्य, तस्य=पूर्वोक्तस्य, दिलीपस्येति यावत् । पार्श्वद्रुमाः=अन्तिकवर्त्तिवृक्षाः, उन्मदानाम्=उन्मदिष्णूनां, वयसां=खगानां, विरावैः=शब्दैः,

आलोकशब्दं=जयशब्दं, नृपतिमालोकयेतिसूचकशब्दमित्यर्थः । उदीरयामासुः=कथयामासुः, इव=यथा, अत्रोत्प्रेक्षा ॥ ९ ॥

समासादि—अनु पश्चाच्चरन्तीत्यनुचराः ( पुं० ), स्पृश्यते इति पार्श्वं ( न०लिं० ), पार्श्वयोरनुचराः पार्श्वानुचराः (त०पु०), विसृष्टाः पार्श्वानुचरा येन स विसृष्टपार्श्वानुचरस्तस्य विसृष्टपार्श्वानुचरस्य (ब०व्री०) । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः,"समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते" इति न्यायाद् द्रुःशाखाऽस्त्येषामिति द्रुमाः (पुं०) । पार्श्वयोर्द्रुमाः पार्श्वद्रुमाः ( त० पु० ) पाश्यतेऽस्मिन्निति पाशः (पुं०) तं बिभर्त्तीति पाशभृत्तेन पाशभृता (पुं०) । समतीति समः ( पुं० ) तस्य समस्य । उद्गतो मदो येषान्त उन्मदास्तेषामुन्मदानां ( ब० व्री० ) । आ समन्ताल्लोकनमालोकः ( पुं० ) । शब्दनं शब्दः ( पुं० ), आलोकस्य शब्द आलोकशब्दस्तमालोकशब्दं ( त० पु० ) । वयन्त इति वयांसि ( न० लिं० ) तेषां वयसां । विशेषेण रवणानि विरावाः ( पुं० ) तैर्विरावैः ॥ ९ ॥

व्याकरणं—विसृष्टाः=वि+सृज ( विसर्गे—अकारेत् )+क्तः, कर्मणि क्तप्रत्ययः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षत्वं ष्टुत्वं च जसि रूपम् । पार्श्वयोः=स्पृश ( स्पर्शने—अकारेत् )+श्वण्, "स्पृशेः श्वण्शुनौ पृ च" इति श्वण् प्रत्ययो धातोः "पृ" इत्यादेशो णित्वाद् "अचोऽञ्णिति" इति वृद्धौ रपरश्च ततओसि रूपम् । द्रुः=द्रु (गतौ)+डुः, "मितद्र्वादिभ्य उपसंख्यानम्" इति वार्त्तिकेन डुप्रत्ययो डित्वाट्टिलोपः सौ रूपम् । द्रुमाः=द्रु+मः, "द्युद्रुभ्यां मः" इतिसूत्रेण मप्रत्ययो जसि रूपम् । पाशः=पश (बन्धे—अकारेत् )+णिच्+घः, "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययो वा "अकर्तरि च कारके संज्ञायाम्" इति घञ् प्रत्ययः "णेरनिटि" इति णिलोपः सौ रूपम् । पाशभृता=पाश+डुभृञ् ( धारणपोषणयोः—डुञित् )+क्विप्, "क्विप् च" इति क्विप् प्रत्ययः "ह्रस्वस्य पिति कृति तुक्" इति तुगागमष्टारूपम् । समस्य=सम (वैक्लव्ये—अकारेत् )+अच्, पचादित्वादच् प्रत्ययो ङसे रूपम् । उदीरयामासुः=उद्+ईर ( क्षेपे—अकारेत् )+णिच्+आम्+अस्+लिट्, चुरादित्वाण्णिच्प्रत्ययो धातुसंज्ञा "सनाद्यन्ता धातवः" इति सूत्रेण, ततो लिटि "कास्प्रत्ययादाममन्त्रे लिटि" इत्याम् प्रत्ययो धातोर्गुणोऽयादेशश्च "आमः" इति लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परस्यास्तेरनुप्रयोगः पुनरस्तेर्द्वित्वेऽभ्यासकार्ये लिटो झेरुसादेशे रूपम् । उन्मदानाम्=उद्गत+मद, "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिसमास उत्तरपदलोप आमि रूपम् । शब्दः=शब्द ( संशब्दने=अकारेत् )+णिच्+घञ्, "भावे" इति घञ् प्रत्ययः "णेरनिटि" इति णिलोपः सौ रूपम् । वयसां=वय ( गतौ—अकारेत् )+असुन्, "सर्वधातुभ्योऽसुन्" इत्यौणादिकोऽसुन् प्रत्ययआमि रूपम् । विरावैः=वि+रु ( शब्दे )+घञ्, "उपसर्गे रुवः" इति घञ् प्रत्ययः "ऋदोरप्" इत्यपोऽपवादको ञित्वाद् वृद्धिरावादेशो भिसि रूपम् ॥ ९ ॥

वाच्यान्तरं—विसृष्टपार्श्वानुचरस्य पाशभृता समस्य तस्य पार्श्वद्रुमैरुन्मदानां वयसांविरावैरालोकशब्द उदीरयाञ्चक्रे ॥ ९ ॥

कोशः—"पार्श्वमन्तिके । कक्षाऽधोऽवयवे चक्रोपान्तपर्शुसमूहयोः" इत्यनेकार्थसंग्रहः । "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुटः शाल पलाशी द्रुद्रुमागमाः" इत्यमरः । "पाशस्तु मृगपक्ष्यादिबन्धने । कर्णान्ते शोभनार्थः स्यात् कचान्ते निकरार्थकः" इत्यनेकार्थसंग्रह । "प्रचेता वरुणः पाशी" इत्यमरः । "वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् । साधारणः समानश्च" इति । "व वा यथा तथैवैवं साम्ये" इति । "उन्मदस्तून्मदिष्णुः स्याद्" इति चामरः । "आलोको जयशब्दः स्याद्" इति विश्वः । "खगबाल्यादिनोर्वयः" इति । "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । स्वाननिर्घोषनिर्ह्राद-

दनादनिस्वाननिस्वनाः । आरवारावसंरावविरावाः” इति चामरः ॥ ९ ॥

तात्पर्यार्थः—विसर्जितानुचरवर्गस्यापि तेजसा वरुणसदृशस्य तस्य दिलीपस्योभयपार्श्वे स्थितेषु वृक्षेषु संस्थितानामुन्मादशीलानां पक्षिणां कूजितं बन्दिजनभाषितजयशब्द इव बभूव ॥ ९ ॥

भाषाऽर्थः—पार्श्ववर्ती अनुचर बृन्दों के छोड़ देने पर भी वरुण के समान "प्रभावशाली" उन राजा दिलीप के आसपास के वृक्षों ने उन्मत्त पक्षियों के शब्दों द्वारा जयशब्द उच्चारण किया ऐसा मालूम पड़ता था ॥ ९ ॥

*दिलीपोपरि पार्श्वस्थलतातः पुष्पपतने कविरुत्प्रेक्षमाण आह—*

**मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्त्तमानम् ।**
**अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १० ॥**

सञ्जीविनी—मरुत्प्रयुक्ताश्चेति । मरुत्प्रयुक्ता वायुना प्रेरिता बाललता आरात्समीपेऽभिवर्तमानम् । 'आराद् दूरसमीपयोः' इत्यमरः । मरुतो वायोः सखा मरुत्सखोऽग्निः । स इवाभातीति मरुत्सखाभम् । "आतश्चोपसर्गे" इति कप्रत्ययः । अर्च्यं पूज्यं तं दिलीपं प्रसूनैः पुष्पैः । पौरकन्याः पौराश्च ताः कन्या आचारार्थैर्लाजैराचारलाजैरिव । अवाकिरन् । तस्योपरि निक्षिप्तवत्य इत्यर्थः । सखा हि सखायमागतमुपचरतीति भावः ॥ १० ॥

अन्वयः—मरुत्प्रयुक्ताः, बाललताः, आरात्, अभिवर्त्तमानम्, मरुत्सखाभम्, अर्च्यं, तं, प्रसूनैः, पौरकन्याः, आचारलाजैः, इव, अवाकिरन् ॥ १० ॥

व्याख्या—मरुत्प्रयुक्ताः = समीरनुन्नाः, वायुनाऽऽन्दोलिता इति यावद् । बाललताः = शिशुव्रततयः, नातिचिरोत्पन्ना लतिका इति भावः । आरात् = समीपे, अभिवर्त्तमानं = विद्यमानम्; अतिसन्निधिप्रदेशे स्थितमिति यावद् । मरुत्सखाभम् = अनिलसुहृच्छविं, तेजसाऽग्निसममिति भावः । "अत एव" अर्च्यम् = पूज्यं, तं = पूर्वोक्तं, दिलीपमिति यावत् । प्रसूनैः = कुसुमैः = स्वकीयैरिति शेषः । पौरकन्याः = पुरोद्भवकुमार्यः, पुरनिवासिनां कन्यका नार्यो वेति भावः । आचारलाजैः = मङ्गलाचारार्थकभृष्टधान्यैः, राजोपरि पौरकन्यानाम् मङ्गलार्थं भृष्टधान्यविक्षेप इति लोकाचारः । इव = यथा, अवाकिरन् = प्रचिक्षिपुः, तदुपरि लाजवर्पणं चक्रुरित्यर्थः । मित्रमागतं वीक्ष्य मित्रमुपचरतीति वायुकर्तृकपुष्पवर्षणं स्वमित्रेण वह्निना सदृशस्य दिलीपस्योपरि समुचितमेवेति भावः ॥ १० ॥

समासादि—म्रियन्तेऽनेन वृद्धेन विना वेति मरुत् (पुं०), तेन प्रयुक्ता मरुत्प्रयुक्ताः (त० पु०) । समानं ख्यायते लोकैरिति सखा (पुं०), मरुतः सखा मरुत्सखः (त० पु०), मरुत्सखस्याभा इव, आभा यस्य स मरुत्सखाभस्तं मरुत्सखाभम् (त० पु०) । अर्चितुं योग्योऽर्च्यस्तमर्च्यम् (पुं) । अभिवर्त्तत इत्यभिवर्त्तमानस्तमभिवर्त्तमानम् (पुं०) । बालाश्च ता लता बाललताः (त० क० धा०) । प्रसूयन्ते स्मेति प्रसूनानि (न० लिं०) तैः प्रसूनैः । आचरणमाचारः (पुं०), लज्यन्त इति लाजाः (पुं० नित्यबहुवचनान्तश्च) आचारार्था लाजा आचारलाजाः ( म० प० लो० स० ) तैराचारलाजैः । पुरे भवाः पौराः (पुं०), कनन्ति कन्यन्ते वा कन्याः (स्त्री०) पौराणां कन्या. पौरकन्याः (त० पु०) ॥ १० ॥

व्याकरणम्—मरुत् = मृङ् (प्राणत्यागे–ङित्) + उतिः, "मृग्रोरुतिः" इत्यौणादिक उतिप्रत्यय इकारेत्संज्ञकस्ततो धातोर्गुणे रपरे च सौ रूपम् । प्रयुक्ता. = प्र + युजिर्, (योगे–इरित्) + क्तः + टाप्, कर्मणि क्तप्रत्ययो जस्य् चुत्वेन कः कित्वाद् गुणाभावष्टाप् जसि रूपम् । सखा = समान + ख्या (प्रकथने) + इण्, "समाने ख्यः स चोदात्तः" इत्यौणादिक इण् प्रत्ययः स च डित् तेन टिलोपो धातोर्यकारलोपः समानस्य सादेशश्च ततः सौ "अनङ् सौ" इत्यनङादेशे "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधादीर्घे "नलोपः प्रातिपदिकान्तस्य" इति नलोपस्ततः

सुलोपः । मरुत्सखः = मरुत् + सखि + टच्, तत्पुरुषसमासे "राजाहःसखिभ्यष्टच्" इति समासान्तष्टच् प्रत्ययः सौ रूपम्। अर्च्यम् = अर्च (पूजायाम्–अकारेत्) + ण्यत्, "ऋहलोर्ण्यत्" इति ण्यत् प्रत्ययोऽमि रूपम्। अभिवर्त्तमानम् = अभि + वृतु (वर्तने–उदित्) + लट् + शानच्, "आने मुक्" इति मुगागम उपधागुणेऽमि रूपम्। अवाकिरन् = अव + आङ् + कॄ (विक्षेपे) + लङ्, धातोर्लङो झेरन्तादेशे तुदादित्वाच्छप्रत्यये "ऋत इद्धातोः" इतीत्वे रपरत्वे चाडागमे रूपम्। प्रसूनैः = प्र + पूङ् (प्राणिप्रसवे–ङित्) + क्तः, कर्मणि क्तप्रत्यये "स्वादय ओदितः" इत्युक्तत्वाद् "ओदितश्च" इति निष्ठातस्य नत्वे "यस्य विभाषा" इतीडभावो भिसि रूपम्। आचारः = आङ् + चर + (गतिभक्षणयोः–अकारेत्) + घञ्, भावे घञ् प्रत्यय-उपधावृद्धिः सौ रूपम्। लाजाः = लज (भर्जने–अकारेत्) + घञ्, "अकर्तरि च कारके संज्ञायाम्" इति घञ् प्रत्यय उपधावृद्धौ नित्यं वहुवचनान्ततया जसि रूपम्। पौराः = पुर + अण्, "तत्र भवः" इति भवेऽर्थेऽण् प्रत्ययः "तद्धितेष्वचामादेः" इति णित्वादादिवृद्धौ जसि रूपम्। कन्याः = कनी (दीप्तौ–ईदित्) + यक् + टाप्, "अघ्न्यादयश्च" इत्यौणादिको यक् प्रत्ययष्टाप् जसि रूपम् ॥ १० ॥

वाच्यान्तरम्—मरुत्प्रयुक्ताभिर्बाललताभिराराद्भिवर्त्तमानो मरुत्सखाभोऽर्च्यः स प्रसूनैः पौरकन्याभिराचारलाजैरिवाकीर्यत ॥ १० ॥

कोशः—"समीरमारुतमरुज्जगत्प्राणसमीरणाः" इति । "अथ मित्रं सखा सुहृद्" इति । "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः । रोचिः शोचिरुभे क्लीबम्" इति । "आराद् दूरसमीपयोः" इति चामरः। "वालोऽश्वेभपुच्छयोः। शिशौ हीवेरकचयोर्वाला तु त्रुटियोषितोः" इत्यनेकार्थसङ्ग्रहः । "वल्ली तु व्रततिर्लता" इति । "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इति । "लाजाः पुंभूम्नि चाक्षताः" इति चामरः । "पौरं त्रिषु गणोद्भूते कत्तृणे तु नपुंसकम्" इति मेदिनी । "कन्या कुमारी" इत्यमरः ॥ १० ॥

तात्पर्यार्थः—स्वमित्रेण वह्निना तुल्यं दीप्तिमन्तं दिलीपमागतं वीक्ष्य कोमललताः समीपे स्थितस्य तस्योपरि पुष्पवर्षणं कृतवत्यो यथा पौरकन्या मङ्गलार्थकलाजवर्षणं कुर्वन्ति ॥ १० ॥

भाषार्थः—वायु से प्रेरित (हिलाई गई) कोमल २ लताओं ने अग्नितुल्य (तेजस्वी) समीप में स्थित, पूज्य उन (राजा दिलीप) के ऊपर फूलों की वर्षा कीं, जैसे कि–नगरवासियों की कन्यायें मङ्गलार्थक, धान के लावों की वर्षा करती थीं ॥ १० ॥

*धनुर्धारिणोऽपि दिलीपस्य निःशङ्का हरिण्यो दर्शनं चक्रुरित्याह—*

धनुर्भृतोऽप्यस्य दयाऽऽर्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

सञ्जीविनी—धनुर्भृत इति। धनुर्भृतोऽप्यस्य राज्ञः। एतेन भयसंभावना दर्शिता । तथाऽपि विशङ्कैर्निर्भीकैरन्तःकरणैः कर्तृभिः। दयया कृपारसेनार्द्रो भावोऽभिप्रायो यस्य तद्दयाऽऽर्द्रभावं तदाख्यातम्। दयाऽऽर्द्रभावमेतदित्याख्यातमित्यर्थः। 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु' इत्यमरः । तथाविधं वपुर्विलोकयन्त्यो हरिण्योऽक्ष्णां प्रकामविस्तारस्यात्यन्तविशालतायाः फलमापुः । (विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं च) इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादेव विश्रब्धं ददृशुरित्यर्थः ॥ ११ ॥

अन्वयः—धनुर्भृतः, अपि, अस्य, विशङ्कैः, अन्तःकरणैः, दयाऽऽर्द्रभावम्, आख्यातं, वपुः, विलोकयन्त्यः, हरिण्यः, अक्ष्णां, प्रकामविस्तारफलम्, अवापुः ॥ ११ ॥

व्याख्या—धनुर्भृतः = शरासनधारिणः, अपि = सम्भावनायाम्, एतेन भयसंभावनादर्शिता । अस्य = राज्ञः, दिलीपस्येति यावत्। "तथाऽपि" विशङ्कैः = शङ्कारहितैः, निर्भयैरिति यावद्। अन्तःकरणैः = आभ्यन्तरेन्द्रियैः, चित्तैरित्यर्थः । दयाऽऽर्द्रभावं = कृपारसार्द्राभिप्रायं,

दयाऽभिभूताभिप्रायशालीत्यर्थः । एतद् वपुर्विशेषणम् । आख्यातम् = प्रकथितं, दयाऽऽर्द्रभावमिदमिति कथितमित्यर्थः । "तथाविधं" वपुः = शरीरं, विलोकयन्त्यः = पश्यन्त्यः, हरिण्यः = मृग्यः, अक्ष्णां = चक्षुषां, प्रकामविस्तारफलम् = पर्याप्तदैर्घ्यहेतूत्थम्, अत्यन्तदैर्घ्यफलमिति यावद् । आपुः = अधिजग्मुः, स्वकीयचित्तवृत्तिं प्रमाणत्वेनोपन्यस्य विगतशङ्का हरिण्यो दिलीपवपुरवलोकयाञ्चक्रुरिति भावः ॥ ११ ॥

समासादि—धनतीति धनुः (न०लिं०), तद्बिभर्त्तीति धनुर्भृत् तस्य धनुर्भृतः(पुं०) । दयते रक्षत्यनयेति दया (स्त्री०), अर्द्यते स्मेत्यसावार्द्रः (पुं०), दयया आर्द्रो दयाऽऽर्द्रः (त० पु०), भवनं भावः (पुं०), दयाऽऽर्द्रो भावो यस्य तद् दयाऽऽर्द्रभावं तद्दयाऽऽर्द्रभावं (ब०-व्री०) । आख्यायते स्म यत्तदाख्यातं तदाख्यातम् (न० लिं०) । क्रियन्ते एभिरिति करणानीन्द्रियाणि (न० लिं०), अन्तरन्तःस्थानि च तानि करणानि, अन्तःकरणानि तैरन्तःकरणैः (त० पु० क०) । विगताः शङ्का येभ्यस्तानि विशङ्कानि (ब० व्री०) तैर्विशङ्कैः । विलोकयन्तीति विलोकयन्त्यः (स्त्री०) । वपति उप्यते वेति वपुस्तद्वपुः (न० लिं०) । अश्नुवते एभिरित्यक्षीणि तेषामक्ष्णाम् (न०लिं) । विस्तरणं विस्तारः (पुं०), फलनं फलम् (न० लिं०), प्रकामं विस्तारः प्रकामविस्तारः (त० पु०) तस्य फलं प्रकामविस्तारफलं तत्प्रकामविस्तारफलम् (त०पु०) । हरन्ति मनो, ह्रियन्ते गीतेन वेति हरिणास्तेषां स्त्रियो हरिण्यः (स्त्री०) ॥ ११ ॥

व्याकरणं—धनुर्भृतः = धनुष् + डुभृञ् (धारणपोषणयोः–डुञित्) + क्विप्, "क्विप् च" इति क्विप्प्रत्यये तुगागमे ङसो रूपम् । दया = दय (दानगतिहिंसारक्षणेषु–अकारेत्) + अङ् + टाप्, "षिद्भिदादिभ्योऽङ्" इत्यङ् टाप् सोर्लुकि रूपम् । आर्द्रः = अर्द (गतौ याचने च–अकारेत्) + रक्, "अर्देर्दीर्घश्च" इत्यौणादिको रक् प्रत्ययो धात्वादेर्दीर्घश्च सौ रूपम् । भावः = भू (सत्तायाम्) + घञ्, "श्रिणीभुवोऽनुपसर्गे" इति घञ् प्रत्ययो ञित्वाद् वृद्धावावादेशे सौ रूपम् । आख्यातम् = आङ् + ख्या (प्रकथने) + क्तः, "निष्ठा" इति कर्मणि भूतेऽर्थे क्तप्रत्ययोऽमि रूपम् । करणानि = डुकृञ् (करणे–डुञित्) + ल्युट्, "करणाधिकरणयोश्च" इति करणे ल्युट् प्रत्ययो योरनादेशे जसि रूपम् । शङ्का = शकि (शङ्कायाम्–इदित्) + अः + टाप्, इदित्वान्नुमि "गुरोश्च हलः" इत्यप्रत्यये टाप् सौ रूपम् । विशङ्कैः = विगता + शङ्का, "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति वार्त्तिकेन बहुव्रीहिसमासे धातुजोत्तरपदलोपे "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वे भिसि रूपम् । विलोकयन्त्यः = वि + लोकृ (अनेकार्थत्वाद् दर्शने–ऋदित्) + णिच् + शतृ + ङीप् + जस् । वपुः = डुवप् (बीजसन्ताने–ड्वित्) + उसिः, "अर्तिपृवपियजितनिधनितपिभ्यो नित्" इत्यौणादिक उसिप्रत्ययः स च नित् ततोऽमि रूपम् । आपुः = आप्लृ (व्याप्तौ–लृदित्) + लिट्, तस्य झेरुसादेशे धातोर्द्वित्वेऽभ्यासकार्ये रूपम् । अक्ष्णाम् = अशू (व्याप्तौ–ऊदित्) + क्सिः, "अशेर्नित्" इत्यौणादिकः क्सिप्रत्ययः स च नित् शस्य "व्रश्चे"ति षत्वे "षढोः कः सि" इति षस्य कः पुनः "आदेशप्रत्यययोः" इति सस्य षत्वे तत आमि "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्यनङादेशे "अल्लोपोऽनः" इत्यल्लोपे रूपम् । प्रकामम् = प्र + कमु (कान्तौ–उदित्) + घञ्, भावे घञ्प्रत्यये ञित्वादुपधावृद्धौ सोरमादेशे रूपम् । विस्तारः = वि + स्तृञ् (आच्छादने–ञित्) + घञ्, "प्रथने वावशब्दे" इति घञ्प्रत्यये वृद्धौ रपरे सौ रूपम् । फलम् = फल (निष्पत्तौ–अकारेत्) + अच्, पचादित्वादच्प्रत्यये सोरमादेशे रूपम् । हरिण्यः = हृञ् (हरणे–ञित्) + इनच्, "श्यास्त्याहृञविभ्य इनच्" इतीनच् प्रत्ययो धातोर्गुणो रपरो णत्वं ततः "पुंयोगादाख्यायाम्" इति ङीप् "यस्येति च" इत्यकारलोपो जसि रूपम् ॥ ११ ॥

वाच्यान्तरं—धनुर्भृतोऽप्यस्य विशङ्कैरन्तःकरणैर्दयाऽऽर्द्रभावमाख्यातं वपुर्विलोकयन्ती-

भिर्हरिणीभिरक्ष्णां प्रकामविस्तारफलमापे ॥ ११ ॥

कोशः—"धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्। इष्वासोऽपि" इति। "दयाकृपाऽनुकम्पा स्यादनुक्रोशोऽपि" इति। "आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च" इति। "भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु" इति। "उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम्" इति चामरः। "करणं कारणे काये साधनेन्द्रियकर्मसु। कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयोः। पुमाञ्शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते" इत्यजयः। "शङ्का भये संशये च" इत्यनेकार्थसङ्ग्रहः। "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इति। "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी च" इति। "कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्" इति। "विस्तारो विग्रहो व्यासः" इति चामरः। "फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इत्यनेकार्थसङ्ग्रहः। "मृगे कुरङ्गवातायुहरिणाजिनयोनयः" इत्यमरः ॥ ११ ॥

तात्पर्यार्थः—यद्यपि राजा दिलीपो धनुर्दधानः सन् वेपतो भयप्रद आसीत्, परन्तु स्वस्वान्तःकरणैस्तदीयं दयाऽऽर्द्रभावं ज्ञात्वा, अत एव भयरहिता हरिण्यो दिलीपशरीरं विस्फारितनयनाः पश्यन्त्यः सत्यः स्वस्वनयनानां विशालतायाः सफलतामधिजग्मुः ॥ ११ ॥

भाषाऽर्थः—धनुष को धारण किये हुये भी राजा दिलीप का, शङ्का से शून्य अपने अन्तःकरणों के द्वारा दया से आर्द्र अभिप्राय मालूम पड़ने से उनके शरीर को विशेष रूप से देखती हुईं हरिण की स्त्रियों ने अपने २ आंखों का अत्यन्त बड़े होने का फल प्राप्त किया ॥ ११ ॥

*दिलीपस्य कुञ्जेषु स्वनद्भिर्वेणुभिर्वनदेवताकर्तृकस्वयशोगानश्रवणमुत्प्रेक्षते*—

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥

सञ्जीविनी—स इति। स दिलीपो मारुतपूर्णरन्ध्रैः। अत एव कूजद्भिः स्वनद्भिः। कीचकैर्वेणुविशेषैः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। वंशः सुषिरवाद्यविशेषः। 'वंशादिकं तु सुषिरम्' इत्यमरः। आपादितं संपादितं वंशस्य कृत्यं कार्यं यस्मिन्कर्मणि तत्तथा। कुञ्जेषु लतागृहेषु। 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे' इत्यमरः। वनदेवताभिरुद्गीयमानमुच्चैर्गीयमानं स्वं यशः शुश्राव श्रुतवान् ॥१२॥

अन्वयः—सः, मारुतपूर्णरन्ध्रैः, कूजद्भिः, कीचकैः, आपादितवंशकृत्यं, कुञ्जेषु, वनदेवताभिः, उच्चैः, उद्गीयमानं, स्वं, यशः, शुश्राव ॥ १२ ॥

व्याख्या—सः=पूर्वोक्तः, राजा दिलीप इति यावद्। मारुतपूर्णरन्ध्रैः=वायुपूरितच्छिद्रैः, "अत एव" कूजद्भिः=शब्दं कुर्वद्भिः, कीचकैः=वंशविशेषैः, आपादितवंशकृत्यं=सम्पादितसुषिरकार्यम्, परिपूरितवेणुवाद्यकार्यमिति यावद्। वनदेवताकर्तृकगानक्रियाविशेषणमेतद्। कुञ्जेषु=निकुञ्जेषु, लतागृहेष्वित्यर्थः। वनदेवताभिः=काननाधिष्ठातृदेवीभिः, उच्चैः=तारस्वरेण, उद्गीयमान=संशब्द्यमानं, स्तूयमानमिति भावः। स्वम्=आत्मीयं, निजमित्यर्थः। यशः= कीर्तिं, शुश्राव= आकर्णयामास ॥ १२ ॥

समासादि—चीकयन्ते शब्दायन्तेऽनिलेनोद्धता ये वेणवस्ते कीचकाः (पुं०) तैः कीचकैः। मरुद् एव मारुतः (पुं०), पूर्यन्ते स्मेति पूर्णानि (न० लिं०), रन्धयन्तीति रन्ध्राणि (न० लिं०), मारुतेन पूर्णानि मारुतपूर्णानि (त० पु०) तानि रन्ध्राणि येषान्ते मारुतपूर्णरन्ध्रास्तैर्मारुतपूर्णरन्ध्रैः (ब० व्री०)। कूजन्तीति कूजन्तस्तैः कूजद्भिः (पुं०)। कृत्यत इति कृत्यम् (न० लिं०), वंशस्य कृत्यं वंश कृत्यम् (त० पु०), आपादितं वंशकृत्यं यस्मिन् कर्मणि तदापादितवंशकृत्यम् (ब० व्री०)। कौ पृथिव्यामजनिपतेति कुञ्जास्तेषु कुञ्जेषु (पुं०)। अश्नुते व्याप्नोतीति यशस्तद्यशः (न० लिं०)। स्वन्यत इति स्वन्तत्स्वम् (न०लिं०)। उ-

च्चीयत इत्युच्चैः (अ०)। उद्गीयत इत्युद्गीयमानन्तदुद्गीयमानम् (न० लिं०)। देवा एव देवताः (स्त्री०)। वनानां देवता वनदेवताः (त० पु०) ताभिर्वनदेवताभिः (स्त्री०)॥ १२॥

व्याकरणं—कीचकैः = चीक (मर्षणे—अकारेत्) + णिच् (चीकि) + वुन्, चुरादित्वाण्णिचि ततो धातुसंज्ञायां पुनर्धातुत्वाद् "चीकयतेराद्यन्तविपर्ययश्च" इत्यौणादिको वुन् प्रत्ययोऽकादेशे णिलोपे धातोराद्यन्तवर्णयोर्विपर्यये भिसि रूपम्। मारुतः = मरुत् + अण्, "प्रज्ञादिभ्यश्च" इत्यण् स्वार्थे सौ रूपम्। पूर्णानि = पूरी (आप्यायने—ईदित्) + णिच् (पूरि) + क्तः, "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" इति निष्ठान्तो णिलोप इडभावश्च निपात्येते जसि रूपम्। रन्ध्राणि = रन्ध (हिंसासंराद्ध्योः-अकारेत्) + णिच् (रन्धि) + रक् + जस्। कूजद्भिः = कूज (अव्यक्ते शब्दे—अकारेत्) + शतृ + भिस्, धातोर्लटः स्थाने शत्रादेशे शपि "अतो गुणे" इति पररूपे भिसि रूपम्। आपादितम् = आङ् + पद (गतौ—अकारेत्) + णिच् (पादि) + क्तः, "निष्ठायां सेटि" इति णिलोपः सोरमादेशे रूपम्। कृत्यं = कृती (छेदने—ईदित्) + क्यप् "ऋदुपधाच्चाक्लृपि चृतेः" इति क्यपि सोरमादेशे रूपम्। शुश्राव = श्रु (श्रवणे) + लिट्, धातोर्लिटस्तिपो णलादेशे द्वित्वेऽभ्यासकार्ये "अचोऽञ्णिति" इति वृद्धावावादेशे रूपम्। कुञ्जेषु = कु + जनी (प्रादुर्भावे = ईदित्) + डः, "सप्तम्यां जनेर्डः" इति डप्रत्ययष्टिलोपे "पृषोदरादीनि यथोपदिष्टम्" इति धातोर्नुडागमेऽनुस्वारपरसवर्णौ सुपि रूपम्। यशः = अशू (व्याप्तौ—ऊदित्) + असुन्, "अशेर्देवने युट् च" इत्यौणादिकोऽसुन् प्रत्ययो धातोर्युडागमेऽमि रूपम्। स्वं = स्वन (शब्दे—अकारेत्) + डः "अन्येष्वपि दृश्यते" इत्यत्रापेः सर्वोपाधिव्यभिचारार्थकतया क्वचिदनुपपदेष्वपि धात्वन्तरादपि डप्रत्ययविधानाद् डप्रत्यये टिलोपेऽमि रूपम्। उच्चैः = उद् + चिञ् (चयने—ञित्) + डैसिः, "उदि चेर्डैसिः" इत्यौणादिको डैसिप्रत्यये डित्वाट्टिलोपेऽव्ययत्वात् सुपो लुकि रूपम्। उद्गीयमानम् = उद् + गै (शब्दे) + यक् (गीय) + शानच् + अम्, धातोः कर्मणि लटि "सार्वधातुके यक्" इति यगागमे धातोरात्वे "ई हल्यघोः" इतीत्वे लटः शानजादेशे "आने मुक्" इति मुगागमेऽमि रूपम्। देवताः = देव + तल् + टाप्, "देवात्तल्" इति स्वार्थे तल् प्रत्यये "तलन्तं स्त्रियाम्" इति लिङ्गानुशासनाट्टापि जसि रूपम्॥ १२॥

वाच्यान्तरं—तेन मारुतपूर्णरन्ध्रैः कूजद्भिः कीचकैरापादितवंशकृत्यं कुञ्जेषु वनदेवताभिरुच्चैरुद्गीयमानं स्वं यशः शुश्रुवे॥ १२॥

कोशः—"वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः। "कीचको दैत्यभिद्वाताहतसस्वनवंशयोः" इति च मेदिनी। "समीरमारुतमरुज्जगत्प्राणसमीरणाः। नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः। "पूर्णस्तु पूरिते" इति। "पूर्णः कृत्स्ने पूरिते च" इत्यमरहैमौ। "छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः" इत्यमरः। "वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च" इति विश्वः। "कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः" इति। "कृत्यो विद्विषि कार्ये च कृत्या क्रियादिवौकसोः" इत्यमररभसौ। "निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे" इति। "यशः कीर्त्तिः समज्ञा च" इति। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इति। "महत्युच्चैः" इति। "अटव्यरण्यं गहनं विपिनं काननं वनम्" इति॥ १२॥

तात्पर्यार्थः—राजा दिलीपो लताऽऽदिनिर्मितगृहेषु वनाधिष्ठातृदेवताभिरुच्चैरुद्गीयमानं निजयशः श्रुतवान्॥ १२॥

भाषाऽर्थ.—उन राजा दिलीप ने वायु से भरे हुये छिद्रों के होने से अव्यक्त शब्द करते हुये शब्द करने वाले कीचक संज्ञक बांसों के द्वारा वंशी का कार्य सम्पादन जिसमें हो रहा है, ऐसे लतागृहों में वन की अधिष्ठात्री देवियों से ऊंचे स्वरों से गाये जाते हुये अपने यश को सुना॥ १२॥

*सम्प्रति पवनकृतदिलीपपरिचर्यामाह—*

**पृक्तस्तुषारैर्गिरिनिर्झराणामनोऽकहाकम्पितपुष्पगन्धी ।**
**तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३ ॥**

सञ्जीविनी—पृक्त इति । गिरिषु निर्झराणां वारिप्रवाहाणाम् । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । तुषारैः सीकरैः । 'तुषारौ हिमसीकरौ' इति शाश्वतः । पृक्तः संपृक्तोऽनोऽकहानां वृक्षाणामाकम्पितानीषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीत्याकम्पितपुष्पगन्धी । ईषत्कम्पितपुष्पगन्धवान् । एवं शीतो मन्दः सुरभिः पवनो वायुरनातपत्रं व्रतार्थं परिहृतच्छत्रम् । अत एवातपक्लान्तमाचारेण पूतं शुद्धं तं नृपं सिषेवे । आचारपूतत्वात्स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः ॥ १३ ॥

अन्वयः—गिरिनिर्झराणां, तुषारैः, पृक्तः, अनोऽकहाकम्पितपुष्पगन्धी, पवनः, अनातपत्रम्, आतपक्लान्तम्, आचारपूतं, तं, सिषेवे ॥ १३ ॥

व्याख्या—गिरिनिर्झराणां = शैलवारिप्रवाहाणां, तुषारैः = सीकरैः शीतलजलकणिकाभिरिति यावत् । पृक्तः = संस्पृष्टः, अनोऽकहाकम्पितपुष्पगन्धी = पादपचलितप्रसूनामोदवान्, एतेन विशेषणद्वयेन पवनस्य मान्द्यं सौरभ्यं शैत्यं च सूचितानि । पवनः = वातः, अनातपत्रं = छत्ररहितं, व्रतार्थमस्वीकृतच्छत्रमिति भावः । "अत एव" ,आतपक्लान्तं = घर्मम्लानम्, आचारपूतम् = आचरणपवित्रं, सदाचारशुद्धमिति यावत् । तं = पूर्वोक्तं, दिलीपमिति भावः । सिषेवे = असेविष्ट, सदाचारेण शुद्धतया लोकपवित्रकारिणः पवनस्यापि स दिलीपः सेवाऽर्होऽभूदिति भावः ॥ १३ ॥

समासादि—तोषयन्तीति तुषाराः (पुं०) तैस्तुषारैः । गिरन्तीति गिरयः (पुं०), निर्झरणानि निर्झराः (पुं०), गिरिषु निर्झरा गिरिनिर्झरास्तेषां गिरिनिर्झराणाम् (त०पु०) । अनसः-शकटस्याकं गतिं घ्नन्तीत्यनोऽकहाः (पुं०), आ ईषत्कम्प्यन्ते स्मेत्याकम्पितानि (न० लिं०), पुष्पन्तीति पुष्पाणि (न० लिं०), गन्धयतीति गन्धः (पुं०), आकम्पितानि च तानि पुष्पाण्याकम्पितपुष्पाणि (त० क० धा० ), अनोऽकहानामाकम्पितपुष्पाण्यनोऽकहाकम्पितपुष्पाणि (त० पु०), तेषां गन्धोऽनोऽकहाकम्पितपुष्पगन्धः (त० पु०), सोऽस्यास्तीत्यनोऽकहाकम्पितपुष्पगन्धी (पुं०) । आतपात्त्रायत इत्यातपत्रं (न० लि०), न विद्यतआतपत्रं यस्यासावनातपत्रस्तमनातपत्रम् (ब० व्री०) । पवते स्मेति पूतः (पुं०), आचारेण पूत आचारपूतस्तमाचारपूतम् (त० पु०) ॥ १३ ॥

व्याकरणम्—पृक्तः = पृची (सम्पर्चने—ईदित्)+क्तः, "श्वीदितो निष्ठायाम्" इतीडभावः "चोः कुः" इति कुत्वं सौ रूपम् । तुषारैः = तुष (प्रीतौ—अकारेत्)+आरन्, अन्तर्भावितण्यर्थात्तुषेः "कमेः कितः" इत्यनुवृत्तौ "तुषारादयश्च" इत्यौणादिक आरन् प्रत्ययः स च कित् तेन गुणाभावो भिसि-रूपम् । गिरयः = गॄ (निगरणे)+किः, बाहुलकात् किप्रत्ययः "ॠत इद्धातोः" इतीत्वं जसि रूपम् । निर्झराः = निर्+झॄष् (वयोहानौ–षित्)+अप्, "ॠदोरप्" इति भावेऽप् प्रत्ययो गुणे रपरे जसि रूपम् । अनोऽकहाः = अनस्+अक+हन (हिंसागत्योः–अकारेत्)+डः, "अन्येष्वपि दृश्यते" इत्यत्रापेः सर्वोपाधिव्यभिचारार्थकत्वस्वीकाराद् डप्रत्यये डित्वाट्टिलोपे जसि रूपम् । आकम्पितानि = आङ्+कपि (चलने–इदित्)+क्तः, "निष्ठा" इति क्तप्रत्यये धातोर्नुमागमेऽनुस्वारपरसवर्णाविडागमे जसि रूपम् । पुष्पाणि = पुष्प (विकसने–अकारेत्)+अच्, पचादित्वादच्प्रत्यये जसि रूपम् । गन्धः = गन्ध (अर्दने–अकारेत्)+णिच्+अच्, चुरादित्वाण्णिचि "सनाद्यन्ता धातवः" इति धातुत्वे पचादित्वादच् प्रत्यये "णेरनिटि" इति णिलोपे सौ रूपम् । अनोऽकहाकम्पितपुष्पगन्धी = अनोऽकहाकम्पितपुष्पगन्ध+इनि, "अत इनिठनौ" इतीनिप्रत्यये सौ "सर्वनामस्थाने चासम्बुद्धौ"

इत्युपधादीर्घे नलोपसुलोपौ। क्लान्तः=क्लमु (ग्लानौ–उदित्)+क्तः, "यस्य विभाषा" इतीडभावः कित्वाद् "अनुनासिकस्य क्विझलोः क्ङिति" इत्युपधादीर्घोऽनुस्वारपरसवर्णौ सौ रूपम्। आतपत्रम्=आतप+त्रैङ् (पालने–ङित्)+कः,धातोरात्वे "आतोऽनुपसर्गे कः" इति क "आतो लोप इटि च" इत्याकारलोपः सोरमादेशे पूर्वरूपे रूपम्। अनातपत्रम्=नञ्+विद्यमान+आतपत्र, "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति वार्त्तिकेन नञा सह बहुव्रीहिसमासे विद्यमानपदलोपे नञो नलोपे "तस्मान्नुडचि" इति नुडागमेऽमि रूपम्। पूतः=पूङ् (पवने–ङित्)+क्तः,"गत्यर्थाकर्मके"त्यादिना कर्त्तरि क्तप्रत्यये "पूङश्च" इत्यस्य वैकल्पिकपक्ष इडभावः कित्वाद् गुणाभावश्च सौ रूपम्। सिषेवे=षेवृ (सेवने–ऋदित्)+लिट्, धात्वादेः षस्य सो धातोर्लिटस्तादेशे तस्यैशादेशे च द्वित्वेऽभ्यासह्रस्वे "स्थाऽऽदिष्वभ्यासेन चाभ्यासस्य" इति सस्य षत्वे रूपम्॥ १३॥

वाच्यान्तरं—गिरिनिर्झराणां तुषारैः पृक्तेनानोऽकहाकम्पितपुष्पगन्धिना पवनेनानातपत्र आतपक्लान्त आचारपूतः स सिषेवे॥ १३॥

कोषः—"तुषारौ हिमसीकरौ" इति शाश्वतः। "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इति। "वारिप्रवाहो निर्झरो झरः" इति। "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः। अनोऽकहः कुटः सालः पलाशी द्रुद्रुमागमाः" इति। "वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते" इति। "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इति चामरः। "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः। "घर्मः स्यादातपे ग्रीष्मेऽप्यूष्मस्वेदाम्भसोरपि" इति मेदिनी। "छत्रन्त्वातपत्रम्" इत्यमरः। "पवित्रः प्रयतः पूतः" इति। "नभस्वद्वातपवनपवमानप्रभञ्जनाः" इति चामरः॥ १३॥

तात्पर्यार्थः—हिमालयशैलोद्भवनिर्झराणां जलकणयुक्तोऽत एव शीतलस्तथा चेषत्कम्पितवृक्षकुसुमसौरभ्यमादाय, मन्दः सुरभिश्च पवनश्छत्ररहितमत एव घर्मम्लानं सदाचारपवित्रं तं दिलीपमसेविष्ट॥ १३॥

भाषाऽर्थ—पहाडी झरनों के जलबिन्दुओं से युक्त, अत एव शीतल तथा वृक्षों के कुछ २ हिले हुये फूलों के गन्ध को लेता हुआ "मन्द २ सुगन्धि" वायु व्रत करने से छत्र से रहित अत एव घाम से मुरझाये हुये सदाचार से पवित्र उन राजा दिलीप की सेवा करने लगा॥ १३॥

*दिलीपे वनं प्रविशति सति तत्तेजसा सर्वत्र शान्तिरासीदित्याह—*

**शशाम वृष्ट्याऽपि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः।**
**ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने॥ १४॥**

सञ्जीविनी—शशामेति। गोप्तरि तस्मिन्राज्ञि वनं गाहमाने प्रविशति सति वृष्ट्या विनाऽपि दवाग्निर्वनाग्निः 'दवदावौ वनानले' इति हैमः। शशाम। फलानां पुष्पाणां च वृद्धिः। विशेष्यत इति विशेषा अतिशयिताऽऽसीत्। कर्मार्थे घञ्प्रत्ययः। सत्त्वेषु जन्तुषु मध्ये। "यतश्च निर्धारणम्" इति सप्तमी। अधिकः प्रबलो व्याघ्रादिरूनं दुर्बलं हरिणादिकं न बबाधे॥१४॥

अन्वयः—गोप्तरि, तस्मिन्, वनं, गाहमाने, (सति), वृष्ट्या, विना, अपि, दवाग्निः, शशाम, फलपुष्पवृद्धिः, विशेषा, आसीत्, सत्त्वेषु, (मध्ये), अधिकः, ऊनं, न, बबाधे॥१४॥

व्याख्या—गोप्तरि=रक्षितरि, तस्मिन्=पूर्वोक्ते, राज्ञि दिलीप इति यावद्। वनं=विपिनं, गाहमाने=प्रविशति, सतीति शेषः। वृष्ट्या=वर्षणेन, विना=अन्तरेण, अपि=समुच्चये, दवाग्निः=वनवह्निः, शशाम=अशमत्, शान्तोऽभूदित्यर्थः। फलपुष्पवृद्धिः=सस्यप्रसूनसमृद्धिः, विशेषा=अतिशयिता, पूर्वापेक्षयाऽधिकेत्यर्थः। आसीद्=अभवत्, सत्त्वेषु=जन्तुषु, वनोद्भवव्याघ्रादिषु मध्य इत्यर्थः। अधिकः=प्रबलः, बलादिनेति शेषः।

व्याघ्रादिरित्यर्थः। ऊनं=हीनं, बलादिनेति शेषः। मृगादिकमिति भावः। न=नहि, बबाधे=पीडयामास, बाधां कृतवानिति यावत्॥ १४॥

समासादि—वर्षणं वृष्टिः (स्त्री०) तया वृष्ट्या। न पिपतीत्यपि (अ०)। वि-इति विना (अ०)। दुनोतीति दवो वनं (पुं०), अङ्गतीत्यग्निः (पुं), दवस्याग्निर्दवाग्निः (त० पु०)। विशिष्यतेऽसौ विशेषा (स्त्री०)। फलानि च पुष्पाणि च फलपुष्पाणि (द्वन्द्वः), वर्धनं वृद्धिः (स्त्री०), फलपुष्पाणां वृद्धिः फलपुष्पवृद्धिः (त० पु०)। ऊनयतीत्यूनः (पुं०) तमूनम्। न-ह्यतीति न (अ०)। गोपायतीति गोप्ता (पुं०) तस्मिन् गोप्तरि। गाहत इति गाहमानः(पुं०) तस्मिन् गाहमाने॥ १४॥

व्याकरणं—शशाम=शमु (उपशमे-उदित्)=लिट्, धातोर्लिटस्तिपो णलादेशे द्वित्वेऽभ्यासकार्ये"अत उपधायाः" इत्युपधावृद्धौ रूपम्। वृष्ट्या=वृषु (वर्षणे-उदित्)+क्तिन्, "स्त्रियाम्"इति क्तिन् प्रत्ययः कित्वाद् गुणाभावष्टारूपम्, "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति विनायोगे तृतीया। अपि=नञ्+पि (गतौ)+क्विप्, "अन्येभ्योऽपि दृश्यते" इति क्विप्प्रत्यय आगमशास्त्रस्यानित्यत्वाद् "ह्रस्वस्य पिति कृति तुक्" इति तुगागमाभावस्ततो नञ्समासे नञो नलोपेऽव्ययत्वात्सुपो लुकि रूपम्। विना=वि+ना, "विनञ्भ्यां-नानाञौ नसह" इति वर्जनार्थाद् विशब्दात्स्वार्थे नाप्रत्ययेऽव्ययत्वात्सुपो लुकि रूपम्। विशेषा=वि+शिष्लृ (विशेषणे-लृदित्)+घञ्, "अकर्त्तरि च कारके संज्ञायाम्" इति कर्मार्थत्वस्वीकाराद् घञ् प्रत्यय उपधागुणे टापि सौ रूपम्। वृद्धिः=वृधु (वर्धने-उदित्)+क्तिन्, "स्त्रियाम्"इति क्तिन्प्रत्ययः "झषस्तथोर्धोऽधः" इति तस्य धत्वे पूर्वधस्य जश्त्वेन दत्वे सौ रूपम्। ऊनम्=ऊन (परिहाणे-अदन्तोऽयम्)+अच्, पचादित्वादच् प्रत्यये "अतो गुणे" इति पररूपेऽमि रूपम्। न=णह (बन्धने-अकारेत्)+डः,धात्वादेर्णस्य नत्वे बाहुलकाद् ड-प्रत्यये डित्वाट्टिलोपेऽव्ययत्वात्सुपो लुकि रूपम्। बबाधे=बाधृ (लोडने-ऋदित्)+लिट्, धातोर्लिटस्तादेशे तस्य चैशादेशे द्वित्वेऽभ्यासह्रस्वे रूपम्। गोप्तरि=गुपू (रक्षणे-ऊदित्)+तृच्, "ण्वुल्तृचौ" इति कर्त्तरि तृच् प्रत्ययस्ततो ङौ "ऋतो ङिसर्वनामस्थानयोः" इति गुणे रपरे रूपम्। गाहमाने=गाहू (विलोडने-ऊदित्)+लट्+शानच्+ङि, लटः शानजादेशे शपि "आने मुक्" इति मुगागमे ङौ गुणे रूपम्॥ १४॥

वाच्यान्तरं—गोप्तरि तस्मिन् वनं गाहमाने (सति) वृष्ट्या विनाऽपि दवाग्निना शेमे, फलपुष्पवृद्धया विशेषयाऽभूयत, सत्वेषु (मध्ये) अधिकेनोनो न बबाधे॥ १४॥

कोशः—"वृष्टिर्वर्षम्" इति। "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इति। "पृथग्विनाऽन्तरणर्ते हिरुङ् नाना च वर्जने" इति। "दवदावौ वनारण्यवह्नी" इति। "अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इति चामरः। "फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायाञ्च कक्कोले शस्याग्रे व्युष्टिलाभयो." इति हैमः। "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं-सुमम्" इति। "स्फातिर्वृद्धौ" इति। "हीनन्यूनावूनगर्ह्यौ" इति। "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति।"अटव्यरण्यं विपिनं गहनं काननं वनम्" इति चामरः॥ १४॥

तात्पर्यार्थः—जगतो रक्षितू राज्ञो दिलीपस्य वनप्रवेशक्षण एव तत्तेजसा भयेन च सर्वत्र वनाग्निर्जलवर्षणं विनैव शान्तोऽभूद्, लतावृक्षादयोऽपि फलपुष्पसमृद्ध्या शोभाशालिनोऽभूवन्, वन्यजन्तूनां मध्ये कोऽपि प्रबलः सिंहादिः कमपि निर्बलं मृगादिकं न पीडयामास॥१४॥

भाषार्थः—जगत के रक्षा करने वाले उन राजा दिलीप के वन में प्रवेश करने पर वृष्टि के विना ही वन की अग्नि शान्त हुई, फल और पुष्पों की वृद्धि अधिक हुई, तथा वनैले जीवों के बीच में "कोई" बलवान् "व्याघ्रादि" अपने से निर्बल किसी "मृगादि" को नहीं सताने लगा॥ १४॥

*वने चरित्वा सायङ्काले नन्दिन्याः प्रतिनिवर्त्तनमाह*—

**सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।**
**प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १९ ॥**

सञ्जीविनी—सञ्चारेति । पल्लवस्य रागो वर्णः पल्लवरागः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इति शाश्वतः । स इव ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्यस्य प्रभा कान्तिः । 'पतङ्गः पक्षिसूर्ययोः' इति शाश्वतः । मुनेर्धेनुश्च । दिगन्तराणि दिशामवकाशान् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । सञ्चारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयायास्तमयाय । धेनुपक्ष आलयाय च गन्तुं प्रचक्रमे ॥ १९ ॥

अन्वयः—पल्लवरागताम्रा, पतङ्गस्य, प्रभा, मुनेः, धेनुः, च, दिगन्तराणि, सञ्चारपूतानि, कृत्वा, दिनान्ते, निलयाय, गन्तुं, प्रचक्रमे ॥ १९ ॥

व्याख्या—पल्लवरागताम्रा = किसलयवर्णारुणा, पतङ्गस्य = सूर्यस्य, प्रभा = कान्तिः, मुनेः = वाचंयमस्य, महर्षेर्वसिष्ठस्येति यावद् । धेनुः = नवसूतिका, नन्दिनी, कामधेनुसुतेति यावद् । च = समुच्चये, दिगन्तराणि = आशाऽवकाशानि, सञ्चारपूतानि = सञ्चरणपवित्राणि, कृत्वा = सम्पाद्य, दिनान्ते = दिवसावसाने, सन्ध्याकाल इति यावद् । निलयाय = (प्रभापक्षे) अस्तमयाय, ( धेनुपक्षे ) गृहाय, स्वावासस्थानायेति यावद् । गन्तुं = यातुं, प्रचक्रमे = उपक्रमं कृतवती ॥ १९ ॥

समासादि—सञ्चरणं सञ्चारः (पुं) तेन पूतानि सञ्चारपूतानि ( त० पु० ) तानि सञ्चारपूतानि । दिशन्त्यवकाशं यास्ता दिशः (स्त्री०), अन्तं रान्तीत्यन्तराणि ( न० लि० ) दिशामन्तराणि दिगन्तराणि ( त० पु० ) तानि दिगन्तराणि । द्यति तमो निर्व्यापारस्थितिश्चेति वा दिनं ( न० लि० ), अन्तनमन्तः (पुं०), दिनस्यान्तो दिनान्तः (त० पु०) तस्मिन् दिनान्ते । निलीयतेऽत्र निलयः (पुं०) तस्मै निलयाय । पद्भ्यां लूयतेऽसौ पल्लवः (पुं०), रज्यत्यनेन रागः (पुं०), ताम्यति तम्यते वेति ताम्रा (स्त्री०), पल्लवस्य रागः पल्लवरागः ( त० पु० ) पल्लवराग इव ताम्रा पल्लवरागताम्रा ( त० पु० ) प्रभातीति प्रभा (स्त्री०), पततीति पतङ्गः (पुं०) तस्य पतङ्गस्य ॥ १९ ॥

व्याकरणं—सञ्चारः = सम् + चर ( गतिभक्षणयोः-अकारेत् ) + घञ्, भावे घञ् प्रत्यय-उपधावृद्धौ सौ रूपम् । दिशः = दिश ( अतिसर्जने-अकारेत् ) + क्विन्, "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इति कर्त्तरि क्विन् प्रत्ययस्तस्य च सर्वापहारलोपे जसि रूपम् । कित्वाद् गुणाभावोऽपि बोध्यः । अन्तराणि = अन्त + रा (दाने) + कः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः कित्वाद् धातोराकारलोपे तत उपपदसमासे प्रातिपदिकावयवसुपो लुकि कृदन्तत्वात्प्रातिपदिकत्वेन जसि रूपम् । दिनं = दो ( अवखण्डने ) + इनच्, धातोरात्वे "बहुलमन्यत्रापि" इत्यौणादिक इनच् प्रत्ययः स च कित् तेन धातोराकारलोपः सोरमादेशे पूर्वरूपे रूपम् । अन्तः = अति ( बन्धने-इदित् ) + घञ्, भावे घञ् प्रत्यय इदित्त्वाद्धातोर्नुमागमः सौ रूपम् । निलयाय = नि + लीङ् ( श्लेषणे-ङित् ) + घः, "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्यये धातोर्गुणायादेशौ "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति सम्प्रदानसंज्ञा ततः सम्प्रदाने चतुर्थी ङेरूपम् । गन्तुं = गम्लृ ( गतौ-लृदित् ) + तुमुन् "तुमुन्ण्वुलौ क्रियायां क्रियाऽर्थायाम्" इति तुमुन् प्रत्ययो मस्यानुस्वारपरसवर्णौ "कृन्मेजन्तः" इति मान्तत्वादव्ययत्वेन सुपो लुकि रूपम् । प्रचक्रमे = प्र + क्रमु ( पादविक्षेपे-उदित ) + लिट्, "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदं तेन लिटस्तादेशे तस्य चैशादेशे धातोर्द्वित्वेऽभ्यासहलादिकार्ये "कुहोश्चुः" इति चुत्वेन चकारे रूपम् । पल्लवः = पद् + लूञ् (छेदने-ञित् ) + अप्, "ऋदोरप्" इत्यप् प्रत्ययः "तोर्लि" इति दस्य लत्वे, धातोर्गुणावादेशौ सौ

रूपम्। रागः = रञ्ज ( रागे-अकारेत् ) + घञ्, "अकर्त्तरि च कारके संज्ञायाम्" इति घञ् प्रत्यये "घञि च भावकरणयोः" इति रञ्जेर्नलोपे "चजोः कुघिण्ण्यतोः" इति कुत्वेन गकारे ञित्वादुपधावृद्धौ सौ रूपम्। ताम्रा = तमु ( काङ्क्षायाम्-उदित् ) + रक्, "अमितम्योर्दीर्घश्च" इत्यौणादिको रक् प्रत्ययो धातोरुपधादीर्घश्च टाप् सोर्हल्ङ्यादिलोपे रूपम्। पल्लवरागताम्रा = पल्लवराग + ताम्रा "उपमानानि सामान्यवचनैः" इति तत्पुरुषसमासे रूपम्। प्रभा = प्र + भा ( दीप्तौ ) + कः + टाप्, "आतश्चोपसर्गे" इति कप्रत्ययः कित्वाद्धातोराकारलोपे ततष्टापि सुलोपे रूपम्। पतङ्गस्य = पत्लृ ( गतौ-लृदित् ) + अङ्गच्, "पतेरङ्गच्-पक्षिणि" इत्यौणादिकोऽङ्गच् प्रत्ययो ङसे रूपम् ॥ १५ ॥

वाच्यान्तरम्—पल्लवरागताम्रया पतङ्गस्य प्रभया मुनेर्धेन्वा च दिगन्तराणि सञ्चारपूतानि कृत्वा, दिनान्ते निलयाय गन्तुं प्रचक्रमे ॥ १५ ॥

कोशः—"पवित्रः प्रयतः पूतः" इति। "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इति। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि च" इति। "दिनान्ते तु सायः" इति चामरः। "निलयोऽस्तमये गृहे। गोपनस्य प्रदेशेऽपि" इति हैमः। "पल्लवोऽस्त्री किसलयम्" इत्यमरः। "रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु" इति शाश्वतः "ताम्रं शुल्वेऽरुणेऽपि च" इति मेदिनी। "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः। "पतङ्गः पक्षिसूर्ययोः" इति शाश्वतः ॥ १५ ॥

तात्पर्यार्थः—नवपल्लववर्णवदरुणवर्णा सूर्यकान्तिर्यथा सायङ्कालेऽस्तमयाय गन्तुमुपक्रमं कृतवती, तथैव मुनिहोमधेनुरपि तत्तुल्यवर्णा सञ्चरणेन दिशामन्तरालानि पवित्राणि कृत्वा स्वाश्रमाय गन्तुमुद्यताऽभूत् ॥ १५ ॥

भाषार्थः—पल्लव के वर्ण के तरह लाल वर्ण वाली सूर्य की प्रभा और मुनि वसिष्ठ की नन्दिनी नामकी धेनु ये दोनों, दिशाओं के मध्यभाग को अपने२ सञ्चार से पवित्र करके दिन के अन्त ( सन्ध्याकाल ) में अस्त होने के लिये तथा अपने आश्रम में पहुंचने के लिये उपक्रम करने लगीं ॥ १५ ॥

*वनान्निवर्त्तमानाया नन्दिन्या दिलीपकर्तृकानुसरणे कविरुत्प्रेक्षमाण आह*—

**तां देवतापित्रतिथिक्रियाऽर्थामन्वग्ययौ मध्यमलोकपालः।**
**बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥**

सञ्जीविनी—तामिति। मध्यमलोकपालो भूपालः। देवतापित्रतिथीनां क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजनं यस्यास्तां धेनुमन्वगनुपदं ययौ। 'अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्' इत्यमरः। सतां मतेन सद्भिर्मान्येन। "गतिबुद्धि०" इत्यादिना वर्तमाने क्तः। "क्तस्य च वर्तमाने" इति षष्ठी। तेन राज्ञोपपन्ना युक्ता सा धेनुः। सतां मतेन विधिनाऽनुष्ठानेनोपपन्ना युक्ता साक्षात्प्रत्यक्षा श्रद्धाऽऽस्तिक्यबुद्धिरिव बभौ च ॥ १६ ॥

अन्वयः—मध्यमलोकपालः, देवतापित्रतिथिक्रियाऽर्थां, ताम्, अन्वग्, ययौ, सतां, मतेन, तेन, उपपन्ना, सा, ( सताम्मतेन ), विधिना, ( उपपन्ना ) साक्षात्, श्रद्धा, इव, बभौ, च ॥ १६ ॥

व्याख्या—मध्यमलोकपालः = मध्यभुवनरक्षको, भूपो दिलीप इति यावद्। देवतापित्रतिथिक्रियाऽर्थां = सुरपितृप्राघुणककृत्यप्रयोजनकां, यज्ञश्राद्धदानादिसाधिकामिति यावत्। तां = पूर्वोक्तां, वनात्परावर्त्तमानां नन्दिनीमित्यर्थः। अन्वग् = अन्वक्षं, तत्पृष्ठमनुसरन्निति भावः। ययौ = जगाम, सतां = साधूनां, विदुषां वा, मतेन = पूजितेन, मान्येनेति यावद्। तेन = पूर्वोक्तेन, राज्ञा दिलीपनेति यावद्। उपपन्ना = युक्ता, अनुस्रियमाणेति भावः। सा = पूर्वोक्ता, धेनुरिति यावत्। "सताम्मतेन = साधुजनाचरितेन", विधिना = विधानेन, अ-

नुष्ठानेनेति यावद्। "उपपन्ना=युक्ता, सहितेति यावत्"। साक्षात्=प्रत्यक्षा, मूर्त्तिमतीति भावः। श्रद्धा=आस्तिक्यबुद्धिः, इव=यथा, बभौ=शुशुभे, च=पुनः, अन्वाचयेऽर्थे चकारो बोध्यः॥ १६॥

समासादि—देवा एव देवताः (स्त्री०), देवताश्च पितरश्चातिथयश्चेति देवतापित्रतिथयः (द्वन्द्वः), तासां क्रिया देवतापित्रतिथिक्रियाः (त० पु०), ता एवार्थः प्रयोजनं यस्याः सा तां देवतापित्रतिथिक्रियाऽर्थाम् (ब०व्री०)। अन्वञ्चतीत्यन्वग् (अ०)। मध्ये भवो मध्यमः (पुं०), मध्यमश्चासौ लोको मध्यमलोकः (त० क० धा०), तम्पालयतीति मध्यमलोकपालः (पुं०)॥ १६॥

व्याकरणम्—अन्वग्=अनु+अञ्चु (गतौ–उदित्)+क्विन् "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च" इति क्विन् प्रत्ययः "अनिदितां हल उपधायाः क्ङिति" इति कित्वाद्धातोरुपधानकारलोपः "चोः कुः" इति कुत्वम् "अव्यय"मित्यादिना पश्चादर्थेऽव्ययीभावसमासेऽव्ययत्वात्सुपो लुकि रूपं बोध्यम्। ययौ=या (प्रापणे)+लिट्, तस्य तिपो णलादेशे "आत औ णलः" इति णल औकारादेशे धातोर्द्वित्वेऽभ्यासह्रस्वे वृद्धौ रूपम्। मध्यमः=मध्य+मः "मध्यान्मः" इति भवार्थे मप्रत्ययः सौ रूपम्। बभौ=भा (दीप्तौ)+लिट्, तस्य तिपो णलादेशे तस्य चौकारादेशे धातोर्द्वित्वेऽभ्यासह्रस्वे "अभ्यासे चर्च" इति जश्त्वेन बकारादेशे रूपसिद्धिः। मतेन=मनु (अवबोधने–उदित्)+क्तः, "मतिबुद्धिपूजाऽर्थेभ्यश्च" इति वर्त्तमाने क्तप्रत्यये कित्वाद् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपष्टारूपम्। सताम्=सत्+आम्, "क्तस्य च वर्त्तमाने" इति षष्ठी। उपपन्ना=उप+पद (गतौ—अकारेत्)+क्तः+टाप्, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठातस्य नत्वे पूर्वदस्य च नत्वे टापि सोर्लोपे रूपम्॥ १६॥

वाच्यान्तरम्—मध्यमलोकपालेन देवतापित्रतिथिक्रियाऽर्था साऽन्वग् यये, सतां मतेन तेनोपपन्नया तया (सतां मतेन) विधिना (उपपन्नया) साक्षाच्छ्रद्धयेव बभे च॥ १६॥

कोशः—"अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति। "अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्" इति। "लोकस्तु भुवने जने" इति। "श्रद्धा सम्प्रत्ययः स्पृहा" इति। "साक्षात् प्रत्यक्षतुल्ययोः" इति। "विधिर्विधाने दैवेऽपि" इति चामरः॥ १६॥

तात्पर्यार्थः—पृथ्वीपतिर्दिलीपो देवतापित्रतिथीनां यागश्राद्धदानादिसाधिकायास्तस्या धेनोरनुगमनं कुर्वन् सन् ययौ, साधुजनपूजितेन तेन राज्ञा दिलीपेनापि युक्ता सती सा धेनुरपि साक्षादनुष्ठानेन युक्ताऽऽस्तिक्यबुद्धिरिव शुशुभे॥ १६॥

भाषाऽर्थः—मध्यम (भू) लोक के पालन करने वाले राजा दिलीप, देवता, पितर, और अतिथि (पाहुने) लोगों के कार्य (यज्ञ–श्राद्ध–भोजनादि) को साधने वाली, उस धेनु के पीछे पीछे चले, और सज्जनों के द्वारा पूजित उन (राजा दिलीप) से युक्त, वह (नन्दिनी) भी, सज्जनों से किये गये अनुष्ठान से युक्त श्रद्धा जैसी सुशोभित होती है, वैसी सुशोभित होने लगी॥ १६॥

*राज्ञो दिलीपस्य स्वस्वावासभूमिं जिगमिषून् वराहमयूरमृगान् पश्यतो गमनमाह*—

**स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि।**
**ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन्॥ १७॥**

सञ्जीविनी—स इति। स राजा। पल्वलेभ्योऽल्पजलाशयेभ्य उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि। बर्हाण्येषां सन्तीति बर्हिणा मयूराः। 'मयूरो बर्हिणो बर्हीं' इत्यमरः। "फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः" आवासवृक्षाणामुन्मुखा बर्हिणा येषु तानि। श्यामायमानानि वराहबर्हिणादिमलिनिम्ना, अश्यामानि श्यामानि भवन्तीति श्यामायमाना-

नि। "लोहितादिडाज्भ्यः क्यप्" इति क्यष्प्रत्ययः। "वा क्यषः" इत्यात्मनेपदे शानच्। मृगैरध्यासिता अधिष्ठिताः शाद्वला येषु तानि। शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः। 'शाद्वलः शादहरिते' इत्यमरः। 'शादः कर्दमशष्पयोः' इति विश्वः। "नडशादाड्ड्वलच्" इति ड्वलच्प्रत्ययः। वनानि पश्यन्ययौ ॥ १७ ॥

अन्वयः—सः, पल्वलोत्तीर्णवराहयूथानि, आवासवृक्षोन्मुखबर्हिणानि, मृगाध्यासितशाद्वलानि, श्यामायमानानि, वनानि, पश्यन्, "सन्" ययौ ॥ १७ ॥

व्याख्या—सः = पूर्वोक्तः, राजा दिलीप इति यावद्। पल्वलोत्तीर्णवराहयूथानि = अल्पसरोनिर्यातक्रोडसमूहानि, आवासवृक्षोन्मुखबर्हिणानि = निवासार्थपादपाभिमुखशिखावलानि, मृगाध्यासितशाद्वलानि = हरिणाधिश्रितशादहरितानि, हरिणाधिष्ठितशष्पैः श्यामलानीति यावद्। "अत एव शूकरमयूरशष्पादीनां श्यामतया" श्यामायमानानि = कृष्णीभूतानि, वनानि = अरण्यानि, पश्यन् = अवलोकयन्, "सन्" इति शेषः। ययौ = जगाम, वशिष्ठाश्रममिति भावः ॥ १७ ॥

समासादि—पिबन्त्येष्विति पल्वलानि (न० लि०), वरं श्रेष्ठमाघ्नन्तीति वराहाः (पुं०), युवन्ति यूयन्ते वेति यूथानि (न० लि०), पल्वलेभ्य उत्तीर्णानि पल्वलोत्तीर्णानि (त० पु०), वराहाणां यूथानि वराहयूथानि (त० पु०), पल्वलोत्तीर्णानि वराहयूथानि येषु तानि पल्वलोत्तीर्णवराहयूथानि (ब० व्री०) तानि पूर्वोक्तानि। आ समन्ताद् वसनमावासः (पुं०), आवासस्य वृक्षा आवासवृक्षाः (त० पु०), बर्हाण्येषां सन्तीति बर्हिणाः (पुं०), आवासवृक्षाणामुन्मुखा आवासवृक्षोन्मुखाः (त० पु०), आवासवृक्षोन्मुखा बर्हिणाः सन्ति येषु तान्यावासवृक्षोन्मुखबर्हिणानि (ब० व्री०) तानि पूर्वोक्तानि। शादाः शष्पाणि सन्त्येषु देशेष्विति शाद्वलाः (पुं०), मृगैरध्यासिता मृगाध्यासिताः (त० पु०), मृगाध्यासिताः शाद्वलाः सन्ति येषु तानि मृगाध्यासितशाद्वलानि (ब० व्री०) तानि पूर्वोक्तानि। न श्यामानि अश्यामानि (न० त० पु०), अश्यामानि श्यामानि भवन्तीति श्यामायन्ते, श्यामायन्त इति श्यामायमानानि (न० लि०) तानि पूर्वोक्तानि ॥ १७ ॥

व्याकरणम्—पल्वलानि = पा (पाने) + वलच्, "सानसिवर्णसिपर्णसितण्डुलाङ्कुशचपालेल्वलपल्वलधिष्ण्यशल्याः" इत्यौणादिको वलच् प्रत्ययो धातोर्लुगागमो ह्रस्वत्वञ्च जसि रूपम्। उत्तीर्णानि = उद् + तॄ (प्लवनसन्तरणयोः) + क्तः, "ॠत इद्धातोः" इतीत्वं रपरत्वं "हलि च" इत्युपधादीर्घे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठातस्य नत्वे ततो णत्वे जसि रूपम्। वराहाः = वर + आङ् + हन (हिंसागत्योः–अकारेत्) + डः, "अन्येष्वपि दृश्यते" इत्यत्रापेः सर्वोपाधिव्यभिचारार्थकतयाऽत्रापि डप्रत्यये डित्वाट्टिलोपे जसि रूपम्। यूथानि = यु (मिश्रणामिश्रणयोः) + थक्, "तिथपृष्ठगूथयूथप्रोथाः" इत्यौणादिकस्थक् प्रत्ययः कित्वाद् गुणाभावो निपातनाद् दीर्घश्च "तितुत्रतथसिसुसरकसेषु च" इतीडभावे जसि रूपम्। आवासः = आङ् + वस (निवासे—अकारेत्) + घञ्, भावे घञ् प्रत्यय उपधावृद्धिः सौ रूपम्। बर्हिणाः = बर्ह + इनच्, "फलबर्हाभ्यामिनच्" इति वार्त्तिकेनेनच् प्रत्यये "यस्येति च" इत्यकारलोपे नस्य णत्वे जसि रूपम्। ययौ = या (प्रापणे) + लिट्, तस्य तिपो णलादेशे तस्य चौकारादेशे धातोर्द्वित्वेऽभ्यासह्रस्वे वृद्धौ रूपम्। अध्यासिताः = अधि + आसु (उपवेशने—उदित्) + क्तः, धातोरिडागमे जसि रूपम्। शाद्वलाः = शाद + ड्वलच्, "नडशादाड्ड्वलच्" इति ड्वलच् प्रत्ययो डित्वाट्टिलोपे जसि रूपम्। श्यामायमानानि = श्याम + क्यङ् + लट् + शानच् + जस्, "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इति भवत्यर्थं क्यङ् प्रत्यये "अकृत्सार्वधातुकयोः" इति दीर्घे "सनाद्यन्ता धातवः" इति धातुत्वे ततो ङित्वादात्मनेपदे लटः शानजादेशे मुगागमे जसि रूपम्। अत्र सञ्जीविनीकारेण यत्तु "लोहितादिडाज्भ्यः-

क्यष्" इति क्यष्प्रत्ययं कृत्वा "वा क्यषि" इति वैकल्पिकपरस्मैपदे पक्षे आत्मनेपदे शानजादेशो विधीयते, तद्भाष्यवार्त्तिकविरुद्धत्वात्कौमुदीकृतोऽनभिमतत्वाच्चोपेक्ष्यम् ॥१७॥

वाच्यान्तरं—तेन पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यता सता ययै ॥ १७ ॥

कोशः—"वेशन्तः पल्वलं चाल्पसरः" इति। "वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः। दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि" इति चामरः। "तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः" इति द्विरूपकोशाद् शभेदो बोध्यः सूकरपदे। "यूथं तिरश्चां पुंनपुंसकम्" इत्यमरः। "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इति। "मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्। शिखावलः शिखी केकी मेघनादानुलास्यपि" इति। "मृगे कुरङ्गवातायुहरिणाजिनयोनयः" इति। "शाद्वल शादहरिते" इति चामरः। "शादः कर्दमशष्पयोः" इति विश्वः। "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः ॥ १७ ॥

तात्पर्यार्थः—स राजा दिलीपः स्वल्पजलाशयेभ्यो विनिर्गतानां सूकरयूथानां, निजनिजनिवासार्थवृक्षान् प्रति गन्तुमुत्सुकानां मयूराणां मृगैरधिश्रितानां शष्पैर्हरितानां वनप्रदेशानां च श्यामतया सर्वत्र कृष्णवर्णानि वनानि विलोकयन् वसिष्ठाश्रमं प्रति जगाम ॥ १७ ॥

भाषाऽर्थः—वह राजा दिलीप, छोटे २ तालावों में से निकले हुये वनैले शूअरों के झुण्डवाले, अपने २ आवासयोग्य वृक्षों के तरफ "जाने के लिये" उन्मुख मोरों वाले, तथा, हरिण जिन पर बैठे हुये है ऐसे घासों से हरे प्रदेश वाले, "अत एव सर्वत्र" श्याम ही श्याम वनों को देखते हुये जाने लगे ॥ १७ ॥

*उभयोर्नन्दिनीदिलीपयोर्निजनिजगमनकर्तृकं तपोवनात्परावर्त्तनपथसम्बन्ध्यलङ्करणमाह*—

**आपीनभारोद्वहनप्रयत्नाद् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।**

**उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥**

सञ्जीविनी—आपीनेति। गृष्टिः सकृत्प्रसूता गौः। 'गृष्टिः सकृत्प्रसूता गौः' इति हलायुधः। नरेन्द्रश्च। उभौ यथाक्रमम्। आपीनमूधः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। आपीनस्य भारोद्वहने प्रयत्नात्प्रयासाद् वपुषो गुरुत्वादाधिक्याच्च। अञ्चिताभ्यां चारुभ्यां गमनाभ्यां तपोवनादावृत्तेः पन्थास्तं तपोवनावृत्तिपथम् "ऋक्पूरब्धूःपथामानक्षे" इत्यनेन समासान्तोऽप्रत्ययः। अलंचक्रतुर्भूषितवन्तौ ॥ १८ ॥

अन्वयः—गृष्टिः, नरेन्द्रः, ( च ), उभौ, आपीनभारोद्वहनप्रयत्नाद्, वपुषः, गुरुत्वाद्; ( च ), अञ्चिताभ्यां, गताभ्यां, तपोवनावृत्तिपथम्, अलञ्चक्रतुः ॥ १८ ॥

व्याख्या—गृष्टिः=सकृत्प्रसूता गौः, नरेन्द्रः=मनुष्यश्रेष्ठः, राजा-दिलीप इति भावः। चेति शेषः। उभौ=द्वौ, नन्दिनीदिलीपाविति यावद्। यथाक्रममिति शेषः। आपीनभारोद्वहनप्रयत्नाद्=ऊधोभरधारणप्रयासाद्, वपुषः=देहस्य, गुरुत्वाद्=दुर्भरत्वाद्, स्थूलतयेति यावद्। चेति शेषः। नन्दिनी बृहदूधोधारणप्रयासाद् दिलीपश्च देहस्य स्थौल्यादिति भावः। अञ्चिताभ्यां=पूजिताभ्यां, गताभ्यां=गमनाभ्यां, तपोवनावृत्तिपथं=सुकृतविपिनावर्त्तनमार्गम्, अलञ्चक्रतुः=शोभितवन्तौ ॥ १८ ॥

समासादि—आपीनस्य भार आपीनभारः (त० पु०), आपीनभारस्योद्वहनमापीनभारोद्वहनं ( त० पु० ), तस्मिन् प्रयत्न आपीनभारोद्वहनप्रयत्नः ( त० पु० ), तस्मादापीनभारोद्वहनप्रयत्नाद्। गृह्णातीति गृष्टिः(स्त्री०)। गुरोर्भावो गुरुत्वं तस्माद् गुरुत्वात् ( न० लिं० )। नरेष्विन्द्रो नरेन्द्रः ( त० पु० )। आवर्त्तनमावृत्तिः ( स्त्री० ), तपसो वनं तपोवनं (त० पु०), तपोवनादावृत्तिस्तपोवनावृत्तिः (त० पु०), तस्याः पन्थास्तपोवनावृत्तिपथस्तं पूर्वोक्तम्॥१८॥

व्याकरणम्—प्रयत्नः=प्र+यती ( प्रयत्ने-ईदित )+नङ्, "यजयाचयतविच्छप्रच्छरक्षो नङ्"

इति नङ् प्रत्ययः सौ रूपम् । गृष्टिः = ग्रह (उपादाने—अकारेत्) + क्तिच्, "क्तिच्क्तौ च संज्ञायाम्" इति कर्तरि क्तिच् प्रत्ययः कित्वाद् "ग्रहिज्ये"त्यादिना सम्प्रसारणे पूर्वरूपे "पृषोदरादीनि यथोपदिष्टम्" इति धातोर्हस्य च षत्वे ष्टुत्वे सौ रूपम्। गुरुत्वाद् = गुरु + त्व, भावे त्वप्रत्ययो ङसे रूपम् । अलञ्चक्रतुः = अलम् + डुकृञ् (करणे-डुञित्) + लिट्, तस्य तसोऽतुसादेशे धातोर्द्वित्वे "उरत्" इत्यभ्यासस्यात्वे रपरे "असंयोगाल्लिट् कित्" इति कित्वे ततो गुणाभावे यणादेशे रूपम् । अञ्चिताभ्याम् = अन्चु (गतिपूजनयोः—उदित्) + क्तः, "निष्ठा" इति क्तप्रत्यये "यस्य विभाषा" इतीडभावे प्राप्ते तं बाधित्वा "अञ्चेः पूजायाम्" इतीडागमे "नाञ्चेः पूजायाम्" इति नलोपाभावे तृतीयाया भ्यामि रूपम् । तपोवनावृत्तिपथं = तपोवनावृत्ति + पथि + अः, "ऋक्पूरब्धूःपथामानक्षे" इति तत्पुरुषसमासान्तोऽप्रत्ययोऽमि रूपम् ॥ १८ ॥

वाच्यान्तरं—गृष्टया नरेन्द्रेण चोभाभ्यां यथाक्रममापीनभारोद्वहनप्रयत्नाद् वपुषो गुरुत्वाचाञ्चिताभ्यां गताभ्यां तपोवनावृत्तिपथोऽलञ्चक्रे ॥ २८ ॥

कोशः—"ऊधस्तु क्लीबमापीनम्" इत्यमरः । "भरोऽतिशयभारयोः" इत्यनेकार्थसङ्ग्रहः । "सकृत्प्रसूता गौर्गृष्टिः" इति हलायुधः । "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः । "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः । कायो देहः क्लीबपुंसोः" इत्यमरः । "पूजितेऽञ्चितः" इति । "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इति चामरः ॥ १८ ॥

-तात्पर्यार्थः—नन्दिनी बृहदूधोभारवहनप्रयासाद्दिलीपश्च स्वशरीरस्य स्थौल्यादुभावपि मनोहरगमनाभ्यां तपोवनपरावर्त्तनमार्गं शोभितवन्तौ ॥ १८ ॥

भाषाऽर्थः—पहिली बार की ब्याई हुई नन्दिनी और राजा दिलीप इन दोनों ने क्रम से (नन्दिनी) स्तनों के भार के धारण करने में प्रयास करने के कारण से तथा (राजा दिलीप) शरीर की स्थूलता के कारण से अपने २ सुन्दर गमन से तपोवन से लौटने के मार्ग को सुशोभित किया ॥ १८ ॥

*सुदक्षिणाकर्तृकं दिलीपस्य सतृष्णं दर्शनमाह—*

**वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।**
**पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥**

सञ्जीविनी—वसिष्ठेति । वसिष्ठधेनोरनुयायिनमनुचरं वनान्तादावर्तमानं प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमेषेष्वलसा मन्दा पक्ष्मणां पङ्क्तिर्यस्याः सा । निर्निमेषा सतीत्यर्थः । लोचनाभ्यां करणाभ्याम् । उपोषिताभ्यामिव उपवासो भोजननिवृत्तिस्तद्वद्भ्यामिव । वसतेः कर्तरि क्तः । पपौ । यथोपोषितोऽतितृष्णया जलमधिकं पिबति तद्वदतितृष्णयाऽधिकं व्यलोकयदित्यर्थः ॥ १९ ॥

अन्वयः—वसिष्ठधेनोः, अनुयायिनं, वनान्ताद्, आवर्त्तमानं, तं, वनिता, निमेषालसपक्ष्मपङ्क्तिः, (सती), लोचनाभ्याम्, उपोषिताभ्याम्, इव, पपौ ॥ १९ ॥

व्याख्या—वसिष्ठधेनोः = अरुन्धतीपतिगोः, नन्दिन्या इति यावद् । अनुयायिनम् = पश्चाद्गामिनम्, अनुचरमिति यावद् । वनान्ताद् = विपिनप्रान्ताद्, आवर्त्तमानम् = प्रत्यायान्तं, तं = पूर्वोक्तं, दिलीपं, स्वस्वामिनमिति भावः । वनिता = महिला, जातानुरागस्त्री, सुदक्षिणेत्यर्थः । निमेषालसपक्ष्मपङ्क्तिः = निमीलनानिष्क्रियनेत्रलोमावलिः, सतीति शेषः । लोचनाभ्यां = नयनाभ्यां, "करणाभ्याम्" उपोषिताभ्यां = गृहीतोपवासाभ्याम्, इव = यथा. पपौ = पीतवती, यथा गृहीतोपवासाऽतितृष्णया जलमत्यर्थं पिबति तथा सतृष्णं नेत्राभ्यामधिकं ददर्शेति भावः ॥ १९ ॥

समासादि—वसु तेजोऽस्त्यस्मिन्निति वसुमान् (पुं०), अयमनयोरतिशयेन वसुमानिति

वसिष्ठः(पुं०), तस्य धेनुर्वसिष्ठधेनुः (त०पु०) तस्यास्तथोक्तायाः। अनु पश्चाद् यातुं शीलमस्ये-त्यनुयायी तमनुयायिनम् (पुं०)। आवर्त्तत इत्यावर्त्तमानस्तं तथोक्तम् (पुं०)। वन्यते स्मे-ति वनिता (स्त्री०)। वनस्यान्तो वनान्तः (त० पु०), तस्माद्वनान्तात्। निमेषेष्वलसा निमे-षालसा (त० पु०), पक्ष्यत एभिरिति पक्ष्माणि (न० लिं०), तेषां पङ्क्तिः पक्ष्मपङ्क्तिः (त० पु०), निमेषालसा पक्ष्मपङ्क्तिर्यस्याः सा निमेषालसपक्ष्मपङ्क्तिः (ब०व्री०)। लोच्यत आ-भ्यामिति लोचने ताभ्यां लोचनाभ्यां (न० लिं०) ॥ १९ ॥

व्याकरणं—वसिष्ठः=(वसु+मतुप्) वसुमत्+इष्ठन्, "अतिशायने तमबिष्ठनौ" इती-ष्ठन् प्रत्ययः "विन्मतोर्लुक्" इति मतुपो लुकि टेर्लोपे सौ रूपम्। अनुयायिनम्=अनु+या (प्रापणे)+णिनिः, "आतो युक् चिण्कृतोः" इति युगागमेऽमि रूपम्। आवर्त्तमानम्=आङ्+वृतु (वर्त्तने—उदित्)+लट्+शानच्+अम्। वनिता=वन (सम्भक्तौ-अकारेत्)+क्तः, वलादिलक्षण इडागमटापि सोर्लुकि रूपम्। पपौ=पा (पाने)+लिट्, तस्य तिपो-णलादेशे तस्य चौकारादेशे धातोर्द्वित्वेऽभ्यासह्रस्वे वृद्धौ रूपम्। पक्ष्माणि=पक्ष (परिग्रहे-अकारेत्)+मनिन्, "सर्वधातुभ्यो मनिन्" इत्यौणादिको मनिन् प्रत्ययः करणे जसि रूपम्। उपोषिताभ्याम्=उप+वस (निवासे—अकारेत्)+क्तः, कर्त्तरि क्तप्रत्ययः "गत्यर्थ" त्या-दिना ततः "वचिस्वपियजादीनां किति" इति यजादित्वात्संप्रसारणे ततः पूर्वरूपे "शासिव-सिघसीनां च" इति सस्य षत्वे "वसतिक्षुधोरिट्" इतीडागमे भ्यामि तृतीयायां रूपम्॥१९॥

वाच्यान्तरं—वसिष्ठधेनोरनुयायी वनान्तादावर्त्तमानः स वनितया निमेषालसपक्ष्मपङ्-क्त्या (सत्या) उपोषिताभ्यामिव लोचनाभ्यां पपे ॥ १९ ॥

कोशः—"स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः । प्रतीपदर्शिनी वामा वनिता महिला तथा" इति। "वनिता जातरागस्त्रीस्त्रियोः स्त्री त्रिषु याचिते। सेविते" इति चामरमेदिनीकोशौ । "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपि" इति हैमः। "मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः" इति। "पक्ष्माक्षिलोम्नि किञ्ज-ल्के तन्वाद्यंशेऽप्यणीयसि" इति। "वीथ्यालिरावलिः पङ्क्तिः श्रेणी" इति चामरः ॥ १९ ॥

तात्पर्यार्थः—यथा कश्चित् पिपासितः पुरुषः पानीयं पुनः पुन. पिबन्नपि तृप्तिं नाधिगच्छ-ति, तथैव सुदक्षिणाऽपि पतिव्रतात्वेन स्वकीयं प्राणप्रियं पतिं दिलीपमपि निर्निमेषा सती वा-रम्वारं विलोकयन्ती तृप्तिं नाध्यगच्छत्॥ इति ॥ १९ ॥

भाषाऽर्थः—वसिष्ठमहर्षि की नई व्याई हुई नन्दिनी नाम की धेनु के पीछे २ चलने वाले तपोवन के प्रान्तभाग से लौटते हुये उन राजा दिलीप की स्नेह करने वाली रानी सुदक्षिणा ने नेत्र के बन्द करने में आलसी बरौनी वाली होती हुई (अर्थात् एक टक से) प्यासे हुये की भांति आंखों से पीया अर्थात् देखा ॥ १९ ॥

*धेनुं पुरस्कृत्य वनात्परावर्त्तमानस्य दिलीपस्य, स्वागतं कुर्वन्त्याः सुदक्षिणायाश्चान्तरा-लभागे स्थितताया नन्दिन्याः सायङ्कालीनसन्ध्यया सह सादृश्यमुत्प्रेक्षमाणः कविराह—*

**पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।**
**तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥ २० ॥**

सञ्जीविनी—पुरस्कृतेति। वर्त्मनि पार्थिवेन पृथिव्या ईश्वरेण। "तस्येश्वरः" इत्यण्प्रत्य-यः। पुरस्कृताऽग्रतः कृता धर्मस्य पत्नी धर्मपत्नी। धर्मार्थपत्नीत्यर्थः। अश्वघासादिवत्तादर्थ्ये षष्ठीसमासः। पार्थिवस्य धर्मपत्न्या प्रत्युद्गता सा धेनुस्तदन्तरे तयोर्दम्पत्योर्मध्ये। दिनक्षपयो-र्दिनरात्र्योर्मध्यगता सन्ध्येव विरराज ॥ २० ॥

अन्वयः—वर्त्मनि, पार्थिवेन, पुरस्कृता, पार्थिवधर्मपत्न्या, प्रत्युद्गता, सा, धेनुः, तद-न्तरे, दिनक्षपामध्यगता, सन्ध्या, इव, विरराज ॥ २० ॥

व्याख्या-वर्त्मनि = मार्गे, पार्थिवेन = पृथ्वीश्वरेण, दिलीपेनेति यावत्। पुरस्कृता = अग्रतः कृता, परावर्त्तनसमये स्वकीयाग्रे स्थापिता वसिष्ठाश्रमागमनायेति भावः। पार्थिवधर्मपत्न्या = पृथ्वीश्वरसुकृतार्थजायया, दिलीपमहिष्या सुदक्षिणयेति भावः। प्रत्युद्गता = स्वागतार्थमभ्युद्गता, सा = पूर्वोक्ता, धेनुः = गौः, नन्दिनीति यावत्। तदन्तरे = तयोर्मध्ये, सुदक्षिणादिलीपयोरन्तरालभागे स्थितेति भावः। दिनक्षपामध्यगता = दिवसरजन्यन्तःस्थिता, सन्ध्या = सायङ्कालः, इव = यथा, विरराज = शुशुभे ॥ २० ॥

समासादि—पुरोऽकारीति पुरस्कृता (स्त्री०)। पृथिव्या ईश्वरः पार्थिवस्तेन पार्थिवेन (पुं०)। धर्मस्य पत्नी धर्मपत्नी (त० पु०), पार्थिवस्य धर्मपत्नी पार्थिवधर्मपत्नी (त० पु०) तया तथोक्तया। तयोरन्तरं तदन्तरं (त० पु०), तस्मिस्तदन्तरे। द्यति तमो निर्व्यापारस्थितिञ्चेति वा दिनम् (न० लि०)। क्षपयति चेष्टामिति क्षपा (स्त्री०), दिनञ्च क्षपा चेति दिनक्षपे (स्त्री०), तयोर्मध्यं दिनक्षपामध्यम् (त० पु०), दिनक्षपामध्यङ्गता दिनक्षपामध्यगता (त० पु०) ॥ २० ॥

व्याकरणम्—पुरस्कृता = पुरस् + डुकृञ् (करणे-डुजित्) + क्तः + टाप् + सु, "पुरोऽव्ययम्" इति गतिसंज्ञा, "नमस्पुरसोर्गत्योः" इति विसर्गस्य सत्वम्। पार्थिवेन = पृथिवी + अञ् + टा, "तस्येश्वरः" इत्यञ् प्रत्यय आदिवृद्धौ रपरे "भस्याढे तद्धिते" इति पुंवद्भावे "नस्तद्धिते" इति टिलोपे टारूपम्। प्रत्युद्गता = प्रति + उद् + गम्ऌ (गतौ-ऌदित्) + क्तः + टाप् + सु, भावे क्तप्रत्ययः कित्वादनुनासिकलोपष्टापि सोर्लुकि रूपम्। विरराज = वि + राजृ (दीप्तौ-ऋदित्) + लिट्, तस्य तिपो णलादेशे धातोर्द्वित्वेऽभ्यासह्रस्वे "हलादिः शेषः" इति हलो लोपे रूपम्। क्षपा = क्षै(क्षये) + पुक + णिच् + अच् + टाप् + सु, धातोर्णिचि चुरादित्वाद् धातोरात्वे "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुगागमे "घटादयो मितः" इति मित्संज्ञा ततः "णौ मितां ह्रस्वः" इति ह्रस्वे "सनाद्यन्ता" इति धातुत्वे पचादित्वादचि टापि सुलोपे रूपम् ॥ २० ॥

वाच्यान्तरं—वर्त्मनि पार्थिवेन पुरस्कृतया पार्थिवधर्मपत्न्या प्रत्युद्गतया तया धेन्वा तदन्तरे दिनक्षपामध्यगतया सन्ध्ययेव विरेजे ॥ २० ॥

कोशः—"पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते" इति। "अयनं वर्त्म मार्गाध्वपन्थानः-पदवी सृतिः" इति। "राज्ञि राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति। "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इति चामरः। "धेनुर्गोमात्रके दोग्ध्र्याम्" इति। "धेनुः स्यान्नवसूतिका" इति हैमोऽमरश्च। "घस्रो दिनाहनी वा तु क्लीवे दिवसवासरौ" इति। "निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा। विभावरीतमस्विन्यौ रजनी यामिनी तमी" इति चामरः। "न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिपु" इति रभसः। "सन्ध्या पितृप्रसूः" इत्यमरः। "सन्ध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु" इति मेदिनी च ॥ २० ॥

तात्पर्यार्थः—यस्मिन् समयेऽग्रे कृत्य नन्दिनीं दिलीपो वसिष्ठाश्रमं प्रापत्, तदा दिलीपानुगम्यमानां तामानेतुं सुदक्षिणा तपोवनात्प्रत्युद्ययौ, तस्मिन् क्षणे सुदक्षिणादिलीपयोर्मध्यगता नन्दिनी पाटलवर्णतया दिनक्षपयोर्मध्यगता सन्ध्येव शुशुभे ॥ २० ॥

भाषाऽर्थः—मार्ग में राजा दिलीप से आगे की गई, और उनकी पटरानी सुदक्षिणा से आगे जाकर ली हुई (अगवानी की गई) वह नन्दिनी सुदक्षिणा और दिलीप के बीच में दिन और रात के मध्य में स्थित सन्ध्या काल की भांति शोभित हुई ॥ २० ॥

*सुदक्षिणाकर्तृकं नन्दिनीपूजनमाह—*

**प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता।**
**प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥**

सञ्जीविनी—प्रदक्षिणीकृत्येति। अक्षतानां पात्रेण सह वर्तेते इति साक्षतपात्रौ हस्तौ यस्याः सा सुदक्षिणा पयस्विनीं प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य प्रणम्य च। तस्या धेन्वा-विशालं शृङ्गान्तरं शृङ्गमध्यम्। अर्थसिद्धेः कार्यसिद्धेर्द्वारं प्रवेशमार्गमिव आनर्चार्चयामास। अर्चतेर्भौवादिकाल्लिट्॥ २१॥

अन्वयः—साक्षतपात्रहस्ता, सुदक्षिणा, पयस्विनीं, तां, प्रदक्षिणीकृत्य, प्रणम्य, च, अस्याः, विशालं, शृङ्गान्तरम्, अर्थसिद्धेः, द्वारम्, इव, आनर्च॥ २१॥

व्याख्या—साक्षतपात्रहस्ता = साखण्डतण्डुलभाण्डकरा, सुदक्षिणा = तदाख्या दिलीपपत्नी, पयस्विनीं = प्रशस्तक्षीरां, तां = पूर्वोक्तां, नन्दिनीमिति यावत्। प्रदक्षिणीकृत्य = अपसव्येन परितो भ्रमणं कृत्वा, प्रणम्य = प्रणामं कृत्वा, च = समुच्चयेऽर्थे, अस्याः = धेन्वाः, विशालं = बृहद्, विस्तीर्णमिति यावद्। शृङ्गान्तरं = विषाणमध्यं, शृङ्गयोर्मध्यभागमिति यावद्। अर्थसिद्धेः = प्रयोजननिष्पत्तेः, पुत्ररूपफलप्राप्तेरिति भावः। द्वारम् = अभ्युपायं, कारणमिति भावः। इव = यथा, आनर्च = पूजयामास॥ २१॥

समासादि—प्रदक्षिण कृत्वेति प्रदक्षिणीकृत्य (अ०)। प्रशस्तं पयोऽस्त्यस्या इति पयस्विनी (स्त्री०) तां तथोक्ताम्। सुष्ठु दक्षिणा सुदक्षिणा (स्त्री०)। क्षणनं क्षतं (न० लि०), न क्षतं विद्यते येषां तेऽक्षताः (पुं० नि० ब० व०), तेषां पात्रमक्षतपात्रं (त० पु०), तेन सह वर्तेत इति साक्षतपात्रौ (ब० व्री०), साक्षतपात्रौ हस्तौ यस्याः सा साक्षतपात्रहस्ता (ब० व्री०) शृङ्गयोरन्तरं शृङ्गान्तरं तत्तथोक्तम् (त० पु०)। अर्थस्य सिद्धिरर्थसिद्धिस्तस्या अर्थसिद्धेः (त० पु०)॥ २१॥

व्याकरणम्—प्रदक्षिणीकृत्य = प्रदक्षिण + च्वि + डुकृञ् (करणे–डुञित्) + क्त्वा + ल्यप्। "कृभ्वस्तियोगे संपद्यकर्तरि च्विः" इति च्विप्रत्ययः "अस्य च्वौ" इतीत्वं "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति क्त्वो ल्यबादेशोऽव्ययत्वात्सुपो लुकि रूपम्। पयस्विनीम् = पयस् + विनि, + ङीप् + अम्, "अस्मायामेधास्रजो विनिः" इति विनिप्रत्यये नान्तत्वाद् ङीपि, प्रशंसायां विनिप्रत्ययो बोध्यस्ततोऽमि पूर्वरूपं रूपम्। प्रणम्य = प्र + णम (प्रह्वत्वे शब्दे–अकारेत्) + क्त्वा + ल्यप्, धात्वादेर्णो नः "उपसर्गादसमासेऽपि णोपदेशस्य" इति पुनर्णत्वे ततः क्त्वो ल्यपि रूपम्। आनर्च = अर्च (पूजायाम्–अकारेत्) + लिट्, तस्य तिपो णलादेशे धातोर्द्वित्वेऽभ्यासहलो लोपे, "अत आदेः" इत्यभ्यासदीर्घः "तस्मान्नुड् द्विहलः" इति नुडागमे रूपम्॥ २१॥

वाच्यान्तरं—साक्षतपात्रहस्तया सुदक्षिणया पयस्विनीं तां प्रदक्षिणीकृत्य प्रणम्य चास्या विशालं शृङ्गान्तरमर्थसिद्धेर्द्वारमिवानर्चे॥ २१॥

कोशः—"दुग्धं क्षीरं पयः समम्" इति। "लाजाः पुंभूम्नि चाक्षताः" इति चामरः। "अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते। यवेऽपि क्वचित्" इति मेदिन्यपि। केचित्तु—"अखण्डतण्डुला अक्षताः" इत्याहुः। "सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्" इति। "पात्रं तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि। तीरद्वयान्तरे च" इत्यमरो मेदिनी च। "प्रकोष्ठे विस्तृतकरे हस्तः" इति। "हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च। ऋक्षे केशात्परो व्राते" इत्यमरमेदिन्यौ। "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्। वड्रोरु विपुलम्" इत्यमरः। 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाऽम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके। स्त्री विषायां स्वर्णमणिभेदयोर्ऋषभौषधौ" इति मेदिनी। "द्वारं निर्गमेऽभ्युपाये" इति हैमः॥ २१॥

तात्पर्यार्थः—वनादागतां नन्दिनीं विलोक्य सुदक्षिणा दिलीपपत्नी तां प्रदक्षिणीकृत्य प्रणम्य च, अक्षतैः पुष्पादिभिश्च तस्याः शृङ्गान्तरप्रदेशं निजाभीष्टसिद्धेः कारणं मत्वा पूजयामास॥ २१॥

भाषार्थः—अक्षतों से युक्त पात्र को हाथ में ली हुई रानी सुदक्षिणा ने उत्तम दूध वाली उस नन्दिनी की प्रदक्षिणा तथा वन्दना कर के उसके चौड़े, दोनों सींगों के मध्य भाग का, "अपने पुत्राप्तिरूप" प्रयोजन सिद्ध होने का द्वार की भांति "जान कर" पूजन किया ॥ २१ ॥

*नन्दिन्याः सावधानतया सुदक्षिणाकर्तृकपूजनग्रहणमाह*—

**वत्सोत्सुकाऽपि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।**
**भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥**

सञ्जीविनी—वत्सोत्सुकाऽपीति । सा धेनुर्वत्सोत्सुकाऽपि वत्स उत्कण्ठिताऽपि स्तिमिता निश्चला सती सपर्यां पूजां प्रत्यग्रहीदिति हेतोस्तौ दंपती ननन्दतुः । पूजास्वीकारस्यानन्दहेतुत्वमाह-भक्त्येति । पूज्येष्वनुरागो भक्तिस्तयोपपन्नेषु युक्तेषु विषये तद्विधानां तस्या धेन्वा इवैव विधा प्रकारो येषां तेषाम् महतामित्यर्थः । प्रसादस्य चिह्नानि लिङ्गानि पूजास्वीकारादीनि पुरःफलानि पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि । अविलम्बितफलसूचकलिङ्गदर्शनादानन्दो युज्यत इत्यर्थः ॥ २२ ॥

अन्वयः—सा, वत्सोत्सुका, अपि, स्तिमिता, "सती" सपर्यां, प्रत्यग्रहीत्, इति, तौ, ननन्दतुः. भक्त्या, उपपन्नेषु, तद्विधानां, प्रसादचिह्नानि, पुरःफलानि, हि ॥ २२ ॥

व्याख्या—सा = पूर्वोक्ता, धेनुरिति यावद् । वत्सोत्सुका = तर्णकोत्का, सद्योजातवत्सदर्शनोत्कण्ठितमानसेति भावः । अपि = सम्भावनायां, स्तिमिता = निश्चला, सतीति शेषः । सपर्याम् = अर्चां, सुदक्षिणाकृतामिति भावः । प्रत्यग्रहीत् = प्रतिजग्राह, स्वीकृतवतीति यावद् । इति = हेतोः, तौ = पूर्वोक्तौ, सुदक्षिणादिलीपाविति यावद् । ननन्दतुः = मुमुदाते, प्रसन्नौ बभूवतुरिति यावत् । पूजनस्वीकारस्यानन्दहेतुत्वं प्रदर्शयन्नाह—भक्त्येति । भक्त्या = श्रद्धया, पूज्येष्वनुरागरूपयेति यावद् । उपपन्नेषु = समन्वितेषु, अत्र विषये सप्तमी । तेन भक्तियुक्तेषु जनेषु विषय इति भावः । तद्विधानां = तत्प्रकाराणां, धेनुसदृशानां महीयसां, प्रसादचिह्नानि = प्रसन्नतालक्ष्माणि, अनुग्रहद्योतकानि, स्थिरतया पूजास्वीकरणादीनीति भावः । पुरःफलानि = अग्रेहेतुकृतानि, आसन्नलाभवन्तीति भावः । हि = अवधारणे, सन्तीति शेषः ॥२२॥

समासादि = वत्स उत्सुका वत्सोत्सुका (त० पु०) । सा च तौ (ए० शे०) । तस्या विधेव विधा प्रकारो येषान्ते तद्विधास्तेषां तद्विधानां (ब० व्री०) । प्रसादस्य चिह्नानि प्रसादचिह्नानि (त० पु०) । पुरः फलानि येषान्तानि पुरःफलानि (ब० व्री० ) ॥ २२ ॥

व्याकरणं—स्तिमिता = ष्टिम ( आर्द्रीभावे—अकारेत् ) + क्तः + टाप् + सु, "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्त्तरि क्तप्रत्यये वलादिलक्षण इडागमे टापि सोर्लुकि रूपम् । प्रत्यग्रहीत् = प्रति = अट् + ग्रह ( उपादाने-अकारेत् ) + च्लि + लुङ्, लुङस्तिपि धातोश्च्लेः सिजादेशेऽडागमे वलादिलक्षण इडागमे "अस्तिसिचोऽपृक्ते" इतीडागमे "इट ईटि" इति सिचः सकारलोपे रूपम् । ननन्दतुः = टुनदि (समृद्धौ-टुविदित्) + लिट्, लिटस्तसोऽतुसादेशे धातोरिदित्वान्नुमागमे द्वित्वेऽभ्यासहलो लोपे रूपम् ॥ २२ ॥

वाच्यान्तरं—तया वत्सोत्सुकया स्तिमितया "सत्या" सपर्या प्रत्यग्राहीति ताभ्यां ननन्दे, भक्त्योपपन्नेषु तद्विधानां प्रसादचिह्नैः पुरःफलैर्हि भूयते ॥ २२ ॥

कोशः—"सद्योजातस्तु तर्णकः" इति । "शकृत्करिस्तु वत्सः स्यात्" इति चामरः । "वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्" इति मेदिनी । "इष्टार्थोद्युक्त उत्सुकः" इति । "उत्कण्ठोत्कलिके समे" इति चामरः । "स्तिमितौ क्लिन्ननिश्चलौ" इत्यनेकार्थसङ्ग्रहः । "पूजा नमस्याऽपचितिः सपर्याऽर्चाऽर्हणाः समाः" इत्यमरः । "प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे" इति मेदिनी । "भक्तिः सेवागौणवृत्त्योर्भ-

र्थयां श्रद्धाविभागयोः" इत्यनेकार्थ सङ्ग्रहः। "हि हेतावववधारणे" इत्यमरः। "विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ" इति मेदिनी। "प्रसादस्तु प्रसन्नता" इत्यमरः। "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु" इति मेदिनी च। "कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" इति। "स्यात् पुरः पुरतोऽग्रतः" इति। "सस्ये हेतुकृते फलम्" इति चामरः॥ २२॥

तात्पर्यार्थः—यद्यपि नन्दिनी स्वकीयवत्सदर्शनोत्कण्ठान्विता तथाऽपि, सुदक्षिणाकर्तृकपूजनं स्थिरा सती स्वीचकार, अतः सुदक्षिणादिलीपौ तस्याः सुस्थिरतया पूजास्वीकृतिं दृष्ट्वा परां प्रीतिमधिजग्मतुः, यतो निजभक्तजनेषु महतां प्रसन्नताचिह्नानि झटित्येवाभीष्टसिद्धिद्योतकानि भवन्ति। अर्थात् सुस्थिरतया नन्दिन्याः पूजाग्रहणेन तौ स्वकीयाभीष्टसिद्धिं झटित्येव भाविनीं मत्वा मुमुदात इति भावः॥ २२॥

भाषाऽर्थः—वह नन्दिनी अपने वछड़े के देखने के लिये उत्कण्ठा युक्त होने पर भी स्थिर होती हुई "सुदक्षिणा द्वारा किए गये" पूजन को स्वीकार किया, इस कारण से वे दोनों स्त्री पुरुष सुदक्षिणा और दिलीप प्रसन्न हुये। क्योंकि—अपने में अनुराग रखने वाले जनों के विषय में नन्दिनी के समान बड़े लोगों की प्रसन्नता का चिह्न, शीघ्र अभीष्ट सिद्धि करने वाले निश्चय करके होते हैं॥ २२॥

*रात्रावपि दिलीपकर्तृकं नन्दिनीपरिचरणमाह*—

**गुरोः सदारस्य निपीडय पादौ समाप्य सान्ध्यं च विधिं दिलीपः।**
**दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम्॥ २३॥**

सञ्जीविनी—गुरोरिति। भुजोच्छिन्नरिपुर्दिलीपः सदारस्य दारैररुन्धतया सह वर्तमानस्य गुरोः। उभयोरपीत्यर्थः। 'भार्या जायाऽथ पुंभूम्नि दाराः' इत्यमरः। पादौ निपीड्याभिवन्द्य। सान्ध्यं सन्ध्यायां विहितं विधिमनुष्ठानं च समाप्य। दोहावसाने निषण्णामासीनां दोग्ध्रीं दोहनशीलाम्। "तृन्" इति तृन्प्रत्ययः। धेनुमेव पुनर्भेजे सेवितवान्। दोग्ध्रीमिति निरुपपदप्रयोगात्कामधेनुत्वं गम्यते॥ २३॥

अन्वयः—भुजोच्छिन्नरिपुः, दिलीपः, सदारस्य, गुरोः, पादौ, निपीड्य, सान्ध्यं, विधिं, च, समाप्य, दोहावसाने, निषण्णां, दोग्ध्रीम्, एव, पुनर्, भेजे॥ २३॥

व्याख्या—भुजोच्छिन्नरिपुः = बाहुविनाशितशत्रुः, दिलीपः = तदाख्योऽयोध्याऽधिपतिः, सदारस्य = पत्नीसहितस्य, गुरोः = निषेकादिकृतः, वसिष्ठस्येति यावत्। पादौ = चरणौ, निपीड्य = निपीडनं कृत्वा, संवाह्याभिवन्द्येति भावः। सान्ध्यं = सन्ध्याकालीनं, विधिं = विधानम्, ब्रह्मचिन्तनादिकं, च = अन्वाचये, समाप्य = अवसाय, विधायेति भावः। दोहावसाने = दोहनान्ते, स्तनेभ्यः पयोनिष्काशनानन्तरमिति भावः। निषण्णाम् = उपविष्टाम्, दोग्ध्रीं = धेनुं, नवसूतिकतया दोहनशीलां नन्दिनीमिति भावः। एव = अवधारणे, पुनः = अप्रथमं, द्वितीयवारमपीति भावः। भेजे = सिषेवे, अनन्यमनसा नन्दिनीसेवनं कृतवानिति भावः॥२३॥

समासादि—गृणातीति गुरुस्तस्य गुरोः (पुं०)। दारैः सहितः सदारस्तस्य सदारस्य (ब० व्री०)। नि निश्चयेन पीडयित्वेति निपीडय (अ०)। सम्यक् प्रकारेण आप्त्वेति समाप्य (अ०)। सन्ध्यायां भवःसान्ध्यः ( पुं० ), तं सान्ध्यम्। दोहनं दोहः ( पुं० ), तस्यावसानं दोहावसान ( त० पु० ) तस्मिँस्तथोक्ते। दोग्धीति दोग्ध्री तां दोग्ध्रीं ( स्त्री० ), भुजाभ्यामुच्छिन्ना भुजोच्छिन्नाः ( त० पु० ), भुजोच्छिन्ना रिपवो येन स भुजोच्छिन्नरिपुः ( ब० व्री० )॥ २३॥

व्याकरण—निपीडय = नि+पीड+णिच्+क्त्वा+ल्यप्, "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति क्त्वो ल्यप् "णेरनिटि" इति णिलोपोऽव्ययत्वात् सुपो लुकि रूपम्। समाप्य=

सम्+आप्लृ ( व्याप्तौ-लृदित् )+क्त्वा+ल्यप्, पूर्ववत् क्त्वो ल्यवादेशे रूपम् । सान्ध्यं=सन्ध्या+ अण्, "तत्र भवः" इति भवार्थेऽण्प्रत्यये णित्वादादिवृद्धौ "यस्येति च" इत्यकारलोपेऽमि रूपम् । दोहः=दुह (प्रपूरणे—अकारेत्)+घञ् "भावे" इति घञि प्रत्यये लघूपधगुणे सौ रूपम् । अवसानम्=अव+षो (अन्तकर्मणि)+ल्युट्, "ल्युट् च" इति ल्युटि धातोरात्वे सत्वे योरनादेशे सोरमादेशे रूपम् । दोग्ध्रीं=दुह (प्रपूरणे-अकारेत्) +तृन्+ङीप्+अम्, "तृन्" इति तृन् प्रत्यये लघूपधगुणे "दादेर्धातोर्घः" इति हस्य घादेशे "झषस्तथोर्धोऽधः" इति तस्य धादेशे घस्य जशत्वेन गादेशे नान्तत्वाद् ङीपि ततोऽमि पूर्वरूपे रूपम् । भेजे=भज ( सेवायाम्—अकारेत् )+लिट्, तस्य तप्रत्ययस्यैशादेशे धातोर्द्वित्वे "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपकार्ये रूपम् ॥ २३ ॥

वाच्यान्तरम्—भुजोच्छिन्नरिपुणा दिलीपेन सदारस्य गुरोः पादौ निपीड्य सान्ध्यं विधिं च समाप्य दोहावसाने निषण्णा दोग्ध्र्येव पुनर्भेजे ॥ २३ ॥

कोशः "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः । "पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । भार्या जायाऽथ पुंभूम्नि दाराः स्याद्" इत्यमरः। "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । "विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी । "सातिस्त्ववसाने स्यात्" इत्यमरः । "भुजबाहू प्रवेष्टो दोः" इति । "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इति चामरः ॥ २३ ॥

तात्पर्यार्थः—सपत्नीको राजा दिलीपः सपत्नीकस्य वसिष्ठमहर्षेश्चरणसंवाहनं कृत्वा तदनु सायङ्कालीनकृत्यं विधाय च पुनरेव सुखोपविष्टाया नन्दिन्याः परिचर्यां कृतवान् कण्डूयनादिभिः ॥ २३ ॥

भाषाऽर्थः—बाहुओं से शत्रुओं को नष्ट करने वाले ( न कि सैन्य आदिकों से ) राजा दिलीप पत्नी ( अरुन्धती ) के सहित गुरु ( वसिष्ठ ) का चरण दबा कर और सायङ्कालीन कृत्य को समाप्त कर के दुह चुकने के बाद "सुख·पूर्वक" बैठी हुई नन्दिनी की फिर से सेवा करनी शुरू की ॥ २३ ॥

*सपत्नीको राजा दिलीपो नन्दिनीं सुप्तां संलक्ष्य तदनु सुप्तस्तस्या उत्थानानन्तरं प्रातःकाले विनिद्रो बभूवेत्याह*—

**तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।**
**क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥**

सञ्जीविनी—तामिति । गोप्ता रक्षको गृहिणीसहायः पत्नीद्वितीयः सन् । उभावपीत्यर्थः । अन्तिके न्यस्ता बलयः प्रदीपाश्च यस्यास्तां तथोक्तां तां पूर्वोक्तां निषण्णां धेनुमन्वास्यानूपविश्य क्रमेण सुप्तामन्वनन्तरं संविवेश सुष्वाप । प्रातः सुप्तोत्थितामनूदतिष्ठदुत्थितवान् । अत्रानुशब्देन धेनुराजव्यापारयोः पौर्वापर्यमुच्यते क्रमशब्देन धेनुव्यापाराणामेवेत्यपौनरुक्त्यम् । "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया ॥ २४ ॥

अन्वयः—गोप्ता, गृहिणीसहायः, ( सन् ) अन्तिकन्यस्तबलिप्रदीपां, ताम्, अन्वास्य, क्रमेण, सुप्ताम्, अनु, संविवेश, प्रातः, सुप्तोत्थिताम्, अनु, उदतिष्ठत् ॥ २४ ॥

व्याख्या— गोप्ता=रक्षिता, दिलीप इति यावद् । गृहिणीसहायः=भार्याऽनुचरः । सुदक्षिणासहित इति भावः । सन्निति शेषः । सुदक्षिणा दिलीपश्चेत्यर्थः । अन्तिकन्यस्तबलिप्रदीपां=समीपस्थापितोपहारदीपां, ताम्=पूर्वोक्तां, निषण्णां नन्दिनीमिति यावद् । अन्वास्य=पश्चादुपविश्य, क्रमेण=अनुक्रमेण, सुप्तां=निद्रिताम् , अनु=पश्चात् , संविवेश=शिश्ये, प्रातः=प्रभाते, सुप्तोत्थितां=शयितविनिद्रिताम्, अनु=पश्चाद्,उदतिष्ठत्=उत्तस्थौ, निद्राभङ्गं चकारेति भावः ॥ २४ ॥

समासादि—अन्तिके न्यस्तोऽन्तिकन्यस्तः ( त० पु० ), बलत इति बलिः ( पुं० ), प्रकृष्टो दीपः प्रदीपः ( त० पु० ), बलेः प्रदीपो बलिप्रदीपः ( त० पु० ), अन्तिकन्यस्तो बलिप्रदीपो यस्याः साऽन्तिकन्यस्तबलिप्रदीपा ( ब० व्री० ) तां तथोक्ताम् । अनु पश्चाद् आसित्वेत्यन्वास्य ( अ० ) । गोपायतीति गोप्ता ( पुं० ) । सह अयते गच्छतीति सहायः ( पुं० ), गृहमस्त्यस्या इति गृहिणी ( स्त्री० ) स्वीकृतगृहस्थधर्मा । गृहिणी सहायो यस्यासौ गृहिणीसहायः ( ब० व्री० ), "आदौ" सुप्ता चासौ "पश्चाद्" उत्थिता चेति सुप्तोत्थिता ( त० क० धा० ) तां तथोक्ताम् ॥ २४ ॥

व्याकरणं—न्यस्तः = नि + असु ( क्षेपणे–उदित् ) + क्तः, "यस्य विभाषा" इतीडभावः सौ रूपम् । बलिः = बल (प्राणने—अकारेत् ) + इन् "सर्वधातुभ्य इन्" इत्यौणादिक-इन् प्रत्ययो नित् सौ रूपम् । अन्वास्य = अनु + आसु ( उपवेशने—उकारेत् ) + क्त्वा + ल्यप्, । गोप्ता = गुपू ( रक्षणे—ऊदित् ) + तृन् + सु । गृहिणी = गृह + इनिः + ङीप् + सु, "अत इनिठनौ" इतीनि प्रत्ययो नान्तत्वाद् ङीपि सोर्लोपे रूपम् । सहायः = सह + अय (गतौ—अकारेत् ) + अच्, पचादित्वादच्प्रत्यये सौ रूपम् । सुप्तां = ञिष्वप् (शये—ञीत् ) + क्तः + टाप् + अम् , धात्वादेः षः सः कित्वाद् "वचिस्वपियजादीनां किति" इति संप्रसारणे ततः पूर्वरूपे टापि "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" इत्यनोः कर्मप्रवचनीयत्वे "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीयायाममि पूर्वरूपे रूपम् । संविवेश = सम् + विश ( प्रवेशने—अकारेत् ) + लिट्, तस्य तिपो णलादेशे धातोर्द्वित्वेऽभ्यासकार्ये लघूपधगुणे रूपम् । उत्थिता = उद् + ष्ठा ( गतिनिवृत्तौ ) + क्तः, "गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च" इति कर्त्तरि क्तप्रत्यये "द्यतिस्यतिमास्थामित्ति किति" इतीत्वे ततः सन्धिकार्ये टापि सोर्लोपे रूपम् । उदतिष्ठत् = उद् + ष्ठा ( गतिनिवृत्तौ) + लङ्, तस्य तिपि शपि "पाघ्राध्मा" इत्यादिना तिष्ठादेशे धातोरडागमे रूपम् ॥ २४ ॥

वाच्यान्तरं—गोप्त्रा गृहिणीसहायेन (सता) अन्तिकन्यस्तबलिप्रदीपां तामन्वास्य क्रमेण सुप्तामनुसंविविशे, प्रातः सुप्तोत्थितामनूदस्थीयत ॥ २४ ॥

कोशः—"समीपे निकटासन्नसन्निकृष्टसनीडवत् । सदेशाभ्याशसविधसमर्यादसवेशवत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इत्यमरः । "बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमानस्त्री जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च" इति मेदिनी । "दीपः प्रदीपः" इति । "दीपस्तु, स्नेहाशः कज्जलध्वज । दशेन्धनो गृहमणिर्दीपातिलक इत्यपि । शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षः" इति चामरस्त्रिकाण्डशेपश्च । "अनुप्लवः सहायश्चानुचरोऽभिसरः समाः" इत्यमरः । "क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च । इति मेदिनी । "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः ॥ २४ ॥

तात्पर्यार्थः—सुदक्षिणया स्वमहिष्या साकं राजा दिलीपः समीपस्थापितपूजादीपायास्तस्याः पश्चाद्भागे समुपविश्य ततः सुप्तायां नन्दिन्यां सत्यां तदनु स्वयं सपत्नीकोऽपि सुष्वाप, पुनर्यथेच्छं सुप्त्वा ततः प्रातः काल उत्थितायां तस्यामनूदतिष्ठत् ॥ २४ ॥

भाषाऽर्थः—रक्षाकरने वाले पटरानी सुदक्षिणा के सहित राजा दिलीप, जिसके समीप में उपहार, सम्बन्धी दीप रक्खे गये है ऐसी उस बैठी हुई नन्दिनी के पीछे बैठ कर क्रम से उस ( नन्दिनी ) के सोने के पीछे सोगे, और प्रातः उसके सोकर उठजाने के पीछे उठे ॥ २४ ॥

*एवं तां परिचरतस्तस्य दिलीपस्यैकविंशतिर्दिनानि व्यतीतानीत्याह*—

इत्थं व्रतं धारयतः प्रजाऽर्थं समं महिष्या महनीयकीर्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥

सञ्जीविनी—इत्थमिति । इत्थमनेन प्रकारेण प्रजाऽर्थं संतानाय महिष्या सममभिषिक्तप-

त्न्या सह । 'कृताभिषेका महिषी' इत्यमरः । व्रतं धारयतः, महनीया पूज्या कीर्तिर्यस्य तस्य, दीनानामुद्धरणं दैन्यविमोचनं तत्रोचितस्य परिचितस्य तस्य नृपस्य, त्रयो गुणा आवृत्तयो येषां तानि त्रिगुणानि त्रिरावृत्तानि सप्त दिनान्येकविंशतिर्दिनानि व्यतीयुः ॥ २५ ॥

अन्वयः—इत्थं, प्रजाऽर्थं, महिष्या, समं, व्रतं, धारयतः, महनीयकीर्त्तेः, दीनोद्धरणोचितस्य, तस्य, त्रिगुणानि, सप्त, दिनानि, व्यतीयुः ॥ २५ ॥

व्याख्या—इत्थम् = एवम्, अनेन प्रकारेणेत्यर्थः । प्रजाऽर्थं = सन्ततिप्रयोजनकम्, पुत्राप्त्या इति भावः । महिष्या = कृताभिषेकया, पत्न्या सुदक्षिणयेति यावत् । समं = साधं, व्रतं = नियमं, नन्दिनीपरिचर्याऽऽत्मकमित्यर्थः । धारयतः = दधतः, कुर्वत इति यावत् । महनीयकीर्त्तेः = प्रशस्तयशसः, अत्युज्ज्वलकीर्त्तिशालिन इति भावः । दीनोद्धरणोचितस्य = दुर्विधोत्तरणाभ्यस्तस्य, दीनजनरक्षणतत्परस्येति भावः । तस्य = पूर्वोक्तस्य, दिलीपस्येति यावत् । त्रिगुणानि = त्रिरावृत्तानि, वारत्रयमिति भावः । सप्त = सप्तसङ्ख्यकानि, दिनानि = दिवसानि, एकविंशतिदिनानीति भावः । व्यतीयुः = व्यतिचक्रमुः, गतानीति यावत् ॥ २५ ॥

समासादि—अनेन प्रकारेणेतीत्थम् (अ०) । प्रजैवार्थः प्रयोजनं यस्य तत् प्रजाऽर्थं तत्तथोक्तम् ( व० व्री० ) । महनीया कीर्त्तिर्यस्यासौ महनीयकीर्त्तिः ( व० व्री० ) तस्य महनीयकीर्त्तेः ( पुं० ) । त्रयो गुणा येषान्तानि त्रिगुणानि ( व० व्री० ) । दीयन्ते स्मेति दीनाः ( पुं० ), दीनानामुद्धरणं दीनोद्धरणं ( त० पु० ), तत्रोचितो दीनोद्धरणोचितः ( त० पु० ), तस्य तथोक्तस्य ॥ २५ ॥

व्याकरणं—धारयतः = धारि + शप् + लट् + शतृ + ङस् । महनीया = मह (पूजायाम्-अकारत्) + अनीयर् + टाप् + सु, "तव्यत्तव्यानीयरः" इत्यनीयर्प्रत्यये टापि सोर्लुकि रूपम् । सप्त = षप ( समवाये-अकारेत् ) + कनिन्, "सप्यशूभ्यां तुट् च" इत्यौणादिकश्च काराल्कनिन् प्रत्ययस्तस्य च तुडागमो धात्वादेः षः सो जसि "ष्णान्ता षट्" इति षट् सञ्ज्ञायां "षड्भ्यो लुक्" इति जसो लुकि नलोपे रूपम् । व्यतीयुः = वि + अति + इण् ( गतौ-णित् ) + लिट्, तस्य झेरुसादेशे धातोर्द्वित्वे "इणो यण्" इति यणादेशे "दीर्घ इणः किति" इत्यभ्यासस्य दीर्घे रूपम् । दीनाः = दीङ् ( क्षये-ङित् ) + क्तः, "गत्यर्थाकर्मके"त्यादिना कर्तरि क्तप्रत्यये "स्वादय ओदितः" इत्युक्ततया "ओदितश्च" इति निष्ठातस्य नत्वे जसि रूपम् । उद्धरणम् = उद् + धृञ् ( धारणे-ञित् ) + ल्युट्, "ल्युट् च" इति भावे ल्युटि योरनादेशे गुणे नस्य णत्वे सोरमादेशे रूपम् ॥ २५ ॥

वाच्यान्तरम्—इत्थं प्रजाऽर्थं महिष्या, समं व्रतं धारयतो महनीयकीर्त्तेर्दीनोद्धरणोचितस्य तस्य सप्तभिस्त्रिगुणैर्दिनैर्व्यतीये ॥ २५ ॥

कोशः—नियमो व्रतमस्त्री" इति । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति । "साकं सार्धं समं सह" इति । "कृताभिषेका महिषी" इति । "यशः कीर्त्तिः समज्ञा च" इति चामरः । "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्ध्याद्य" इति मेदिनी । "घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ" इति । "निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इति चामरः । "उचितं तु भवे न्यस्ते मिते ज्ञाते समञ्जसे" इति मेदिनी ॥ २५ ॥

तात्पर्याऽर्थः—एवं पूर्वोक्तप्रकारेण महिष्या सुदक्षिणया सार्धं नन्दिनीपरिचर्याऽऽत्मकं नियमं पुत्राप्त्यर्थं कुर्वतः परमयशस्विनस्तस्य दिलीपस्यैकविंशतिदिनानि व्यतीतानि ॥२५॥

भाषाऽर्थः—इस प्रकार से पुत्र के लिये महारानी सुदक्षिणा के साथ नियम को धारण करते हुये प्रशंसनीय कीर्त्तिवाले दीनों के उद्धार करने में लगे हुये उन महाराज दिलीप के तिगुने सात ( एक्कीश ) दिन बीत गये ॥ २५ ॥

*द्वाविंशे दिवसे दिलीपस्य हार्दिकभावं जिज्ञासमानाया नन्दिन्या हिमवतो गह्वरे प्रवेशमाह—*

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः।
गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥

सञ्जीविनी—अन्येद्युरिति। अन्येद्युरन्यस्मिन्दिने द्वाविंशे दिने। "सद्यःपरुत्परा०" इत्यादिना निपातनादव्ययत्वम्। 'अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात्। तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः'। इत्यमरः। मुनिहोमधेनुः। आत्मानुचरस्य भावमभिप्रायं दृढभक्तित्वम्। 'भावोऽभिप्राय आशयः' इति यादवः। जिज्ञासमाना ज्ञातुमिच्छन्ती। "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदे शानच्। प्रपतत्यस्मिन्निति प्रपातः पतनप्रदेशः। गङ्गायाः प्रपातस्तस्यान्ते समीपे विरूढानि जातानि शष्पाणि बालतृणानि यस्मिंस्तत्। 'शष्पं बालतृणं घासः' इत्यमरः। गौरीगुरोः पार्वतीपितुर्गह्वरं गुहामाविवेश ॥ २६ ॥

अन्वयः—अन्येद्युः, मुनिहोमधेनुः, आत्मानुचरस्य, भावं, जिज्ञासमाना, गङ्गाप्रपातान्तविरूढशष्पं, गौरीगुरोः, गह्वरम्, आविवेश ॥ २६ ॥

व्याख्या—अन्येद्युः = अन्यस्मिन् दिने, द्वाविंशे दिवस इति भावः। मुनिहोमधेनुः = वाचंयमहवनगौः, वसिष्ठमहर्षेर्हवनसामग्रीसंपादिका नन्दिनीति यावद्। आत्मानुचरस्य = स्वसहायस्य, स्वपश्चाद्‌यायिनः किङ्करस्येति भावः। भावम् = आशयं, हृद्गतभावं, दृढभक्तिर्वर्तते न वेत्याकारकमिति भावः। जिज्ञासमाना = ज्ञातुमिच्छन्ती, गङ्गाप्रपातान्तविरूढशष्पं = सुरनिम्नगानिर्झरनिकटोत्पन्नबालतृणं, गौरीगुरोः = उमापितुः, हिमालयाख्यपर्वतस्येति भावः। गह्वरं = देवखातबिलम्, अकृत्रिमं पर्वतस्य बिलमिति यावद्। आविवेश = आऽविशत्, प्रवेशं कृतवतीति यावत् ॥ २६ ॥

समासादि—अन्यस्मिन्नहनीत्यन्येद्युः ( अ० )। आत्मनोऽनुचर आत्मानुचरः (त० पु०) तस्य तथोक्तस्य। भावयति करोति रसानिति भावः ( पुं० ) तं भावम्। ज्ञातुमिच्छतीति जिज्ञासते, जिज्ञासत इति जिज्ञासमाना (स्त्री०)। होमस्य धेनुर्होमधेनुः (त० पु०), मुनेर्होमधेनुर्मुनिहोमधेनुः (त० पु०)। गच्छतीति गङ्गा ( स्त्री० ) प्रपतत्यस्मिन्निति प्रपतत्यस्मादिति प्रपत्यतेऽसाविति वा। प्रपातः (पुं०), गङ्गायाः प्रपातो गङ्गाप्रपातः (त० पु०) तस्यान्तो गङ्गाप्रपातान्तः (त० पु०), तत्र विरूढानि गङ्गाप्रपातान्तविरूढानि (त० पु०), गङ्गाप्रपातान्तविरूढानि शष्पाणि यत्र तद् गङ्गाप्रपातान्तविरूढशष्पं तत्तथोक्तम् (ब० स्त्री०)। गौरो वर्णोऽस्त्यस्या इति गौरी (स्त्री०), गृणातीति गुरुः (पुं०), गौर्या गुरुर्गौरीगुरुः (त० पु०) तस्य गौरीगुरोः। गाहत इति गह्वरं तत्तथोक्तम् (न० लिं०) ॥ २६ ॥

व्याकरणम्—अन्येद्युः = अन्य + एद्युस्, "सद्यःपरुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः" इति निपातनात् "पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्" इति वार्तिकेनाहन्येद्युस् प्रत्यये कृते "यस्येति च" इत्यकारलोपे "तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वे "अव्ययादाप्सुपः" इति सुपो लुकि रूपम्। भावम् = (भू(सत्तायाम्) + णिच्) भावि + अच्, पचादित्वादच्प्रत्यये "णेरनिटि" इति णिलोपेऽमि रूपम्। जिज्ञासमाना = ज्ञा (अवबोधने) + सन् + लट् + शानच् + टाप्, धातोः सन्प्रत्यये "सन्यङोः" इति धातोर्द्वित्वेऽभ्यासहलो लोपे ह्रस्वे च, "सन्यतः" इत्यभ्यासस्येत्वे "सनाद्यन्ता" इति धातुत्वे "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदे ततो लटः शानजादेशे मुगागमे च टापि सोर्लुकि रूपम्। गङ्गा = गम्लृ (गतौ—लृदित्) + गत् + टाप् + सु, "गन् गम्यद्योः" इत्यौणादिको गत् प्रत्ययश्चापि मस्यानुस्वारपरसवर्णौ, सोर्लुकि रूपम्। प्रपातः = प्र + पत्लृ (पतने—लृदित्) + घञ्, "अकर्तरि च कारके संज्ञायाम्" इति घञ्प्रत्यये ञित्वाद्‌वृद्धावुपधाभावे सौ रू-

पम्। विरूढानि = वि + रुह ( बीजजन्मनि प्रादुर्भावे च—अकारेत् ) + क्तः, "गत्यर्थाकर्मके" त्यादिना कर्तरि क्तप्रत्यये "हो ढः" इति ढत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे-ष्टुत्वे ढलोपे पूर्वाणो दीर्घे जसि रूपम्। गौरी = गौर + ङीप् + सु "षिद्गौरादिभ्यश्च" इति ङीपि सोर्लुकि रूपम्। गह्वरं = गाहू ( विलोडने—ऊदित् ) + ष्वरच् + अम्, "छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसंयद्वराः" इत्यौणादिकः ष्वरच् प्रत्ययो धातोर्ह्रस्वश्च निपात्यतेऽमि रूपम्। आविवेश = आङ् + विश (प्रवेशने—अकारेत्) + लिट्, धातोर्द्वित्वेऽभ्यासकार्ये लिटस्तिपो णलादेशे धातोरुपधागुणे रूपम्॥ २६॥

वाच्यान्तरम्—अन्येद्युर्मुनिहोमधेनुरात्मानुचरस्य भावं जिज्ञासमानया गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविविशे॥ २६॥

कोशः—"अथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात्। तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः" इत्यमरः। "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि" इति मेदिनी। "अनुप्लवः सहायश्चानुचरोऽभिसरः समाः" इत्यमरः। "भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु। क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु। रत्यादौ च" इति मेदिनी। "भावोऽभिप्राय आशयः" इति यादवोऽपि। "गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा। भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि" इत्यमरः। "प्रपातो निर्झरे भृगौ। अवटे पतने कच्छे" इति हैमः। "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि" इति हेमचन्द्रः। "शष्पं बालतृणे स्मृतम्। पुंसि स्यात् प्रतिमाहानौ" इति मेदिनी। "उमा कात्यायनी गौरी काली हैमवतीश्वरा" इत्यमरः। "गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि" इति मेदिनी। "देवखातबिले गुहा। गह्वरम्" इत्यमरः॥ २६॥

तात्पर्यार्थः—द्वाविंशे दिवसे वसिष्ठधेनुः स्वसेवकस्य दिलीपस्य दृढभक्तिपरीक्षार्थं हिमालयपर्वतस्य गुहाप्रवेशमकरोत्॥ २६॥

भाषाऽर्थः—दूसरे ( बाइसवें ) दिन वसिष्ठ की होम सम्बन्धी धेनु ( नन्दिनी ) अपने अनुचर ( सेवक ) राजा दिलीप का अभिप्राय ( मेरे में दृढभक्ति है या नहीं इस भाव ) को जानने की इच्छा रखती हुई, गङ्गा के वारि प्रवाह के समीप में उगी हुई हैं छोटी घासें जिसमें ऐसी पार्वती के पिता ( हिमालयपर्वत ) की गुफा में घुसी॥ २६॥

*हिमालयगुहाप्रविष्टायां नन्दिन्यां सिंहाक्रमणमाह*—

**सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन।**
**अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष॥ २७॥**

सञ्जीविनी—सेति। सा धेनुर्हिंस्रैर्व्याघ्रादिभिर्मनसाऽपि दुष्प्रधर्षा दुर्धर्षेति हेतोरद्रिशोभायां प्रहितेक्षणेन दत्तदृष्टिना नृपेणालक्षिताभ्युत्पतनमाभिमुख्येनोत्पतनं यस्य स सिंहस्तां धेनुं प्रसह्य हठात्। 'प्रसह्य तु हठार्थकम्' इत्यमरः। चकर्ष। किलेत्यलीके॥ २७॥

अन्वयः—सा, हिंस्रैः, मनसा, अपि, दुष्प्रधर्षा, इति, अद्रिशोभाप्रहितेक्षणेन, नृपेण, अलक्षिताभ्युत्पतनः, सिंहः, तां, प्रसह्य, चकर्ष, किल,॥ २७॥

व्याख्या—सा = पूर्वोक्ता, हिमवद्गुहां प्रविष्टा नन्दिनीत्यर्थः। हिंस्रैः = घातुकैः, व्याघ्रादिभिर्दुष्टजन्तुभिरिति भावः। मनसा = मानसेन, अपि = संभावनायां, दुष्प्रधर्षा = दुर्धर्षा, परिभवानर्हेति भावः। इति = हेतोः, अद्रिशोभाप्रहितेक्षणेन = शैलच्छविसमर्पितनयनेन, नृपेण = राज्ञा, दिलीपेनेति यावद्। अलक्षिताभ्युत्पतनः = अदृष्टाभिमुखाक्रमणः, सिंहः = केसरी, तां = पूर्वोक्तां, धेनुमिति यावत्। प्रसह्य = हठात्, चकर्ष = कृष्टवान्, किल = अलीके, नन्दिनीमायारचितः सिंहस्तामाक्रम्य स्थित इति भावः॥ २७॥

समासादि—दुःखेन प्रधर्षितुमर्हा दुष्प्रधर्षा (स्त्री०)। हिंसितुं शीलमेषान्ते हिंस्रास्तै-हिंस्रैः (पुं०)। अद्रेः शोभाऽद्रिशोभा (त० पु०), तत्र प्रहितेऽद्रिशोभाप्रहिते (त० पु०), अद्रि-शोभाप्रहिते ईक्षणे येन सोऽद्रिशोभाप्रहितेक्षणस्तेन तथोक्तेन (ब० व्री०)। न लक्षित मभ्युत्पतनमाभिमुख्येनोत्पतनं यस्य सोऽलक्षिताभ्युत्पतन (ब० व्री०)। प्रकर्षेण सोढेति प्रसह्य (अ०)। हिनस्तीति सिंहः (पुं०)। किलतीति किल (अ०) ॥ २७ ॥

व्याकरण—दुष्प्रधर्षा=दुस्+प्र+ञिधृषा (प्रागल्भ्ये—ञिकाराकारेत्)+खल्+टाप्+सु, "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खल् धातोरुपधागुणे टापि ततो दुसः-सस्य रुत्वे विसर्गे "इदुदुपधस्य चाप्रत्ययस्य" इति विसर्गस्य षत्वे सोर्हल्ङ्याब्दिलोपे रूपम्। हिंस्रैः=हिंसि (हिंसायाम्—इदित्)+रः+भिस्, इदित्वाद्धातोर्नुमागमे "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति रप्रत्यये भिस ऐसादेशे रूपम्। प्रहिते=प्र+हि (गतौ वृद्धौ च)+क्तः+औ, अथवा—प्र+डुधाञ् (धारणपोषणयोः—डुञित्)+क्तः+औ, "दधातेर्हिः" इति धातोर्ह्यादेशः कित्वाद् गुणाभावे रूपम्। प्रसह्य=प्र+षह (मर्षणे—अकारेत्)+क्त्वा+ल्यप्, धात्वादेः षः सोऽव्ययत्वात्सुपो लुकि रूपम्। सिंहः=हिंसि (हिंसायाम्—इदित्)+अच्+सु, इदित्वान्नुमागमे पचादित्वादच् प्रत्यये "पृषोदरादीनि यथोपदिष्टम्" इत्याद्यन्तयोर्वर्णविपर्यये रूपम्। किल=किल (श्वैत्यक्रीडनयोः—अकारेत्)+कः, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये कित्वाद् गुणाभावे "स्वरादिनिपातमव्ययम्" इत्यव्ययत्वात्सुपो लुकि रूपम्। चकर्ष=कृष (विलेखने—अकारेत्)+लिट्, तस्य तिपो णलादेशे धातोर्द्वित्वेऽभ्यासकार्ये चुत्वे गुणे रपरे रूपम् ॥ २७ ॥

वाच्यान्तरं—तया हिंस्रैर्मनसाऽपि दुष्प्रधर्षया "भूयते" इत्यद्रिशोभाप्रहितेक्षणेन नृपेणालक्षिताभ्युत्पतनेन सिंहेन सा प्रसह्य चकृषे किल ॥ २७ ॥

कोशः—"चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इति। "शरारुर्घातुको हिंस्रः" इति। "इति हेतुप्रकरणप्रकाशादिसमाप्तिषु" इति। "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इति। "शोभा कान्तिर्द्युतिश्छविः" इति। "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी" इति। "राज्ञि राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इति। "प्रसह्य तु हठार्थकम्" इति। "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इति सर्वत्राप्यमरः। "किल शब्दस्तु वार्त्तायां संभाव्यानुनयार्थयोः" इति। "वार्त्तायामरुचौ किल" इति विश्वत्रिकाण्डशेषौ ॥ २७ ॥

तात्पर्यार्थः—नन्दिनीं केनापि हिंस्रा व्याघ्रादयो नाक्रमितुं समर्थाः, इति हेतोर्निःशङ्के सति हिमालयशोभादर्शनासक्तमनसि दिलीपे तन्मायारचितः सिंहस्तां धेनुमक्राक्षीत् ॥ २७ ॥

भाषाऽर्थः—वह नन्दिनी हिंसक व्याघ्रादि दुष्ट जीवों से मन से भी बडी कठिनाई से तकलीफ पहुंचाने के योग्य है, इस कारण से "निश्चिन्त हो" हिमालय की शोभा (के देखने) में दृष्टि को लगाये हुये राजा दिलीप के द्वारा जिसका आक्रमण करना नहीं देखा गया ऐसा "मायाकृत" सिंह जबरदस्ती उस नन्दिनी को बनावटी ढङ्ग से फाड़ने लगा ॥ २७ ॥

*नन्दिन्या आक्रन्दनेन हिमालयशोभादर्शनाद् दिलीपकर्तृकदृष्टिपरावर्त्तनमाह*—

तदीयमाक्रन्दितमार्त्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम्।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्त्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

सञ्जीविनी—तदीयमिति। गुहानिबद्धेन प्रतिध्वनिना दीर्घम्। तस्या इदं तदीयम्। आक्रन्दितमार्त्तघोषणम्। आर्त्तेषु विपन्नेषु साधोर्हितकारिणो नृपस्य नगेन्द्रसक्तां दृष्टिम्।

रश्मिषु प्रग्रहेषु 'किरणप्रग्रहौ रश्मी' इत्यमरः। आदायेव गृहीत्वेव निवर्त्तयामास॥ २९ ॥

अन्वयः—गुहानिबद्धप्रतिशब्ददीर्घं, तदीयम्, आक्रन्दितम्, आर्त्तसाधोः, नृपस्य, नगेन्द्रसक्तां, दृष्टिं, रश्मिषु, आदाय, इव, निवर्त्तयामास॥ २८॥

व्याख्या—गुहानिबद्धप्रतिशब्ददीर्घं = गह्वरप्रतिहतप्रतिनिनादायतं। तदीयं = तत्सम्बन्धि, नन्दिन्या इति भावः। आक्रन्दितम् = उच्चै रुदितम्, आर्त्तसाधोः = दुःखितसज्जनस्य, विपन्नानां विपन्निवारकस्येति भावः। नृपस्य = राज्ञः, दिलीपस्येति यावद्। नगेन्द्रसक्तां = शैलराजलग्नां, हिमाचलशोभाप्रसक्तामिति यावद्। दृष्टिं = नेत्र, रश्मिषु = प्रग्रहेषु, आदाय = गृहीत्वा, इव = यथा, निवर्त्तयामास = न्यवर्त्तयत्॥ २८॥

समासादि—तस्या इदं तदीयं (न० लिं०)। साध्नोति परकार्यमिति साधुः (पुं०), आर्त्तेषु साधुरार्त्तसाधुस्तस्यार्त्तसाधोः (त० पु०)। गूहतीति गुहा (स्त्री०), गुहायां निबद्धो गुहानिबद्धः (त० पु०) गुहानिबद्धश्चासौ प्रतिशब्दश्च गुहानिबद्धप्रतिशब्दः (त० पु० क० धा०), तेन दीर्घ गुहानिबद्धप्रतिशब्ददीर्घम् (त० पु०)। अश्नुवत एभिरिति रश्मयः (पुं०), तेषु रश्मिषु। न गच्छन्तीति नगाः (पुं०), तेष्विन्द्रो नगेन्द्रः (त० पु०), तत्र सक्ता नगेन्द्रसक्ता तां तथोक्ताम् (त० पु०)॥ २८॥

व्याकरणं—तदीयं = तद्+छः+सु, "त्यदादीनि च" इति वृद्धसंज्ञकतया "वृद्धाच्छः" इति छप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति छस्येयादेशे सोरमादेशे रूपम्। आक्रन्दितम् = आङ्+क्रदि (आह्वाने रोदने च-इदित्)+क्तः+सु, इदित्वान्नुमागमे निष्ठातस्य वलादिलक्षण इडागमे सोरमादेशे रूपम्। आर्त्तेषु = आङ्+ऋ (गतिप्रापणयोः)+क्तः+सुप्, "उपसर्गादृति धातौ" इति वृद्धौ रपरे "अचो रहाभ्यां द्वे" इति द्वित्वे रूपम्। साधुः = साध (संसिद्धौ-अकारेत्)+उण्+सु, "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इत्यौणादिक उण् प्रत्यये सौ रुत्वे विसर्गे रूपम्। गुहा = गुहू (संवरणे-ऊदित्)+कः+टाप्+सु, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये कित्वादुपधागुणाभावे टापि सोर्हल्ङ्यादिलोपे रूपम्। निबद्धः = नि+बन्ध (बन्धने—अकारेत्)+क्तः+सु, निष्ठातस्य कित्वाद्धातोर्नस्य "अनिदितां हल उपधायाः क्ङिति" इति लोपे सौ रुत्वे विसर्गे रूपम्। रश्मिषु = अशू (व्याप्तौ-सङ्घाते च-ऊदित्)+मिः+सुप्, "अश्नोतेरश् च" इत्यौणादिको मिप्रत्ययो धातोरशादेशस्ततः सुपि रूपम्। आदाय = आङ्+डुदाञ् (दाने-डुञित्)+क्त्वा+ल्यप्। निवर्त्तयामास = नि+(वृतु (वर्त्तने-उदित्)+णिच्) वर्त्ति+आम् (वर्त्तयाम्)+अस्+लिट्, धातोर्णिचि प्रत्यये लघूपधलक्षणे गुणे रपरे "सनाद्यन्ताः" इति धातुत्वे लिटि "कास्प्रत्ययादाममन्त्रे लिटि" इति धातोराम्प्रत्यये तस्यार्धधातुकतया धातोर्गुणायादेशौ "आमः" इति लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परस्यास्तेरनुप्रयोगे ततो धातोर्द्वित्वेऽभ्यासहलो लोपे "अत आदेः" इत्यभ्यासस्य दीर्घे सवर्णदीर्घे लिटस्तिपो णलादेशे रूपम्॥ २८॥

वाच्यान्तरं—गुहानिबद्धप्रतिशब्ददीर्घेण तदीयेनाक्रन्दितेनार्त्तसाधोर्नृपस्य नगेन्द्रसक्ता दृष्टी रश्मिष्वादायेव निवर्त्तयाञ्चक्रे॥ २८॥

कोशः—"सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे" इत्यमरः। "साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्" इति विश्वः। "देवखातबिले गुहा। गह्वरम्" इति। "मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः" इति। "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इति। "दीर्घमायतम्" इति। "किरणप्रग्रहौ रश्मी" इति चामरः। "रश्मिः पुमान् स्याद् दीधितौ स्यात् पक्ष्मप्रग्रहयोरपि" इति च मेदिनी। "नगो महीरुहे शैले भास्करे पवनाशने" इति हैमः। "शैलवृक्षौ नगावगौ" इत्यमरोऽपि॥ २८॥

तात्पर्यार्थः—सिंहाक्रमणेन गुहायां प्रतिहतेन प्रतिध्वनिना दीर्घं नन्दिन्या आक्रन्दनं शैलशोभादर्शनसक्तां दिलीपदृष्टिं यथा हयादीन् रश्मिषु गृहीत्वा सारथिर्निवर्त्तयति तथैव-निवर्त्तयामास ॥ २८ ॥

भाषाऽर्थः—गुफा में टकराई हुई प्रतिध्वनि से ऊँचे हुए उस (नन्दिनी) के आर्त्तनाद ने दुःखियों के विषय में सज्जन (रक्षक) राजा दिलीप की हिमालय पर्वत (की शोभा देखने) में लगी हुई दृष्टि को लगाम पकड़ कर जैसे कोई घोड़े आदि को फेरता है वैसे ही अपनी ओर फेर लिया ॥ २८ ॥

*दृष्टिं परावर्त्त्य दिलीपः सिंहाक्रान्तां नन्दिनीं ददर्शेत्याह—*

**स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।**
**अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९ ॥**

सञ्जीविनी—स इति । धनुर्धरः स नृपः पाटलायां रक्तवर्णायां गवि तस्थिवांसं स्थितम्, "क्वसुश्च" इति क्वसुप्रत्ययः । केसरिणं सिंहम् । सानुमतोऽद्रेः । धातोर्गैरिकस्य विकारो धातुमयी तस्यामधित्यकायामूर्ध्वभूमौ 'उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्प्रत्ययः । प्रफुल्लो विकसितस्तम् । 'फुल्ल विकसने' इति धातोः पचाद्यच् । प्रफुल्तम् इति तकारपाठे 'ञिफला विशरणे' इति धातोः कर्तरि क्तः "उत्परस्यातः" इत्युकारादेशः । लोध्राख्यं द्रुममिव ददर्श ॥ २९ ॥

अन्वयः—धनुर्धरः, सः, पाटलायां, गवि, तस्थिवांसं, केसरिणं, सानुमतः, धातुमय्याम्, अधित्यकायाम्, प्रफुल्लं, लोध्रद्रुमम्, इव, ददर्श ॥ २९ ॥

व्याख्या—धनुर्धरः = धानुष्कः, चापभृदिति यावत् । सः = पूर्वोक्तः, राजा दिलीप इति यावत् । पाटलायां = श्वेतरक्तायां, पाटलाकुसुमप्रभायामिति यावद् । गवि = सौरभेय्यां, नन्दिन्यामिति यावत् । तस्थिवांसं = स्थितम्, आक्रम्य कृतावस्थानमिति भावः । केसरिणं = सिंहं, सानुमतः = शृङ्गवतः, पर्वतस्येति भावः । धातुमय्यां = गैरिकवत्यां, पाटलवर्णतया गैरिकधातुबहुलायामित्यर्थः । अधित्यकायाम् = ऊर्ध्वभूमौ, प्रफुल्लं = स्फुटं, विकसितकुसुमशालिनमिति भावः । लोध्रद्रुमं = तिल्ववृक्षं, लोध्राख्यं श्वेतवर्णतरुमिति यावद् । इव = यथा, ददर्श = अपश्यत् ॥ २९ ॥

समासादि—पाटयतीति पाटला (स्त्री०) तस्यां पाटलायाम् । तस्थाविति तस्थिवांस्तं तस्थिवांसं (पुं०) । धरतीति धरः (पुं०), धनुषो धरो धनुर्धरः (त० पु०) । केसराः स्कन्धबालाः सन्त्यस्येति केसरी (पुं०) तं केसरिणम् । अधि–आरूढा भूमिरधित्यका (स्त्री०) तस्यामधित्यकायाम् । धातोर्गैरिकस्य विकारो धातुमयी (स्त्री०) तस्यां धातुमय्याम् । द्रुः शाखाऽस्त्यस्मिन्निति द्रुमः (पुं०), लोध्रश्चासौ द्रुमो लोध्रद्रुमस्तं लोध्रद्रुमम् ( त० पु० ) । सानूनि सन्त्यस्येति सानुमान् (पुं०) तस्य सानुमतः । प्रकर्षेण फुल्लतीति प्रफुल्लः (पुं०) तं प्रफुल्लम् ॥ २९ ॥

व्याकरणम्—पाटलायां = (पट (गतौ–अकारेत् ) + णिच् ) पाटि + कलच् + टाप् + ङि, धातोर्णिचि तत उपधावृद्धौ "सनाद्यन्ता" इति धातुत्वे "वृषादिभ्यश्चित्" इत्यौणादिकः कलच् प्रत्ययो वृषादित्वात् ततो णिलोपे टापि ङौ रूपम् । तस्थिवांसं = ष्ठा (गतिनिवृत्तौ) + लिट् + क्वसु + अम्, धात्वादेः षः सस्ततो धातोर्लिटः "क्वसुश्च" इति बाहुलकाद् भाषायामपि क्वस्वादेशे धातोर्द्वित्वेऽभ्यासहलो लोपे ह्रस्वे च "आतो लोप इटि च" इत्याकारलोपे "वस्वेकाजाद्घसाम्" इतीडागमे नुमागमे दीर्घेऽमि रूपम् । केसरिणं = केसर + इनिः + अम् । ददर्श = दृशिर् (प्रेक्षणे–इरित् ) + लिट्, तस्य तिपो णलादेशे धातोर्द्वित्वेऽभ्यासस्यात्वे रपरे हलो लोपे ततो गुणे रूपम् । अधित्यकायाम् = अधि + त्यकन् + टाप् + ङि, "उपाधिभ्यां त्य-

कन्नासन्नारूढयोः" इति त्यकन्प्रत्यये टापि ङौ रूपम् । धातुमय्यां = धातु + मयट् + ङीप् + ङि, "तत्प्रकृतवचने मयट्" इति मयट् प्रत्यये टित्वाद् ङीपि ङौ रूपम् । सानुमतः = सानु + मतुप् + ङस् । प्रफुल्लम् = प्र + फुल्ल (विकसने-अकारेत्) + अच् + अम्, पचादित्वादचि प्रत्यये रूपम् ॥ २९ ॥

वाच्यान्तरं—धनुर्धरेण तेन पाटलायां गवि तस्थिवान् केसरी सानुमतो धातुमय्याम-धित्यकायां प्रफुल्लो लोध्रद्रुम इव ददृशे ॥ २९ ॥

कोशः—"श्वेतरक्तस्तु पाटलः" इति । "पाटलं तु, कुङ्कुमश्वेतरक्तयोः । पाटलः स्यादाशुव्रीहौ पाटला पाटलिद्रुमे" इत्यमरो हैमश्च । "माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी स्यात्" इति। "धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः" इति । "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इति। "उपत्यकाऽद्रेरासन्नाभूमिरूर्ध्वमधित्यका" इति चामरः । "धातुर्नेन्द्रियेषु च । शब्दयोनिमहाभूततद्गुणेषु रसादिषु।। मनःशिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थ्नि च" इति मेदिनी । "गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ" इति । "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः" इति । "स्नुः प्रस्थः सानुरस्त्रियौ" इति चामरः । "सानुः शृङ्गे बुधे मार्गे वात्यायां पल्लवे वने" इति च विश्वकोशः । "प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः । फुल्लश्चैते विकसिते" इत्यमरः ॥ २९ ॥

तात्पर्यार्थः—दिलीपः श्वेतरक्तवर्णायां नन्दिन्यामाक्रम्य स्थितं सिंहं पर्वतस्य गैरिकमय्यामूर्ध्वभूमौ विकसितं लोध्रवृक्षमिवापश्यत् ॥ २९ ॥

भाषाऽर्थः—धनुष् को धारण करने वाले उन राजा दिलीप ने श्वेतयुक्त लाल वर्ण वाली नन्दिनी के ऊपर बैठे हुये सिंह को पर्वत के गैरिक धातुमयी ऊंची भूमि में उगे हुये लोध्र वृक्ष की भांति देखा ॥ २९ ॥

*सिंहवधार्थं राज्ञो दिलीपस्य निषङ्गाद्बाणनिष्कासनोद्योगमाह—*

**ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।**
**जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥**

सञ्जीविनी—तत इति । ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी 'शरणं गृहरक्षित्रोः' इत्यमरः । 'शरणं रक्षणे गृहे' इति यादवः । शरणे साधुः शरण्यः । "तत्र साधुः" इति यत्प्रत्यय.। 'प्रसभेन बलात्कारेणोद्धृता अरयो येन सनृपती राजा जाताभिषङ्गो जातपराभवः-सन् । 'अभिषङ्गः पराभवः' इत्यमरः । वध्यस्य वधार्हस्य । "दण्डादिभ्यो यः" इति यप्रत्ययः । मृगेन्द्रस्य वधाय निषङ्गात्तूणीरात् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । शरमुद्धर्तुमैच्छत् ॥ ३० ॥

अन्वयः—ततः, मृगेन्द्रगामी, शरण्यः, प्रसभोद्धृतारिः, नृपतिः, जाताभिषङ्गः, "सन्" वध्यस्य, मृगेन्द्रस्य, वधाय, निषङ्गात्, शरम्, उद्धर्तुम्, ऐच्छत् ॥ ३० ॥

व्याख्या—ततः = तस्मात्, सिंहदर्शनानन्तरमिति भावः । मृगेन्द्रगामी = केसरियायी, सिंहसदृशगमनशील इति भावः । शरण्यः = रक्षणसाधुः, प्रसभोद्धृतारिः = हठोत्क्षिप्तशत्रुः, बलात्कारेणारिजनानां विजेतेति भावः । नृपतिः = नराधिपः, दिलीप इति भावः । जाताभिषङ्गः = उत्पन्नपराभवः, नन्दिन्या रक्षितरि स्वयं विद्यमानेऽपि सिंहाक्रमणेन निजं पराभवमेव साक्षान्मन्यमान इति भावः । "सन्" इति शेषः । वध्यस्य = शीर्षच्छेद्यस्य, वधार्हस्येति यावद् । मृगेन्द्रस्य = सिंहस्य, वधाय = घाताय, निषङ्गात् = इषुधेः, शरं = बाणम्, उद्धर्तुम् = उत्क्षेप्तुम्, ऐच्छत् = इयेष, इच्छां कृतवानिति यावत् ॥ ३० ॥

समासादि—तस्मादिति ततः (अ०) । मृगेष्विन्द्रो मृगेन्द्रस्तस्य मृगेन्द्रस्य (पुं०) ।

मृगेन्द्र इव गच्छतीति मृगेन्द्रगामी (पुं०) । हननं वधस्तस्मै वधाय (पुं०) । वधमर्हतीति-वध्यस्तस्य वध्यस्य (पुं०) । शृणात्यनेनेति शरस्तं शरम् (पुं०) । शरणे साधुः शरण्यः (पुं०) । अभिषञ्जनमभिषङ्गः (पुं०), जातोऽभिषङ्गः पराभवो यस्य स जाताभिषङ्गः (ब० व्री०) । नृणां पतिर्नृपतिः (त० पु०) । निषज्यन्तेऽत्र शरा इति निषङ्गः (पुं०) तस्मान्निषङ्गात् । प्रगता सभा विचारोऽस्मादिति प्रसभं (न० लिं०), तेनोद्धृताः प्रसभोद्धृताः (त० पु०), प्रसभोद्धृता अरयो येन सः प्रसभोद्धृतारिः (ब० व्री०) ॥ ३० ॥

व्याकरणम्—मृगेन्द्रगामी = मृगेन्द्र + गम्लृ (गतौ-लृदित्) + णिनिः + सु "कर्त्तर्युपमाने" इति णिनिरुपधावृद्धावुपपदसमासे सौ रूपम् । वधाय = हन (हिंसागत्योः—अकारेत्) + अप् + ङे, "हनो वध च" इत्यप् प्रत्यये धातोर्वधादेशे ङेरूपम् । वध्यस्य = वध + यः + ङस्, "दण्डादिभ्यो यः" इति यप्रत्यये ङसो रूपम् । शरं = शॄ (हिंसायाम्) + अप् + अम्, "ऋदोरप्" इत्यप् प्रत्यये गुणे रपरेऽमि रूपम् । शरण्यः = शरण + यत् + सु, "तत्र साधुः" इति यत् प्रत्ययेऽकारलोपे सौ रूपम् । जातः = जनी (प्रादुर्भावे-ईदित्) + क्तः + सु, "क्तिच्क्तौ च संज्ञायाम्" इति क्तप्रत्यये "जनसनखनां सञ्झलोः" इत्यात्वे "तितुत्रतथसिसुसरकसेषु च" इतीडभावे सौ रूपम् । अभिषङ्गः = अभि + षञ्ज (सङ्गे-अकारेत्) + घञ्, भावे घञ् प्रत्यये "चजोः कु घिण्ण्यतोः" इति कुत्वेन जस्य गकारे "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इति धातोः सस्य षत्वे सौ रूपम् । निषङ्गात = नि + षञ्ज (सङ्गे-अकारेत्) + घञ् + ङसि, "हलश्च" इति घञ्प्रत्यये जस्य कुत्वेन गकारे "उपसर्गा" दित्यादिना षत्वे ङसे रूपम् । उद्धृतम् = उद् + धृञ् (धारणे-ञित्) + तुमुन् । ऐच्छत् = इषु (इच्छायाम्-उकारेत्) + शः + लङ्, धातोर्लङस्तिपि तुदादित्वाच्छप्रत्यये "इषुगमियमां छः" इति धातोश्छादेशे तत आडागमे वृद्धौ रूपम् ॥ ३० ॥

वाच्यान्तरं—ततो मृगेन्द्रगामिना शरण्येन प्रसभोद्धृतारिणा नृपतिना जाताभिषङ्गेन "सता" वध्यस्य मृगेन्द्रस्य वधाय निषङ्गाच्छर उद्धर्त्तुमैष्यत॥ ३० ॥

कोशः—"आलम्भपिञ्जविशरघातोन्माथवधा अपि" इति । "वध्यः, शीर्षच्छेद्य इमौ समौ" इति । "पृषत्कबाणविशिखा अजिह्मगखगाशुगाः । कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः" इति । "शरणं गृहरक्षित्रोः" इति चामरः । "जातं व्यक्तौघजन्मसु । क्लीब त्रिलिङ्गमुत्पन्ने" इति मेदिनी । "शापे, त्वभिषङ्गः पराभवे" इत्यमरः । "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । तूण्याम्" इति । "प्रसभं तु बलात्कारो, हठः" इति । "समुद्धृतोद्धृते" इति चामरः । "उद्धृतं स्यात्त्रिपूत्क्षिप्ते परिभुक्तोज्झितेऽपि च" इति मेदिन्यपि ॥ ३० ॥

तात्पर्यार्थः—राजा दिलीपः सिंहाक्रान्तनन्दिनीदर्शनेन तद्रक्षितुः स्वस्य पराभवं मन्यमानः शत्रुनाशकतया तूणीराद्बाणमुद्धर्त्तुमैच्छत् सिंहवधार्थम् ॥ ३० ॥

भावार्थः—सिंह के दर्शन के बाद मृगेन्द्र की तरह चलने वाले रक्षा करने में निपुण, दुश्मनों को बलपूर्वक उखाड़ने वाले अपमान पाये हुये, राजा दिलीप ने, सिंह के मारने के लिये तरकश से बाण निकालने के लिये इच्छा की-॥ ३० ॥

*शरमुद्दिधीर्षोर्दिलीपस्य दक्षिणहस्तस्तम्भमाह*—

वामेतरस्तस्य करः प्रहर्त्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥ ३१ ॥

सञ्जीविनी—वामेतर इति । प्रहर्त्तुस्तस्य वामेतरो दक्षिणः करः । नखप्रभाभिर्भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्य तस्मिन् । 'कङ्कः पक्षिविशेषे स्याद् गुप्ताकारे युधिष्ठिरे' इति विश्वः । 'कङ्कस्तु कर्कटः' इति यादवः । सायकस्य पुङ्ख एव कर्तर्याख्ये मूलप्रदेशे । 'कर्तरी पुङ्खे' इति यादवः । सक्ताङ्गुलिः सन् । चित्रार्पितारम्भश्चित्रलिखितश-

रोद्धरणोद्योग इव। अवतस्थे ॥ ३१ ॥

अन्वयः—प्रहर्त्तुः, तस्य, वामेतरः, करः, नखप्रभाभूपितकङ्कपत्रे, सायकपुङ्खे, एव, सक्ताङ्गुलिः, "सन्" चित्रार्पितारम्भः, इव, अवतस्थे ॥ ३१ ॥

व्याख्या—प्रहर्त्तुः = ताडयितुः, तस्य = पूर्वोक्तस्य, दिलीपस्येति यावद्। वामेतरः = सव्यान्यः, दक्षिण इति भावः। करः = हस्तः, नखप्रभाभूपितकङ्कपत्रे = नखरत्विणमण्डितलोहपृष्ठपक्षे, नखप्रभाभूपितैर्बाणोपयोगिपत्रशालिनः पक्षिविशेषस्य पत्रैर्युक्त इति भावः। सायकपुङ्खे = शरमूले, बाणस्य कर्त्तर्याख्ये मूलदेश इति भावः। एव = अवधारणे, सक्ताङ्गुलिः = प्रसितकरशाखः, "सन्" इति शेषः। चित्रार्पितारम्भः = आलेख्यलिखितशरनिष्कासनोद्योगः, इव = यथा, अवतस्थे = उवास, स्थितोऽभूदिति भावः ॥ ३१ ॥

समासादि—वामादितरो वामेतरः (त० पु०)। करोतीति करः (पुं०)। प्रहरतीति प्रहर्त्ता तस्य प्रहर्त्तुः (पुं०)। न खमेपामिति नखाः (पु०), तेषां प्रभा नखप्रभाः (त० पु०), ताभिर्भूपितानि नखप्रभाभूपितानि (त० पु०), कङ्कत इति कङ्कः (पुं०), कङ्कस्य पत्राणि कङ्कपत्राणि (त० पु०), नखप्रभाभूपितानि कङ्कपत्राणि यस्य स नखप्रभाभूषितकङ्कपत्रस्तस्मिँस्तथोक्ते (ब० व्री०)। सक्ता अङ्गुलयो यस्य स सक्ताङ्गुलिः (ब० व्री०)। स्यतीति सायकः (पुं०), पुमांसं खनति, पुंसा खन्यते वेति पुङ्खः (पुं०), सायकस्य पुङ्खः सायकपुङ्खः (त० पु०) तस्मिँस्तथोक्ते। चित्रेऽर्पितश्चित्रार्पितः (त० पु०), चित्रार्पित आरम्भो यस्य स चित्रार्पितारम्भः (ब० व्री०) ॥ ३१ ॥

व्याकरण—करः = डुकृञ् (करणे-डुञित्) + अच् + सु, पचादित्वादच् प्रत्यये गुणे रपरे सौ रूपम्। प्रहर्त्तुः = प्र + हृञ् (हरणे-ञित्) + तृन् + ङस्। नखाः = नञ् + ख + जस्, "नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या" इति सूत्रेण नञ् समासे नलोपाभावो निपात्यते जसि रूपम्। भूपितानि = भूप (भूपायाम्—अकारेत्) + क्तः + जस्। कङ्कः = ककि (गतौ—इदित्) + अच् + सु, इदित्वाद्धातोर्नुमागमे पचादित्वादच् प्रत्यये सौ रूपम्। सायकः = षो (अन्तकर्मणि) + ण्वुल् + सु, धातोरात्वे षस्य सत्वे "ण्वुल्तृचौ" इति ण्वुल् प्रत्यये तस्याकारादेशे "आतो युक् चिण्कृतोः" इति युगागमे सौ रूपम्। पुङ्खः = पुंस् + खनु (अवदारणे—उदित्) + डः, "अन्येष्वपि दृश्यते" इत्यात्रापेः सर्वोपाधिव्यभिचारार्थकतया डप्रत्यये टिलोपे "संयोगान्तस्य लोपः" इति सकारलोपे सौ रूपम्। अवतस्थे = अव + ष्ठा (गतिनिवृत्तौ) + लिट्, "समवप्रविभ्यः स्थः" इत्यात्मनेपदसंज्ञके लिटः स्थाने तप्रत्यये तस्य चैशादेशे धातोर्द्वित्वेऽभ्यासहलो लोपे चर्त्वे "आतो लोप इटि च" इत्याकारलोपे रूपम् ॥ ३१ ॥

वाच्यान्तरम्—प्रहर्त्तुस्तस्य वामेतरेण करेण नखप्रभाभूपितकङ्कपत्रे सायकपुङ्ख एव सक्ताङ्गुलिना "सता" चित्रार्पितारम्भेणेवावतस्थे ॥ ३१ ॥

कोशः—"वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे। पयोधरे हरे कामे विद्याद् वामामपि स्त्रियाम्। वामी शृगाली वडवा रासभी करभीषु च" इति विश्वः। "इतरस्त्वन्यनीचयोः" इति। "वलिहस्तांशवः कराः" इति चामरः। "करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः" इति मेदिन्यपि। "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इति। "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इति। "मण्डितः। प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः" इति। लोहपृष्ठस्तु कङ्कः स्यात्" इति चामरः। "कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः" इति मेदिन्यपि। "पत्रं वाहनपक्षयोः" इति। "पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः" इत्यमरो विश्वश्च। "तत्परे प्रसितासक्तौ" इति। "अङ्गुल्यः करशाखाः स्युः" इति। "शरे खड्गे च सायकः" इति चामरः। "पुङ्खः स्यान्मङ्गलाचारे शरा-

द्वयेनयोरपि" इति । "एवौपम्ये परिभव ईषदर्थेऽवधारणे" इति । "चित्रं खे तिलकेऽद्भुते । आलेख्ये कर्बुरे चित्रा त्वाखुपर्णीसुभद्रयोः । गोडुम्बयप्सरसोर्दन्त्यां नक्षत्रोरगभेदयोः" इति । "आरम्भस्तु वधदर्पयोः । त्वरायामुद्यमे वाऽपि" इति चानेकार्थसङ्ग्रहः ॥३१॥

तात्पर्यार्थः—प्रजिहीर्षया निषङ्गाद्बाणमुद्धर्तुकामस्य तस्य दिलीपस्य बाणमूलसक्ताङ्गुलिः सन् दक्षिणहस्तश्चित्रलिखितशरोद्धरणोद्यम इव तस्थौ ॥ ३१ ॥

भाषाऽर्थः—प्रहार करने वाले उन राजा दिलीप का दहिना हाथ,अपने नख की कान्ति से भूषित कङ्क नामक पक्षी के पङ्ख जिसमें लगे हुये हैं, ऐसे बाणके मूल प्रदेश में ही लगी हुई हैं अंगुलियां जिसकी, ऐसा होता हुआ, चित्र में लिखे हुये बाण निकालने के उद्योग में लगे हुए की भांति हो गया ॥ ३१ ॥

*राजा दिलीपो निजबाहुस्तम्भेन प्रवृद्धरोषोऽप्यकिञ्चित्करतयाऽन्तर्भ्रंशमनुतप्तो बभूवेत्याह*—

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥ ३२ ॥

सञ्जीविनी—बाहुप्रतिष्टम्भेति । बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । 'प्रतिबन्धः प्रतिष्टम्भः' इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषो राजा । मन्त्रौषधिभ्यां रुद्धवीर्यः प्रतिबद्धशक्तिर्भोगी सर्प इव 'भोगी राजभुजङ्गयोः' इति शाश्वतः । अभ्यर्णमन्तिकम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः । आगस्कृतमपराधकारिणमस्पृशद्भिः स्वतेजोभिरन्तरदह्यत । 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि' इति यादवः ॥ ३२ ॥

अन्वयः—बाहुप्रतिष्टम्भविवृद्धमन्युः, राजा, मन्त्रौषधिरुद्धवीर्यः, भोगी, इव, अभ्यर्णम्, आगस्कृतम्, अस्पृशद्भिः, स्वतेजोभिः, अन्तर्, अदह्यत ॥ ३२ ॥

व्याख्या = बाहुप्रतिष्टम्भविवृद्धमन्युः = भुजप्रतिबन्धप्रवृद्धक्रुद्, राजा = नृपः, दिलीप इति यावद् । मन्त्रौषधिरुद्धवीर्यः = सर्पविषशामकमन्त्रभैषज्यसंवीतपराक्रमः, भोगी = भुजङ्गः, इव = यथा, अभ्यर्णम् = उपकण्ठम्, आगस्कृतम् = अपराधकारिणम्, अस्पृशद्भिः = अनामृशद्भिः, स्पर्शनमकुर्वद्भिरिति यावत् । स्वतेजोभिः = आत्मप्रभावैः, प्राणात्ययेऽपि परप्रयुक्ताधिक्षेपावमानाद्यसहनरूपैरिति भावः । अन्तर् = मध्ये, अदह्यत = अतप्यत ॥ ३२ ॥

समासादि—बाधेत इति बाहू (पुं०), बाह्वोः प्रतिष्टम्भो बाहुप्रतिष्टम्भः (त० पु०), बाहुप्रतिष्टम्भेन विवृद्धो बाहुप्रतिष्टम्भविवृद्धः (त० पु०), बाहुप्रतिष्टम्भविवृद्धो मन्युर्यस्यासौ बाहुप्रतिष्टम्भविवृद्धमन्युः (ब० व्री०) । आगः करोतीत्यागस्कृत् तमागस्कृतम् (पुं०) । न स्पृशन्तीत्यस्पृशन्ति (न० लिं०) तैरस्पृशद्भिः । राजते शोभते छत्रचामरादिभिरिति राजा (पुं०) । तेजयन्तीति तेज्यन्त एभिरिति वा तेजांसि (न० लिं०), स्वस्य तेजांसि स्वतेजांसि (त० पु०) तैः स्वतेजोभिः । भोजनं भोगः (पुं०), सोऽस्यास्तीति भोगी (पुं०) । मन्त्र्यते मन्त्रणमिति वा मन्त्रः (पुं०), ओषः प्लोषो दीप्तिर्वा धीयतेऽत्रौषधिः (स्त्री०), मन्त्रश्चौषधिश्चेति मन्त्रौषधी (द्वं०), ताभ्यां रुद्धम् मन्त्रौषधिरुद्धम् (त० पु०), वीर्यतेऽनेनेति वीर्यं, वीरे साधु वीर्यं वा (न० लिं०), मन्त्रौषधिरुद्धं वीर्यं यस्यासौ मन्त्रौषधिरुद्धवीर्यः (ब० व्री०) ॥ ३२ ॥

व्याकरणम्—बाहू = बाधृ (विलोडने—ऋदित्) + उः + औ, "अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च" इत्युप्रत्ययो धातोर्धस्य हादेशश्च, औरूपम् । विवृद्धः = वि + वृधु (वृद्धौ—उदित्) + क्तः + सु, "गत्यर्थाकर्मके"त्यादिना कर्त्तरि क्तप्रत्यये "यस्य विभाषा" इतीडभावे क्त्वाल्लघूपधगुणाभावे रूपम् । मन्युः = मन (ज्ञाने—अकारेत्) + युः + सु, "मनिजनिदसिभ्यो युः" इत्यौणादिको युप्रत्ययः सौ रूपम् । तेजांसि = तिज (नि-

ज्ञाने—अकारेत्)+असुन्+जस्, "सर्वधातुभ्योऽसुन्" इत्यसुन् प्रत्यये लघूपधगुणे रूपम्। अदह्यत=दह (भस्मीकरणे-अकारेत्)+यक्+लङ्+त। भोगः=भुज (पालनाभ्यवहारयोः—अकारेत्) अथवा—भुजो (कौटिल्ये-ओदित्)+घञ्+सु, उभयत्र भावे घञ् प्रत्यये "चजोः कु घिण्यतोः" इति जस्य कुत्वेन गकारे रूपम्। भोगी=भोग+इनिः+सु। ओपधिः=ओष+डुधाञ् (धारणपोषणयोः—डुञित्)+किः+सुः, "कर्मण्यधिकरणे च" इति कि प्रत्यये कित्वादाकारलोपे सौ रूपम्। रुद्धः=रुधिर् (आवरणे—इरित्)+क्तः+सु, वीर्यं=वीर (विक्रान्तौ—अदन्तोऽयम्)+यत्+सु, "अचो यत्" इति यत्प्रत्यये "अतो लोपः" इत्यकारलोपे रूपम्, अथवा—वीर+यत्+सु, "तत्र साधुः" इति यत् प्रत्यये "यस्येति च" इत्यकारलोपे रूपम् ॥ ३२ ॥

वाच्यान्तरम्—बाहुप्रतिष्टम्भविवृद्धमन्युं राजानम् मन्त्रौषधिरुद्धवीर्यं भोगिनमिवाभ्यर्णमागस्कृतमस्पृशन्ति स्वतेजांस्यन्तरदहन् ॥ ३२ ॥

कोशः—"भुजबाहू प्रवेष्टो दोः" इति। "प्रतिबन्धः प्रतिष्टम्भः" इति चामरः। "वृद्धो-जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीवन्तु शैलजे" इति मेदिनी। "मन्युर्दैन्ये क्रतौ क्रुधि" इति। "उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इति। आगोऽपराधो मन्तुश्च" इति चामरः। "स्पृशत्यामृशति स्पर्शे क्षुपत्यालभते च षट्। स्पशति स्पशते" इत्याख्यातचन्द्रिका। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इति। "तेजः प्रभावे दीप्तौ च बलं शुक्रेऽपि" इति चामरः। "अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्। प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्" इति भरतोऽपि। "दहति श्रेषति श्लेषत्यपि प्रोषति चूर्यते। तापयत्योषति तपत्यपि प्लुष्यति कुण्डते। दाहे कूटयति प्लोषत्यमी" इत्याख्यात चन्द्रिका। "चान्तर्, निकटे चान्तरा पुनः। विनाऽर्थे मध्ये" इति। "अन्तः स्वीकारमध्ययोः" इत्यनेकार्थसङ्ग्रहो मेदिनीकोशश्च। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इति। "सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः। आशीविषो विषधरश्चक्री व्यालः सरीसृपः। कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी। दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः। उरगः पन्नगो भोगी जिह्मगः पवनाशनः" इति चामरः। "भोगी भुजङ्गमे। वैयावृत्त्यकरे राज्ञि ग्रामण्यां नापितेऽपि च" इत्यनेकार्थसङ्ग्रहश्च। "ओषधिः फलपाकान्ता" इत्यमरः। "वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम्" इति। "वीर्यं बले प्रभावे च" इति चामरः। वीर्यं प्रभावे शुक्रे च तेजः सामर्थ्ययोरपि" इति मेदिनी च ॥ ३२ ॥

तात्पर्यार्थः—बाहुस्तम्भेन प्रवृद्धरोषो राजा दिलीपः समीपस्थमप्यपराधकारिणं सिंहं हन्तुमसमर्थो गारुडमन्त्रेण सर्पविषनाशिन्यौषध्या च संरुद्धपराक्रमः सर्प इव स्वतेजोभिरतप्यत शत्रोरकिञ्चित्करतया ॥ ३२ ॥

भाषाऽर्थः—हाथ के रुक जाने से बढे हुये क्रोधवाले, राजा दिलीप, मन्त्र और औषधिसे बांध दिया गया है पराक्रम जिसका ऐसे सांप की भांति समीप में (स्थित) अपराधी को नहीं स्पर्श करते हुये अपने तेज से भीतर जलने लगे ॥ ३२ ॥

*सिंहो मनुष्यवाचा दिलीपं विस्माययन्नुवाचेत्याह*—

**तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्।**
**विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥**

सञ्जीविनी—तमिति। निगृहीता पीडिता धेनुर्येन स सिंहः। आर्याणां सतां गृह्यं पक्ष्यम् "पदास्वैरिबाह्यापक्ष्येषु च" इति क्यप्। मनुवंशस्य केतुं चिह्नं केतुवद्व्यावर्तकम्। सिंहवदोरुसत्त्वो महाबलस्तम्। आत्मनो वृत्तौ बाहुस्तम्भरूपे व्यापारेऽभूतपूर्वत्वाद्विस्मितम्। कर्तरि क्तः। तं दिलीपं मनुष्यवाचा करणेन पुनर्विस्माययन्विस्मयमाश्चर्यं प्रापयन्निजगाद।

'स्मिङ् ईषद्धसने' इति धातोर्णिचि वृद्धावायादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम् । विस्मापयन् इति पाठे पुगागममात्रं वक्तव्यम् । "तच्च नित्यं स्मयतेः" इति हेतुभयविवक्षायामेवेति "भीस्म्योर्हेतुभये" इत्यात्मनेपदे विस्मापयमान इति स्यात् । तस्मान्मनुष्यवाचा विस्माययन्निति रूपं सिद्धम् । करणविवक्षायां न कश्चिद्दोषः ॥ ३३ ॥

अन्वयः—निगृहीतधेनुः, सिंहः, आर्यगृह्यं, मनुवंशकेतुं, सिंहोरुसत्त्वम्, आत्मवृत्तौ, विस्मितं, तं, मनुष्यवाचा, विस्माययन्, निजगाद ॥ ३३ ॥

व्याख्या—निगृहीतधेनुः = निरुद्धगुः, पीडितनन्दिनीक इति यावत् । सिंहः = केसरी, आर्यगृह्यं = सज्जनपक्ष्यं, सज्जनपक्षपातशीलमिति भावः । मनुवंशकेतुं = वैवस्वतमनुकुललक्ष्म, यथा केतुनाऽन्येभ्यो व्यावृत्तिर्भवति तद्वदन्यवंशेभ्यो व्यावर्त्तकमिति भावः । सिंहोरुसत्त्वं = केसरिविपुलबलम् , आत्मवृत्तौ = स्वविवरणे, निजबाहुस्तम्भरूपव्यापार इति भावः । विस्मितम् = आश्चर्यितं, तं = पूर्वोक्तं, दिलीपमिति यावद् । मनुष्यवाचा = नरवचसा, करणे तृतीया बोध्या । पुनरिति शेषः । विस्माययन् = चित्रीयमाणः, विस्मयं सम्पादयन्निति भावः । निजगाद = अवोचत् ॥ ३३ ॥

समासादि—अर्यन्त इत्यार्याः (पुं०), गृह्यत इति गृह्यः (पुं०), आर्याणां गृह्य आर्यगृह्यस्तं तथोक्तम् (त० पु०) । निगृहीता धेनुर्येन स निगृहीतधेनुः (ब० व्री०) । मनोर्जाता मनुष्याः (प्र०), वक्तीति वाग्, (स्त्री०), मनुष्याणां वाग् मनुष्यवाक् तया मनुष्यवाचा (त० पु०) । मनोर्वंशो मनुवंशः ( त० पु० ), तस्य केतुर्मनुवंशकेतुस्तं मनुवंशकेतुम् ( त० पु० ) । विस्मायतीति विस्माययन् ( पुं० ) । आत्मनो वृत्तिरात्मवृत्तिः ( त० पु० ) तस्यां तथोक्तायां । हिनस्तीति सिंहः ( पुं० ), सिंहस्येव उरु सत्त्वं यस्य स सिंहोरुसत्त्वस्तं तथोक्तम् ॥ ३३ ॥

व्याकरणम्—आर्याः = ऋ ( गतौ ) + ण्यत् + जस् , "ऋहलोर्ण्यत्" इति ण्यत् प्रत्यये णित्वाद् वृद्धौ रपरे जसि रूपम् । गृह्यः = ग्रह् (उपादाने—अकारेत् ) + क्यप् + सु, "पदास्वैरिबाह्यापक्ष्येषु च" इति क्यप् प्रत्यये कित्वाद् "ग्रहिज्यावयी"त्यादिना संप्रसारणे पूर्वरूपे सौ रूपम् । निगृहीता = नि + ग्रह ( उपादाने-अकारेत ) + क्तः + टाप् + सु । विस्माययन् = वि + (स्मिङ् (ईषद्धसने-ङित् ) + णिच् ) स्मायि = शप् + शतृ + सु, धातोर्णिचि वृद्धावायादेशे पुनर्धातुत्वे लटः शत्रादेशे पुनर्गुणायादेशे शपि पररूपे नुमागमे सौ रूपम् । विस्मितं = वि + स्मिङ् (ईषद्धसने–ङित् ) + क्तः + अम् । निजगाद = नि + गद ( व्यक्तायां वाचि-अकारेत् ) + लिट्, लिटस्तिपो णलादेशे धातोर्द्वित्वेऽभ्यासहलो लोपे चुत्वे णित्वादुपधावृद्धौ रूपम् ॥ ३३ ॥

वाच्यान्तरं—निगृहीतधेनुना सिंहेनार्यगृह्यो मनुवंशकेतुः सिंहोरुसत्त्व आत्मवृत्तौ विस्मितः स मनुष्यवाचा विस्माययता निजगदे ॥ ३३ ॥

कोशः—"महाकुलकुलीनार्यसभ्यसज्जनसाधवः" इत्यमरः । "गृह्यं गुदे ग्रन्थभेदे क्लीबं शाखापुरे स्त्रियाम् । गृहासक्तमृगादौ ना, त्रिषु चास्वैरिपक्ष्ययोः" इति मेदिनी । "निरुणद्धि निगृह्णाति चात्मने द्वौ निरोधने" इत्याख्यातचन्द्रिका । "धेनुर्गोमात्रके दोग्ध्र्यां, गवि" इत्यनेकार्थसङ्ग्रहः । "मनुष्या मानुषा मर्त्या मनुजा मानवा नराः" इत्यमरः । "वाग् भारत्यां वचस्यपि" इत्यनेकार्थसङ्ग्रहः । "केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी । "चित्रीयते लिङ्गयति विस्माययति चाद्भुते" इत्याख्यातचन्द्रिका । "विस्मयोऽद्भुतमाश्चर्यं, चित्रमपि" इति । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इति चामरः । "वृत्तिर्विवरणे जीव्ये कैशिक्यादिषु चेष्यते" इति विश्वः । 'वष्टेरु

विपुलम्" इत्यमरः। "सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वव्यवसायासु-वित्तेष्वस्त्री तु जन्तुषु" इति मेदिनी ॥ ३३ ॥

तात्पर्यार्थः—धेनुं संपीड्य स्थितः सिंहो बाहुस्तम्भरूपे व्यापारे परमाश्चर्यितं मनुकुल-रत्नं तं दिलीपं मनुष्यवाचा पुनरपि ततोऽधिकं विस्मयमापयन्नुवाच ॥ ३३ ॥

भाषाऽर्थः—नन्दिनी को पीडित किया हुआ सिंह सज्जनों के पक्ष में रहने वाले मनुवंश के द्योतक सिंह के समान महान् बलवान् अपने बाहुस्तम्भरूप व्यापार के विषय में चकित हुये उन राजा दिलीप को मनुष्यवाणी से पुनः चकित करता हुआ बोला ॥ ३३ ॥

*सिंहवचनस्वरूपमाह*—

**अलं महीपाल ! तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।**
**न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४ ॥**

सञ्जीविनी—अलमिति। हे महीपाल! तव श्रमेणालम्। साध्याभावाच्छ्रमो न कर्तव्य-इत्यर्थः। अत्र गम्यमानसाधनक्रियाऽपेक्षया श्रमस्य करणत्वात्तृतीया। उक्तं च न्यासोद्योते-(न केवलं श्रूयमाणैव क्रियानिमित्तं करणभावस्य। अपि तर्हि गम्यमानाऽपि) इति। 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। इतोऽस्मिन्मयि। सार्वविभक्तिकस्तसिः। प्रयुक्तमप्यस्त्रं वृथा स्यात्। तथाहि। पादपोन्मूलने शक्तिर्यस्य तत्तथोक्तं मारुतस्य रंहो-वेगः शिलोच्चये पर्वते न मूर्च्छति न प्रसरति ॥ ३४ ॥

अन्वयः—महीपाल !, तव, श्रमेण, अलम्, इतः, प्रयुक्तम्, अपि, अस्त्रं, वृथा, स्यात्, पादपोन्मूलनशक्ति, मारुतस्य, रंहः, शिलोच्चये, न, मूर्च्छति ॥ ३४ ॥

व्याख्या—महीपाल != पृथ्वीपते !, दिलीप ! इति यावत्। तव = भवतः, श्रमेण = प्रयासेन, मय्यस्त्रमोचनरूपपरिश्रमेणेति भावः। अलं = वारणार्थकोऽयम्, तवास्त्रमोचने श्रमेण साध्यं नास्तीत्यर्थः। "कुतः" इतः = अस्मिन्, मयीति भावः। प्रयुक्तम् = प्रक्षिप्तम्, अपि = सम्भावनायाम्, अस्त्रम् = आयुधं, शररूपमिति भावः। वृथा = निरर्थकं, स्यात् = भवेत्, तथाहीति शेषः। पादपोन्मूलनशक्ति = वृक्षोत्पाटनबलं, वृक्षोन्मूलने समर्थमिति यावद्। मारुतस्य = पवनस्य, रंहः = रयः, वेग इति यावत्। शिलोच्चये = शैले, न = नहि, मूर्च्छति = वर्धते, प्रसरतीति भावः ॥ ३४ ॥

समासादि—महत इति मही(स्त्री०), तां पालयतीति महीपालस्तत्संबुद्धौ हे महीपाल!। अस्यत इत्यस्त्रम् (न० लिं०)। अस्मिन्नितीतः (अ०)। व्रियत इति वृथा (अ०)। पादैः पिबन्तीति पादपाः (पुं०), शक्यतेऽनयेति शक्तिः (स्त्री०) पादपानामुन्मूलनं पादपो-न्मूलनं (त० पु०), तत्र शक्तिर्यस्य तत् पादपोन्मूलनशक्ति (व्य० प० ब० व्री०)। रंह-त्यनेनेति रंहः (न० लिं०)। शिलाभिरुच्चीयत इति शिलोच्चयः।(पुं०) तस्मिंस्तथोक्ते। मरुत् एव मारुतः (पुं०) तस्य मारुतस्य ॥ ३४ ॥

व्याकरणम्—प्रयुक्तम् = प्र + युजिर् (योगे—इरित्) + क्तः + सु। अस्त्रम् = असु (क्षेप-णे—उदित्) + ष्ट्रन् + सु, "सर्वधातुभ्यः ष्ट्रन्" इति ष्ट्रन् प्रत्यये "षः प्रत्ययस्य" इति षलो-पे रूपम्। वृथा = वृङ् (सम्भक्तौ—ङित्) + थाक्, बाहुलकात् थाक् प्रत्ययेऽव्ययत्वात् सुपो-लुकि रूपम्। स्यात् = अस (भुवि—अकारेत्) + यासुट् + वि० लिङ्, धातोर्लिङस्तिपि यासुडागमे "श्नसोरल्लोपः" इत्यकारलोपे "लिङः सलोपोऽनन्त्यस्य" इति सकारलोपे रूपम्। शक्तिः = शक्लृ (शक्तौ—लृदित्) + क्तिन् + सुः, "स्त्रियां क्तिन्" इति क्तिन् प्रत्यये सौ रूपम्। रंहः = रहि (गतौ—इदित्) + असुन् + सु, "सर्वधातुभ्योऽसुन्" इत्यौणादिको-ऽसुन् प्रत्यय इदित्वान्नुमागमे सौ रूपम्। शिलोच्चये = शिला + भिस् + उद् + चिञ् (चयने-ञित्) + अच् + ङि, "एरच्" इत्यच् प्रत्यये धातोर्गुणायादेशे ङौ रूपम्। मूर्च्छति = मुर्छा

( मोहसमुच्छ्राययोः—आकारेत् )+शप्+लट्, लटस्तिपि शपि "उपधायाश्च" इति दीर्घे रूपम् ॥ ३४ ॥

वाच्यान्तरं—हे महीपाल! तव श्रमेणालम्, इतः प्रयुक्तेऽप्यस्त्रेण वृथा भूयेत, पादपोन्मूलनशक्तिना मारुतस्य रंहसा शिलोच्चये न मूर्च्छ्यते ॥ ३४ ॥

कोशः—"गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही" इति। "आयुधन्तु प्रहरणं शस्त्रमस्त्रम्" इति। "वृथा निरर्थकाविध्योः" इति चामरः। "वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्जिते" इति मेदिनी च। "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः। "उन्मूलयत्युज्जहाति चोत्पाटयति वै समाः। उत्खनत्यात्मनेऽप्येते पञ्चोज्जटयतीति च" इत्याख्यातचन्द्रिका। "कासूसामर्थ्ययोः शक्तिः" इति। "शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्" इति, चामरमेदिनीकोशौ। "रंहस्तरसी तु रयः स्यदः" इति। "महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः। अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इति चामरः। "मूर्च्छेत्येष समुच्छ्राये, मोहे स्यात्" इत्याख्यातचन्द्रिका। "समीरमारुतमरुज्जगत्प्राणसमीरणाः। नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः ॥ ३४ ॥

तात्पर्यार्थ.—हे पृथ्वीपते! दिलीप! मयि रुद्रानुचरे बाणमोचनं प्रयासेन ते साध्यं नास्ति, किञ्च प्रयुक्तोऽपि शरस्तथैव वृथा भविष्यति, यथा पर्वते वायुवेगो विफलो भवति ॥ ३४ ॥

भाषाऽर्थ.—हे पृथ्वी के पालन करने वाले महाराज दिलीप! आपका श्रम करना वृथा है, अतः रहने दीजिये, क्योंकि—मेरे ऊपर चलाया हुआ भी अस्त्र वैसा ही व्यर्थ होगा, जैसा कि—पेड़ों को उखाड़ने वाली शक्ति रखने वाले वायु का वेग पर्वत के विषय में व्यर्थ होता है ॥ ३४ ॥

*सिंहः स्वकीयपरिचयप्रस्तावे नामादिकमाह—*

**कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम्।**
**अवेहि मां किंकरमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५ ॥**

सञ्जीविनी—कैलासेति। कैलास इव गौरः शुभ्रस्तम्। 'चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः' इति शाश्वतः। वृषं वृषभमारुरुक्षोरारोढुमिच्छोः। स्वस्योपरि पदं निक्षिप्य वृषमारोहतीत्यर्थः। अष्टौ मूर्त्तयो यस्य स तस्याष्टमूर्त्तेः शिवस्य पादार्पणं पादन्यासस्तदेवानुग्रहः प्रसादस्तेन पूतं पृष्ठं यस्य तं तथोक्तं निकुम्भमित्रं कुम्भोदरं नाम किंकरं मामवेहि विद्धि। 'पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचन्द्रमसौ सोमयाजी चेत्यष्ट मूर्त्तय' ॥ इति यादवः ॥ ३५ ॥

अन्वयः—कैलासगौरं, वृषम्, आरुरुक्षोः, अष्टमूर्त्तेः, पादार्पणानुग्रहपूतपृष्ठं, निकुम्भमित्रं, कुम्भोदरं, नाम, किङ्करम्, माम्, अवेहि ॥ ३५ ॥

व्याख्या—कैलासगौरं=रजताद्रिश्वेतं, कैलासपर्वततुल्यशुक्लवर्णमिति यावद्। वृषम्=ऋषभं, नन्दीत्याख्यमिति यावद्। आरुरुक्षोः=अधिशिशयिषोः, आरोहणं कर्तुमिच्छोरिति भावः। अष्टमूर्त्तेः=उमापतेः, पादार्पणानुग्रहपूतपृष्ठम्=अङ्घ्रिदानाभ्युपपत्तिपवित्रतनुचरमं, वृषारोहणसमये चरणस्थापनरूपानुग्रहेण पवित्रीकृतपृष्ठभागमिति भावः। निकुम्भमित्रं=निकुम्भसुहृदं, कुम्भकर्णजनिकुम्भसखमिति यावत्। कुम्भोदर=कुम्भोदरेत्याख्यं, नाम=प्रसिद्धौ, 'कुम्भोदर' इति नाम्ना प्रसिद्धमिति भावः। किङ्करं=भुजिष्यं, सेवकमिति यावद्। मां=सिंहं, त्वत्सम्मुखस्थमिति यावद्। अवेहि=विद्धि ॥ ३५ ॥

समासादि—कैलास इव गौर इति कैलासगौरस्तं कैलासगौरम् ( उ० स० )। वर्षतीति वृषस्तं वृषम् ( पुं० )। आरोढुमिच्छतीत्यारुरुक्षति, आरुरुक्षतीत्यारुरुक्षुस्तस्यारुरुक्षोः ( पुं० )। पादयोरर्पणं पादार्पणं ( त० पु० ), तदेवानुग्रहः पादार्पणानुग्रहः ( क०

धा० ), तेन पूतं पादार्पणानुग्रहपूतं ( त० पु० ), पादार्पणानुग्रहपूतं पृष्ठं यस्य स पादार्पणानुग्रहपूतपृष्ठस्तं पूर्वोक्तम् ( ब० व्री० )। कुम्भ इवोदरं यस्य स कुम्भोदरस्तं कुम्भोदरम् ( उ० स० )। निकुम्भस्य मित्रं निकुम्भमित्रं तत्तथोक्तम् ( त० पु० )। किञ्चित् कुत्सितं वा करोतीति किङ्करस्तं किङ्करम् ( पुं० )। अष्टौ मूर्तयो यस्यासावष्टमूर्त्तिस्तस्याष्टमूर्त्तेः ( ब० व्री० )॥ ३९ ॥

व्याकरणं—वृषं = वृषु ( सेचने-उदित् ) + कः + अम्, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये कित्वाल्लघूपधगुणाभावेऽमि रूपम् । आरुरुक्षोः = आङ् + ( रुह ( बीजजन्मनि प्रादुर्भावे च-अकारेत् ) + सन् ) रुरुक्ष + उः + ङस्, धातोः सन्प्रत्यये द्वित्वेऽभ्यासकार्यं हस्य ढत्वे "षढोः कः सि" इति ढस्य ककारे सस्य षत्वे "सनाशंसभिक्ष उः" इत्युप्रत्यये "अतो-लोपः" इत्यकारलोपे ङसो रूपम्। पृष्ठम् = पृषु ( सेचने-उदित ) + थक् + सु, "तिथपृष्ठ-गूथयूथप्रोथाः" इति थक्प्रत्ययो निपात्यत औणादिकस्ततः ष्टुत्वे सोरमादेशे रूपम्। अवेहि = अव + आङ् + इण् ( गतौ-णित ) + लोट् + सिप् , "सेर्ह्यपिच्च" इति सिपो ह्यादेशे आकारेकारयोर्गुणादेशे "अन्तादिवच्च" इति परस्यादिवद्भावे कृते ततः "ओमाङोश्च" इति पररूपे रूपम्। किङ्करं = किम् + डुकृञ् ( करणे-डुञित् ) + अच् + अम् , "दिवाविभानिशाप्रभाभास्करानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्त-द्धनुररुष्पु" इत्यत्र "किंयत्तद्बहुषु कृञोऽज्विधानम्" इति वार्त्तिकेनाच्प्रत्यये गुणे रपरेऽमि रूपम् ॥ ३९ ॥

वाच्यान्तरं—कैलासगौरं वृषमारुरुक्षोरष्टमूर्त्तेः पादार्पणानुग्रहपूतपृष्ठो निकुम्भमित्रं कुम्भोदरो नाम किङ्करोऽहमवेये "त्वया" ॥ ३९ ॥

कोशः—"शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः । अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इति। "उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः। अनड्वान् सौरभेयो गौः" इति चामरः। "अध्यास्ते त्वधिशेते चाधिवसत्यधितिष्ठति। अधिक्रामत्यारोहत्यधिरोहणे" इत्याख्यातचन्द्रिका। "पादः, पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः। "ददाति निर्वपति च दधात्यपि च दाशति । सनोति दासति दिशत्यात्मने सम्र यच्छति। अपवर्जयति स्पर्शयति विश्राणयत्यपि। वितरत्यर्पयति च, चणत्यतिसृजत्यपि। ददते राति शणति, प्रतिपादयतीति च। दाने विलभते श्राजयति श्रणति लाति च" 'इत्याख्यातचन्द्रिका। "अभ्युपपत्तिरनुग्रहः" इति। "पवित्रः प्रयतः पूतः" इति। "पृष्ठं तु चरमं तनोः" इति चामरः। "वेत्ति जानाति जानीते, वेद बोधति बुध्यते। निबोधते चेतयते मन्यते प्रतिपद्यते। प्रेक्षते पण्डते प्रत्येत्यवगच्छति चेतति। मनुते चोपलभते वेत्ति वेदयतेऽञ्चति। ज्ञाने मानयते संवेत्त्यात्मनेऽयमकर्मकः। गृह्णात्यपि च गृह्णीते, चिकेत्ति च चिकेति च। एतौ छन्दसि केषाञ्चिज्ज्ञानार्थाः षट् च विंशतिः। धातू च नीवदी ज्ञानविषयौ स्तः क्वचिद् यथा। विद्यासु नयते प्राज्ञो, वदते तासु पण्डितः" इत्याख्यातचन्द्रिका। "नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इति। "व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः। अहिर्बुध्न्योऽष्टमूर्त्तिश्च गजारिश्च महानटः" इति। "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इति। "अथ मित्रं सखा सुहृद्" इति चामरः ॥ ३९ ॥

तात्पर्यार्थः—श्वेतवृषभोपरि सर्वदाऽऽरोहणं कर्त्तुमिच्छोः शिवस्य पादस्थापनेन पवित्रपृष्ठभागं निकुम्भमित्रं कुम्भोदरं नाम रुद्रानुचरं मां विद्धि ॥ ३९ ॥

भाषाऽर्थः—हे राजन्! कैलास पर्वत के तुल्य श्वेत बैल पर चढ़ने की इच्छा करने वाले आठ (पृथ्वी—जल—तेज—वायु—आकाश—सूर्य—चन्द्र—सोमयाजी) हैं मूर्त्तियां जिनकी ऐसे शिवजी के चरण रखने रूप अनुग्रह से पवित्र पीठवाला, निकुम्भ (कुम्भकर्ण के पुत्र) का मित्र, "कुम्भोदर" नाम से प्रसिद्ध "शिवजी का" नौकर मुझे तुम जानो ॥ ३९ ॥

*अत्रावस्थानहेतुं देवदारुरक्षणमेव प्रदर्शयन्नादौ तद्रक्षणे हेतुमाह*—

**अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।**
**यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥ ३६॥**

सञ्जीविनी—अमुमिति। पुरोऽग्रतोऽमुं देवदारु पश्यसि इति काकुः। असौ देवदारुः। वृषभो ध्वजो यस्य स तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः। अभूततद्भावे च्विः। यो देवदारुः स्कन्दस्य मातुर्गौर्या हेम्नः कुम्भ एव स्तनस्तस्मान्निःसृतानां पयसामम्बूनां रसज्ञः स्वादज्ञः, स्कन्दपक्षे हेमकुम्भ इव स्तन इति विग्रहः। पयसां क्षीराणाम्। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। स्कन्दसमानप्रेमास्पदमिति भावः॥ ३६॥

अन्वयः—पुरः, अमुं, देवदारुं, पश्यसि, असौ, वृषभध्वजेन, पुत्रीकृतः, यः, स्कन्दस्य, मातुः, हेमकुम्भस्तननिःसृतानां, पयसां, रसज्ञः "अस्ति"॥ ३६॥

व्याख्या—पुरः = अग्रे, अमुम् = एतं, देवदारुं = पारिभद्रकं, तदाख्यं वृक्षमिति भावः। पश्यसि = आलोकयसि, त्वमिति शेषः। असौ = एषः, देवदारुतरुरिति भावः। वृषभध्वजेन = रुद्रेण, पुत्रीकृतः = सुतीकृतः, पुत्रतयाऽङ्गीकृत इति भावः। यः = पूर्वोक्तः, देवदारुतरुरिति यावत्। स्कन्दस्य = षडाननस्य, मातुः = जनन्याः, हेमकुम्भस्तननिःसृतानां = स्वर्णघटकुचनिर्गतानां, पयसाम् = अम्बूनां, देवदारुपक्षे—पयसां = क्षीराणां, रसज्ञः = स्वादविद्, अस्तीति शेषः। स्कन्दतुल्यप्रीतिभाजनमिति भावः॥ ३६॥

समासादि—न पुत्रोऽपुत्रः (न० त० पु०), अपुत्रः पुत्रः कृत इति पुत्रीकृतः (अ० त० च्वि०)। वर्षतीति वृषभः (पुं०), वृषभो ध्वजश्चिह्नमस्येति वृषभध्वजः (ब० व्रो०), तेन वृषभध्वजेन। देवदारुपक्षे—हेम्नः कुम्भो हेमकुम्भः (त० पु०), हेमकुम्भ एव स्तनो हेमकुम्भस्तनः (त० क० धा०), तस्मान्निःसृतानि हेमकुम्भस्तननिःसृतानि (त० पु०), तेषां तथोक्तानाम्। स्कन्दतीति स्कन्दः (पुं०) तस्य स्कन्दस्य। मान्यते, माति गर्भोऽस्यां वेति माता (स्त्री०) तस्य मातुः। पीयन्ते पयन्ते वा पयांसि (न० लिं०) तेषां पयसाम्। रस्यत इति रसः (पुं०) तं जानातीति रसज्ञः॥ ३६॥

व्याकरणम्—पश्यसि = दृशिर् (प्रेक्षणे—इरित्) शप् + लट्, लटस्तिपि शपि "पाघ्राध्मास्थाम्ने" त्यादिना पश्यादेशे रूपम्। पुत्रीकृतः = पुत्र + च्वि + डुकृञ् (करणे—डुञित्) + क्तः + सु, अभूततद्भावे च्विप्रत्यये "अस्य च्वौ" इतीत्वे क्तप्रत्यये रूपम्। वृषभः = वृषु (सेचने—उदित्) + अभच् + सु, "ऋषिवृषिभ्यां कित्" इत्यभच्प्रत्यय औणादिकः कृतः स च कित् तेन गुणाभावः सौ रूपम्। स्तनः = ष्टन (शब्दे—अकारेत्) अच् + सु, पचादित्वादच्प्रत्यये रूपम्। निःसृतानि—निस् + सृ (गतौ) + क्तः + जस्। स्कन्दस्य = स्कन्दिर् (गतिशोषणयोः—इरित्) = अच् + ङस्, पचादित्वादच्प्रत्यये रूपम्। मातुः = मान (पूजायाम्—अकारेत्) अथवा—मा (माने) + तृन् + ङस्, उभयत्र "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृपितृदुहितृ" इत्यौणादिके तृन्प्रत्यये रूपम्। पयसां = पीङ् (पाने—ङित्) अथवा—पय (गतौ—अकारेत्) + असुन् + आम्, "सर्वधातुभ्योऽसुन्" इत्यौणादिकोऽसुन्प्रत्यय उभयत्र तत आमि रूपम्। रसः = रस (आस्वादनस्नेहनयोः—अदन्तोऽयम्) + घञ् + सु, "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्प्रत्यये "अतो लोपः" इत्यकारलोपे सौ रूपम्। रसज्ञः = रस + अम् + ज्ञा (अवबोधने) + कः + सु, "आतोऽनुपसर्गे कः" इति कप्रत्यये कित्वादाकारलोपे रूपम्॥ ३६॥

वाच्यान्तरम्—असौ देवदारुः "त्वया" दृश्यते, अमुं वृषभध्वजः पुत्रीकृतवान्, येन स्कन्दस्य मातुर्हेमकुम्भस्तननिःसृतानां पयसां रसज्ञेन भूयते॥ ३६॥

कोशः—"स्यात्पुरः पुरतोऽग्रतः" इत्यमरः। "अथेक्षणे। निर्वर्णयति निध्यायत्यालो-

कयति पश्यति । आलोकते लक्षयते निभालयत ईक्षते । निरूपयत्यपि निशामयते च विचाययति । निवुन्दत्यात्मनेऽपि द्वौ लक्षयत्यपि लोचते । चष्टे छन्दसि सम्पश्यत्यात्मने स्यादकर्मकः” इत्याख्यातचन्द्रिका । “शक्रपादपः पारिभद्रकः । भद्रदारु द्रुकिलिमं पीतदारु च दारु च । पूतिकाष्ठं च सप्त स्युर्देवदारुणि” इति । “आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी । आहुर्दुहितरं सर्वे” इति । “गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः । अहिर्बुध्न्योऽष्टमूर्त्तिश्च गजारिश्च महानटः” इति । “ऋषभो वृषभो वृषः” इति चामरः । “ध्वजः पूर्वदिशो गृहे । शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च” इति हैमः । “स्वर्गं सुवर्ण कनकं हिरण्यं हेम हाटकम्” इत्यमरः । “कुम्भो राश्यन्तरे हस्तिमूर्धांशे राक्षसान्तरे । कार्मुके वारनार्यां च घटे क्लीबन्तु गुग्गुलौ” इति मेदिनी । “स्तनौ कुचौ” इति । “कार्त्तिकेयो महासेनः शरजन्मा षडाननः । पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः” इति । “जनयित्री प्रसूर्माता, जननी” इति । “पयः क्षीरं पयोऽम्बु च” इति चामरः । “रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे । रसा तु शल्लकीपाठाजिह्वाधरणिकङ्गुषु” इति विश्वः ॥ ३६ ॥

तात्पर्यार्थः—हे राजन् ! अमुं पुरःस्थितं देवदारुतरुं यं पश्यसि, असौ शिवेन पुत्रतया स्वीकृतः, पार्वत्याश्च कनकघटस्तननिर्गतपयसा सेचितोऽस्मादेष पार्वतीशिवयोः स्कन्दतुल्यप्रेमभाजनमस्ति ॥ ३६ ॥

भाषाऽर्थः—हे राजन् ! तुम जो अगाड़ी मौजूद इस देवदारु के वृक्ष को देख रहे हो, इसे शङ्करजी ने पुत्रभाव से माना है, और जो कार्त्तिकेय की माँ पार्वतीजी के सोने के घट रूपी स्तनों से निकले हुये जल के स्वाद का जानने वाला है, स्कन्दपक्ष में—सोने के घड़े के समान स्तनों से निकले हुये दूध के स्वाद का जानने वाला ॥ २६ ॥

*पार्वतीकर्तृकं देवदारुविषयकमनुशोचनमाह—*

**कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।**
**अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥**

संजीविनी—कण्डूयेति । कदाचित्कटं कपोलं कण्डूयमानेन घर्षयता । “कण्ड्वादिभ्यो यक्” इति यक् ततः शानच् । वन्यद्विपेनास्य देव(१)दारोस्त्वगुन्मथिता । अथाद्रेस्तनया गौरी असुरास्त्रैरालीढं क्षतम् । सेनां नयतीति सेनानीः स्कन्दः । ‘पार्वतीनन्दनः स्कन्दः सेनानीः’ इत्यमरः । “सत्सूद्विष०” इत्यादिना क्विप् । तमिव, एनं देवदारुं शुशोच ॥ ३७ ॥

अन्वयः—कदाचित्, कटं, कण्डूयमानेन, वन्यद्विपेन, अस्य, त्वग्, उन्मथिता, अथ, अद्रेः, तनया, असुरास्त्रैः, आलीढं, सेनान्यम्, इव, एनं, शुशोच ॥ ३७ ॥

व्याख्या—कदाचित्=जातु, कस्मिंश्चिदनिर्दिष्टसमय इति भावः । कटं=गण्डं, गजकपोलमिति यावत् । कण्डूयमानेन=कण्डूयां विदधता, घर्षणं कुर्वतेति यावद् । वन्यद्विपेन=वनोद्भवगजेन, अस्य=एतस्य, सम्मुखस्थस्याङ्गुल्या निर्दिष्टस्य देवदारुतरोरित्यर्थः । त्वग्=वल्कलम्, उन्मथिता=अर्दिता, उत्पाटितेति भावः । अथ=पश्चाद्, अद्रेः=अचलस्य, हिमालयस्येति भावः ॥ तनया=सुता, पार्वतीति भावः । असुरास्त्रैः=दैत्यायुधैः, आलीढम्=आस्वादितं, क्षतमिति भावः । सेनान्यं=गुहं, पार्वतीनन्दनमिति यावद् । इव=यथा, एनं=पूर्वोक्तं, देवदारुतरुमिति भावः, शुशोच=विषसाद, ॥ ३७ ॥

समासादि—कण्डूयत इति कण्डूयमानस्तेन कण्डूयमानेन ( पुं० )। कटतीति कटः ( पुं० ) तं कटम् । कस्मिंश्चिदिति कदा चित्, पदद्वयमेतद् ( अ० )। वने साधुर्व-

---

( १ ) देवदारुशब्दस्यामरकोशे क्लीबत्वेन निर्देशादत्र पुंस्त्वं चिन्त्यम् ( इति टी० कृ० )

न्यः ( पुं० ), द्वाभ्यां पिबतीति द्विपः ( पुं० ), वन्यश्चासौ द्विपो वन्यद्विपः ( त० पु० क० धा० ) तेन वन्यद्विपेन । तनोति, तन्यते वेति त्वग् (स्त्री०) । अत्ति, अद्यते वेत्यद्रिः ( पुं० ) तस्याद्रेः । तनोति कुलं या सा तनया ( स्त्री० ), सिनोतीति सेना ( स्त्री० ), तां नयतीति सेनानीः (पुं०) तं सेनान्यम् । असन्ति क्षिपन्ति देवानित्यसुराः (पुं०) तेषामस्त्राण्यसुरास्त्राणि (त० पु०) तैरसुरास्त्रैः ॥ ३७ ॥

व्याकरणं—कण्डूयमानेन = कण्डूञ् ( गात्रविघर्षणे-ञित् )+यक्+लट्+शानच्+मुक्+टा, धातोर्लटः शानजादेशे यक्प्रत्यये मुगागमे टा रूपम् । कटं = कटे ( वर्षावरणयोः-एदित् )+अच्+अम्, पचादित्वादच्प्रत्यये रूपम् । कदा = किम्+दा 'सर्वैकान्यकिंयत्तदः काले दा' इति दाप्रत्यये किमः कादेशेऽव्ययत्वात्सुपो लुकि रूपम् । वन्यः = वन+यत्+सु । द्विपः = द्वि+भ्याम्+पा ( पाने )+कः+सु । उन्मथिता+उद्+मन्थ (विलोडने-अकारेत् )+क्तः+टाप्+सु, क्तप्रत्यये कित्वाद् "अनिदितां हल उपधायाः क्ङिति" इत्यनुनासिकनकारलोपे वलादिलक्षण इडागमे टापि सोर्लुकि रूपम् । त्वग् = तनु ( विस्तारे-उदित् )+चिक्+सु, "तनोतेरनश्च वः" इति चकाराच्चिक्प्रत्ययेऽत्रेकार उच्चारणार्थश्चकार इत्संज्ञकस्तथा धातोरनित्यस्य वादेशे सोर्लोपे रूपम् । अद्रेः = अद ( भक्षणे-अकारेत् )+क्रिन्+ङस्, "अदिशदिभूशुभिभ्यः क्रिन्" इत्यौणादिके क्रिन्प्रत्यये रूपम् । तनया = तनु ( विस्तारे—उदित् )+कयन्+टाप्+सु, "वलिमलितनिभ्यः कयन्" इत्यौणादिके कयन्प्रत्यये टापि सोर्हल्ङ्यादिलोपे रूपम् । शुशोच = शुच ( शोके—अकारेत् )+लिट् । सेना = षिञ् ( बन्धने—ञित् )+नः+टाप्+सु, "कॄवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्" इत्यौणादिके नप्रत्यये गुणे टापि सौ रूपम् । सेनान्यं = सेना+अम्+णीञ् ( प्रापणे-ञित् )+क्विप्+अम् "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप्प्रत्यये रूपम् । आलीढम् = आङ्+लिह (आस्वादने-अकारेत् )+क्तः+अम्, "हो ढः" इति ढत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे धस्य ढत्वे ढकारलोपे पूर्वाणो दीर्घेऽमि रूपम् । असुराः = असु ( क्षेपणे-उदित् )+उरन्+जस्, "असेरुरन्" इत्यौणादिक उरन्प्रत्यये जसि रूपम् ॥ ३७ ॥

वाच्यान्तरं—कदाचित् कटं कण्डूयमानो वन्यद्विपोऽस्य त्वचमुन्मथितवानथाद्रेस्तनययाऽसुरास्त्रैरालीढः सेनानीरिवैष शुशुचे ॥ ३७ ॥

कोशः—"गण्डः कटः" इत्यमरः । "वन्यं त्रिपु वनोद्भूते स्त्रीवनाम्बुसमूहयोः" इति मेदिनी । "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः कुञ्जरो वारणः करी । इभः स्तम्बेरमः पद्मी" इति । "त्वक् स्त्री, वल्कलमस्त्रियाम्" इति चामरः । "त्रिषी-दति । शोचतीति च शोके द्वे" इत्याख्यातचन्द्रिका । "पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः" इत्यमरः । "लेढि, त्वास्वादे रसयत्यपि । लागयत्यास्वादयति लीढे राकयतीति षट्" इत्याख्यातचन्द्रिका । "असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः । शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः" इति । "आयुधन्तु प्रहरणं, शस्त्रमस्त्रम्" इति चामरः ॥ ३७ ॥

तात्पर्यार्थः—कस्मिंश्चित्समये केनापि वन्यगजेनास्य देवदारुतरो रक्षकाभावाद्वल्कलमुत्पाटितं तदुपश्रुत्य दैत्यानामस्त्रैः क्षते स्कन्दे स्वतनये यथा विषादमाप पार्वती तथैवातिशयमेनं शुशोच ॥ ३७ ॥

भाषाऽर्थः—किसी समय में गण्डस्थल को रगड़ते हुये किसी जङ्गली हाथी ने इस देवदारु वृक्ष की छाल उचेड़ डाली, इस के बाद पार्वतीजी ने दैत्यों के अस्त्रों से चोट खाये हुये अपने पुत्र स्कन्द के समान इसके सम्बन्ध में भी शोक किया ॥ ३७ ॥

*देवदारुतरो रक्षकत्वेन स्वं निर्दिशन्नाह—*

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥

सञ्जीविनी—तदेति । तदा तत्कालः प्रभृतिरादिर्यस्मिन्कर्मणि तत्तथा तदाप्रभृत्येव वनद्विपानां त्रासार्थं भयार्थं शूलभृता शिवेन, अङ्कं समीपमागताः प्राप्ताः सत्त्वाः प्राणिनो वृत्तिर्यस्मिंस्तत् 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः' इति केशवः । सिंहत्वं विधाय । अस्मिन्नद्रिकुक्षौ गुहायामहं व्यापारितो नियुक्तः ॥ ३८ ॥

अन्वयः—तदाप्रभृति, एव, वनद्विपानां, त्रासाऽर्थं, शूलभृता, अङ्कागतसत्ववृत्ति, सिंहत्वं, विधाय, अस्मिन्, अद्रिकुक्षौ, अहं, व्यापारितः ॥ ३८ ॥

व्याख्या—तदाप्रभृति = तदानींतनकालादारभ्य, एव = अवधारणे, वनद्विपानां = काननगजानां, त्रासार्थं = भयप्रयोजनकं, शूलभृता = शूलाख्यायुधधारिणा, शिवेनेति भावः । अङ्कागतसत्त्ववृत्ति = समीपप्राप्तजन्तुजीवनं, सिंहत्वं = केसरित्वं, विधाय = कृत्वा, अस्मिन् = एतस्मिन्, अद्रिकुक्षौ = अचलोदरे, गुहायामिति भावः । अहं = सिंहः, व्यापारितः = उत्थापितः, नियुक्त इत्यर्थः ॥ ३८ ॥

समासादि—तस्मिन् काल इति तदा (अ०), तदा प्रभृतिरादिर्यस्मिन् कर्मणि तत्तदाप्रभृति (ब० ब्री०) । वनस्य द्विपा वनद्विपाः (त० पु०) तेषां वनद्विपानां (त० पु०) । त्रसनं त्रासः (पुं०) स एवार्थः प्रयोजनं यस्य तत्त्रासार्थं (ब०ब्री०)। कुष्यते निष्काम्यते मलोऽस्मादिति कुक्षिः (पुं०) अद्रेः कुक्षिरित्यद्रिकुक्षिः ( त० पु० ) तस्मिन्नद्रिकुक्षौ । शूलतीति शूलः (पुं०), तं बिभर्तीति शूलभृत् तेन शूलभृता । सिंहस्य भावः सिंहत्वं तत् सिंहत्वं (न० लि०) । अङ्कमागता अङ्कागताः ( त० पु० ), अङ्कागताश्च ते सत्त्वा अङ्कागतसत्त्वाः ( त० पु० क० धा० ), अङ्कागतसत्त्वा वृत्तिर्यस्मिंस्तदङ्कागतसत्त्ववृत्ति ( ब० ब्री० ) तत्तथोक्तम् ॥ ३८ ॥

व्याकरणं—त्रासः = त्रसी ( उद्वेगे-ईदित् ) + घञ् + सु, भावे घञ्प्रत्यय उपधावृद्धौ रूपम् । कुक्षिः = कुष (निष्कर्षे-अकारेत्) + क्सिः + सु, "प्लुषिकुषिशुषिभ्यः क्सिः" इत्यौणादिके क्सिप्रत्यये "षढोः कः सि" इति षस्य कत्वे कित्वाद् गुणाभावे सस्य षत्वे रूपम् । व्यापारितः = वि + आङ् + (पृङ् (व्यायामे-ङित्) + णिच्)पारि + क्तः + सु । शूल (रुजायां सङ्घोषे च-अकारेत्) + कः + सु, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये रूपम् । शूलभृता = शूल + अम् = डुभृञ् (धारणपोषणयोः-डुञित्) + क्विप् + टा, "क्विप् च" इति क्विप्प्रत्यये "ह्रस्वस्य पिति कृति" इति तुगागमे रूपम्। विधाय = वि + डुधाञ् (धारणपोषणयोः-डुञित्) + क्त्वा + ल्यप् । सिंहत्वं = सिंह + त्व + अम् ॥ ३८ ॥

वाच्यान्तरं—तदाप्रभृत्येव वनद्विपानां त्रासार्थं शूलभृदङ्कागतसत्त्ववृत्ति सिंहत्वं विधाय अस्मिन्नद्रिकुक्षौ मां व्यापारितवान् ॥ ३८ ॥

कोशः—"अटव्यरण्यं विपिनं गहनं काननं वनम्" इति । "दरस्त्रासौ, भीतिर्भीः साध्वसं भयम्" इति । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति । "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इति । "पिचण्डकुक्षी जठरोदरं तुन्दम्" इति चामरः । "उत्तिष्ठते तु घटते चेष्टते त्रन्दतीहते । व्यायच्छते व्याप्रियते चेष्टनेऽष्टौ प्रवर्त्तते" इत्याख्यातचन्द्रिका । "शूलमस्त्री रुगायुधम्" इत्यमरः । "दधाति धत्ते बिभृते बिभर्त्ति भरतीति च। धरतीत्यात्मनेऽपि द्वौ भुरण्यति धियत्यपि । मंलते धारयति च मल्लते पोषयत्यपि । दधते त्रासयति च स्कुन्दते धारणार्थकाः" इति । "कृतौ करोत्यावहति विदधात्यादधाति च । वितनोत्यात्मने पञ्च" इति चाख्यातचन्द्रिका । "अङ्को भूषारूपकलक्ष्मसु । चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः"

इत्यनेकार्थसङ्ग्रहः। "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति। "वृत्तिर्वर्त्तनजीवने" इति चामरः ॥ ३८ ॥

तात्पर्यार्थः—तत्कालादारभ्यैव शिवेन वन्यगजानां भयदर्शनार्थमस्यां गिरिगुहायां नियोजितोऽहं तदादेशात्समीपागतानेव जन्तून् भक्षयन् कालं यापयामि ॥ ३८ ॥

भाषाऽर्थः—उसी समय से जङ्गली हाथियों के डराने के लिये, शूल के धारण करने वाले श्रीशिवजी ने, समीप में आये हुए प्राणियों पर जीवन निर्वाह करने वाली सिंहवृत्ति देकर मुझे इस पहाड़ की गुफा में नियुक्त किया है ॥ ३८ ॥

*बहुदिवसाद् बुभुक्षितस्य मे तृप्त्यै धेनुरेषा भविष्यतीत्याह—*

**तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।**
**उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥**

सञ्जीविनी—तस्येति। परमेश्वरेण प्रदिष्टो निर्दिष्टः कालो भोजनवेला यस्याः सोपस्थिता प्राप्तैषा गोरूपा शोणितपारणा रुधिरस्य व्रतान्तभोजनं, सुरद्विषो राहोः, चन्द्रमस इयं चान्द्रमसी सुधेव, क्षुधितस्य बुभुक्षितस्य तस्याङ्गागतसत्त्ववृत्तेर्मे मम सिंहस्य तृप्त्या अलं पर्याप्ता। "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इत्यनेन चतुर्थी ॥ ३९ ॥

अन्वयः—परमेश्वरेण, प्रदिष्टकाला, उपस्थिता, एषा, शोणितपारणा, सुरद्विषः, चान्द्रमसी, सुधा, इव, क्षुधितस्य, मे, तृप्त्यै, अलम् "अस्ति" ॥ ३९ ॥

व्याख्या—परमेश्वरेण = प्रधानशिवेन, महादेवेनेति यावत्। प्रदिष्टकाला = नियुक्तसमया, आज्ञप्तभोजनसमयेति भावः। उपस्थिता = प्राप्ता, एषा = असौ, धेनुरूपेति भावः। शोणितपारणा = रक्तव्रतान्ताशनं, सुरद्विषः = दैत्यस्य, देवद्विषतो राहोरिति यावत्। चान्द्रमसी = ऐन्दवी, चन्द्रसम्बन्धिनीति यावत्। सुधा = अमृतम्, इव = यथा, क्षुधितस्य = अशनायितस्य, बुभुक्षायुक्तस्येति भावः। तस्य = पूर्वोक्तस्य, समीपागतप्राणिमात्रजीविकावत इति भावः। मे = मम, सिंहस्येति भावः। तृप्त्यै = सौहित्याय, बुभुक्षाशान्त्यर्थमिति यावद्। अलम् = पर्याप्ता, अनया धेन्वैव चिराद् बुभुक्षितस्य मे बुभुक्षाशान्तिः, सम्यक्तया भविष्यतीति भावः ॥ ३९ ॥

समासादि—क्षुध्यति स्मेति क्षुधितः (पुं०) तस्य क्षुधितस्य। प्रदिष्टः कालो यस्याः सा प्रदिष्टकाला (ब० व्री०)। परमश्चासावीश्वरः परमेश्वरः (त० पु० क० धा०) तेन परमेश्वरेण। शोणति स्मेति शोणितं (न० लि०), तस्य पारणा शोणितपारणा (त० पु०)। सुरन्तीति सुराः (पुं०) तान् द्वेष्टीति सुरद्विट् (पुं०) तस्य सुरद्विषः। चन्द्रं कर्पूरं सादृश्येन माति तुलयतीति चन्द्रमाः (पुं०), तस्येयं चान्द्रमसी (स्त्री०)। सुखेन धीयत इति सुधा (स्त्री०) ॥ ३९ ॥

व्याकरणं—क्षुधितस्य = क्षुध (बुभुक्षायाम्—अकारेत्) + क्तः + ङस्, अकर्मकत्वाद् "गत्यर्थे" त्यादिना कर्त्तरि क्तप्रत्यये "वसतिक्षुधोः" इतीडागमे रूपम्। तृप्त्यै = तृप (प्रीणने—अकारेत्) + ङे, "नम.स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" इत्यलंयोगाच्चतुर्थी। प्रदिष्टः = प्र + दिश (अतिसर्जने—अकारेत्) + क्तः + सु। उपस्थिता = उप + ष्ठा + क्त + टाप् + सु। शोणितं = शोण (वर्णगत्योः—ऋदित्) + क्तः + सु, "गत्यर्थे" त्यादिना क्तप्रत्यये रूपम्। पारणा = (पॄ (पालनपूरणयोः) + णिच्) पारि + युच् + टाप् + सु, "ण्यासश्रन्थो युच्" इति युचि तस्यानादेशे णत्वे णेर्लोपे रूपम्। सुराः = षुर (प्रसवैश्वर्ययोः—अकारेत्) + कः + जस्, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये रूपम्। सुरद्विषः = सुर + द्विष (अप्रीतौ—अकारेत्) + क्विप् + ङस्, "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप्प्रत्यये रूपम्। चन्द्रमाः = चन्द्र + अम् + मा (माने) + असुन् + सु, "चन्द्रे मो डिच्च" इत्यौणादिकोऽसुन् प्रत्ययः स च डित् ततष्टेर्लोपे रूपम्। चान्द्रमसी = चन्द्रमस्

+अण्+ङीप्+सु। सुधा=सु+धेट् (पाने-टित्)+अङ्+टाप्+सु, धातोरात्त्वे "आत-श्चोपसर्गे" इति कर्मण्यङ्प्रत्यये धातोराकारलोपे टापि सौ रूपम्॥ ३९॥

वाच्यान्तरं—परमेश्वरेण प्रदिष्टकालयोपस्थितयैतया शोणितपारणया सुरद्विषश्चान्द्रमस्या सुधयेव क्षुधितस्य मे तृप्त्या अलं "भूयते"॥ ३९॥

कोशः—"अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इति। "बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः" इति। "सौहित्यं तर्पणं तृप्तिः" इति चामरः। "नियुङ्क्ते आज्ञापयति निर्दिशत्यादिशत्यपि। द्वावात्मनेऽपि चाज्ञायाम्" इत्याख्यातचन्द्रिका। "कालो दिष्टोऽप्यनेहाऽपि, समयोऽपि" इत्यमरः। "परमः परे। अग्रेसरप्रधानयोरोङ्कारे परमं पुनः। स्यादव्ययमनुज्ञायाम्" इति। "ईश्वरः स्वामिनि शिवे मन्मथेऽपीश्वराऽद्रिजा" इति चानेकार्थसङ्ग्रहः। "रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्" इति। "असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः। शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विपः" इति। "हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इति। "पीयूषममृतं सुधा" इति चामरः॥ ३९॥

तात्पर्यार्थः—महादेवेन निर्दिष्टे भोजनसमये स्वयमत्र प्राप्तमेतद् गोरूपं रुधिरसम्बन्धि व्रतान्तभोजनं चिरकालाद् बुभुक्षितस्याङ्कागतप्राणिवृत्त्या जीवनं यापयतो मे सम्यक्तया बुभुक्षानिवृत्तये राहोश्चन्द्रसम्बन्धिपीयूषमिव पर्याप्तं भविष्यति॥ ३९॥

भाषाऽर्थः—शिवजी के बताये हुये भोजन के समय पर उपस्थित यह गोरूप रुधिर का व्रत के समाप्ति समय का भोजन दैत्य राहु के लिये चन्द्रसम्बन्धी अमृत की भांति, भूखे उस समीप में आये हुये प्राणियों को खाकर जीवन निर्वाह करने वाले मुझ सिंह की तृप्ति के लिये काफी होगा॥ ३९॥

*गोरक्षणे बाहुस्तम्भतयाऽसमर्थस्त्वं लज्जां विहाय गुरुसमीपं याहीत्याह—*

**स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः।**
**शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति॥ ४०॥**

सञ्जीविनी—स त्वमिति। स एवमुपायशून्यस्त्वं लज्जां विहाय निवर्तस्व। भवांस्त्वं गुरोर्दर्शिता प्रकाशिता शिष्यस्य कर्तव्या भक्तिर्येन स तथोक्तोऽस्ति। ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह—शस्त्रेणेति। यद्रक्ष्यं धनं शस्त्रेणायुधेन। 'शस्त्रमायुधलोहयोः' इत्यमरः। अशक्या रक्षा यस्य तदशक्यरक्षम्। रक्षितुमशक्यमित्यर्थः। तद्रक्ष्यं नष्टमपि शस्त्रभृतां यशो नक्षिणोति न हिनस्ति। अशक्यार्थेष्वप्रतिविधानं न दोषायेति भावः॥ ४०॥

अन्वयः—सः, त्वं, लज्जां, विहाय, निवर्त्तस्व, भवान्, गुरोः, दर्शितशिष्यभक्तिः, "अस्ति" यद्, रक्ष्यं, शस्त्रेण, अशक्यरक्षं, तद्, शस्त्रभृतां, यशः, न, क्षिणोति॥ ४०॥

व्याख्या—सः=पूर्वोक्तः, बाहुस्तम्भतया किङ्कर्त्तव्यविमूढ इति भावः। त्वं=भवान्, दिलीप इति यावद्। लज्जां=त्रपां, विहाय=त्यक्त्वा, निवर्त्तस्व=निवृत्तो भव, धेनुरक्षणे समुद्योगं विहाय स्वाश्रमं याहीति भावः। भवान्=त्वं, दिलीप इति यावद्। गुरोः=निषेकादिकृतः, वसिष्ठस्येति यावद्। दर्शितशिष्यभक्तिः=प्रकाशीकृतछात्रश्रद्धः, यथा गुरौ छात्रस्य श्रद्धा भवति तथा दर्शितश्रद्ध इति भावः। अस्तीति शेषः। यद्=किञ्चिद्, अनिर्दिष्टं वस्त्विति भावः। रक्ष्यं=पाल्यं, रक्षणार्हं धनादिकमिति भावः। शस्त्रेण=प्रहरणेन, बाणादिनेति यावद्। अशक्यरक्षम्=अपारणीयरक्षणं, त्रातुमशक्यमिति भावः। तद्=पूर्वोक्तं, रक्ष्यं धनादिकं रक्षितुमशक्यतया नष्टमपि सदिति भावः। शस्त्रभृताम्=आयुधधारिणां, यशः=कीर्तिं, न=नहि, क्षिणोति=हिनस्ति, नाशयतीति यावद्॥ ४०॥

समासादि—लज्जनं लज्जा (स्त्री०) तां लज्जाम्। शासितुं योग्यः शिष्यः (पुं०) तस्य भक्तिः शिष्यभक्तिः (त० पु०), दर्शिता शिष्यभक्तिर्येन स तथोक्तः (ब० व्री०)। रक्षितुं

योग्यं रक्ष्यम् (न० लिं०)। शक्तुं योग्या शक्या (स्त्री०), न शक्येत्यशक्या (न० त० पु०), अशक्या रक्षा यस्य तदशक्यरक्षम् (ब० व्री०)। शस्त्रं बिभ्रतीति शस्त्रभृतः (पुं०) तेषां शस्त्रभृताम् ॥ ४० ॥

व्याकरणं—निवर्त्तस्व=नि+वृतु (वर्त्तने—उदित्)+लोट्, धातोरनुदात्तेत्त्वादात्मनेपदे थासादेशे शपि गुणे रपरे थासः स आदेशे "सवाभ्यां वामौ" इत्येकारस्य वादेशे रूपम्। विहाय=वि+ओहाक् (त्यागे—ओकित्)+क्त्वा+ल्यप्। लज्जाम्=ओल-स्जी(व्रीडायाम्—ओकारेदित्)+अ+टाप्+अम्, "गुरोश्च हलः" इत्यप्रत्यये "झलां जश् झशि" इति सस्य जश्त्वे टाप्यमि रूपम्। रक्ष्यं=रक्ष (पालने—अकारेत्)+ण्यत्+सु, "ऋहलोर्ण्यत्" इति ण्यत्प्रत्यये रूपम्। शस्त्रभृतां=शस्त्र+अम्+डुभृञ् (धारणपोषणयोः—डुञित्)+क्विप्+आम्, "क्विप् च" इति क्विप्प्रत्यये "ह्रस्वस्य पिति कृति" इति तुगागमे रूपम्। क्षिणोति=क्षि (हिंसायाम्)+श्नु+लट्, लटस्तिपि स्वादित्वात् श्नु-प्रत्यये गुणे णत्वे रूपम् ॥ ४० ॥

वाच्यान्तरं—तेन त्वया लज्जां विहाय निवृत्त्यतां, भवता गुरोर्दर्शितशिष्यभक्तिना "भूयते" येन रक्ष्येण शस्त्रेणाशक्यरक्षेण "भूयते" तेन शस्त्रभृतां यशो न क्षीयते ॥ ४० ॥

कोशः—"रहति त्यजति त्यागे जहात्युज्झति वुस्यति। विसृजत्युत्सृजति च मुञ्चते मुञ्चतीति च। विष्यत्यवस्यति रहयति मोक्षयतीत्यपि। मोचयत्यूनयति चोत्सृज्यते हापयत्यमी" इत्याख्यातचन्द्रिका। "मन्दाक्षं ह्रीस्त्रपा व्रीडा, लज्जा" इत्यमरः। "गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान् निषेकादिकृते पित्रादौ सुरमन्त्रिणि" इति मेदिनी। "छात्रान्तेवासिनौ शिष्ये" इत्यमरः। "भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयोः" इत्यनेकार्थसङ्ग्रहः ॥ ४० ॥

तात्पर्यार्थः—हे राजन्! बाहुस्तम्भतया निरुपायस्त्वं लज्जां विहाय स्वाश्रमं याहि, मां मारयितुं शरनिष्कासने यथाशक्ति बहुश उद्योगं कुर्वता त्वया शिष्यजनकृता भक्तिः स्वगुरोर्दर्शिता, अपि च यद्रक्षणीयं वस्तु शस्त्रेण रक्षणार्हं न भवति, तद् रक्ष्यं वस्तु नष्टं सदपि शस्त्रधारिणां यशो न नाशयति, अतस्तव निजाश्रमगमने न कोऽपि दोष इति भावः ॥ ४० ॥

भाषाऽर्थः—उपाय से शून्य वह तुम लज्जा को छोड कर लौट जाओ, और तुम ने गुरु के सम्बन्ध में शिष्यों के योग्य भक्ति दिखला दी, और जो रक्षा करने के योग्य वस्तु शस्त्र से रक्षा करने के योग्य नहीं होता वह नष्ट होता हुआ भी शस्त्र धारियों के कीर्त्ति को नष्ट नहीं कर सकता है ॥ ४० ॥

* निजबाहुस्तम्भे शङ्करप्रभावस्य कारणतां ज्ञात्वा स्वमानहानिजेन दुःखेन दुःखितोऽभूवेत्याह—*

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥

सञ्जीविनी—इतीति। पुरुषाणामधिराजो नृप इति प्रगल्भं मृगाधिराजस्य वचो निशम्य श्रुत्वा गिरिशस्येश्वरस्य प्रभावात्प्रत्याहतास्त्रः कुण्ठितास्त्रः सन्नात्मनि विषयेऽवज्ञामपमानं शिथिलीचकार। तत्याजेत्यर्थः। अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः। समानेषु हि क्षत्रियाणामभिमानः। न सर्वेश्वरं प्रतीति भावः ॥ ४१ ॥

अन्वयः—पुरुषाधिराजः, इति, प्रगल्भं, मृगाधिराजस्य, वचः, निशम्य, गिरिशप्रभावात्, प्रत्याहतास्त्रः, "सन्" आत्मनि, अवज्ञां, शिथिलीचकार ॥ ४१ ॥

व्याख्या—पुरुषाधिराजः=पूरुषाधिपः, नृपो दिलीप इति यावत्। इति=स्वरूपेऽर्थेऽव्य-

यम्, उक्तप्रकारकमिति भावः। प्रगल्भं=प्रतिभाऽन्वितं, धृष्टमिति यावद्। मृगाधिराजस्य=पश्वधिपतेः, सिंहस्येति यावद्। वचः=वचनं, निशम्य=आकर्ण्य, गिरिशप्रभावात्=शङ्करतेजसा, प्रत्याहतास्त्रः=रुद्धशस्त्रः, सन्निति शेषः। आत्मनि=स्वस्मिन्, अवज्ञाम्=अवहेलनं, शिथिलीचकार=अदृढीचकार, जहाविति यावत्॥ ४१॥

समासादि—प्रगल्भत इति प्रगल्भं (न० लिं०) तत्प्रगल्भम्। पुरस्यग्रे गच्छन्तीति पुरुषाः (पुं०), अधिको राजाऽधिराजः (त० पु०), पुरुषाणामधिराजः पुरुषाधिराजः (त० पु०)। मृगाणामधिराजो मृगाधिराजः (त० पु०) तस्य मृगाधिराजस्य। प्रत्याहतमस्त्रं यस्यासौ प्रत्याहतास्त्रः (ब० व्री०) गिरिराश्रयत्वेनास्यास्तीति गिरिशः (पुं) प्रभवनं प्रभावः (पुं०), गिरिशस्य प्रभावो गिरिशप्रभावः (त० पु०) तस्माद्गिरिशप्रभावात्। अवज्ञानमवज्ञा (स्त्री०) तामवज्ञाम्॥ ४१॥

व्याकरणं—प्रगल्भं=प्र+गल्भ (धाष्टर्ये—अकारेत्)+अच्+अम्, पचादित्वादच्प्रत्ययेऽमि रूपम्। पुरुषाः=पुर (अग्रगमने—अकारेत्) +कुषन्+जस्, "पुरः कुषन्" इत्यौणादिके कुषन्प्रत्यये कित्वाद् गुणाभावे रूपम्। अधिराजः=अधि—राजन्+टच्+सु, "राजाहःसखिभ्यष्टच्" इति समासान्ते टच्प्रत्यये रूपम्। निशम्य=नि+शमु (उपशमे—उदित्)+क्त्वा+ल्यप्। गिरिशः=गिरि+शः+सु, "लोमादिपामादिपिच्छादिभ्यः शनेलचः" इति लोमादित्वाच्छप्रत्यये रूपम्। प्रभावः=प्र+भू (सत्तायाम्)+घञ्+सु, भावे घञ्प्रत्यये रूपम्। अवज्ञाम्=अव+ज्ञा (अवबोधने)+अङ्+टाप्+अम्, "आतश्चोपसर्गे" इत्यङ्प्रत्यये टापि रूपम्। शिथिलीचकार=शिथिल+च्वि+डुकृञ् (करणे—डुञित्)+लिट्+तिप्॥ ४१॥

वाच्यान्तरम्—पुरुषाधिराजेनेति प्रगल्भं मृगाधिराजस्य वचो निशम्य गिरिशप्रभावात् प्रत्याहतास्त्रेण "सता" आत्मन्यवज्ञा शिथिलीचक्रे॥ ४१॥

कोशः—"प्रगल्भ. प्रतिभाऽन्विते" इति। "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः" इति चामरः। "मृगः कुरङ्गे याच्ञायां मृगयायां गजान्तरे। पशौ नक्षत्रभेदे च मृगी तु वनिताऽन्तरे" इत्यनेकार्थसङ्ग्रहः। "व्याहार उक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः। "शृणोत्याकर्णयति च तद्वन्निशमयत्यपि। निशाम्यतीति श्रवणे" इत्याख्यातचन्द्रिका। "शङ्करश्चन्द्रशेखरः। भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः" इति। "तेजः प्रभावे दीप्तौ च बले" इति। "रीढाऽवमाननावज्ञाऽवहेलनमसूर्क्षणम्" इति चामरः॥ ४१॥

तात्पर्यार्थः—उक्तप्रकारकं सिंहस्य वचः श्रुत्वा राजा दिलीपः शङ्करस्य प्रभावात् स्वबाहोः स्तम्भं ज्ञात्वा, आत्मनि बाहुस्तम्भजन्यमपमानं तत्याज, यतः समानेषु क्षत्रियाणामभिमानो न तु परमेश्वर प्रति॥ ४१॥

भाषाऽर्थः—नराधिप दिलीप ने इस प्रकार से ढीठ सिंह के वचन को सुन कर शङ्कर के प्रभाव से अपने अस्त्र की गति रुकी हुई जान कर अपने विषय में अपमान के भाव को शिथिल कर दिया, अर्थात् अपना अपमान नहीं समझा॥ ४१॥

*दिलीपः सिंहं प्रत्युत्तरयन्नाह—*

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः॥ ४२॥

सञ्जीविनी—प्रतीति। स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिंस्तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नो विफलप्रयासः। अत एव वज्रं कुलिशं मुमुक्षन्मोक्तुमिच्छन्। अम्बकं लोचनं। 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः। त्रीण्यम्बकानि यस्य स त्र्यम्बको हरः। तस्य वीक्षणेन जडीकृतो निष्पन्दीकृतः। वज्रं पाणौ यस्य स वज्रपाणिरिन्द्रः।

'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्' इति पाणेः सप्तम्यन्तस्योत्तरनिपातः। स इव स्थितो नृप एनं सिंहं प्रत्यब्रवीच्च। ( बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः ) इति महाभारते॥ ४२॥

अन्वयः—तत्पूर्वभङ्गे, इषुप्रयोगे, वितथप्रयत्नः, "अत एव" वज्रं, मुमुक्षन्, त्र्यम्बकवीक्षणेन, जडीकृतः, वज्रपाणिः, इव, "स्थितो नृपः", एनं, प्रत्यब्रवीत्, च॥ ४२॥

व्याख्या—तत्पूर्वभङ्ग = तत्प्राक्पराजये, तत्प्रथमबाहुस्तम्भरूपपराजय इति यावद्। इषुप्रयोगे = बाणप्रयुक्तौ, वितथप्रयत्नः = अनृतपरिश्रमः, निष्फलप्रयास इति यावद्। "अत-एव" वज्रं = पविः, मुमुक्षन् = उत्सिसृक्षन्, बाणमोक्षणं कर्तुमिच्छन्नित्यर्थः। त्र्यम्बकवीक्षणेन = त्रिनयनविलोकनेन, शिवप्रेक्षणेनेति यावद्। जडी(१)कृतः = निश्चेष्टीकृतः, वज्रपाणिः = कुलिशहस्तः, इन्द्र इति यावद्। इव = यथा, स्थितो नृप इति शेषः। एनं = पूर्वोक्तं, सिंहमिति भावः। प्रत्यब्रवीत् = प्रत्यवोचत्॥ ४२॥

समासादि—इषोः प्रयोग इषुप्रयोगः (त० पु०) तस्मिन्निषुप्रयोगे। स एव पूर्वो भङ्गो यस्य स तत्पूर्वभङ्गः ( ब० व्री० ) तस्मिंस्तत्पूर्वभङ्गे। विगतं तथा सत्यं यस्मात्स वितथः ( पुं० ), वितथः प्रयत्नो यस्य स वितथप्रयत्नः ( ब० व्री० )। न जडोऽजडः, अजडो जडः सम्पद्यमान इति जडीकृतः (पुं०)। त्रीण्यम्बकानि यस्य स त्र्यम्बकः (ब० व्री०,) तस्य वीक्षणं त्र्यम्बकवीक्षणं तेन तथोक्तेन (त० पु०)। वजतीति वज्रं (न० लिं०) तद् वज्रम्। मोक्तुमिच्छतीति मुमुक्षति(स०)मुमुक्षतीति मुमुक्षन् (पुं०)। वज्रं पाणौ यस्य स वज्रपाणिः (व्य० प० ब० व्री०)॥ ४२॥

व्याकरणम्—प्रत्यब्रवीत् = प्रति + अट् ब्रूञ् (व्यक्तायां वाचि—ञित्) + ईट् + लङ्, लङस्तिपि "ब्रुव ईट्" इतीडागमे धातोर्गुणावादेशौ ततोऽडागमे रूपम्। वितथः = विगत + सु + तथा + अच् + सु, "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिसमासे "अच्प्रत्यन्ववपूर्वात् सामलोम्नः" इति योगविभागात् समासान्तोऽच् प्रत्ययः सौ रूपम्। जडीकृतः = जड + च्वि + डुकृञ् ( करणे—डुञित् )क्तः + सु। वज्रं = वज (गतौ—अकारेत्) + रन् + अम्, "ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवत्रेरामालाः" इत्यौणादिको रन् प्रत्ययोऽमि रूपम्। मुमुक्षन् = (मुच्लृ(मोक्षणे—लृदित्) + सन्) [मुमुक्ष + शप् + लट् + शतृ + सु। वज्रपाणिः = वज्र + सु, पाणि = ङि, व्यधिकरणपदबहुव्रीहिसमासे "सप्तमीविशेषणे बहुव्रीहौ" इति पूर्वप्रयोगे प्राप्ते "प्रहरणार्थेभ्यः परे निष्ठा सप्तम्यौ" इति वार्त्तिकेन परप्रयोगे सौ रूपम्॥ ४२॥

वाच्यान्तरं—तत्पूर्वभङ्ग इषुप्रयोगे वितथप्रयत्नेन "अत एव" वज्रं मुमुक्षता त्र्यम्बकवीक्षणेन जडीकृतेन वज्रपाणिनेव "स्थितेन नृपेण" एष प्रत्यौच्यत॥ ४२॥

कोशः "पृषत्कबाणविशिखा अजिह्मगखगाशुगाः। कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः" इत्यमरः। "प्रयोगस्तु निदर्शने। कार्मणे च प्रयुक्तौ" इति। "पूर्वं तु पूर्वजे। प्रागग्रे श्रुतिभेदे च" इति। भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये। कौटिल्ये भयविच्छित्त्योः" इति चानेकार्थसङ्ग्रहः। "अम्बकं नयनं दृष्टिः" इति हलायुधः। "ह्रादिनी वज्रमस्त्री स्यात्

---

(१) पुरा दैत्यानां पुरत्रयं कामगं खेचरमयोरजतसुवर्णनिर्मितमासीद्, तच्च देवादिभिरिन्द्रप्रभृतिभिरच्छेद्यतया प्रार्थितेन शिवेन बाणाग्निनाऽदाहि, ततो युगपत्पुरत्रयं दह्यमानं सकलदेवविमानवगणे साश्चर्यं दृश्यमानं द्रष्टु परमतेजस्विनमत्यद्भुतमेकं बालकमङ्के कृत्वा पार्वती देव्यपि समायाताऽपृच्छत्। भो। देवा ब्रूत, कोऽसौ मदङ्क उपविष्ट शिशुरिति, तत इन्द्राऽसूयया देवातिग तद्बालस्यासह्यं तेजो निरीक्ष्य तं वज्रं मुमुक्षन् बालरूपधारिणस्त्रिलोचनस्य वीक्षणेन जडीकृत पश्चाद् ब्रह्मादिभिरिन्द्रेणातिशयं स्तुतेन तेन शिवेन पुनः स इन्द्र प्रकृतौ स्थापितो बाहुस्तम्भमोक्षणेनेति महाभारतीया कथाऽनुसन्धेया।

कुलिशं भिदुरं पविः" इत्यमरः ॥ ४२ ॥

तात्पर्यार्थः—वाणमोक्षणे निष्फलप्रयत्नो महेश्वरवीक्षणेन निश्चेष्टीकृतो वज्रं प्रहर्तुमिच्छन् सुरराडिव स्थितो दिलीप एनं सिंहं प्रत्युवाच ॥ ४२ ॥

भाषाऽर्थः—पहले पहल यही है रुकावट जिसका, ऐसे बाण के चलाने में निष्फल प्रयत्न वाले अत एव शङ्कर भगवान् के देखने से ही निश्चेष्ट किये हुये वज्र का प्रहार करने की इच्छा करने वाले, वज्र है हाथ में जिसके ऐसे इन्द्र के समान स्थित राजा दिलीप इस सिंह के प्रत्युत्तर में बोले ॥ ४२ ॥

*हास्यास्पदमपि विवक्षणीयं भावं सर्वज्ञतया ते पुरतो वच्मीत्याह—*

**संरुद्धचेष्टस्य मृगेन्द्र ! कामं हास्यं वचस्तद्यदहं विवक्षुः ।**
**अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥**

सञ्जीविनी—संरुद्धचेष्टस्येति । हे मृगेन्द्र ! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयं, यद्वचः 'स त्वं मदीयेन' (२।४५) इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिंकरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह—अन्तरिति । हि यतो भवान्प्राणभृतामन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति । "विदो लटो वा" इति णलादेशः । अतोऽहमभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म सबध्यते । अन्ये त्वीदृग्वचनमाकर्ण्यासंभावितार्थमेतदित्युपहसन्ति, अतस्तु मौनमेव भूषणम् । त्वं तु वाङ्मनसयोरेकविध एवायमिव जानासि । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः॥४३॥

अन्वयः—"हे !" मृगेन्द्र !, संरुद्धचेष्टस्य, "मम" तद्, वचः, कामं, हास्यं, "अस्ति" यद् "वचः" अहं, विवक्षुः, "अस्मि" हि, भवान्, प्राणभृताम्, अन्तर्गतं, सर्वं, भावं, वेद, अतः, अभिधास्ये ॥ ४३ ॥

व्याख्या—मृगेन्द्र = हे सिंह !, संरुद्धचेष्टस्य = संयतव्यापारस्य, करसञ्चालनादिचेष्टाशून्यस्य ममेति भावः । तद् = अग्र उच्यमानं, वचः = वचनं, कामं = प्रकामम्, अत्यन्तमिति यावद् । हास्य = भण्डनीयं, परिहासार्हमिति यावद् । अस्तीति शेषः । यद् = वचः, "स त्वं मदीयेन" इत्यादिरूपमिति भावः । अहं = दिलीपः, विवक्षुः = जिगदिषुः, वक्तुमिच्छुः, अस्मीति शेषः । हि = यतः, भवान् = त्वं, दिलीप इति यावत् । प्राणभृताम् = असुधारिणां, जीवानामिति यावद् । अन्तर्गतं = मध्यस्थितं, हृद्गतमिति यावद् । वाणीद्वारा बहिरप्रकटितमिति भावः । सर्व = सम्पूर्णं, भावम् = अभिप्रायं, वेद = जानाति, अतः = एतस्मात्, कारणादिति भावः । अभिधास्ये = कथयिष्यामि ॥ ४३ ॥

समासादि—संरुद्धा चेष्टा यस्य स संरुद्धचेष्टः (ब० व्री०) तस्य संरुद्धचेष्टस्य । मृगेष्विन्द्रो मृगेन्द्रः (त० पु०) तत्संबुद्धौ हे मृगेन्द्र ! । हसितुं योग्यं हास्यम् (न० लिं०) । वक्तुमिच्छुर्विवक्षुः (पुं०) । प्राणान् बिभ्रतीति प्राणभृतः (पुं०) तेषां प्राणभृताम् ॥ ४३ ॥

व्याकरणं—संरुद्धा = सम् + रुधिर् (आवरणे—इरित्) + क्तः + टाप् + सु । हास्यं = हस (हसने—अकारेत्) + ण्यत् + सु, "ऋहलोर्ण्यत्" इति ण्यत्प्रत्यये वृद्धौ सोरमि रूपम् । विवक्षुः = (वच (परिभाषणे—अकारेत्) + सन्) विवक्ष = उः, "सनाशंसभिक्ष उः" इत्युप्रत्यये सौ रूपम् । प्राणभृतां = प्राण = शस् + डुभृञ् (धारणपोषणयोः—डुञित्) + क्विप् + आम्, "क्विप् च" इति क्विप्प्रत्यये तुगागमे रूपम् । वेद = विद (ज्ञाने—अकारेत्) + लट्, लटस्तिपः "विदो लटो वा" इति वैकल्पिके णलादेशे लघूपधगुणे रूपम् । अभिधास्ये = अभि + डुधाञ् (धारणपोषणयोः—डुञित्) + स्य + लट्, लट इटि रूपम् ॥ ४३ ॥

वाच्यान्तरं—हे मृगेन्द्र ! संरुद्धचेष्टस्य "मम" तेन वचसा कामं हास्येन "भूयते" यद्वचो मया विवक्षुणा "भूयते" हि प्राणभृतामन्तर्गतः सर्वो भावो भवता विद्यतेऽतोऽभिधास्यते॥४३॥

कोशः—"सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इति। "कामं प्रकामं पर्याप्तम्" इति चामरः। "भण्डते स्फुण्डयति च केलौ परिहसत्यपि" इति। "आचष्टे वक्ति वदति रपत्याख्याति भाषते। ब्रूतेऽभिधत्ते गदति व्याहरत्यपि जल्पति। ब्रवीत्यभिदधाति व्याहरते कथयत्यपि। गृणात्युदीरयत्युक्तौ कीर्तयत्यालपत्यपि। भणत्यपि वचत्येके वचयत्यपि शंसति" इति चाख्यातचन्द्रिका। "अन्तर्, निकटे चान्तरा पुनः। विनाऽर्थे सन्निधौ मध्ये" इत्यनेकार्थसङ्ग्रहः। "पुंसि भूम्न्यसवः प्राणाः" इति। "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इति चामरः। "हि हेताववधारणे। विशेषे पादपूर्तौ च", इत्यनेकार्थसङ्ग्रहः। "अथ समं सर्वम्। विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्। समग्रं सकलं पूर्णमखण्डं स्यादनूनके" इति। "भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्तुषु" इति चामरः॥ ४३॥

तात्पर्यार्थः—हे सिंह! यद् वचो विवक्षुरहमस्मि तद् निरुद्धकरचालनादिव्यापारस्य मम वचो यद्यपि परिपूर्णतयोपहासयोग्यमस्ति तथाऽपि भवतो जन्तूनां हृद्गतसकलभावाभिज्ञतया संप्रति वक्ष्ये॥ ४३॥

भाषाऽर्थः—हे सिंह! यद्यपि रुकी हुई है चेष्टा जिसकी, ऐसे मुझ दिलीप का वह वचन अत्यन्त परिहास करने के योग्य है, जिसे कि मैं कहने की इच्छा करने वाला हो रहा हूं, तथाऽपि आप सभी जीवों के हृदय के भाव जानते हैं इससे कहूंगा॥ ४३॥

*स्वविवक्षणीयवचः श्लोकद्वयेन कथयन्नादौ धेनुरक्षणेऽनुपेक्षितामाह—*

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम्॥ ४४॥

सञ्जीविनी—मान्य इति। प्रत्यवहारः प्रलयः। स्थावराणां तरुशैलादीनां जङ्गमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरो मे मम मान्यः पूज्यः। अलङ्घ्यशासन इत्यर्थः। शासनं च 'सिंहत्वमङ्कागतसत्त्ववृत्ति' (२।३८) इत्युक्तरूपम्। तर्हि विसृज्य गम्यताम्। नेत्याह-गुरोरपीति। पुरस्तादग्रे नश्यदिदमाहिताग्नेर्गुरोर्धनमपि गोरूपमनुपेक्षणीयम्। आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति॥ ४४॥

अन्वयः—स्थावरजङ्गमानां, सर्गस्थितिप्रत्यवहारहेतुः, सः, मे, मान्यः, पुरस्ताद्, नश्यद्, इदम्, आहिताग्नेः, धनम्, अपि, अनुपेक्षणीयम्॥ ४४॥

व्याख्या—स्थावरजङ्गमानां = जङ्गमेतरचराचराणाम्, पादपपर्वतादिनरप्रभृतीनामिति भावः। सर्गस्थितिप्रत्यवहारहेतुः = सृष्टयास्थाप्रलयकारणम्, उत्पत्तिपालननाशकारणमिति यावत्। सः = पूर्वोक्तः, प्रसिद्धो वा, ईश्वर इति यावद्। मे = मम, दिलीपस्येति यावद्। मान्यः = पूज्यः, अनतिक्रमणीयानुशासन इति भावः। अस्तीति शेषः। पुरस्ताद् = अग्रे, नश्यद् = नाशं गच्छद्, म्रियमाणमिति भावः। इदम् = एतद्, अग्रे दृश्यमानमिति भावः। आहिताग्नेः = स्थापितवह्नेः, कृताग्निहोत्रस्येति भावः। गुरोः = निषेकादिकरस्य, वसिष्ठस्येति भावः। धनं = गोधनं, गोरूपं वित्तं वा। अपि = समुच्चये, अनुपेक्षणीयम् = अनुदासनीयं, हविःसाधनतयोपेक्षाऽनर्हमिति भावः॥ ४४॥

समासादि—स्थानशीलाः स्थावराः (पुं०), चक्रं गच्छन्तीति जङ्गमाः (पुं०), स्थावराश्च जङ्गमाश्चेति स्थावरजङ्गमास्तेषां स्थावरजङ्गमानां (द्वं०)। सृज्यत इति सर्गः (पुं०), स्थानमिति स्थितिः (स्त्री०), प्रत्यवह्रियन्तेऽत्र प्रत्यवहारः (पुं०), सर्गश्च स्थितिश्च प्रत्यवहारश्चेति सर्गस्थितिप्रत्यवहाराः (द्वं०), तेषु हेतुः सर्गस्थितिप्रत्यवहारहेतुः (त० पु०)। धनतीति धनं (न० लिं०)। आहितोऽग्निर्येन स आहिताग्निः (ब० व्री०) तस्याहिताग्नेः। नश्यतीति नश्यद् (न० लिं०)। पूर्वस्मिन्निति पुरस्तात् (अ०)। उपेक्षितुं योग्यमुपेक्षणीयं (न० लिं०), न उपेक्षणीयमनुपेक्षणीयम् (न० त० पु०)॥ ४४॥

व्याकरणं—स्थावराः = ष्ठा (गतिनिवृत्तौ) + वरच् + जस्, धात्वादेः षः सः "स्थेशभासपिसकसो वरच्" इति वरच्प्रत्यये जसि रूपम्। जङ्गमाः = (गम्लृ (गतौ—लृदित्) + यङ्) जङ्गम्य + अच् + जस्, "नित्यं कौटिल्ये गतौ" इति यङ्प्रत्यये "सन्यङोः" इति द्वित्वेऽभ्यासहलो लोपे चुत्वे "नुगतोऽनुनासिकान्तस्य" इति नुगागमे परसवर्णादिकार्ये पचादित्वादच्प्रत्यये "यस्य हलः" इति यकारलोपे जसि रूपम्। सर्गः = सृज (विसर्गे—अकारेत्) + घञ् + सु, "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्प्रत्यये कुत्वे गुणे रपरे सौ रूपम्। धनं = धन (शब्दे—अकारेत्) + अच् + सु, पचादित्वादच्प्रत्यये सोरमादेशे रूपम्। आहितः = आङ् + डुधाञ् ( धारणपोषणयोः—डुनित् ) + क्तः + सु, "दधातेर्हिः" इति धातोर्ह्यादेशे सौ रूपम्। नश्यत् = णश ( अदर्शने—अकारेत् ) + श्यन् + लट् + शतृ + सु । पुरस्तात् = पूर्व + ङि + अस्तातिः, "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" इत्यस्तातिप्रत्यये "अस्ताति च" इति पूर्वशब्दस्य पुरादेशेऽव्ययत्वात्सुपो लुकि रूपम्। अनुपेक्षणीयं = नञ् + उप + ईक्ष ( दर्शने-अकारेत् ) + अनीयर् + सु ॥ ४४ ॥

वाच्यान्तरं—स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुना तेन मे मान्येन "भूयते" पुरस्ताद् नश्यताऽनेनाहिताग्नेर्गुरोर्धनेनाप्यनुपेक्षणीयेन "भूयते" ॥ ४४ ॥

कोशः—"स्थावरो जङ्गमेतरः" इति । "चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम्" इति । "सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु" इति । "संस्था तु, मर्यादा धारणा स्थितिः" इति चामरः। "धनं वित्ते गोधने" इति मेदिनी । "प्राच्यां पुरस्तात् प्रथमे पुरार्थेऽग्रत इत्यपि" इत्यमरः ॥ ४४ ॥

तात्पर्यार्थः—जडचेतनात्मकतरुशैलादिमनुष्यादीनामुत्पत्तिपालनसंहारेष्वादिकारणं स ईश्वरः शिवो मे पूज्योऽत एव "सिंहत्वमङ्कागतसत्त्ववृत्ति" इत्युक्तरूपकत्वदीयानुशासनस्य सर्वथाऽनुल्लङ्घनीयत्वमस्ति, तथा च कृताग्न्याधानतया गुरोरपि नश्यदिदं गोरूप धनं नोपेक्षणार्हमस्ति ॥ ४४ ॥

भाषाऽर्थः—स्थावर ( वृक्ष-पर्वत-आदि ) और जङ्गमों ( मनुष्यादिकों ) के उत्पत्ति-पालन और संहार करने में कारण वे श्रीशिवजी मेरे पूज्य हैं, ( अर्थात् उनकी आज्ञा माननीय है) और आगे नष्ट होता हुआ यह अग्निहोत्र करने वाले गुरुजी वसिष्ठ महाराज का गोरूप धन भी उपेक्षा करने के योग्य नहीं है, ( अर्थात् इसकी रक्षा करनी चाहिये ) ॥ ४४ ॥

*स्वशरीरार्पणेन धेनुमोचनार्थं प्रार्थयमान आह—*

**स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।**
**दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥**

सञ्जीविनी—स इति । सोऽङ्कागतसत्त्ववृत्तिस्त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्तयितुं संपादयितुं प्रसीद । दिनावसान उत्सुको माता समागमिष्यतीत्युत्कण्ठितो बालवत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् ॥ ४५ ॥

अन्वयः—सः, त्वं, मदीयेन, देहेन, शरीरवृत्तिं, निर्वर्तयितु, प्रसीद, दिनावसानोत्सुकबालवत्सा, महर्षेः, इयं, धेनु., विसृज्यताम् ॥ ४५ ॥

व्याख्या—सः = पूर्वोक्तः, अङ्कागतप्राणिवृत्तिरिति भावः । त्वं = भवान्, सिंह इति भावः। मदीयेन = मामकेन, देहन = शरीरेण, शरीरवृत्तिं = देहजीवनं, प्राणधारणमिति भावः। निर्वर्तयितुं = निष्पादयितु, कर्त्तुमिति यावत् । प्रसीद = अनुगृहाण, दिनावसानोत्सुकबालवत्सा = दिवससमाप्त्युत्कण्ठितशिशुतर्णका, सायङ्काले मदीया माता वनात् प्रतिनिवृत्त्यागमिष्यतीति हेतोः परमोत्कण्ठितो नवजातवत्सो यस्याः सैवम्भूतेति भावः। महर्षेः = बृहत्सत्यवचस., वसिष्ठस्येति भावः। इयम् = एषा, तवाङ्कागतेति भावः । धेनुः = नवसूतिका,

गौर्नन्दिनीति यावद् । विसृज्यतां = त्यज्यताम् ॥ ४५ ॥

समासादि—ममायं मदीयः (पुं० ) तेन मदीयेन । शरीरस्य वृत्तिः शरीरवृत्तिः (त० पु०) तां शरीरवृत्तिम् । दिह्यतेऽसौ देहः (पुं०) तेन देहेन । दिनस्यावसानं दिनावसानं ( त० पु० ), तत्रोत्सुको दिनावसानोत्सुकः ( त० पु० ), बालश्चासौ वत्सो बालवत्स ( त० क० धा० ), दिनावसानोत्सुको बालवत्सो यस्याः सा दिनावसानोत्सुकबालवत्सा ( ब० व्री० ) । महांश्चासावृषिर्महर्षिः ( त० क० धा० ) तस्य महर्षेः ॥ ४५ ॥

व्याकरणं—देहेन = दिह ( उपचये-अकारेत् ) + घञ् + टा, "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्प्रत्यये गुणे टारूपम् । निर्वर्त्तयितुं = ( निर् + वृतु ( वर्त्तने—उदित् ) + णिच् ) निर्वर्त्ति + इट् + तुमुन् । प्रसीद = प्र + पद्लृ(विशरणगत्यवसादनेषु + लृदित् ) + लोट् , लोटः सिपो ह्यादेशे "पाघ्राध्मे" ति सीदादेशे हेर्लुकि रूपम् । विसृज्यतां = वि + सृज ( विसर्गे-अकारेत् ) + यक् + लोट् , लोटस्तादेशे "सार्वधातुके यक्" इति यक् प्रत्यये कित्वाद् गुणाभाव एत्वे "आमेतः" इत्येकारस्यामादेशे रूपम् ॥ ४५ ॥

वाच्यान्तरं—तेन त्वया मदीयेन देहेन शरीरवृत्ति निर्वर्त्तयितुं प्रसद्यतां, दिनावसानोत्सुकबालवत्सां महर्षेरिमां धेनुं विसृज ॥ ४५ ॥

कोशः—"अथ कलेवरम् । गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः । कायो देहः क्लीबपुंसोः स्त्रियां मूर्त्तिस्तनुस्तनूः" इति । "वृत्तिर्वर्त्तनजीवने" इति चामरः । "कृपायां करुणायते । कृपायते चानुकम्पतेऽनुक्रोशत्यृतीयते । घृणायते च दयते क्रपतेऽभ्युपपद्यते । प्रसीदत्यनुगृह्णाति, चात्मनेऽयम्" इत्याख्यातचन्द्रिका । "वस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ" इति । "सातिस्त्ववसाने स्यात्" इति चामरः । "बालोऽज्ञेऽश्वेभपुच्छयोः । शिशौ ह्रीवेरकचयोः" इति । "वत्साः पुत्रादिवर्षतर्णकाः" इति चानेकार्थसङ्ग्रहः ॥ ४५ ॥

तात्पर्यार्थः—त्वं मदीयेन देहेन बुभुक्षाशान्ति कृत्वा मह्यं प्रसीद, इमां धेनुं मुञ्च, यतोऽस्या उत्कण्ठितो बालवत्स आश्रमे बद्धो बुभुक्षित आस्ते ॥ ४५ ॥

भाषाऽर्थः—समीप में आये हुए प्राणियों पर अपना जीवन निर्वाह करने वाले वह तुम मेरे शरीर से अपने शरीर का जीवन रखने के लिये मेहरबानी करो, और दिन के समाप्त होने पर "हमारी मां आती होगी इससे" उत्कण्ठित छोटे बछड़े वाली महर्षि वसिष्ठ के इस धेनु "नन्दिनी" को छोडो ॥ ४५ ॥

*अथ किञ्चिद् विहस्य पुनः सिंहस्य दिलीपं प्रति भाषणमाह—*

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किञ्चिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥

सञ्जीविनी—अथेति । अथ भूतेश्वरस्य पार्श्ववर्त्यनुचरः स सिंहो गिरेर्गह्वराणां गुहानाम् । 'देवखातबिले गुहा । गह्वरम्' इत्यमरः । अन्धकारं ध्वान्तं दंष्ट्रामयूखैः शकलानि खण्डानि कुर्वन् । निरस्यन्नित्यर्थः । किंचिद्विहस्यार्थपतिं नृपं भूयो बभाषे । हासकारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' इति वक्ष्यमाणं द्रष्टव्यम् ॥ ४६ ॥

अन्वयः—अथ, भूतेश्वरपार्श्ववर्त्ती, सः, गिरिगह्वराणाम् , अन्धकारं, दंष्ट्रामयूखैः, शकलानि, कुर्वन् , किञ्चिद् , विहस्य, अर्थपतिं, भूयः, बभाषे ॥ ४६ ॥

व्याख्या—अथ = अनन्तरं, दिलीपकथनानन्तरमिति भावः । भूतेश्वरपार्श्ववर्त्ती = गिरिशसमीपस्थायी, शङ्करनिकटवर्त्तीति यावत् । सः = पूर्वोक्तः, कुम्भोदरनामा सिंह इति भावः । गिरिगह्वराणां = पर्वतगुहानां, हिमालयपर्वतस्याकृत्रिमे बिल इति भावः । अन्धकारं = तिमिरं, दंष्ट्रामयूखैः = निशितदन्तकिरणैः, शकलानि = खण्डानि, कुर्वन् = विदधत्, दूरीकुर्वन्निति यावत् । किञ्चित् = स्वल्पं, विहस्य = स्मितं कृत्वा, अर्थपतिं = द्रविणस्वामिनं, राजानं दिली-

पमिति यावद् । भूयः = पुनः, वभाषे = उवाच ॥ ४६ ॥

समासादि—गिरेर्गह्वराणि गिरिगह्वराणि (त० पु०), तेषां गिरिगह्वराणां । दशन्त्येभिरिति दंष्ट्राः (स्त्री०) तासां मयूखा दंष्ट्रामयूखास्तैर्दंष्ट्रामयूखैः । ईशितुं शीलमस्येतीश्वरः (पुं०), भूतानामीश्वरो भूतेश्वरः (त० पु०), पार्श्वयोर्वर्त्तितुं शीलमस्येति पार्श्ववर्त्ती (पुं०), भूतेश्वरस्य पार्श्ववर्त्ती भूतेश्वरपार्श्ववर्त्ती (त० पु०) । अर्थानां पतिरर्थपतिः (त० पु० ), तमर्थपतिम् ॥ ४६ ॥

व्याकरणं—दंष्ट्राः = दंश ( दशने—अकारेत् ) + ष्ट्रन् + टाप् + जस्, "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" इति करणेऽर्थे ष्ट्रन्प्रत्यये "व्रश्चभ्रस्जे" त्यादिना सस्य षत्वे ष्टुत्वे टापि जसि रूपम् । विहस्य = वि + हस (हसने—अकारेत् ) + क्त्वा + ल्यप् । वभाषे = भाष ( व्यक्तायां वाचि—अकारेत् ) + लिट्, लिटस्तप्रत्ययस्यैशादेशे धातोर्द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४६ ॥

वाच्यान्तरम्—अथ भूतेश्वरपार्श्ववर्त्तिना तेन गिरिगह्वराणामन्धकारं दंष्ट्रामयूखैः शकलानि कुर्वता किञ्चिद् विहस्यार्थपतिर्भूयो वभाषे ॥ ४६ ॥

कोशः—"अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः" इति । मयूखस्त्विट्करज्वालासु" इति । "भित्तं शकलखण्डे वा, पुंस्यर्धः" इति चामरः । "भूयान् त्रिषु वहुतरे पुनरर्थे त्वदोऽव्ययम्" इति मेदिनी ॥ ४६ ॥

तात्पर्यार्थः—दिलीपकथनानन्तरं स सिंहः स्वदंष्ट्राकान्तिभिः पर्वतगुहागतान्धकारं दूरीकुर्वन् पुनरपि किञ्चिद् विहस्य दिलीपं प्रत्युवाच ॥ ४६ ॥

भाषाऽर्थः—दिलीप के कह चुकने के वाद भगवान् शङ्कर के पास का रहने वाला वह सिंह हिमालय पर्वत की गुफाओं के अन्धकार को दांतों की कान्ति से टुकडे, २ करता हुआ कुछ हँसकर राजा दिलीप से फिर बोला ॥ ४६ ॥

*दिलीपस्य स्वशरीरार्पणे मूर्खत्व प्रतिपादयन्नाह—*

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥४७॥

सञ्जीविनी—एकातपत्रमिति । एकातपत्रमेकच्छत्रं जगतः प्रभुत्वं स्वामित्वम् । नवं वयो यौवनम् । इदं कान्त रम्यं वपुश्च । इत्येवं वहु अल्पस्य हेतोरल्पेन कारणेन । अल्पफलायेत्यर्थः । "षष्ठी हेतुप्रयोगे" इति षष्ठी । हातुं त्यक्तुमिच्छंस्त्वं विचारे कार्याकार्यविमर्शे मूढो मूर्खो मे मम प्रतिभासि ॥ ४७ ॥

अन्वयः—एकातपत्रं, जगतः, प्रभुत्वं, नवं, वयः, इदं, कान्तं, वपुः, च, "एतत्सर्वं" वहु, अल्पस्य, हेतोः, हातुम्, इच्छन्, त्वं, विचारमूढः, मे, प्रतिभासि ॥ ४७ ॥

व्याख्या—एकातपत्रम् = अद्वितीयच्छत्रं, चक्रवर्त्तित्वमिति भावः । जगतः = लोकस्य, प्रभुत्वं = स्वामित्वं, नवं = नवीनं, वयः = अवस्था, युवावस्थेति यावद् । इदम् = एतद्, अग्रे दृश्यमानमिति भावः । कान्तं = मनोरमं, वपुः = शरीरं, च = समुच्चयेऽर्थे, "एतत्सर्वं" वहु = वहुलम्, अल्पस्य = स्तोकस्य, हेतोः = कारणाद्, स्वल्पफललाभायेति भावः । हातुम् = उत्स्रष्टुम्, इच्छन् = कामयमानः, त्वं = भवान्, विचारमूढः = विचारणाऽज्ञः, कार्याकार्यविचारे मूर्ख इति भावः । मे = मम, प्रतिभासि = प्रतिभाससे ॥ ४७ ॥

समासादि—आतपात् त्रायत इत्यातपत्रम् (न० लि०), एकमातपत्रं यस्मिंस्तदेकातपत्रं (व० व्री०) । प्रभोर्भावः प्रभुत्वं (न० लि०) । इच्छतीतीच्छन् (पुं०) । विचारे मूढो विचारमूढः (त० पु०) ॥ ४७ ॥

व्याकरणं—प्रभुत्वम् = प्रभु = त्व + सु । हातुम् = ओहाक् (त्यागे-ओकित् ) + तुमुन् ।

इच्छन्=इषु (इच्छायाम्—उदित्)+लट्+शतृ+सु, लटः शत्रादेशे "इषुगमियमां छः" इति षस्य छत्वे सौ रूपम्। प्रतिभासि=प्रति+भा (दीप्तौ)+लट्, लटः सिपि शपो लुकि रूपम् ॥ ४७ ॥

वाच्यान्तरम्—एकातपत्रं जगतः प्रभुत्वं नवं वय इदं कान्तं वपुश्चैतत्सर्वं बह्वल्पस्य हेतोर्हातुमिच्छता त्वया विचारमूढेन मे प्रतिभायते ॥ ४७ ॥

कोशः—"एके मुख्यान्यकेवलाः" इति । "छत्रं त्वातपत्रम्" इति । "स्तोकाल्पक्षुल्लकाः" इति । "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इति । "चर्चा संख्या विचारणा" इति । "अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः" इति चामरः ॥ ४७ ॥

तात्पर्यार्थः—हे राजन्! एकस्या धेनोर्हेतोश्चक्रवर्त्तित्वं, लोकस्वामित्वं नवयौवनं मनोरममिदं शरीरमेतत्सर्वं त्यक्तुं यत्त्वमिच्छसि तन्मे कार्याकार्यविचारशून्यतया नितान्तमूढ एव प्रतिभाससे ॥ ४७ ॥

भाषाऽर्थः—एक है छत्र जिसमें ऐसी संसार की प्रभुता, नवीन युवावस्था और यह सुन्दर शरीर इन सब बहुतों को थोड़े से नन्दिनीरूप फल के लाभ के कारण से छोड़ने की इच्छा करते हुये तुम क्या करना चाहिये, क्या नहीं करना चाहिये इसके विचार करने में मूर्ख मुझे मालूम पड़ते हो ॥ ४७ ॥

*नन्दिनीरक्षाऽपेक्षया स्वशरीररक्षणस्यौचित्यं सहेतुकं प्रदर्शयन्नाह—*

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ! पितेव पासि ॥४८॥

सञ्जीविनी—भूतानुकम्पेति । तव भूतेष्वनुकम्पा कृपा चेत् । 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः । कृपैव वर्तते चेदित्यर्थः । तर्हि त्वदन्ते तव नाशे सतीयमेका गौः । स्वस्ति क्षेममस्या अस्तीति स्वस्तिमती भवेत् । जीवेदित्यर्थः । 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरः । हे प्रजानाथ! जीवन्पुनः पितेव प्रजा उपप्लवेभ्यो विघ्नेभ्यः शश्वत्सदा । 'पुनःसहार्थयोः शश्वत्' इत्यमरः। पासि रक्षसि । स्वप्राणव्ययेनैकधेनुरक्षणाद्वरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ॥ ४८ ॥

अन्वयः—तव, भूतानुकम्पा, चेत्, "तर्हि", त्वदन्ते, "सति", इयम्, एका, गौः, स्वस्तिमती, भवेत्, प्रजानाथ!, जीवन्, पुनः, पिता, इव, प्रजाः, उपप्लवेभ्यः, शश्वत्, पासि॥४८॥

व्याख्या—तव=भवतः, दिलीपस्येति यावत् । भूतानुकम्पा=प्राणिदया, जीवोपरि करुणेति यावत्। चेत्=यदि, "अस्तीति तर्हि" इति शेषः । त्वदन्ते=भवन्नाशे, सतीति शेषः । इयम्=एषा, पुरो दृश्यमानेति भावः । एका=केवला, गौः=धेनुः, नन्दिनीति यावत् । स्वस्तिमती=क्षेमवती, भवेत्=विद्येत, त्वद्देहार्पणेन जीवेदिति भावः । प्रजानाथ!=जनेश्वर!, हे दिलीप! इति यावत् । जीवन्=श्वसन्, प्राणधारणं कुर्वन्निति भावः । पुनः=अवधारणेऽर्थे, निश्चयेनेति भावः। पिता=जनकः, इव=यथा, प्रजाः=जनान्, पितृपक्षे पुत्रान्। उपप्लवेभ्यः=उत्पातेभ्यः, चौरादिभयेभ्य इति भावः । शश्वत्=अनारतम्, पासि=त्रायसे ॥ ४८ ॥

समासादि—भूतेष्वनुकम्पा भूतानुकम्पा (त० पु०) । स्वसति स्वस्यति वेति स्वस्ति (अ०), स्वस्ति क्षेममस्या अस्तीति स्वस्तिमती (स्त्री०) । तवान्त इति त्वदन्तः (त० पु०) तस्मिंस्त्वदन्ते । प्रजानां नाथ इति प्रजानाथः (त० पु०) तत्सम्बुद्धौ हे प्रजानाथ! ॥ ४८॥

व्याकरणं—भवेत्=भू (सत्तायाम्)+यासुट्+वि० लिङ्, लिङस्तिपि शपि गुणेऽवादेशे यासुटि "अतो येयः" इति यादेशे यकारलोपे रूपम् । स्वस्ति=सु+असु (क्षेपणे-उदित्) +क्तिच्, "क्तिच्क्तौ च संज्ञायाम्" इति क्तिच्प्रत्यये "यस्य विभाषा" इतीडभावेऽव्ययत्वात्सुपो लुकि रूपम् । स्वस्तिमती=स्वस्ति+मतुप्+ङीप्+सु । पासि=पा (रक्षणे)+

लट्, लटः सिपि शपोऽदादित्वाल्लुकि रूपम् ॥ ४८ ॥

वाच्यान्तरं—तव भूतानुकम्पया चेद् "भूयते तर्हि" त्वदन्ते "सति" अनयैकया गवा स्वस्तिमत्या भूयेत हे प्रजानाथ ! "त्वया" जीवता पुनः पित्रेव प्रजा उपप्लवेभ्यः शश्वत् पायन्ते ॥ ४८ ॥

कोशः—"भूतं क्ष्माऽऽदावृते न्याय्ये प्राण्यतीते समे त्रिषु" इति। "कृपा दयाऽनुकम्पा च" इति। "पक्षान्तरे चेद्यदि च" इति। "स्वस्त्याशीःक्षेमपुण्यादौ" इति। "स्युरेवन्तु पु नवैवेत्यवधारणवाचकाः" इति। "अभीक्ष्णं शश्वदनारते" इति चामराः। "उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि" इति मेदिनी ॥ ४८ ॥

तात्पर्यार्थः—हे राजन् ! तव यदि प्राणिष्वनुकम्पैवास्ति तर्हि धेनोरपेक्षया स्वशरीरस्यैव रक्षणं कुरु, यतस्त्वयि जीवति सति सकललोकस्थजीवपालनं भविष्यति त्वन्नाशे तु केवलाया धेनोरेव रक्षणं भविष्यत्यतः स्वशरीररक्षणं ते श्रेष्ठं न तु धेनुरक्षणम् ॥ ४८ ॥

भाषाऽर्थः—हे राजन् ! तुह्मारी प्राणियों के ऊपर दया यदि है, तो तुम्हारे मर जाने पर यह केवल एक गौ कल्याण से युक्त हो सकती है, हे प्रजाओं के स्वामी महाराज दिलीप ! जीते हुये निश्चय कर के आप पिता के समान प्रजाओं की विघ्नों से निरन्तर रक्षा कर सकते है ॥ ४८ ॥

न धर्मलोपादियं प्रवृत्तिः किं तु गुरुभयादित्यत आह—

**अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि ।**
**शक्योऽस्य मन्युर्भवता विनेतु गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९ ॥**

सञ्जीविनी—अथेति। अथेति पक्षान्तरे। अथवा। एकैव धेनुर्यस्य तस्मात्। अयं कोपकारणोपन्यास इति ज्ञेयम्। अत एवापराधे गवोपेक्षालक्षणे सति चण्डादतिकोपनात्। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। अत एव कृशानुः प्रतिमोपमा यस्य तस्मादग्निकल्पाद् गुरोर्बिभेषि। इति काकुः। "भीत्रार्थानां भयहेतुः" इत्यपादानात्पञ्चमी। अल्पवित्तस्य धनहानिरतिदुःसहेति भावः। अस्य गुरोर्मन्युः क्रोधः 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। घटा इवोधांसि यासां ता घटोध्नीः। "ऊधसोऽनङ्" इत्यनङादेशः। "बहुव्रीहेरूधसो" ङीप् इति ङीप्। कोटिशो गाः स्पर्शयता प्रतिपादयता। 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः। भवता विनेतुमपनेतुं शक्यः ॥ ४९ ॥

अन्वयः—अथ, एकधेनोः, अपराधचण्डाद्, "अत एव" कृशानुप्रतिमाद्, गुरोः, बिभेषि, "त्वम्", अस्य, मन्युः, घटोध्नीः, कोटिशः, गाः, स्पर्शयता, भवता, विनेतुं, शक्यः ॥ ४९ ॥

व्याख्या—अथ = पक्षान्तरे, अथवेति यावद्। एकधेनोः = केवलगोः, केवलनन्दिनीनाशरूपकारणादिति भावः। "अत एव" इति शेषः। अपराधचण्डाद् = आगोऽत्यन्तकोपनाद्, गोरक्षणोपेक्षारूपापराधे सति भृशं कोपशीलादिति भावः। "अत एव" कृशानुप्रतिमाद् = पावकप्रतिमानाद्, अनलतुल्यादिति भावः। गुरोः = निषेकादिकरस्य, वसिष्ठस्येति यावद्। बिभेषि = त्रस्यसि, धेनुमात्रधनस्य गुरोर्धेनुहानिरतिदुःसहेति भावः। अस्य = एतस्य, पूर्वोक्तस्य गुरोरिति यावद्। मन्युः = क्रोधः। धेनुनाशज इति भावः। घटोध्नीः = कलशापीनवतीः, घटतुल्यबृहत्स्तनवतीरिति भावः। कोटिशः = कोटिसङ्ख्यकाः, गाः = सौरभेयीः, स्पर्शयता = ददता, भवता = त्वया, विनेतुं = निर्यातयितुं, दूरीकर्त्तुमिति भावः। शक्यः = क्षमः, अस्तीति शेषः ॥ ४९ ॥

समासादि—एकैव धेनुर्यस्य स एकधेनुस्तस्मादेकधेनोः (ब० व्री०)। अपराधे चण्डोऽपराधचण्डः (त० पु०) तस्मादपराधचण्डात्। कृश्यतीति कृशानुः (पुं०), स प्रतिमा यस्य स कृशानुप्रतिमः (ब० व्री०) तस्मात्कृशानुप्रतिमात्। घटा इवोधांसि यासां ता घटो-

न्वयः (स्त्री०) ता घटोघ्नीः ॥ ४९ ॥

व्याकरणं—कृशानुः = कृश (तनूकरणे—अकारेत्) + आनुक् + सुः, "कृतन्यञ्जिवन्ये" त्यादिनौणादिक आनुक्प्रत्यये सौ रूपम्। बिभेषि = ञिभी (भये—ञीत्) + लट्, लटः सिपि धातोः श्लौ द्वित्वेऽभ्यासकार्ये गुणे रूपम्। विनेतुं = वि + णीञ् (प्रापणे—ञित्) + तुमुन्। कोटिशः = कोटि + शस्, "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति शस्प्रत्ययेऽव्ययत्वात्सुपो लुकि रूपम्। स्पर्शयता = (स्पृश (स्पर्शने—अकारेत्) + णिच्) स्पर्शि + शप् + शतृ + टा। घटोघ्नीः = घट + जस् + ऊधस् + जस् + ङीप् + शस्, "ऊधसोऽनङ्" इत्यनङादेशे "बहुव्रीहेरूधसो ङीष्" इति ङीपि शसि रूपम्॥ ४९ ॥

वाच्यान्तरम्—अथैकधेनोरपराधचण्डात्कृशानुप्रतिमाद् गुरोः "त्वया" भीयते, अस्य मन्युं घटोघ्नीः कोटिशो गाः स्पर्शयन् भवान् विनेतु शक्नुयात्॥ ४९ ॥

कोशः—"आगोऽपराधो मन्तुश्च" इति। "चण्डस्त्वत्यन्तकोपनः" इति। "कृशानुः पावकोऽनलः" इति। "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्चा पुंसि प्रतिनिधिः" इति चामरः। "बिभेति त्रस्यति दरत्येवं त्रसति भेषते। विनक्ति भ्यसते चैव दर्भयत्यपि दर्भति। भेपत्युद्विजते भीत्यां व्यथते द्वादशेरिताः" इति। "प्रतिदत्ते विनयते निर्यातयति तत्समम्। वित्तोत्सर्गे व्ययति च तथा विनयतेऽपि च" इति। "ददाति निर्वपति च दधात्यपि च दाशति। सनोति दासति दिशत्यात्मने सह यच्छति। अपवर्जयति विश्राणयत्यपि" इति चाख्यातचन्द्रिका॥ ४९ ॥

तात्पर्यार्थः—हे राजन्! यदि अपरधेन्वा अभावात् तद्विनाशरूपापराधेनातिक्रुद्धतयाऽनलकल्पमूर्त्तेर्गुरोर्भयं करोषि, तर्हि पयस्विनीः कोटिशो गा ददत् त्वं तस्य गुरोः क्रोधशान्तिं कर्त्तुं समर्थोऽस्यतो धेनुरक्षणार्थमनुनयस्ते वृथैव॥ ४९ ॥

भाषाऽर्थः—अथवा-हे राजन्! एक ही है धेनु जिसके अत एव गौ के रक्षा न करने रूप अपराध होने से अत्यन्त क्रुद्ध हुये, अग्नि के तुल्य अपने गुरु वसिष्ठजी से यदि तुम डरते हो तो, उनके क्रोध को घड़े के समान बड़े २ स्तनों वाली करोड़ों गायों को देते हुये दूर करने में समर्थ हो॥ ४९ ॥

*सर्वताभावेन शरीररक्षणस्यैव कर्तव्यतामुपदिशन् सिंहः स्ववाक्यमुपसंहरति—*

**तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम्।**
**महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः॥ ५० ॥**

सञ्जीविनी—तद्रक्षेति। तत्तस्मात्कारणात्कल्याणपरम्पराणां भोक्तारम्। कर्मणि षष्ठी। ऊर्जो बलमस्यास्तीत्यूर्जस्वलम्। "ज्योत्स्नातमिस्रा" इत्यादिना वलच्प्रत्ययान्तो निपातः। आत्मदेहं रक्ष। ननु गामुपेक्ष्यात्मदेहरक्षणे स्वर्गहानिः स्यात्। नेत्याह—महीतलेति। ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रेण भूतलसम्बन्धमात्रेण भिन्नमैन्द्रमिन्द्रसम्बन्धि पदं स्थानमाहुः। स्वर्गान्न भिद्यत इत्यर्थः॥ ५० ॥

अन्वयः—तद्, कल्याणपरम्पराणाम्, भोक्तारम्, ऊर्जस्वलम्, आत्मदेहं, रक्ष, हि, ऋद्धं, राज्यं, महीतलस्पर्शनमात्रभिन्नम्, ऐन्द्रम्, पदम्, आहुः॥ ५० ॥

व्याख्या—तत् = ततः, तस्मात्कारणादित्यर्थः। कल्याणपरम्पराणां = भद्रपरिपाटीनाम्, एकस्मात्कल्याणादनन्तरमपरकल्याणस्य ततोऽप्युत्तरोत्तरकल्याणस्येति भावः। भोक्तारम् = अनुभवितारम्, ऊर्जस्वलं = बलवन्तं, पुष्टमिति भावः। आत्मदेहं = स्वशरीरं, रक्ष = पालय, हि = यतः, ऋद्धं = सुसमृद्धं, राज्य = राजभावो राजकर्म वा। महीतलस्पर्शनमात्रभिन्नम् = पृथ्वीस्वरूपस्पर्शेणैव पृथक्कृतं, केवलपृथ्वीतलस्पर्शेन भिन्नमिति भावः। ऐन्द्रम् = इन्द्रसम्बन्धि, पदं = स्थानम्, आहुः = ब्रुवन्ति, विद्वांस इति शेषः। पृथ्वीतलराज्यं स्वर्गरा-

ज्यान्न भिद्यत इति भावः ॥ ५० ॥

समासादि—कल्ये प्रातःकालेऽण्यन्त इति कल्याणानि (न० लिं०), तेषां परम्पराः कल्याणपरम्पराः (त० पु०) तासां कल्याणपरम्पराणाम्। ऊर्जो बलमस्यास्तीत्यूर्जस्वलः (पुं०) तमूर्जस्वलम्। आत्मनो देह आत्मदेहः (त० पु०), तमात्मदेहम्। मह्या तलं महीतलं (त० पु०), तस्य स्पर्शनं महीतलस्पर्शनं (त० पु०) तदेव प्रमाणमस्येति महीतलस्पर्शनमात्रं, तेन भिन्नम् महीतलस्पर्शनमात्रभिन्नं तत्तथोक्तम् (त० पु०)। राज्ञो भावः कर्म वा राज्यं तद्राज्यम् (न० लि०)। इन्द्रस्येदमैन्द्रं तदैन्द्रम् (न० लिं०) ॥ ५० ॥

व्याकरणं—रक्ष=रक्ष (पालने—अकारेत्)+लोट्, लोटः सिपो ह्यादेशे शपि हेर्लुकि रूपम्। कल्याणानि=कल्य+ङि+अण (शब्दे—अकारेत्)+घञ्+जस्, "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्प्रत्यये जसि रूपम्। भोक्तारम्=भुज (पालनाभ्यवहारयोः—अकारेत्)+तृच्+अम्। ऊर्जस्वलम्+ऊर्जस्+वलच्+अम्, "ज्योत्स्नातमिस्राश्टङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः" इति वलच्प्रत्ययो निपात्यतेऽमि रूपम्। महीतलस्पर्शनमात्रम्=महीतलस्पर्शनम्+सु+मात्रच्+सु, "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रच्प्रत्यये सोरमि रूपम्। ऐन्द्रम्=इन्द्र+ङस्+अण्+अम्, "तस्येदम्" इत्यणि णित्वादुपधावृद्धावमि रूपम्। आहुः=ब्रूञ् (व्यक्तायां वाचि—ञित्)+लट्, "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति लटो झेरुसादेशे धातोराहादेशे रूपम् ॥ ५० ॥

वाच्यान्तरं—तत्कल्याणपरम्पराणां भोक्तोर्जस्वल आत्मदेहस्त्वया रक्ष्यतां, हि ऋद्धं राज्यं महीतलस्पर्शनमात्रभिन्नमैन्द्रं पदमुच्यते विद्वद्भिः ॥ ५० ॥

कोशः—"श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः। "परम्पराऽन्वये वधे। परिपाट्याम् "इत्यनेकार्थसङ्ग्रहः। "ऊर्जस्तु कार्तिकोत्साहबलेषु प्राणनेऽपि च" इति मेदिनी। "ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः" इति चामरः। "तलं स्वरूपेऽधूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे। कानने कार्यबीजे च पुंसि तालमहीरुहे। चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना" इति। "स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्" इति। "मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्ये" इति च मेदिनी। "ऋद्धं सम्पन्नधान्ये च सुसंमृद्धौ च वाच्यवत्" इति ॥ ५० ॥

तात्पर्यार्थः—हे राजन्! त्वमुत्तरोत्तरसुखानां भोक्तारं स्वशरीरं रक्ष, यतो विद्वांसः स्वर्गात्पृथग्भूतं भवदीयं समृद्धं राज्यमिन्द्रराज्यं कथयन्ति ॥ ५० ॥

भाषाऽर्थः—इस कारण से हे राजन्! तुम उत्तरोत्तर सुखों का भोगकरने वाले अत्यन्त बल से युक्त अपने शरीर की रक्षा करो, क्योंकि विद्वान् लोग समृद्धिशाली राज्य को केवल पृथ्वीतल के सम्बन्ध होने से अलग हुआ इन्द्र सम्बन्धी स्थान (स्वर्ग) कहते हैं ॥ ५० ॥

*गुहागतसिंहभाषणप्रतिध्वनौ पर्वतकर्तृकं तदनुमोदनमुत्प्रेक्षमाणः कविराह—*

**एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन।**
**शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥**

सञ्जीविनी—एतावदिति। मृगेन्द्र एतावदुक्त्वा विरते सति गुहागतेनास्य सिंहस्य प्रतिस्वनेन शिलोच्चयः शैलोऽपि प्रीत्या तमेवार्थं क्षितिपालमुच्चैरभाषतेव। इत्युत्प्रेक्षा। भाषिरयं ब्रुविसमानार्थत्वाद् द्विकर्मकः। ब्रुविस्तु द्विकर्मकेषु पठितः। तदुक्तम्—(दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना॥) इति ॥ ५१ ॥

अन्वयः—मृगेन्द्रे, एतावद्, उक्त्वा, विरते, "सति", गुहागतेन, अस्य, प्रतिस्वनेन, शिलोच्चय, अपि, प्रीत्या, तम्, एव, अर्थं, क्षितिपालम्, उच्चैः, अभाषत, इव ॥ ५१ ॥

व्याख्या—मृगेन्द्रे = सिंहे, एतावद् = इयत्पर्यन्तम्, उक्त्वा = कथयित्वा, विरते = निवृत्ते, मौनीभूत इति यावत्। सतीति शेषः। गुहागतेन = गह्वरप्राप्तेन, अस्य = एतस्य, सिंहस्येति भावः। प्रतिस्वनेन = प्रतिशब्देन, शिलोच्चयः = पर्वतः, हिमालय इति यावद्। अपि = समुच्चये, प्रीत्या = प्रेम्णा, तम् = पूर्वोक्तम्, एव = अवधारणे, अर्थम् = अभिधेयं, क्षितिपालं = महीपतिं, दिलीपमिति यावद्। उच्चैः = तारस्वरेण, अभाषत = अकथयत्, इव = यथा ॥ ५१ ॥

समासादि—एतत्परिमाणमस्येत्येतावत् (न० लि०)। गुहां गतो गुहागतः (त० पु०), तेन गुहागतेन। क्षितिं पालयतीति क्षितिपालः (पुं०) तं क्षितिपालम् ॥ ५१ ॥

व्याकरणम्—एतावद् = एतद् + वतुप् + अम्, "यत्तदेतेभ्यः परिमाणे वतुप्" इति वतुप्प्रत्यये "आ सर्वनाम्नः" इत्याकारान्तादेशेऽमो लुकि रूपम्। उक्त्वा = वच (परिभाषणे—अकारेत्) + क्त्वा, कित्वाद् "वचिस्वपियजादीनां किति" इति संप्रसारणे पूर्वरूपे चस्य कुत्वेऽव्ययत्वात्सुपो लुकि रूपम्। अभाषत = अट् + भाष (व्यक्तायां वाचि—अकारेत्) + लङ्, लङस्तप्रत्यये शपि धातोरडागमे रूपम् ॥ ५१ ॥

वाच्यान्तरम्—मृगेन्द्र एतावदुक्त्वा विरते "सति" गुहागतेनास्य प्रतिस्वनेन शिलोच्चयेनापि प्रीत्या स एवार्थः क्षितिपालमुच्चैरभाष्यतेव ॥ ५१ ॥

कोशः—"मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः" इति। "प्रेमा ना प्रियता हार्दम्" इति। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति चामरः ॥ ५१ ॥

तात्पर्यार्थः—एतावत् कथयित्वा सिंहे तूष्णीम्भूते सति तस्य हिमालयगुहागतप्रतिध्वनिना पर्वतोऽपि सहवासकृतसौहार्देन तमेवार्थं नृपमुच्चैरभाषतेव ॥ ५१ ॥

भाषाऽर्थः—सिंह के इतना कह कर चुप हो जाने पर गुफा में पहुँची हुई उसकी प्रतिध्वनि द्वारा पर्वत भी प्रेम से मानो उसी बात को राजा दिलीप से जोर से कहने लगा ॥५१॥

*सिंहवचनं श्रुत्वा पुनर्दिलीपो बभाष इत्याह—*

**निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।**
**धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२ ॥**

संजीविनी—निशम्येति। देवानुचरस्येश्वरकिंकरस्य सिंहस्य वाचं निशम्य मनुष्यदेवो राजा पुनरप्युवाच। किंभूतः सन्। तेन सिंहेन यदध्यासितं व्याक्रमणम्। नपुंसके भावे क्तः। तेन कातरे अक्षिणी यस्यास्तया। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच्। "षिद्गौरादिभ्यश्च" इति ङीष्। किं वा वक्ष्यतीति भीत्यैवं स्थितयेत्यर्थः। धेन्वा निरीक्ष्यमाणः। अत एव सुतरां दयालुः सन्। सुतरामित्यत्र "द्विवचनविभज्य०" इत्यादिना सुशब्दात्तरप्। "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यनेनाम्प्रत्ययः। "तद्धितश्चासर्वविभक्तिः" इत्यव्ययसंज्ञा ॥ ५२ ॥

अन्वयः—देवानुचरस्य, वाचं, निशम्य, मनुष्यदेवः, पुनर्, अपि, उवाच, "किम्भूतः सन्" तदध्यासितकातराक्ष्या, धेन्वा, निरीक्ष्यमाणः, "अत एव" सुतरां, दयालुः, "सन्" ॥५२॥

व्याख्या—देवानुचरस्य = अमराभिसरस्य, महादेवकिङ्करस्य सिंहस्येति यावद्। वाचं = वाणीं, निशम्य = श्रुत्वा, मनुष्यदेवः = महाराजः, दिलीप इति यावत्। पुनर् = भूयः, अपि = समुच्चये, उवाच = जगाद, किम्भूतः सन्निति शेषः। तदध्यासितकातराक्ष्या = तदधिष्ठानाधीरनयनया, सिंहाक्रमणेनाकुलनेत्रवत्येति भावः। दिलीपः सिंहवचनस्य प्रत्युत्तरं किमदनुकूलं प्रतिकूलं वा दास्यतीति भयेनैवं स्थितयेत्यर्थः। धेन्वा = गवा, नन्दिन्येति यावद्। निरीक्ष्यमाणः = दृश्यमानः, "अत एव" इति शेषः। सुतरां = नितराम्, अत्यन्तमिति यावद्। दयालुः = कारुणिकः, सन्निति शेषः ॥ ५२ ॥

समासादि—देवस्यानुचरो देवानुचरः (त० पु०) तस्य देवानुचरस्य। मनुष्याणां मनुष्ये-

षु वा देवो मनुष्यदेवः (त०पु०)। तेनाध्यासितं तदध्यासितं (त०पु०), ईषत्तरत इति कातरे (न० लिं०), तदध्यासितेन कातरे तदध्यासितकातरे (त० पु०), तदध्यासितकातरे अक्षिणी यस्याः सा तदध्यासितकातराक्षी (व० व्री०), तया तथोक्तया। निरीक्ष्यत इति निरीक्ष्यमाणः (पुं०) ॥ ५२ ॥

व्याकरणं—निशम्य = नि + शमु (उपशमे-उदित्) + क्त्वा + ल्यप्। उवाच = वच (परिभाषणे—अकारेत् लिट्) + लिटस्तिपो णलादेशे धातोर्द्वित्वेऽभ्यासस्य "लिट्यभ्यासस्योभयेषाम्" इति सम्प्रसारणे पूर्वरूपेऽभ्यासहलो लोपे तत उपधावृद्धौ रूपम्। अध्यासितः = अधि + आसु(उपवेशने-उदित्) + इट् + क्तः + सु, "नपुंसके भावे क्तः" इति क्तप्रत्यये रूपम्। कातरे = कु + तॄ (प्लवनसन्तरणयोः) + अच् + औ, पचादित्वादचि तत ईषदर्थे "ईषदर्थे" इति तत्पुरुषसमासे कोः काऽऽदेशे तत औरूपम्। तदध्यासितकातराक्ष्या = तदध्यासितकातर + औ, अक्षि + औ + षच् + ङीप् + टा, बहुव्रीहिसमासे "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति समासान्ते षचि प्रत्यये षित्वाद् "षिद्गौरादिभ्यश्च" इति ङीषि टारूपम्। निरीक्ष्यमाणः = निर् + (ईक्ष (दर्शने—अकारेत्) + यक्) निरीक्ष्य + लट् + शानच् + सु ॥ ५२ ॥

वाच्यान्तरं—देवानुचरस्य वाचं निशम्य मनुष्यदेवेन पुनरप्यूचे, तदध्यासितकातराक्ष्या धेन्वा निरीक्ष्यमाणेनात एव सुतरां दयालुना सता ॥ ५२ ॥

को(१)शः—"देवं हृषीके देवस्तु नृपतौ तोयदे सुरे। देवी कृताभिषेकायां तेजनीपृक्कयोरपि" इत्यनेकार्थसंग्रहः। "अधीरे कातरः" इत्यमरः ॥ ५२ ॥

तात्पर्यार्थः—शङ्करकिङ्करस्य सिंहस्य वाचं श्रुत्वा "दिलीपः किं वक्ष्यतीति" हेतोः सिंहाक्रान्तयाऽधीरलोचनयाऽवलोक्यमानो राजा पुनरप्युवाच ॥ ५२ ॥

भाषाऽर्थ.—शङ्कर भगवान् के नौकर (सिंह) की वाणी को सुन कर मनुष्यों के राजा (वे दिलीप) फिर भी (उससे) बोले, जो कि—उस सिंह के द्वारा आक्रान्त होने से आकुल नेत्रों वाली नन्दिनी से देखे जाते हुये अत एव अत्यन्त दयालु हो रहे थे ॥ ५२ ॥

किमुवाचेत्याह—

क्षतात्किल त्रायत इत्युदग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढः।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥

संजीविनी—क्षतादिति। 'क्षणु हिंसायाम्' इति धातोः संपदादित्वात्क्विप्। "गमादीनाम्" इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम्। क्षतो नाशात् त्रायत इति क्षत्त्रः। सुपीति योगविभागात्कः। तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति—क्षतादित्यादिना। उदग्र उन्नतः क्षत्त्रस्य क्षत्त्रवर्णस्य शब्दो वाचकः क्षत्त्रशब्द इत्यर्थः। क्षतात्त्रायत इति व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु। नाश्वकर्णादिवत्केवलरूढः किंतु पङ्कजादिवद्योगरूढ इत्यर्थः। ततः किमित्यत आह—तस्य क्षत्त्रशब्दस्य विपरीतवृत्तेर्विरुद्धव्यापारस्य क्षतत्राणमकुर्वतः पुंसो राज्येन किम्। उपक्रोशमलीमसैर्निन्दामलिनैः। "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः। "ज्योत्स्नातमिस्रा०" इत्यादिना मलीमसशब्दो निपातितः। 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः। तैः प्राणैर्वा किम्। निन्दितस्य सर्वं व्यर्थमित्यर्थः। एतेन "एकातपत्रम्" (२।४७) इत्यादिना श्लोकद्वयेनोक्तं प्रत्युक्तमिति वेदितव्यम् ॥ ५३ ॥

अन्वयः—उदग्रः, क्षत्त्रस्य, शब्दः, क्षतात्, त्रायते, इति, "व्युत्पत्त्या" भुवनेषु,

---

(१) "ग्रन्थविस्तरभयात्पूर्वोक्तशब्दानां समासादिव्याकरणकोशानां पुनरलेखनेन पूर्वोपात्तश्लोकेषु तत्तच्छब्दानां समासादिप्रभृतिदर्शने श्रमो विधेय इति साञ्जलि विज्ञप्तिः "सुधा" सम्पादकस्य।

रूढः, किल, तद्विपरीतवृत्तेः, राज्येन, किम्, उपक्रोशमलीमसैः, प्राणैः, वा, "किम्" ॥ ५३ ॥

व्याख्या—उदग्रः = उच्छ्रितः, क्षत्रस्य = क्षत्त्रवर्णस्य, शब्दः = वाचकः, क्षत्त्रशब्द इति भावः। क्षताद् = नाशात्, त्रायते = रक्षति, इति = हेतोः, इति व्युत्पत्त्येति भावः। भुवनेषु = लोकेषु, रूढः = योगरूढः, पङ्कजादिवदिति भावः। किल = प्रसिद्धौ, प्रसिद्धः खल्विति भावः। तद्विपरीतवृत्तेः = पूर्वोक्तक्षत्त्रशब्दविरुद्धवर्त्तनस्य, नाशाद्रक्षणमकुर्वतः पुरुषस्येति भावः। राज्येन = राजभावेन, नृपत्वेनेति भावः। किम् = किम्प्रयोजनं, न किमपि प्रयोजनमस्तीति भावः। उपक्रोशमलीमसैः = निन्दामलिनैः, निन्दया मलिनैरिति यावत्। प्राणैः = असुभिः, वा = अथवा, किम् = किम् प्रयोजनं, न किमपीति भावः। निन्दितपुरुषस्य जीवनमपि वृथैवेति भावः॥ ५३ ॥

समासादि—राज्ञो भावः कर्म वा राज्यं (न०लिं) तेन राज्येन। तस्य विपरीता तद्विपरीता(त०पु०)तद्विपरीता वृत्तिर्यस्य स तद्विपरीतवृत्तिः(ब०व्री०), तस्य तद्विपरीतवृत्तेः। मलाः सन्त्येषामिति मलीमसाः(त०पु०), उपक्रोशेन मलीमसा उपक्रोशमलीमसाः (त०पु०) तैरुपक्रोशमलीमसैः॥ ५३॥

व्याकरणं—त्रायते = त्रैङ् (पालने—ङित्) + शप् + लट्, लटस्तप्रत्यये शपि धातोरायादेशे रूपम्। मलीमसाः = मल + ईमस + जस्, "ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः" इति मलशब्दादीमसप्रत्यये रूपम्॥ ५३ ॥

वाच्यान्तरम्—उदग्रेन क्षत्रस्य शब्देन क्षतात् त्रायत इति भुवनेषु रूढेन किल "भूयते" तद्विपरीतवृत्ते राज्येन किमुपक्रोशमलीमसैः प्राणैर्वा किम्॥ ५३ ॥

कोशः—"उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इति। "शाब्दे शब्दस्तु वाचकः" इति चामरः। "किम् कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी॥ ५३ ॥

तात्पर्यार्थः—क्षतात् त्रायत इति व्युत्पत्त्या पङ्कजादिवद् लोकेषु योगरूढः क्षत्त्रशब्दः प्रसिद्धोऽस्त्यतस्तस्य क्षत्रशब्दस्य विरोधव्यापारवतः क्षत्त्रियपुरुषस्य राज्येन निन्दितजीवनेन च किमपि प्रयोजनं नास्ति॥ ५३ ॥

भाषार्थः—उन्नत जो क्षत्र वर्ण शब्दका वाचक क्षत्र शब्द है सो "क्षत अर्थात् नाश से जो बचावै वह क्षत्रिय कहलाता है" इस व्युत्पत्ति से संसार में "पङ्कज के तरह" योग रूढि से प्रसिद्ध है, अतः, उस क्षत्र शब्द से विपरीत व्यापार (नाश से नहीं रक्षा करने वाले) रखने वाले पुरुष के राज्य, और अपकीर्त्ति से मलिन हुये प्राण ये दोनों व्यर्थ है॥ ५३ ॥

"अथैकधेनोः" (२।४९) इत्यत्रोत्तरमाह—

**कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम्।**
**इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयाऽस्याम्॥ ५४ ॥**

संजीविनी—कथमिति। अनुनयः। क्रोधापनयः। चकारो वाकारार्थः। महर्षेरनुनयो वाऽन्यासां पयस्विनीनां दोग्ध्रीणां गवां विश्राणनाद्दानात्। 'त्यागो विहापितं दानमुत्सर्जनविसर्जने। विश्राणनं वितरणम्' इत्यमरः। कथं नु शक्यः। न शक्य इत्यर्थः। अत्र हेतुमाह—इमां गां सुरभेः कामधेनोः "पञ्चमी विभक्ते" इति पञ्चमी। अनूनामन्यूनामवेहि जानीहि। तर्हि कथमस्याः परिभवो भूयादित्याह—रुद्रौजसेति। अस्यां गवि त्वया कर्त्रा प्रहृतं तु प्रहारस्तु। नपुंसके भावे क्तः। रुद्रौजसेश्वरसामर्थ्येन न तु स्वयमित्यर्थः। "सप्तम्यधिकरणे च" इति सप्तमी॥ ५४ ॥

अन्वयः—महर्षेः, अनुनयः, च, अन्यपयस्विनीनां, विश्राणनात, कथं, नु, शक्यः, इमां, सुरभेः, अनूनाम्, अवेहि, अस्यां, त्वया, प्रहृतं, तु, रुद्रौजसा॥ ५४ ॥

व्याख्या—महर्षेः = बृहत्सत्यवचसः, वसिष्ठस्येति यावद् । अनुनयः = सान्त्वनं, क्रोधदूरीकरणमिति यावद् । च = वा, अन्यपयस्विनीनाम् = इतरक्षीरवतीनाम् , अन्यदोग्ध्रीणां गवामिति भावः । विश्राणनाद् = दानात्, कथं = केन प्रकारेण, नु = विकल्पार्थे, शक्यः = शक्तुमर्हः, न शक्य इत्यर्थः । इमाम् = एतां, समीपस्थां नन्दिनीमिति यावत् । सुरभेः = कामधेनोः, अनूनाम् = अन्यूनां, तत्कल्पामिति यावद् । अवेहि = जानीहि, त्वमिति शेषः । अस्याम् = एतस्यां, त्वया = भवता प्रहृतम् = आक्रमणं, तु = विशेषेऽर्थे, समुच्चये वा । रुद्रौजसा = शङ्करबलेन, अवेहीति शेषः ॥ ५४ ॥

समासादि—शक्तुमर्हः शक्यः (पुं०) । अन्याश्च ताः पयस्विन्य इत्यन्यपयस्विन्यः (त० पु० क० धा०) तासामन्यपयस्विनीनाम् । न ऊनेत्यनूना तामनूनां (न० त० पु०) । रुद्रस्यौज इति रुद्रौजस्तेन रुद्रौजसा (त० पु०) ॥ ५४ ॥

व्याकरणम्—अवेहि = अव + आङ् + इण् (गतौ—णित्) + लोट्, लोटः सिपो ह्यादेशे रूपम् । प्रहृतं = प्र + हृञ् (हरणे—ञित्) + क्तः + सु, "नपुंसके भावे क्तः" इति क्तप्रत्यये रूपम् ॥ ५४ ॥

वाच्यान्तरम्—महर्षेरनुनयेन वाऽन्यपयस्विनीनां विश्राणनात्कथं नु शक्येन "भूयते" इयं सुरभेरनूना "त्वया" अवेयताम्, अस्यां त्वया प्रहृतेन तु रुद्रौजसा "अभूयत" ॥ ५४ ॥

कोशः—"कथं प्रश्ने प्रकारार्थे सम्भ्रमे सम्भवेऽपि च" इति । "नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः" इति चानेकार्थसङ्ग्रहः । "उपमन्त्रयते चोपवदते सान्त्वयत्यपि । चपत्युपच्छन्दयति सामयत्यपि सान्त्वने । सहानुनयतीत्येवमात्मने" इत्याख्यातचन्द्रिका । "ओजो दीप्तिप्रकाशयोः । अवष्टम्भे बले धातुतेजसि" इत्यनेकार्थसङ्ग्रहः ॥ ५४ ॥

तात्पर्यार्थः—अन्यासां दोग्ध्रीणां गवां प्रदानान्महर्षेः क्रोधशान्तिर्न भवितुमर्हति यत इयं कामधेनुकल्पा, अस्यां त्वया यदाक्रमणं कृतं तत्तु शङ्करतेजसा न तु स्वसामर्थ्येनेति त्वं विद्धि ॥ ५४ ॥

भाषाऽर्थः—और महर्षि वसिष्ठजी के क्रोध की शान्ति दूसरी दूधदेने वाली गायों के देने से किस प्रकार हो सकती है ? "अर्थात् कभी नहीं हो सकती है" क्योंकि—इसे कामधेनु से कम नहीं समझना चाहिये "अर्थात् तुल्य ही समझना चाहिये" और इस के ऊपर जो तुम्हारा आक्रमण हुआ है, उसे भी शङ्कर भगवान् की सामर्थ्य से ही समझना चाहिये न कि अपनी सामर्थ्य से ॥ ५४ ॥

तर्हि किं चिकीर्षितमित्याह—

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियाऽर्थः ॥ ५५ ॥

सञ्जीविनी—सेयमिति । सेयं गौर्मया निष्क्रीयते प्रत्याह्रियतेऽनेन परिगृहीतमिति निष्क्रयः प्रतिशीर्षकम् । "एरच्" इत्यच्प्रत्ययः । स्वदेहार्पणमेव निष्क्रयस्तेन । भवत्तस्त्वत्तः । पञ्चम्यास्तसिल् । मोचयितुं न्याय्या न्यायादनपेता । युक्तेत्यर्थः । "धर्मपथ्यर्थन्यायादनपेते" इत्यनेन यत्प्रत्ययः । एवं सति तव पारणा भोजनं विहता न स्यात् । मुनेः क्रिया होमादिः स एवार्थः प्रयोजनम् । स चालुप्तो भवेत् । स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यमिति भावः ॥५५॥

अन्वयः—सा, इयं, मया, स्वदेहार्पणनिष्क्रयेण, भवत्तः, मोचयितुं, न्याय्या, एवं, "सति", तव, पारणा, विहता, न, स्याद्, मुनेः, क्रियाऽर्थः, च, अलुप्तः, भवेत् ॥ ५५ ॥

व्याख्या—सा = पूर्वोक्ता, धेनुरिति यावद् । इयम् = एषा, पुरो दृश्यमानेति भावः । मया = दिलीपेन, स्वदेहार्पणनिष्क्रयेण = आत्मशरीरत्यागमूल्येन, स्वशरीरार्पणरूपनिष्क्रयेणेति यावद् । भवत्तः = त्वत्तः, त्वत्सकाशादिति यावद् । मोचयितुं = हापयितुं । त्वदाक्रमणाद्रक्षि-

तुमिति भावः। न्याय्या = न्यायादनपेता, न्याय्युक्तेति यावद्। एवम् = इत्थं, "सति" तव = भवतः, पारणा = व्रतान्तभोजनं, विहता = नष्टा, न = नहि, स्याद् = भवेद्, मुने = वाचंयमस्य, वसिष्ठस्येति भावः। क्रियाऽर्थः = कृत्यप्रयोजनं, होमादिकर्तव्यकर्मरूपप्रयोजनमिति भावः। च = अन्वाचयेऽर्थे। अलुप्तः = अनष्टः। भवेत् = स्याद्॥ ५५॥

समासादि—स्वस्य देहः स्वदेहः (त० पु०)। तस्यार्पणं स्वदेहार्पणं (त० पु०), निष्क्रीयते प्रत्याह्रियतेऽनेनेति निष्क्रयः (पुं०), स्वदेहार्पणमेव निष्क्रयः स्वदेहार्पणनिष्क्रयः (क० धा०) तेन तथोक्तेन। न्यायादनपेता न्याय्या (स्त्री०)। भवत इति भवत्तः (अ०)। न लुप्तोऽलुप्तः (न० त० पु०)। क्रियैवार्थः क्रियाऽर्थः (क० धा०)॥ ५५॥

व्याकरणं—मोचयितुं = (मुच्लृ (मोक्षणे-लृदित्) + णिच्) मोचि + इट् + तुमुन्, धातोर्णिचि लघूपधगुणे ततस्तुमुनि पुनर्गुणे वलादिलक्षण इडागमेऽव्ययत्वात्सुपो लुकि रूपम्। भवत्तः = भवत् + ङसि + तसिल् "पञ्चम्यास्तसिल्", इति तसिल्प्रत्ययेऽव्ययत्वात्सुपो लुकि रूपम्। स्यात् = अस (भुवि-अकारेत्) + यासुट् + वि० लि०, "श्नसोरल्लोपः" इत्यकारल्लोपे रूपम्। भवेत् = भू (सत्तायाम्) + यासुट् + वि० लि०, लिङस्तिपि शपि गुणेऽवादेशे "अतो येयः" इतीयादेशे यकारल्लोपे रूपम्॥ ५५॥

वाच्यान्तरं—तयाऽनया मया स्वदेहार्पणनिष्क्रयेण भवत्तो मोचयितुं न्याय्यया "भूयते", एवं "सति" तव पारणया विहतया न भूयेत मुनेः क्रियाऽर्थेन चालुप्तेन भूयेत॥५५॥

कोशः—"युक्तमौपयिकं लभ्यं भजमानाभिनीतवत्। न्याय्यं च त्रिषु षट्" इत्यमरः। "एवं प्रकारे स्यादङ्गीकारेऽवधारणे। अनुप्रश्ने परकृतावुपमापृच्छयोरपि" इति मेदिनी॥५५॥

तात्पर्यार्थः—सेयं मया स्वशरीरदानविनिमयेन भवतो मोचयितुं युक्ताऽस्ति, एवं कृते सति तव चिरकालाद् बुभुक्षितस्य व्रतान्तभोजनं नष्टं न भवेत्, तथा वसिष्ठमहर्षेर्होमादिक्रियारूपं प्रयोजनमपि लुप्तं न स्यात्॥ ५५॥

भाषाऽर्थः—कामधेनु के तुल्य उसी इस नन्दिनी का मुझे अपने शरीर का त्याग कर देना ही रूप निष्क्रय के द्वारा आप से छुड़ाना न्याय सङ्गत है, ऐसा करने पर आपका व्रत के अन्त का भोजन (पारणा) भी नष्ट नहीं होगा, और वसिष्ठ महर्षि का होमादि रूप प्रयोजन भी नष्ट नहीं होगा॥ ५५॥

अत्र भवानेव प्रमाणमित्याह—

भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ।
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन॥ ५६॥

सञ्जीविनी—भवानिति। परवान्स्वामिपरतन्त्रो भवानपि। 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः। इदं वक्ष्यमाणमवैति। भवताऽनुभूयत एवेत्यर्थः। "शेषे प्रथमः" इति प्रथमपुरुषः। किमित्यत आह—हि यस्माद्धेतोः। 'हि हेतावधारणे' इत्यमरः। तव देवदारौ विषये महान्यत्नः। महता यत्नेन रक्ष्यत इत्यर्थः। इदंशब्दोक्तमर्थं दर्शयति-स्थातुमिति। रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयमक्षतेनाव्रणेन। नियुक्तेनेति शेषः। नियोक्तुः स्वामिनोऽग्रे स्थातुं शक्यं नहि॥ ५६॥

अन्वयः—परवान्, भवान्, अपि, इदम्, अवैति, हि, तव, देवदारौ, महान्, यत्नः, रक्ष्यं, विनाश्य, स्वयम्, अक्षतेन, नियोक्तुः अग्रे, स्थातुं, शक्यं, नहि॥ ५६॥

व्याख्या—परवान् = पराधीनः, शङ्कराज्ञाऽधीन इति भावः। भवान् = त्वम्, अपि = समुच्चयेऽर्थे, इदम् = एतद्, वक्ष्यमाणमिति यावद्। अवैति = जानाति, भवताऽप्यनुभूयत एवेति भावः। हि = यतः, यस्मात्कारणादिति भावः। तव = भवतः, देवदारौ = पारिभद्रे, देवदारुवृक्ष इति यावद्। महान् = अतिशयः, यत्नः = प्रयासः, महान् रक्षणप्रयास इति भावः।

अस्तीति शेषः । रक्ष्यं = पाल्यं, रक्षणार्हं वस्त्वित्ति भावः । विनाश्य = अभावं गमयित्वा, स्वयम् = आत्मना, नियुक्तेनेति शेषः । अक्षतेन = व्रणरहितेन, नियोक्तुः = आदेष्टुः, स्वामिन इति भावः । अग्रे = पुरतः, स्थातुं = वस्तुम्, अवस्थानं कर्त्तुमिति यावद् । शक्यं = शक्नुमह, युक्तमिति भावः । नहि = न, सर्वथा नियुक्तेन जनेन रक्ष्यं वस्तु स्वप्राणव्ययेनापि रक्षणीयमिति भावः ॥ ५६ ॥

समासादि—परः स्वाम्यस्यास्तीति परवान् (पुं०) । नियुनक्तीति नियोक्ता (पुं०) तस्य नियोक्तुः । न क्षतोऽक्षतः (न० त० पु०) तेनाक्षतेन ॥ ५६ ॥

व्याकरणम्—परवान् = पर + मतुप् + सु । अवैति = अव + आङ् + इण् ( गतौ—णित् ) + लट्, लटस्तिपि शपो लुकि रूपम् । स्थातुं = ष्ठा (गतिनिवृत्तौ) + तुमुन् । नियोक्तुः = नि + युजिर् (योगे—इरित्) + तृच् + ङस् । विनाश्य = वि + (णश (अदर्शने—अकारेत्) + णिच्) नाशि + क्त्वा + ल्यप् । अक्षतेन = नञ् + क्षत + टा ॥ ५६ ॥

वाच्यान्तरम्—परवता भवताऽपीदमवेयते हि तव देवदारौ महता यत्नेन "भूयते", रक्ष्यं विनाश्य स्वयमक्षतो नियोक्तुरग्रे स्थातुं (कश्चिदपि) न शक्नोति ॥ ५६ ॥

कोशः—"स्वयमात्मना" इत्यमरः ॥ ५६ ॥

तात्पर्यार्थः—किन्च निजभर्त्तुः शङ्करस्याधीनस्थो भवानपीदं जानात्येव यतो भवतोऽप्यस्य देवदारुतरौ रक्षणे महान् प्रयत्नो लक्ष्यतेऽत एव स्वयमेव क्षतरहितेन सता रक्षणार्हं वस्तु विनाश्य स्वामिनोऽग्रे स्थातुं नोचितम् ॥ ५६ ॥

भाषाऽर्थः—पराधीन होते हुये आप भी इस (आगे कही जाने वाली) बात को जानते हैं, क्योंकि आपका देवदारु के विषय में "रक्षा करने के लिये" बहुत भारी प्रयत्न है । "अत एव" रक्षा करने के योग्य वस्तु का नाश कर के स्वयम् विना नष्ट हुये ही नौकर स्वामी के आगे उपस्थित होने के लिये समर्थ नहीं हो सक्ता ॥ ५६ ॥

सर्वथा चैतदप्रतिहार्यमित्याह—

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥५७॥

सञ्जीविनी—किमिति । किमपि किं वाऽहं तवाहिंस्योऽवध्यो मतश्चेत्तर्हि मे यश एव शरीरं तस्मिन्दयालुः कारुणिको भव । 'स्याद्दयालुः कारुणिकः' इत्यमरः । ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशोऽत आह—एकान्तेति । मद्विधानां मादृशानां विवेकिनामेकान्तविध्वंसिष्ववश्यविनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरेष्वनास्था खल्वनपेक्षैव । 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः ॥ ५७ ॥

अन्वयः—किमपि, अहं, तव, अहिंस्यः, मतः, चेत्, "तर्हि", मे, यशःशरीरे, दयालुः, भव, मद्विधानाम्, एकान्तविध्वंसिषु, भौतिकेषु, पिण्डेषु, अनास्था, खलु ॥ ५७ ॥

व्याख्या—किमपि = किन्च, अहं = दिलीपः, तव = भवतः, सिंहस्येति भावः । अहिंस्यः = हिंसाऽनर्हः, अहिंसायोग्य इति यावद् । मतः = अभीष्टः, चेद् = यदि, "तर्हि" इति शेषः । मे = मम, दिलीपस्येति भावः । यशःशरीरे = कीर्त्तितनौ, कीर्त्तिरूपदेह इति भावः । दयालुः = कृपालुः, भव = स्याः, त्वमिति शेषः । मद्विधानां = मादृशानां, यशोधनानामिक्ष्वाकुवंश्यानां राज्ञामिति भावः । एकान्तविध्वंसिषु = नितान्तनश्वरेषु, भौतिकेषु = भूतनिर्मितेषु, क्षित्यप्तेजोवाय्वाकाशेतिपञ्चभूतरचितेष्विति भावः । पिण्डेषु = देहेषु, अनास्था = अनपेक्षा, खलु = एव ॥ ५७ ॥

समासादि—हिंसितुं योग्यो हिंस्यः (पुं०), न हिंस्योऽहिंस्यः (न० त० पु०) । यश एव शरीरं यशःशरीरं (क० धा०), तस्मिन् यशःशरीरे । विशेषेण ध्वंसितुं शीलमेषामिति

विध्वंसिनः ( पुं० ), एकान्तं विध्वंसित इत्येकान्तविध्वंसिनः (त० पु०), तेष्वेकान्तविध्वंसिषु। मम विधेव विधा प्रकारो येषान्ते मद्विधाः (त० पु०), तेषां मद्विधानाम् । नः आस्थेत्यनास्था (न० त० पु०) । भूतानां विकारा भौतिकाः (पुं) तेषु भौतिकेषु ॥ ९७ ॥

व्याकरणम्—अहिंस्यः = नञ् + हिसि (हिंसने—इदित्) + ण्यत् + सु । मतः = मनु (अवबोधने—उदित्) + क्तः + सु। भव = भू (सत्तायाम्) + शप् + लोट्, लोटः सिपो ह्यादेशे तस्य लुकि रूपम् । विध्वंसिनः = वि + ध्वंसु (अवस्रंसने—उदित्) + णिनिः + जस् । अनास्था = नञ् + आस्था + सु ॥ ९७ ॥

वाच्यान्तरं—किमपि मया तवाहिंस्येन मतेन "भूयते" चेत् "तर्हि" मे यशःशरीरे "त्वया" दयालुना भूयताम्, मद्विधानामेकान्तविध्वंसिषु भौतिकेषु पिण्डेष्वनास्थया खलु "भूयते" ॥ ९७ ॥

कोशः—"तीव्रैकान्तनितान्तानि गाढबाढदृढानि च" इत्यमरः । "पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निकाये च गोलसिह्लकयोरपि । ओड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । पिण्डी तु पिण्डीतगरेऽलाबुखर्जूरभेदयोः" इति मेदिनी ॥ ९७ ॥

तात्पर्यार्थः—किञ्च यद्यहं केन चित् कारणेन भवतामवध्यः स्यान्तर्हि भवान् मम यशोरूपशरीरे दयालुर्भूत्वा नश्वरस्य पञ्चभूतनिर्मितमस्य शरीरस्य भक्षणेन शाश्वतीं कीर्त्तिं रक्षतु॥९७॥

भाषाऽर्थः—और मैं यदि तुम्हारे समक्ष में अवध्य हूँ तो मेरे यश रूप शरीर के विषय में तुम दयायुक्त हो, क्योंकि हमारे ऐसे लोगों की अवश्य नष्ट होने वाले पृथ्वी-जल-तेज-वायु-आकाश-इन पांच महाभूतों से बने हुये शरीर में अपेक्षा नहीं रहती है ॥ ९७ ॥

सौहार्दादहमनुसरणीयोऽस्मीत्याह—

**संबन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ।**
**तद् भूतनाथानुग ! नार्हसि त्वं संबन्धिनो मे प्रणयं विहन्तुम् ॥५८॥**

सञ्जीविनी—सम्बन्धमिति । संबन्धं सख्यम् । आभाषणमालापः पूर्वं कारणं यस्य तमाहुः । 'स्यादाभाषणमालापः' इत्यमरः । स तादृक्संबन्धो वनान्ते संगतयोर्नावावयोर्वृत्तो जातः । तत्ततो हेतोर्हे भूतनाथानुग शिवानुचर ! । एतेन तस्य महत्त्वं सूचयति । अत एव सम्बन्धिनो मित्रस्य मे प्रणयं याच्ञाम् । 'प्रणयास्त्वमी । विश्रम्भयाच्ञाप्रेमाणः' इत्यमरः । हन्तुं नार्हसि ॥ ९८ ॥

अन्वयः—सम्बन्धम्, आभाषणपूर्वम्, आहुः, सः, वनान्ते, सङ्गतयोः, नौ, वृत्तः, तद्, भूतनाथानुग !, त्वं, सम्बन्धिनः, मे, प्रणयं, विहन्तुं, न, अर्हसि ॥ ९८ ॥

व्याख्या—सम्बन्धं = सम्मिलनम्, मित्रत्वमिति भावः । आभाषणपूर्वम् = आलापप्रथमम् । परस्परवार्त्तालापजन्यमिति भावः । आहुः = ब्रुवन्ति, "विद्वांसः" इति शेषः । सः = पूर्वोक्तः, आलापजन्यः सम्बन्ध इति भावः । वनान्ते = काननप्रान्ते, सङ्गतयोः = मिलितयोः, नौ = आवयोः, वृत्तः = भूतः, तत् = ततः, तस्मात् कारणादिति यावद् । भूतनाथानुग ! = महेश्वरानुचर !, हे सिंह ! इति भावः । "अत एव," सम्बन्धिनः = मित्रतारूपसम्बन्धवतः, मे = मम, दिलीपस्येति भावः । प्रणयं = याच्ञां, धेनुं मुक्त्वा तत्स्थाने मां भक्षयेतिरूपां प्रार्थनामिति भावः । हन्तुं = नाशयितुं, विफलीकर्त्तुमिति भावः । न = नहि, अर्हसि = योग्योऽसि ॥ ९८ ॥

समासादि—आभाषणं पूर्वं यस्य स आभाषणपूर्वः (ब० व्री०) तमाभाषणपूर्वम् । वनस्यान्तो वनान्तः (त० पु०) तस्मिन् वनान्ते । भूतानां नाथो भूतनाथः (त० पु०), अनु पश्चाद् गच्छतीत्यनुगः (पुं०), भूतनाथस्यानुगो भूतनाथानुगः (त० पु०) तत्सम्बुद्धौ हे भूतनाथानुग ! । सम्बन्धोऽस्त्यस्येति सम्बन्धी (पुं०) तस्य सम्बन्धिनः ॥९८॥

व्याकरणम्—आहुः = ब्रूञ् (व्यक्तायां वाचि—जित्) + लट्, "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति धातोराहादेशे लटो झेरुसादेशे च रूपम्। अर्हसि = अर्ह (पूजायाम्-अकारेत्) + शप् + लट्, लटः सिपि रूपम्। सम्बन्धिनः = सम्बन्ध + सु + इनिः + ङस्, "अत इनिठनौ" इतीनिप्रत्यये रूपम्। विहन्तुं = वि + हन (हिंसागत्योः-अकारेत्) + तुमुन् ॥ ५८ ॥

वाच्यान्तरं—सम्बन्ध आभाषणपूर्व उच्यते "विद्वद्भिः, तेन वनान्ते सङ्गतयोर्नौ वृत्तेन "अभूयत" तद् भूतनाथानुग ! त्वया सम्बन्धिनो मे प्रणयो विहन्तुं नार्ह्यते ॥ ५८ ॥

कोशः—"पूर्वन्तु पूर्वजे। प्रागग्रे श्रुतिभेदे च" इत्यनेकार्थसङ्ग्रहः। "अन्त स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि" इति हैमः। "सङ्गतौ समियर्त्तीति सङ्गच्छति समृच्छति। अकर्मकास्त्वात्मनेऽमी सम्बध्नाति मिलत्यपि। समवैति व्यतिषजत्येवं सचत उच्यति" इत्याख्यातचन्द्रिका ॥ ५८ ॥

तात्पर्यार्थः—यत् परस्परालापजन्यं सख्यं भवति, तदावयोर्वनमध्ये मिलितयोर्जातमत एव हे शिवानुचर सिंह ! मित्रस्य मे प्रार्थनां विफलीकर्त्तुं त्वं योग्यो नासि ॥ ५८ ॥

भाषाऽर्थः—सम्बन्ध (मैत्री) को जो बातचीत से उत्पन्न हुआ लोग कहते हैं, वह वन के बीच में मिले हुये हम दोनों का हो चुका है, इस कारण से हे शिवजी के अनुचर सिंह ! तुम सम्बन्धी मुझ दिलीप की प्रार्थना को विफल करने के लिये योग्य नहीं हो ॥ ५८ ॥

*अथ तथाऽस्त्वित्युक्तवते सिंहाय भक्षणार्थं स्वदेहं दातुकामस्य दिलीपस्य पिण्डरूपेणावस्थानमाह—*

**तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः।**
**स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥**

सञ्जीविनी—तथेतीति। गामुक्तवते हरये सिंहाय। 'कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः' इति शाश्वतः। सद्यस्तत्क्षणे प्रतिष्टम्भात्प्रतिबन्धाद्विमुक्तो बाहुर्यस्य स दिलीपः। न्यस्तशस्त्रस्त्यक्तायुधः सन्। स्वदेहम्। आमिषस्य मांसस्य। 'पललं क्रव्यमामिषम्' इत्यमरः। पिण्डं कवलमिव। उपानयत्समर्पितवान्। एतेन निर्ममत्वमुक्तम् ॥ ५९ ॥

अन्वयः—तथा, इति, गाम्, उक्तवते, हरये, सद्यः, प्रतिष्टम्भविमुक्तबाहुः, सः, न्यस्तशस्त्रः, "सन्" स्वदेहम्, आमिषस्य, पिण्डम्, इव, उपानयत् ॥ ५९ ॥

व्याख्या—तथा = तेन प्रकारेण, यथा भवान् ब्रवीति तथैव करिष्यामीति भावः। इति = इतिस्वरूपां। गां = गिरं, वाणीमिति यावद्। उक्तवते = कथितवते, हरये = सिंहाय, सद्यः = तत्क्षणे, प्रतिष्टम्भविमुक्तबाहुः = स्तम्भनत्यक्तभुजः, सः = पूर्वोक्तः, दिलीप इति भावः। न्यस्तशस्त्रः = परित्यक्तायुधः, सन्निति शेषः। स्वदेहम् = आत्मशरीरम्, आमिषस्य = पललस्य, मांसस्येति यावत्। पिण्डं = कवलम्, इव = यथा, उपानयत् = उपाहरत्, उपहारं कृतवानिति यावत् ॥ ५९ ॥

समासादि—प्रतिष्टम्भाद्विमुक्तः प्रतिष्टम्भविमुक्तः। (त०पु०), प्रतिष्टम्भविमुक्तो बाहुर्यस्य स प्रतिष्टम्भविमुक्तबाहुः (ब० व्री०)। न्यस्तं शस्त्रं येन स न्यस्तशस्त्रः (ब० व्री०)। स्वस्य देहः स्वदेहः (त०पु०) तं स्वदेहम्। आमिषतीत्यामिषं (न०लिं०), तस्यामिषस्य ॥५९॥

व्याकरणम्—उक्तवते = वच (परिभाषणे—अकारेत्) + क्तवतुः + ङे, कित्वाद् "वचिस्वपी"त्यादिना सम्प्रसारणे चस्य कुत्वे रूपम्। उपानयत् = उप + अट् + णीञ् (प्रापणे-जित्) + शप् + लङ्, लङस्तिपि शपि गुणेऽयादेशे रूपम्। आमिषस्य = आङ् + मिष (स्पर्धायाम्—अकारेत्) + कः + ङस्, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये कित्वाद् गुणाभावे रूपम् ॥५९

वाच्यान्तरं—तथेति गामुक्तवते हरये सद्यः प्रतिष्टम्भविमुक्तबाहुना तेन न्यस्तशस्त्रेण "सता" स्वदेह आमिषस्य पिण्ड इवोपानीयत ॥ ५९ ॥

कोशः—"गौरुदके दृशि । स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि" इत्यनेकार्थसङ्ग्रहः। "सद्यः सपदि तत्क्षणे" इत्यमरः। "पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिह्लयोः। कवले ।पिण्डन्तु वेश्मैकदेशे जीवनायसोः" इत्यनेकार्थसङ्ग्रहः। "पिशितं तरसं मांसं पललं क्रव्यमामिषम्" इत्यमरः ॥ ५९ ॥

तात्पर्यार्थः—यथा भवान् ब्रवीति तथैव भवत्विति कथयित्वा प्रार्थनामङ्गीकुर्वते सिंहाय दिलीपः परित्यक्तायुधः सन् निजदेहं मांसग्रासमिव कृत्वा समर्पितवान् ॥ ५९ ॥

भाषाऽर्थः—"वैसा ही हो" इस वचन को कहते हुये सिंह के लिये, उसी क्षण में वन्धन से खुली बाहु वाले वे राजा दिलीप शस्त्र के त्यागने वाले होते हुये अपने शरीर को मांस के पिण्ड (ग्रास) के समान समर्पण कर दिया ॥ ५९ ॥

* अथ सिंहनिपतनमुत्पश्यतो दिलीपस्योपरि पुष्पवर्षणमाह—*

तस्मिन् क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

सञ्जीविनी—तस्मिन्निति । तस्मिन्क्षण उग्रं सिंहनिपातमुत्पश्यत उत्प्रेक्षमाणस्य तर्कयतोऽवाङ्मुखस्याधोमुखस्य 'स्यादवाङप्यधोमुखः' इत्यमरः। प्रजानां पालयितू राज्ञ उपर्युपरिष्टात् "उपर्युपरिष्टात्" इति निपातः। विद्याधराणां देवयोनिविशेषाणां हस्तैर्मुक्ता पुष्पवृष्टिः पपात ॥६०॥

अन्वयः—तस्मिन्, क्षणे, उग्रं, सिंहनिपातम्, उत्पश्यतः, अवाङ्मुखस्य, प्रजानां, पालयितुः, उपरि, विद्याधरहस्तमुक्ता, पुष्पवृष्टिः, पपात ॥ ६० ॥

व्याख्या—तस्मिन् = पूर्वोक्ते, क्षणे = मुहूर्त्ते, यस्मिन् क्षणे सिंहाय स्वदेहं समर्प्य तदीयं निपतनं तर्कयन् दिलीपः स्थित आस्त तस्मिन्नेव क्षण इति भावः । उग्रम् = उत्कटं, सिंहनिपातम् = मृगेन्द्रनिपतनम्, उत्पश्यतः = वितर्कयतः, मनसि विचारयत इति भावः । अवाङ्मुखस्य = अधोमुखस्य, नतवदनस्येति भावः । प्रजानां = जनानां, पालयितुः = रक्षितुः, राज्ञो दिलीपस्येति भावः । उपरि = उपरिष्टाद्, विद्याधरहस्तमुक्ता = विद्याधरदेवयोनिविशेपकरविसृष्टा, पुष्पवृष्टिः = कुसुमवर्षणं, पपात = अपसत् ॥ ६० ॥

समासादि—पालयतीति पालयिता ( पुं० ) तस्य पालयितुः । उत्पश्यतीत्युत्पश्यंस्तस्योत्पश्यतः ( पुं० ) । निपतनं निपातः ( पुं० ), सिंहस्य निपातः सिंहनिपातः ( त० पु० ) तं सिंहनिपातम्। उच्यति क्रुधा सम्बध्यत इत्युग्रस्तमुग्रम् ( पुं० ) । अवाञ्चतीत्यवाङ् ( न० लिं० ) । खन्यतेऽनेनेति मुखम् ( न० लिं० ) । अवाङ् मुखं यस्य स अवाङ्मुखः ( ब० व्री० ) तस्यावाङ्मुखस्य । पुष्पाणां वृष्टिः पुष्पवृष्टिः ( त० पु० ) । विद्याया गुटिकाऽञ्जनादिविपयिण्या धरा धारका इति विद्याधराः ( त० पु० ), विद्याधराणां हस्ता-विद्याधरहस्ताः ( त० पु० ), विद्याधरहस्तैर्मुक्ता विद्याधरहस्तमुक्ता ( त० पु० ) ॥ ६० ॥

व्याकरणम्—पालयितुः = ( पाल ( रक्षणे—अकारेत् ) + णिच् ) पालि + इट् + तृच् + ङस् । उत्पश्यतः = उद् + दृशिर् ( प्रेक्षणे-इरित् ) + शप् + लट् + शतृ + ङस्, "पाघ्राध्मे"ति पश्यादेशे रूपम् । उग्रम् = उच (समवाये-अकारेत्) + रन् + अम्, "ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्लशुक्रगौरवज्रेरामालाः" इत्यौणादिको रन् प्रत्ययोगश्चान्तादेशो निपात्यतेऽमि रूपम् । मुखं = खनु ( अवदारणे-उदित् ) + अच् + सु, "डित् खनेर्मुट् चोदात्तः" इत्यौणादिकोऽच् प्रत्ययः स च डित् धातोर्मुडागमश्च डित्वाट्टिलोपे सो रमि रूपम् । अवाङ् = अव + अञ्चु ( गतिपूजनयोः-उदित् ) + क्विन् + सु, "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च" इति क्विन्प्रत्यये रूपम् । पपात = पत्लृ ( पतने-लृदित् ) + लिट्, लिटस्तिपो णलादेशे द्वित्वेऽभ्यासकार्ये वृद्धौ रूपम् ॥ ६० ॥

वाच्यान्तरं—तस्मिन् क्षण उग्रं सिंहनिपातमुत्पश्यतोऽवाङ्मुखस्य प्रजानां पालयितुरुपरि विद्याधरहस्तमुक्तया पुष्पवृष्ट्या पेते ॥ ६० ॥

कोशः—"क्षणो व्यापारशून्यत्वमुहूर्त्तोत्सवपर्वसु" इति रुद्रः। "उग्रः क्षत्रियतः शूद्रासूनावुत्कटरुद्रयोः" इत्यनेकार्थसंग्रहः। "प्राक्खनो मुखुदात्तश्च ततोऽच्च प्रत्ययो भवेत्। प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः" इति निरुक्तम्॥ ६० ॥

तात्पर्यार्थः—तस्मिन् मुहूर्त्ते रौद्रं सिंहपतनं मनसि विचारयतोऽधोमुखस्य दिलीपस्योपरि विद्याधरनामकानां देवयोनिविशेषाणां हस्तैर्मुक्ता पुष्पवृष्टिरपतत्॥ ६० ॥

भाषाऽर्थः—उस क्षण में उत्कट सिंह के आक्रमण के विषय में विचार करते हुये नीचे को मुख किये प्रजाओं के पालन करने वाले राजा दिलीप के ऊपर विद्याधर नामक देवयोनि विशेषों के हाथों से छोड़ी गई फूलों की वर्षा हुई ॥ ६० ॥

*अथ "वत्स उत्तिष्ठे"ति वचो ब्रुवन्त्या धेनोर्दिलीपकर्तृकं दर्शनमाह—*

**उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन्।**
**ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्नविणीं न सिंहम् ॥ ६१ ॥**

सञ्जीविनी—उत्तिष्ठेति। राजा अमृतमिवाचरतीत्यमृतायमानं तत् "उपमानादाचारे" इति क्यच्। ततः शानच्। उत्थितमुत्पन्नं 'हे वत्स! उत्तिष्ठ' इति वचो निशम्य श्रुत्वा। उत्थितः सन्। अस्तेः शतृप्रत्ययः। अग्रतोऽग्रे प्रस्नवः क्षीरस्रावोऽस्ति यस्याः सा तां प्रस्नविणीं गां स्वां जननीमिव ददर्श सिंहं न ददर्श ॥ ६१ ॥

अन्वयः—राजा, अमृतायमानम्, उत्थितं, वत्स!, उत्तिष्ठ, इति, वचः, निशम्य, उत्थितः, सन्, अग्रतः, प्रस्नविणीं, गां, स्वां, जननीम्, इव, ददर्श, सिंहं, न, "ददर्श" ॥ ६१ ॥

व्याख्या—राजा = नृपः, अमृतायमानं = पीयूषायमानम्, अमृततुल्यमिति भावः। उत्थितम् = उद्भूतं, वत्स! = पुत्र!, उत्तिष्ठ = उत्थितो भव, इति = इत्याकारकं, वचः = वचनं, निशम्य = श्रुत्वा, उत्थितः = ऊर्ध्वमवस्थानं कृतवान्, सन् = वर्त्तमानः, अग्रतः = अग्रे, प्रस्नविणीं = स्नाववर्तीं, क्षीरस्राववतीमिति भावः। गां = सौरभेयीं, नन्दिनीमिति यावत्। स्वाम् = आत्मीयां, जननीं = मातरम्, इव = यथा, ददर्श = अपश्यत्, सिंहं = मृगेन्द्रं, न = नहि, "ददर्श" ॥ ६१ ॥

समासादि—अमृतमिवाचरतीत्यमृतायमानं तत्तथोक्तम् (न० लि०)। अस्तीति सन् (पुं०)। जनयति या सा जननी तां जननीम् (स्त्री०)। प्रस्नवणं प्रस्नवः (पुं०), सोऽस्या अस्तीति प्रस्नविणी (स्त्री०) तां प्रस्नविणीम् ॥ ६१ ॥

व्याकरणम्—उत्तिष्ठ = उद् + ष्ठा (गतिनिवृत्तौ) + शप् + लोट्, लोटः सिपो ह्यादेशे तस्य लुकि "पाघ्रे"ति तिष्ठादेशे रूपम्। अमृतायमानम् = (अमृत + क्यच्) अमृताय + लट् + शानच् + अम्, "उपमानादाचारे" इति क्यच्प्रत्यये "अकृत्सार्वधातुकयोः" इति दीर्घे धातुत्वाल्लटः शानजादेशेऽमि रूपम्। निशम्य = नि + शमु (उपशमे—उदित्) + क्त्वा + ल्यप्। ददर्श = दृशिर् (प्रेक्षणे—इरित्) + लिट्, लिटस्तिपो णलादेशे द्वित्वेऽभ्यासकार्ये गुणे रूपम्। जननीं = (जनी (प्रादुर्भावे—ईदित्) + णिच्) जनि + ल्युट् + ङीप् + अम्, "कृत्यल्युटो बहुलम्" इति ल्युट्प्रत्यये णेर्लोपे योरनादेशे टित्वाद् ङीप्यमि रूपम्। प्रस्नविणीं = प्रस्नव + इनिः + ङीप् + अम्, मत्वर्थे इनिप्रत्यये नान्तत्वाद् ङीपि णत्वेऽमि रूपम्॥ ६० ॥

वाच्यान्तरं—राजाऽमृतायमानमुत्थितं हे वत्स! उत्तिष्ठेति वचो निशम्योत्थितेन सताऽग्रतः प्रस्नविणी गौः स्वा जननीव ददृशे, सिंहो न ददृशे ॥ ६१ ॥

कोशः—"स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः ॥ ६१ ॥

तात्पर्यार्थः—राजा दिलीपः, "हे पुत्र! त्वमुत्तिष्ठ" इत्यमृततुल्यमधुराक्षरमुत्पन्नं वचो-

निशम्य यावदुत्थितः सन् पश्यति तावदग्रे स्थितां दुग्धस्राविणीं स्नेहपरिप्लुतमानसां स्त्रीयां जननीमिव कामधेनुसुतां नन्दिनीं दृष्टवान् ॥ ६१ ॥

भाषाऽर्थः—राजा दिलीप ने अमृत के समान (नन्दिनी के मुख से) उत्पन्न हुये "हे पुत्र ! उठो" इस वचन को सुनकर उठते हुये आगे "स्थित" दूध जिस के "स्तनों से" बह रहा है ऐसी गौ (नन्दिनी) को अपनी मां के समान देखा "किन्तु" सिंह को नहीं देखा ॥ ६१ ॥

* अथ धेनुः स्वमायारचितसिंहेन कृतं परीक्षणं विस्मितं दिलीपं प्रति वर्णितवतीत्याह— *

तं विस्मितं धेनुरुवाच साधो ! मायां मयोद्भाव्य परीक्षितोऽसि।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥

सञ्जीविनी—तमिति। विस्मितमाश्चर्यं गतम्। कर्तरि क्तः। तं दिलीपं धेनुरुवाच। किमित्यत्राह-हे साधो !, मया मायामुद्भाव्य कल्पयित्वा परीक्षितोऽसि। ऋषिप्रभावान्मय्यन्तको यमोऽपि प्रहर्तुं न प्रभुर्न समर्थः। अन्ये हिंस्रा घातुकाः। 'शरारुर्घातुको हिंस्रः' इत्यमरः। 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इत्यादिना रप्रत्ययः। किमुत सुष्ठु न प्रभव-इति योज्यम्। 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः ॥ ६२ ॥

अन्वयः—विस्मितं, तं, धेनुः, उवाच, साधो !, मया, मायाम्, उद्भाव्य, "त्वम्" परीक्षितः, असि, ऋषिप्रभावाद्, मयि, अन्तकः, अपिः, प्रहर्तुं, न, प्रभुः, अन्यहिंस्राः, किमुत, "न प्रभवः" ॥ ६२ ॥

व्याख्या—विस्मितं = साश्चर्यं, सिंहस्थाने मातुरिव स्नेहाप्लुतमानसाया धेनोर्दर्शनेन विस्मयान्वितमिति भावः। तं = पूर्वोक्तं, दिलीपमिति यावद्। धेनुः = गौः, नन्दिनीति यावद्। उवाच = जगाद, साधो ! = सज्जन ! हे परकार्यसाधननिरत दिलीप ! इति भावः। मया = धेन्वा, मायां = शाम्बरीं, सिंहरूपामिति भावः। उद्भाव्य = उत्पाद्य, त्वमिति शेषः। परीक्षितः = परीक्षाविषयीकृतः, असि = भवसि, ऋषिप्रभावात् = सत्यवचःशक्त्या, वसिष्ठमहर्षिसामर्थ्यादिति भावः। मयि = धेनौ, अन्तकः = यमः, अपि = समुच्चयेऽर्थे, सम्भावनायां वा। प्रहर्तुं = हन्तुम्, आक्रमितुमिति यावद्। न = हि, प्रभुः = समर्थः, अन्यहिंस्राः = इतरघातुकाः, व्याघ्रादय इति भावः। किमुत = बलवद्, "न प्रभवः = न समर्थाः"। व्याघ्रादयस्तु निर्भरं न समर्थाः प्रहर्तुमिति भावः ॥ ६२ ॥

समासादि—विश्वं माति यस्यामिति माया (स्त्री०) तां मायाम्। ऋषेः प्रभाव ऋषिप्रभावः (त० पु०) तस्मादृषिप्रभावात्। किंच तदुत चेति किमुत (अ०)। अन्ये च ते हिंस्रा अन्यहिंस्राः (त० क० धा०) ॥ ६२ ॥

व्याकरणम्—उवाच = ब्रूञ् (व्यक्तायां वाचि—ञित्) + लिट्, लिटस्तिपो णलादेशे "ब्रुवो वचिः" इति वचादेशे द्वित्वे "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य संप्रसारणे पूर्वरूपे वृद्धौ रूपम्। मायाम् = मा (माने) + यः + टाप् + अम्, "माच्छाससिभ्यो यः" इत्यौणादिके यप्रत्यये टापि ततोऽमि रूपम्। उद्भाव्य = उद् (भू(सत्तायाम्) + णिच्)भावि + क्त्वा + ल्यप्। परीक्षितः = परि + ईक्ष(दर्शने—अकारेत्) + इट् + क्तः + सुः। असि = अस(भुवि—अकारेत्) + लट्, लटः सिपि "तासस्त्योर्लोपः" इति सकारलोपे रूपम्। प्रहर्तुं = प्र + हृञ् (हरणे—ञित्) + तुमुन् ॥ ६२ ॥

वाच्यान्तरं—विस्मितः स धेन्वोचे हे साधो ! अहं मायामुद्भाव्य त्वाम् परीक्षितवत्यस्मि, ऋषिप्रभावान्मय्यन्तकेनापि प्रहर्तुं न प्रभुणा "भूयते" अन्यहिंस्रैः किमुत ॥ ६२ ॥

कोशः—"स्यान्माया शाम्बरी" इत्यमरः। "प्रभावस्तेजसि शक्तौ" इत्यनेकार्थसंग्रहः। "कृतान्तो यमुनाभ्राता शमनो यमराड् यमः। कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः"

इत्यमरः ॥ ६२ ॥

तात्पर्यार्थः—निजशरीरोपरि निपतितुमुद्यतस्य सिंहस्य स्थाने मातुरिव वत्सलाया धेनोर्दर्शनादत्याश्चर्यान्वितं दिलीपं सा नन्दिनी जगाद, हे साधो ! मायामुत्पाद्य मया तव परीक्षा कृता, वसिष्ठमहर्षिप्रभावाद् यमोऽपि मयि प्रहारं कर्त्तुं न समर्थो व्याघ्रादयस्तु नितरामसमर्थाः सन्ति ॥ ६२ ॥

भाषाऽर्थः—आश्चर्य से युक्त उन राजा दिलीप से धेनु बोली कि—हे सज्जन महाराज दिलीप ! मैंने माया को उत्पन्न कर तुम्हारी परीक्षा ली थी, महर्षि वशिष्ठजी के प्रभाव से यमराज भी मुझ पर प्रहार करने के लिये समर्थ नहीं हैं, दूसरे हिंस्र व्याघ्रादि तो अत्यन्त समर्थ नहीं हैं ॥ ६२ ॥

*अथ नन्दिनी वाञ्छितवरयाचनार्थं दिलीपं कथयतीत्याह—*

**भक्त्या गुरौ मय्यनुकम्पया च प्रीताऽस्मि ते पुत्र ! वरं वृणीष्व ।**
**न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥**

संजीविनी—भक्त्येति । हे पुत्र ! गुरौ भक्त्या मय्यनुकम्पया च ते तुभ्यं प्रीताऽस्मि । *क्रियाग्रहणमपि कर्तव्यम्* इति चतुर्थी । वरं देवेभ्यो वरणीयमर्थं । 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' इत्यमरः । वृणीष्व स्वीकुरु । तथाहि—मां केवलानां पयसां प्रसूतिं कारणं नावेहि न विद्धि । किंतु प्रसन्नां मां कामान्दोग्धीति कामदुघा तामवेहि । "दुहः कब्घश्च" इति कप्प्रत्ययः ॥ ६३ ॥

अन्वयः—पुत्र !, गुरौ, भक्त्या, मयि, अनुकम्पया, च, ते, प्रीता, अस्मि, वरं, वृणीष्व, "तथाहि" मां, केवलानां, पयसाम्, प्रसूतिं, न, अवेहि, "किन्तु", प्रसन्नां, "मां"कामदुघाम्, "अवेहि" ॥ ६३ ॥

व्याख्या—पुत्र ! = वत्स !, दिलीप ! इति यावद् । गुरौ = निषेकादिकरे, वसिष्ठ इति यावद् । भक्त्या = श्रद्धया, मयि = नन्दिन्याम्, अनुकम्पया = दयया, च = समुच्चयेऽर्थे, दिलीपायेति यावत् । प्रीता = प्रसन्ना, अस्मि = भवामि, "अहमिति शेषः । वरं = देवाद् वृतं, देवतासकाशाद् वरणीयमर्थमिति भावः । वृणीष्व = अङ्गीकुरु, यत्ते हृदयेप्सितं तन्मत्सकाशात्प्राप्तं सत् स्वीकुर्वित्यर्थः । त्वमिति शेषः । तथाहीति शेषः । मां = नन्दिनीं, केवलानाम् = एकेषाम्, पयसां = क्षीराणाम्, प्रसूतिं = प्रसवित्रीं, कारणमिति, भावः । न = नहि, अवेहि = जानीहि, किन्त्विति शेषः । प्रसन्नां = प्रीतां, मामिति शेषः । कामदुघां = काम्यप्रपूरयित्रीम्, अवेहीति शेषः ॥ ६३ ॥

समासादि—कामान् दोग्धीति कामदुघा (स्त्री०) तां कामदुघाम् ॥ ६३ ॥

व्याकरणम्—प्रीता = प्रीञ् (तर्पणे कान्तौ च—ञित्) + क्तः + टाप् + सु । अस्मि = अस (भुवि-अकारेत्) + लट्, लटो मिपि रूपम् । वृणीष्व = वृञ् (वरणे—ञित्) + श्ना + लोट्, लोटस्थासः से तत एकारस्य वकारे श्ना प्रत्यये "प्वादीनां ह्रस्वः" इति ह्रस्वे "ई हल्यघोः" इत्वे णत्वे रूपम् । अवेहि = अव + आङ् + इण् (गतौ—णित्) + लोट्, लोटः सिपि रूपम् ॥ ६३ ॥

वाच्यान्तरं—हे पुत्र ? गुरौ भक्त्या मय्यनुकम्पया च ते प्रीतया मया भूयते त्वया वरो व्रियतां, तथा हि—त्वयाऽहं केवलानां पयसां प्रसूतिर्नावेयै किन्तु प्रसन्नाऽहं कामदुघाऽवेयै ॥ ६३ ॥

कोशः—"भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयोः" इति । "कामः स्मरेच्छाकाम्येषु" इति चानेकार्थसंग्रहः । "गौः प्रस्नुते प्रस्नवे स्वयम् । रिणक्ति दोग्ध्यात्मनेऽपि प्रपूरयति दोहने" इत्याख्यातचन्द्रिका ॥ ६३ ॥

तात्पर्यार्थः—हे पुत्र ! गुरौ वसिष्ठमहर्षिविषये भक्त्या, मयि कृपया च तेऽहं प्रसन्नाऽस्मि, अतस्त्वं निजाभिलषितं वरं वृणीष्व, वरं देवा एव दातुं समर्था न तु गाव इत्याशङ्का त्वया न करणीया, यतो मां केवलानां दुग्धानां दात्रीं न जानीहि किन्तु कामधेनुदुहितृतया सकलाभीष्टदायिनीमपि जानीहि ॥ ६३ ॥

भाषाऽर्थः—हे पुत्र ! वसिष्ठ महर्षि के विषय में भक्ति रखने से और मेरे विषय में दया रखने से मैं तुझपर प्रसन्न हूँ । इस लिये तूं वर मांग, और मुझे निरी दूध देने वाली गाय मत समझ किन्तु प्रसन्न होने पर अभिलाषों को पूरी करनेवाली जान ॥ ६३ ॥

* दिलीपस्य स्वपुत्राप्तिरूपवरप्रार्थनाकरणमाह— *

**ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।**
**वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥**

संजीविनी—तत इति । ततो मानितार्थी । स्वहस्तार्जितो वीर इति शब्दो येन सः । एतेनास्य दातृत्वं दैन्यराहित्यं चोक्तम् । स राजा हस्तौ समानीय संधाय । अञ्जलिं बद्ध्वेत्यर्थः । वंशस्य कर्तारं प्रवर्तयितारम् । अत एव रघुकुलमिति प्रसिद्धिः । अनन्तकीर्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे ॥ ६४ ॥

अन्वयः—ततः, मानितार्थी, स्वहस्तार्जितवीरशब्दः, सः, हस्तौ, समानीय, वंशस्य, कर्त्तारम्, अनन्तकीर्त्तिं, तनयं, सुदक्षिणायां, ययाचे ॥ ६४ ॥

व्याख्या—ततः = अनन्तरं, नन्दिनीकथनानन्तरमिति भावः । मानितार्थी = सम्मानितयाचनकः, अभिलाषपूरणात्संतोषितार्थिजन इति भावः । एतेन दातृत्वं सूचितम् । स्वहस्तार्जितवीरशब्दः = आत्मकरसर्जितवीरशब्दः, निजबाहुबललब्धवीरपदवीक इति भावः । एतेन दैन्यशून्यत्वं सूचितम् । सः = पूर्वोक्तः, राजा दिलीप इति भावः । हस्तौ = करौ, समानीय = एकत्र निधाय, अञ्जलिं बद्ध्वेत्यर्थः। वंशस्य = कुलस्य, कर्त्तारं(१) = विधातारं, प्रवर्त्तयितारमिति भावः । अनन्तकीर्त्ति = निरवधियशसं, विपुलकीर्त्तिशालिनम्, अविनाशिकीर्त्तिशालिनं वेति भावः । तनयं = पुत्रं, सुदक्षिणायां = तदाख्यस्वमहिष्यां, ययाचे = याचितवान् ॥ ६४ ॥

समासादि—मानिता अर्थिनो येन स मानितार्थी ( ब० व्री० ) । स्वस्य हस्तौ स्वहस्तौ ( त० पु० ), ताभ्यामर्जितः स्वहस्तार्जितः ( त० पु० ), वीर इत्याख्यः शब्दो वीरशब्दः ( त० पु० क० धा० ), स्वहस्तार्जितो वीरशब्दो येन स स्वहस्तार्जितवीरशब्दः (ब०व्री०) । अविद्यमानोऽन्तोऽस्या इत्यनन्ता (ब० व्री०), अनन्ता कीर्तिर्यस्य सोऽनन्तकीर्त्तिः (ब०व्री०) तमनन्तकीर्त्तिम् ॥ ६४ ॥

व्याकरणं—समानीय = सम + आङ् + णीञ् ( प्रापणे—ञित् ) + क्त्वा + ल्यप् । ययाचे = टुयाचृ (याच्ञायां + टुकार ऋकारश्चेत्संज्ञकौ ) + लिट्, लिटस्त प्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये रूपम् ॥ ६४ ॥

वाच्यान्तरं—ततो मानितार्थिना स्वहस्तार्जितवीरशब्देन तेन हस्तौ समानीय वंशस्य कर्त्ताऽनन्तकीर्त्तिस्तनयः सुदक्षिणायां ययाचे ॥ ६४ ॥

कोशः—"अर्जने त्वर्जयति च तथैवार्जति सर्जति" इत्याख्यातचन्द्रिका । "अनन्तः केशवे शेषे पुमान् निरवधौ त्रिषु" इत्यमरः ॥ ६४ ॥

तात्पर्यार्थः—नन्दिनीकथनसमाप्त्यनन्तरमर्थिजनकल्पतरुः स्वभुजबललब्धवीरोपाधिको राजा दिलीपोऽञ्जलिं बद्ध्वा कुलप्रवर्त्तकमविनाशियशस्विनं सुदक्षिणायां निजमहिष्यां पुत्रं प्रार्थितवान् ॥ ६४ ॥

---

(१) यस्य नाम्ना वंशो लोके प्रसिद्धो भवतु, अत एव सूर्यवंशो दिलीपसूनो रघोर्नाम्नैव जगति विख्यात, तथा चेद काव्य "रघुवंशो"त्याख्यमभूत् ।

भापार्थः—उसके ( नन्दिनी के वाक्य समाप्ति होने के ) बाद याचकों को सन्तुष्ट करने वाले अपने हाथों से "वीर" इस शब्द को प्राप्त करने वाले उन राजा दिलीप ने दोनों हाथों को जोड़ कर वंश को चलाने वाले स्थिर कीर्त्ति शाली पुत्र "अपनी रानी" सुदक्षिणा-में होने की प्रार्थना की ॥ ६४ ॥

*तथाऽस्त्वित्युक्त्वा नन्दिन्याः स्वदुग्धपानार्थं दिलीपं प्रत्युपदेशमाह—*

**सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।**
**दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ।। ६५ ।।**

सञ्जीविनी—सन्तानेति। सा पयस्विनी गौः। सन्तानं कामयत इति संतानकामः। "कर्मण्यण्"। तस्मै राज्ञे तथेति काम्यत इति कामो वरः। कर्मार्थे घञ्प्रत्ययः। तं प्रतिश्रुत्य प्रतिज्ञाय हे पुत्र! मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वोपभुङ्क्ष्व। 'उपयुङ्क्ष्व' इति वा पाठः। 'पिब' इति तमादिदेशाज्ञापितवती ॥ ६९ ॥

अन्वयः—सा, पयस्विनी, सन्तानकामाय, तस्मै, तथा, इति, कामं, प्रतिश्रुत्य, पुत्र !, मदीयं, पयः, पत्रपुटे, दुग्ध्वा, उपभुङ्क्ष्व, इति, तम्, आदिदेश ॥ ६९ ॥

व्याख्या—सा=पूर्वोक्ता, पयस्विनी=प्रशस्तक्षीरवती, नन्दिनी नाम्नी गौरिति भावः। सन्तानकामाय=अपत्यार्थिने, तस्मै=पूर्वोक्ताय, राज्ञे दिलीपायेति भावः। तथा=तेन प्रकारेण, यथाऽभिलपसि तथैव भवत्विति भावः। इति=उक्तस्वरूपं, कामं=काम्यं, वरं पुत्राप्तिरूपमिति भावः। प्रतिश्रुत्य=प्रतिज्ञाय, पुत्र !=वत्स !, मदीयं=मामकं, मत्सम्बन्धीति यावत्। पयः=क्षीरं, पत्रपुटे=पर्णनिर्मितपात्रे, दुग्ध्वा=दोहनं कृत्वा, मदापीनेभ्यो-निष्काश्येति भावः। उपभुङ्क्ष्व=पिब, पानं कुर्विति यावद्। इति=इत्याकारकं, तम्=पूर्वोक्तं, दिलीपमिति भावः। आदिदेश=आज्ञापयामास ॥ ६९ ॥

समासादि—सन्तानं कामयत इति सन्तानकामः ( पुं० ) तस्मै सन्तानकामाय। काम्यत इति कामः ( पुं० ) तं कामम्। प्रशस्तं पयोऽस्या अस्तीति पयस्विनी ( स्त्री० ) तां पयस्विनीम्। पत्राणां पुटः पत्रपुटः ( त० पु० ) तस्मिन् पत्रपुटे। ममेदं मदीयं तन्मदीयम् ॥ ६९ ॥

व्याकरणं—सन्तानकामाय=सन्तान+अम्+कमु ( कान्तौ–उदित् )+अण्+ङे। कामं=कमु ( कान्तौ–उदित् )+घञ्+अम्, "अकर्त्तरि च कारके सञ्ज्ञायाम्" इति कर्मार्थे घञ्प्रत्यये वृद्धौ रूपम्। प्रतिश्रुत्य=प्रति+श्रु ( श्रवणे )+क्त्वा+ल्यप्। दुग्ध्वा =दुह (प्रपूरणे–अकारेत्)+क्त्वा, "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धोऽधः" इति तकारस्य धत्वे जश्त्वेऽव्ययत्वात्सुपो लुकि रूपम्। उपभुङ्क्ष्व=उप+भुज ( पालनाभ्यवहारयोः–अकारेत् )+श्नम्+लोट्, लोटस्थासि श्नमि "श्नसोरल्लोपः" इत्यल्लोपे जस्य कुत्वे सस्य षत्वेऽनुस्वारे परसवर्णे रूपम्। आदिदेश=आङ्+दिश ( अतिसर्जने—अकारेत् )+लिट्, लिटस्तिपि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ६९ ॥

वाच्यान्तरं—तया पयस्विन्या सन्तानकामाय तस्मै तथेति कामं प्रतिश्रुत्य हे पुत्र ! "त्वया" मदीयं पयः पत्रपुटे दुग्ध्वोपभुज्यतामिति स आदिदिशे ॥ ६९ ॥

कोशः—"सन्तानोऽपत्यगोत्रयोः। सन्ततौ" इत्यनेकार्थसङ्ग्रहः ॥ ६९ ॥

तात्पर्यार्थः—सा नन्दिनी पुत्रार्थिने राज्ञे दिलीपाय तथाऽस्त्विति वरं प्रतिज्ञाय हे पुत्र ! मदीयं दुग्धं पत्रनिर्मितपात्रे दुग्ध्वा पिबेत्यादिदेश ॥ ६९ ॥

भापार्थः—उस उत्तम दूध वाली नन्दिनी ने पुत्र चाहने वाले राजा दिलीप से "वैसा ही हो" ऐसी वरदान की प्रतिज्ञा करके "हे पुत्र ! मेरे दूध को पत्ते के दोने में दुह कर पीलो ऐसी उन्हें आज्ञा दी ॥ ६९ ॥

*महर्षिवसिष्ठस्यानुज्ञां विना नन्दिनीपयःपाने दिलीपकर्तृकमनभिमतत्वमाह—*

**वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ! ।**
**औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ।। ६६ ।।**

सञ्जीविनी—वत्सस्येति । हे मातः ! वत्सस्य वत्सपीतस्य शेषम् । वत्सपीतावशिष्टमित्यर्थः । होम एवार्थः, तस्य विधिरनुष्ठानं, तस्य च शेषम् । होमावशिष्टमित्यर्थः । तव, ऊधसि भवमौधस्यं क्षीरम् । "शरीरावयवाच्च" इति यत्प्रत्ययः । रक्षिताया उर्व्याः षष्ठांशं षष्ठभागमिव । ऋषेरनुज्ञामधिगम्य उपभोक्तुमिच्छामि ॥ ६६ ॥

अन्वय—मातः !, वत्सस्य, शेषं, होमार्थविधेः, च, "शेषं", तव, औधस्यं, रक्षितायाः, उर्व्याः, षष्ठांशम्, इव, ऋषेः, अनुज्ञाम्, अधिगम्य, उपभोक्तुम्, इच्छामि ॥ ६६ ॥

व्याख्या—मातः ! = जननि ! । वत्सस्य = तर्णकस्य, वत्सपीतस्येति भावः । शेषम् = अवशिष्टं, वत्सपीतावशिष्टभागमिति भावः । होमार्थविधेः = हवनरूपप्रयोजनविधानस्य, च = समुच्चयेऽर्थे, शेषम् = अवशिष्टं, होमावशिष्टमित्यर्थः । तव = भवत्याः, नन्दिन्या इति भावः । औधस्यम् = ऊधोभवं, क्षीरमिति भावः । रक्षितायाः = पालितायाः, उर्व्याः = पृथिव्याः, षष्ठांशं = षट्सङ्ख्यापूरकभागम्, इव = यथा, ऋषेः = सत्यवचसः, वसिष्ठस्येति यावद् । अनुज्ञाम् = आदेशम्, अधिगम्य = प्राप्य, उपभोक्तुम् = उपभोगं कर्तुम्, पातुमिति यावद् । इच्छामि = कामये ॥ ६६ ॥

समासादि—होम एवार्थो होमार्थः ( त० क० धा० ), तस्य विधिर्होमार्थविधिः ( त० पु० ) तस्य होमार्थविधेः । ऊधसि भवमूधस्यम् ( न० लिं० ), ऊधस्यमेवौधस्यं तदौधस्यम् ( न० लिं० ) । षण्णां पूरणः षष्ठः ( पुं० ), स चासावंशः षष्ठांशः ( त० क० धा० ) तं षष्ठांशम् ॥ ६६ ॥

व्याकरणम्—अधिगम्य = अधि + गम्लृ (गतौ-लृदित्) + क्त्वा + ल्यप्, "वा ल्यपि" इति वैकल्पिकानुनासिकलोपपक्षे रूपम् । औधस्यम् = ( ऊधस् + ङि + यत् ) ऊधस्य + अण् + अम्, "शरीरावयवाच्च" इति यत्प्रत्यये ततः स्वार्थेऽण्प्रत्यये णित्वादादिवृद्धौ रूपम् । इच्छामि = इषु ( इच्छायाम्-उदित् ) + शः + लट्, लटो मिपि "इषुगमियमां छः" इति छत्वे रूपम् । उपभोक्तुम् = उप + भुज ( पालनाभ्यवहारयोः—अकारेत् ) + तुमुन् । षष्ठः = षष् + डट् + सु, "तस्य पूरणे डट्" इति डट् प्रत्यये "षट्कतिकतिपयचतुरां थुक्" इतिथुगागमे" ष्टुत्वे रूपम् ॥ ६६ ॥

वाच्यान्तरं—हे मातः ! वत्सस्य होमार्थविधेश्च शेषं तवौधस्यं रक्षिताया उर्व्याः षष्ठांशमिव ऋषेरनुज्ञामधिगम्योपभोक्तुं मयेष्यते ॥ ६६ ॥

कोशः—"ऊधस्तु क्लीबमापीनम्" इति । "अंशभागौ तु वण्टके" इति चामरः ॥ ६६ ॥

तात्पर्यार्थः—हे मातः ! वत्सपीतादवशिष्टमग्निहोत्राद्यवशिष्टञ्च ते क्षीरं निजभुजबलपालितायाः पृथिव्याः षष्ठांशरूपं करमिव गुरोर्वसिष्ठमहर्षेराज्ञां प्राप्य पातुमिच्छामि ॥ ६६ ॥

भावार्थः—हे माँ ! मैं बछड़े के पीने से तथा होम रूप प्रयोजन के अनुष्ठान ( अग्निहोत्रादि ) से बचे हुये तुम्हारे स्तनों से निकले हुये दूध को पालन की गई पृथ्वी के षष्ठांश ( छठां भाग रूप ) कर के तरह ऋषि वसिष्ठ की आज्ञा प्राप्त करके पीना चाहता हूँ ॥ ६६ ॥

* अथ धेनोर्दिलीपेन सह वसिष्ठाश्रमं प्रत्यागमनमाह—*

**इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।**
**तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ।। ६७ ।।**

सञ्जीविनी—इत्थमिति । इत्थं क्षितीशेन विज्ञापिता वसिष्ठस्य धेनुः प्रीततरा । पूर्वं

शुश्रूषया प्रीता संप्रत्यनया विज्ञापनया प्रीततराऽतिसंतुष्टा बभूव । तदन्विता तेन दिलीपेनान्विता हैमवताद्धिमवत्संबन्धिनः कुक्षेर्गुहायाः सकाशादश्रमेणानायासेनाश्रमं प्रत्याययावागता च ॥ ६७ ॥

अन्वयः—इत्थं, क्षितीशेन, विज्ञापिता, वसिष्ठधेनुः, प्रीततरा, बभूव, तदन्विता, हैमवतात्, कुक्षेः, अश्रमेण, आश्रमम्, प्रत्याययौ, च ॥ ६७ ॥

व्याख्या—इत्थम् = अनेन प्रकारेण, क्षितीशेन = पृथ्वीस्वामिना, राज्ञा दिलीपेनेति यावत् । विज्ञापिता = निवेदिता, वसिष्ठधेनुः = वसिष्ठाख्यमहर्षिगौः, नन्दिनीति यावत् । प्रीततरा = प्रसन्नतरा, पूर्वमेकविंशतिदिवसपर्यन्तं छायावत् परिचर्यया प्रीता, सम्प्रति "गुरोरनुज्ञां विना नाहं वत्सपीताद् होमक्रियाऽनुष्ठानात्प्राक् च त्वद्दुग्धं पास्यामि"इतिरूपयाऽनया विज्ञापनया प्रीततरेति भावः । बभूव = आसीत्, तदन्विता = पूर्वोक्तदिलीपयुक्ता, हैमवताद् = हिमवत्सम्बन्धिनः, हिमालयस्येति यावत् । कुक्षेः = उदराद्, गुहायाः सकाशादिति भावः । अश्रमेण = अनायासेन, श्रमं विनैवेति यावद् । आश्रमं = मठं, वासस्थानं, तपोवनमिति यावत् । प्रत्याययौ = प्रत्याजगाम, च = अन्वाचयेऽर्थे ॥ ६७ ॥

समासादि—क्षितेरीशः क्षितीशः ( त० पु० ) तेन क्षितीशेन । वसिष्ठस्य धेनुर्वसिष्ठधेनुः ( त० पु० ) । इयमनयोरतिशयेन प्रीतेति प्रीततरा ( स्त्री० ) । तेनान्विता तदन्विता ( त० पु० ) । हिमोऽस्त्यस्मिन्निति हिमवान् ( पुं० ), तस्यायं हैमवतः ( पुं० ) तस्माद्धैमवतात् । न श्रम इत्यश्रमस्तेनाश्रमेण ( न० त० पु० ) ॥ ६७ ॥

व्याकरणम्—इत्थम् = इदम् + टा + थमुः । विज्ञापिता = वि + ( ज्ञा ( अवबोधने ) + पुक् + णिच् ) ज्ञापि + इट् + क्तः + टाप् + सु । प्रीततरा = प्रीत + तरप् + टाप् + सु । बभूव = भू (सत्तायाम्) + लिट्, लिटस्तिपि द्वित्वेऽभ्यासकार्ये रूपम् । अन्विता = अनु + इण् (गतौ—णित्) + क्तः + टाप् + सु । हैमवताद् = हिमवत् + अण् + ङस्, 'स्वार्थेऽण्प्रत्यये रूपम् । प्रत्याययौ = प्रति + आङ् + या ( प्रापणे ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ६७ ॥

वाच्यान्तरम्—इत्थं क्षितीशेन विज्ञापितया वसिष्ठधेन्वा प्रीततरया बभूवे, तदन्वितया हैमवतात् कुक्षेः सकाशादश्रमेणाश्रमः प्रत्यायये ॥ ६७ ॥

कोशः—"ईशः स्वामिनि रुद्रे च" इति । "आश्रमो व्रतिनां मठे । ब्रह्मचर्यादिचतुष्केऽपि" इति चानेकार्थसङ्ग्रहः ॥ ६७ ॥

तात्पर्यार्थः—अनेन प्रकारेण दिलीपेन निवेदिता नन्दिनी पूर्वापेक्षयाऽधिकतरं प्रसन्ना बभूव, तदनन्तरं तेनानुगम्यमाना हिमालयस्य गुहायाः सकाशादनायासेन वसिष्ठाश्रमं प्रत्याजगाम ॥ ६७ ॥

भाषार्थः—इस प्रकार से राजा दिलीप की प्रार्थना करने से वशिष्ठ महर्षि की धेनु नन्दिनी अत्यन्त प्रसन्न हुई, और दिलीप से युक्त होती हुई हिमालय की गुफा से बगैर परिश्रम के ( सुखपूर्वक ) आश्रम की तरफ लौटी ॥ ६७ ॥

* अथ दिलीपो नन्दिन्याः प्रसादं गुरवे सुदक्षिणायै चाब्रवीदित्याह—*

**तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।**
**प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥**

सञ्जीविनी—तस्या इति । प्रसन्नेन्दुरिव मुखं यस्य स नृपाणां गुरुर्दिलीपः प्रहर्षचिह्नैर्मुखरागादिभिरनुमितमूहितं तस्या धेनोः प्रसादमनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात्पुनरुक्तयेव वाचा गुरवे निवेद्य विज्ञाप्य पश्चात्प्रियायै शशंस । कथितस्यैव कथनं पुनरुक्तिः । न चेह तदस्ति । किन्तु चिह्नैः कथितप्रायत्वात्पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ॥ ६८ ॥

अन्वयः—प्रसन्नेन्दुमुखः, नृपाणां, गुरुः, प्रहर्षचिह्नानुमितं, तस्याः, प्रसादम्, पुनरुक्तया, इव, वाचा, गुरवे, निवेद्य, "पश्चात्" प्रियायै, शशंस ॥ ६८ ॥

व्याख्या—प्रसन्नेन्दुमुखः = स्वच्छचन्द्रवदनः, नृपाणां = राज्ञां, मध्य इति शेषः। गुरुः = श्रेष्ठः, महाराजो दिलीप इति यावत्। प्रहर्षचिह्नानुमितम् = उत्कटप्रमोदलक्षणतर्कितम्, प्रफुल्लवदनादिचिह्नैरूहितमिति भावः। तस्याः = पूर्वोक्तायाः, धेनोर्नन्दिन्या इति यावत्। प्रसादम् = अनुग्रहम्, "प्रहर्षचिह्नैरेव ज्ञाततया" पुनरुक्तया = भूयःकथितया, द्वितीयवारभाषितयेति यावद्। इव = यथा, वाचा = वचनेन, गुरवे = निषेकादिकराय, वसिष्ठायेति यावद्। निवेद्य = विज्ञाप्य, "पश्चात्" प्रियायै = हृद्यायै, भार्यायै सुदक्षिणाया यिति यावद्। शशंस = कथयामास, हर्षोद्बोधकमुखरागादिचिह्नैः कथितप्रायतया पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ॥ ६८ ॥

समासादि—प्रसन्नश्चासाविन्दुः प्रसन्नेन्दुः ( त० क० धा० ), प्रसन्नेन्दुरिव मुखं यस्य स प्रसन्नेन्दुमुखः ( उ० स० )। प्रकृष्टा हर्षाः प्रहर्षाः ( पुं० ), तेषां चिह्नानि प्रहर्षचिह्नानि ( त० पु० ), तैरनुमितः प्रहर्षचिह्नानुमितः (त० पु०), तं प्रहर्षचिह्नानुमितम् ॥ ६८ ॥

व्याकरणं—निवेद्य = नि+( विद ( ज्ञाने—अकारेत् )+णिच् ) वेदि+क्त्वा+ल्यप्। शशंस = शंसु ( स्तुतौ—उदित् )+लिट्, लिटस्तिपो णलादेशे द्वित्वेऽभ्यासकार्ये रूपम् ॥ ६८ ॥

वाच्यान्तरम्—प्रसन्नेन्दुमुखेन नृपाणां गुरुणा प्रहर्षचिह्नानुमितस्तस्याः प्रसादः पुनरुक्तयेव वाचा गुरवे निवेद्य प्रियायै शशंसे ॥ ६८ ॥

कोशः—"प्रसन्ना स्त्री सुरायां स्यात् स्वच्छसन्तुष्टयोस्त्रिषु" इति। "प्रियो हृद्येऽन्यवत् पुंसि वृद्धिनामौषधे धवे" इत्यपि मेदिनी ॥ ६८ ॥

तात्पर्यार्थः—वरप्राप्तिहेतोरतिप्रसन्नो राजा दिलीपः स्वकीयमुखरागादिभिः प्रसन्नताद्योतकचिह्नैः कथितप्रायं नन्दिन्या वरप्रदानरूपानुग्रहं पुनरुक्तमिव प्रथमं गुरवे वसिष्ठमहर्षये पश्चात् प्रियायै सुदक्षिणायै निवेदयामास ॥ ६८ ॥

भाषाऽर्थः—निर्मल चन्द्रमा की भाँति स्वच्छ मुख वाले राजाओं में श्रेष्ठ दिलीप ने अधिक प्रसन्नता के द्योतक मुख की लालिमा आदि चिह्नों से जिसका अनुमान हो रहा था, ऐसे उस नन्दिनी के वर प्रदान रूपी अनुग्रह को हर्ष के जनाने वाले चिह्नों से कहने से पहिले ही मालूम हो जाने से दुबारा कही जाती हुई की भाँति वाणी के द्वारा गुरु जी से निवेदन किया पश्चात् प्यारी पटरानी सुदक्षिणा से भी कहा ॥ ६८ ॥

*अथ वसिष्ठानुज्ञया दिलीपकर्तृकं नन्दिनीदुग्धपानमाह—*

**स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम्।**
**पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥**

सञ्जीविनी—स इति। अनिन्दितात्माऽगर्हितस्वभावः। सत्सु वत्सलः प्रेमवान्सद्वत्सलः। "वत्सांसाभ्यां कामबले" इति लच्प्रत्ययः। वसिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः स राजा वत्सस्य हुतस्य चावशेषं पीतहुतावशिष्टं नन्दिन्याःस्तन्यं क्षीरं शुभ्रं मूर्तं परिच्छिन्नं यश इव। अतितृष्णः सन्पपौ ॥ ६९ ॥

अन्वयः—अनिन्दितात्मा, सद्वत्सलः, वसिष्ठेन, कृताभ्यनुज्ञः, सः, वत्सहुतावशेषं, नन्दिनीस्तन्यं, शुभ्रं, मूर्त्तं, यशः, इव, अतितृष्णः, "सन्" पपौ ॥ ६९ ॥

व्याख्या—अनिन्दितात्मा = अजुगुप्सितस्वभावः, सद्वत्सलः = साधुस्निग्धः, सज्जनेषु स्नेहकर्त्तेति यावद्। वसिष्ठेन = तदाख्यमहर्षिणा, कृताभ्यनुज्ञः = विहितनिदेशः, प्राप्तानुशासन इति यावत्। सः = पूर्वोक्तः, दिलीप इति यावद्। वत्सहुतावशेषं = तर्णकहवनावशिष्टम्, वत्सपीतस्य हवनस्य चावशिष्टमिति यावद्। नन्दिनीस्तन्यं = कामधेनुसुताकुचोद्भवं, वसिष्ठधेनुक्षीरमिति यावद्। शुभ्रं = श्वेतं, मूर्त्तं = मूर्त्तिमद्, यशः = कीर्त्तिम्, इव = यथा, अतितृ-

ष्णः = अतिशयपिपासितः, "सन्" इति शेषः । पपौ = अपिबत् ॥ ६९ ॥

समासादि—स्तने भवं स्तन्यं ( न० लिं० ), नन्दिन्याः स्तन्यं नन्दिनीस्तन्यं ( त० पु० ) तद् नन्दिनीस्तन्यम् । न निन्दित इत्यनिन्दितः ( न० त० पु० ); अनिन्दित आत्मा यस्य सोऽनिन्दितात्मा ( ब० व्री० ) । वत्से पुत्रादिस्नेहपात्रेऽभिलाषोऽस्यास्तीति वत्सलः ( पुं० ), सत्सु वत्सलः सद्वत्सलः ( त० पु० ) । वत्सश्च हुतञ्चेति वत्सहुते ( द्वं० ), तयोरवशेषो वत्सहुतावशेषः ( त० पु० ) तं तथोक्तम् । कृताऽभ्यनुज्ञा यस्य स कृताभ्यनुज्ञः ( ब० व्री० ) । अतिशयिता तृष्णा यस्य सोऽतितृष्णः ( ब० व्री० ) ॥ ६९ ॥

व्याकरणं—स्तन्यं = स्तन + ङि + यत् + सु, "शरीरावयवाच्च" इति यत्प्रत्यये रूपम् । पपौ = पा ( पाने ) + लिट्, लिटस्तिपो णलि धातोर्द्वित्वेऽभ्यासकार्ये रूपम् । मूर्त्तम् = मूर्छा ( मोहसमुच्छ्राययोः—आकारेत् ) + क्तः + अम्, "गत्यार्थाकर्मके" त्यादिना क्तप्रत्यये "आदितश्च" इति नेडागमे "राल्लोपः" इति छकारलोपे "न ध्याख्यापॄमूर्छिमदाम्" इति निष्ठातस्य "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति प्राप्ते नत्वे निषेधितेऽमि रूपम् ॥ ६९ ॥

वाच्यान्तरम्—अनिन्दितात्मना सद्वत्सलेन वसिष्ठेन कृताभ्यनुज्ञेन तेन वत्सहुतावशेषं नन्दिनीस्तन्यं, शुभ्रं मूर्त्तं यश इवातितृष्णेन पपे ॥ ६९ ॥

कोशः—"जुगुप्सते वाचयति प्रवदत्यपि गर्हते । त्रयः क्षिपत्यात्मनेऽपि चोपक्रोशति निन्दति ॥ निसः परेश्च वदति गल्हत्यपि च गल्हते । निन्दायां स्युः कुत्सयते क्षिपत्यपकरोत्यमी" इत्याख्यातचन्द्रिका । "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि" इति मेदिनी । "स्निग्धस्तु वत्सलः" इत्यमरः । "मूर्त्तं स्यात् त्रिषु मूर्छाले काठिन्ये मूर्त्तिमत्यपि" इति मेदिनी ॥ ६९ ॥

तात्पर्यार्थः—दिलीपो वसिष्ठमहर्षेराज्ञामधिगम्य वत्सपीतस्य हवनस्य चावशिष्टांशं नन्दिनीदुग्धं मूर्त्तिं दधद् धवलं यश इव सतृष्णः सन् पपौ ॥ ६९ ॥

भावार्थः—प्रशंसनीय स्वभाव वाले सज्जनों में प्रेम रखने वाले, वसिष्ठ महर्षि की आज्ञा को प्राप्त किये हुये, उन राजा दिलीप ने बछड़े के पीने से तथा अग्निहोत्र से बचे हुये नन्दिनी के दूध को सफेद मूर्ति को धारण किये हुये यश की भांति अधिक तृष्णा से युक्त होते हुये पीया ॥ ६९ ॥

*अथ प्रातःकाले वसिष्ठो दिलीपं पत्नीपरिवृतमयोध्यां प्रति प्रस्थापयामासेत्याह—*

**प्रातर्यथोक्तव्रतपारणाऽन्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।**
**तौ दंपती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥ ७० ॥**

सञ्जीविनी—प्रातरिति । वशी वसिष्ठः प्रातः । यथोक्तस्य व्रतस्य गोसेवारूपस्याङ्गभूता या पारणा तस्या अन्ते प्रास्थानिकं प्रस्थानकाले भवं तत्कालोचितमित्यर्थः । "कालाट्ठञ्" इति ठञ्प्रत्ययः । "यथा कथं चिद् गुणवृत्त्याऽपि काले वर्तमानत्वात्प्रत्यय इष्यते" इति वृत्तिकारः । ईयते प्राप्यतेऽनेनेत्ययनं स्वस्त्ययनं शुभावहमाशीर्वादं प्रयुज्य तौ दंपती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ॥ ७० ॥

अन्वयः—वशी, वसिष्ठः, प्रातः, यथोक्तव्रतपारणाऽन्ते, प्रास्थानिकं, स्वस्त्ययन, प्रयुज्य, तौ, दम्पती, स्वां, राजधानीं प्रति, प्रस्थापयामास ॥ ७० ॥

व्याख्या—वशी = प्रभुत्ववान्, इन्द्रियोपरि प्रभुत्वकर्त्ता जितेन्द्रिय इति भावः । वसिष्ठः = तदाख्यमहर्षिः, प्रातः = प्रभाते, यथोक्तव्रतपारणाऽन्ते = यथाकथितनियमान्तभोजनावसाने, यथाशास्त्रोक्तगोसेवारूपव्रतसम्बन्धिव्रतान्तभोजनावसान इति यावत् । प्रास्थानिकं = यात्राकालिकं, स्वस्त्ययनं = क्षेमप्रापणं, शुभंप्रदमाशीर्वादमिति यावत् । प्रयुज्य = प्रयोगं कृत्वा, दत्वेति भावः । तौ = पूर्वोक्तौ, सुदक्षिणादिलीपा विति भावः । दम्पती =

जायापती, स्वाम्=आत्मीयां, निजामिति यावद् । राजधानीं प्रति=नृपपुरीम् प्रति, अयोध्यामुद्दिश्येति यावत्। प्रस्थापयामास=प्रेषयामास ॥ ७० ॥

समासादिः—उक्तमनतिक्रम्येति यथोक्तं (अ० भा०), यथोक्तं च तद् व्रतं यथोक्तव्रतं (क० धा० ), तस्य पारणा यथोक्तव्रतपारणा ( त० पु० ), तस्यान्तो यथोक्तव्रतपारणाऽन्तः ( त० पु० ) तस्मिंस्तथोक्ते । प्रस्थाने भवं प्रास्थानिकं तत्प्रास्थानिकं ( न० लिं० ) । ईयते प्राप्यतेऽनेनेत्ययनं ( न० लि० ), स्वस्ति क्षेमस्य, अयनं स्वस्त्ययनं ( त० पु० ) तत्स्वस्त्ययनम् । धीयन्तेऽस्यामिति धानी ( स्त्री० ), राज्ञां धानी राजधानी ( त० पु० ) तां राजधानीम् । वशमिन्द्रियोपरि प्रभुत्वमस्यास्तीति वशी ( पुं० ) ॥ ७० ॥

व्याकरणम्—अयनम्=इण् ( गतौ-णित् ) + युच् + सु, "बहुलमन्यत्रापि" इत्यौणादिके युच्प्रत्ययेऽनादेशे गुणे रूपम् । प्रयुज्य=प्र+युजिर् ( योगे—इरित् ) + क्त्वा + ल्यप् । प्रस्थापयामास=प्र+( ष्ठा (गतिनिवृत्तौ) + पुक् + णिच् ) स्थापि + आम् + अस् + लिट्, लिटस्तिपो णलि रूपम्, अत्र धातोर्णिचि "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुगागमेन ततोऽस्तेरनुप्रयोगे रूपम् । वशी=वश+इनिः+सु ॥ ७० ॥

वाच्यान्तरं—वशिना वसिष्ठेन प्रातर्यथोक्तव्रतपारणाऽन्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य तौ दम्पती स्वां राजधानीम्प्रति प्रस्थापयाञ्चक्राते ॥ ७० ॥

कोशः—"यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः" इत्यमरः । "अथ प्रस्थापयत्यमी । स्युः प्रेपणे प्रेषयति प्रेष्यति प्रहिणोति च" इत्याख्यातचन्द्रिका । "वशा वन्ध्यासुतायोषास्त्रीगवीकरिणीपु च । त्रिष्वायत्ते क्लीबमायत्तत्वे चेच्छाप्रभुत्वयोः ।" इति मेदिनी ॥ ७० ॥

तात्पर्यार्थः—वसिष्ठः प्रातःकाले पूर्वोक्तनन्दिनीसेवारूपव्रतस्य पारणाऽन्ते प्रस्थानकालोचितं स्वस्त्ययनमाशीर्वादं दत्वा सुदक्षिणादिलीपौ स्वां राजधानीमयोध्यां प्रति प्रस्थापयामास ॥ ७० ॥

भाषाऽर्थः—इन्द्रियों के ऊपर अपनी प्रभुता रखने वाले ( जितेन्द्रिय ) वसिष्ठ महर्षि ने प्रात काल में पूर्वोक्त गोसेवा रूप व्रत की पारणा कर चुकने के बाद प्रस्थान कालोचित स्वस्त्ययन कर के उन दोनों स्त्री पुरुष सुदक्षिणा और दिलीप को उनकी राजधानी अयोध्या की तरफ भेजा ॥ ७० ॥

* अथ दिलीपकर्तृकमयोध्यां प्रति प्रस्थानमाह—*

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥

सञ्जीविनी—प्रदक्षिणीकृत्येति । नृपो हुतं तर्पितं हुतमश्नातीति हुताशोऽग्निः । "कर्मण्यण्" । तं भर्तुर्मुनेरनन्तरम् प्रदक्षिणानन्तरमित्यर्थः । अरुन्धतीं च सवत्सां धेनुं च प्रदक्षिणीकृत्य प्रगतो दक्षिणं प्रदक्षिणं । "तिष्ठद्गुप्रभृतीनि च" इत्यव्ययीभावः । ततश्च्विः । अप्रदक्षिणं प्रदक्षिणं संपद्यमानं कृत्वा प्रदक्षिणीकृत्य सद्भिर्मङ्गलैः प्रदक्षिणादिभिर्मङ्गलाचारैरुदग्रतरप्रभावः सन् प्रतस्थे ॥ ७१ ॥

अन्वयः—नृपः, हुतं, हुताशं, भर्तुः, अनन्तरम्, अरुन्धतीं, च, सवत्सां, धेनुं, च, प्रदक्षिणीकृत्य, सन्मङ्गलोदग्रतरप्रभावः, "सन्" प्रतस्थे ॥ ७१ ॥

व्याख्या—नृपः=राजा, दिलीप इति यावद् । हुतं=स्वाहाकृतं, प्राप्तहविषं तर्पितमिति यावद् । हुताशम्=अग्निम्, भर्तुः=पोष्टुः, सर्वापद्भ्यो रक्षितुर्वसिष्ठस्येति भावः । अनन्तरम्=अव्यवहितम्, प्रदक्षिणानन्तरमित्यर्थः । अरुन्धतीं=वसिष्ठभार्यां, च=समुच्चयेऽर्थे, सवत्सां=तर्णकसहितां, धेनुं=गां, नन्दिनीमिति यावद् । च=समुच्चयेऽर्थे, प्रद-

क्षिणीकृत्य = परिक्रम्य, सन्मङ्गलोदग्रतरप्रभावः = श्रेष्ठभद्रोच्छ्रिततरतेजाः, श्रेष्ठैः प्रदक्षिणादिभिर्मङ्गलाचारैः प्रवृद्धतेजा इति यावत्। "सन्" इति शेषः । प्रतस्थे = प्रातिष्ठत, प्रस्थानं कृतवानिति यावद् ॥ ७१ ॥

समासादि—अविद्यमानमन्तरं यत्र तदनन्तरम् ( ब० व्री० ) । बिभर्त्तीति भर्त्ता तस्य भर्त्तुः ( पुं० ) । वत्सेन सहिता सवत्सा तां सवत्साम् ( ब० व्री० ) । सन्ति च तानि मङ्गलानि सन्मङ्गलानि ( क० धा० ), अयमनयोरतिशयेनोदग्र इत्युदग्रतरः ( पुं० ), सन्मङ्गलैरुदग्रतरः सन्मङ्गलोदग्रतरः ( त० पु० ), सन्मङ्गलोदग्रतरः प्रभावो यस्य स सन्मङ्गलोदग्रतरप्रभावः ( ब० व्री० ) ॥ ७१ ॥

व्याकरणं—प्रदक्षिणीकृत्य = प्रदक्षिण + च्वि + डुकृञ् (करणे—डुञित्) + क्त्वा + ल्यप् । हुतं = हु (दानादानयोः) + क्तः + अम्। हुताशं = हुत + अम् + अश (भोजने—अकारेत्) + अण् + अम् । अनन्तरं = नञ् + विद्यमान + सु + अन्तर + सु । प्रतस्थे = प्र + ष्ठा ( गतिनिवृत्तौ ) + लिट्, "समवप्रविभ्यः स्थः" इति लटः स्थाने आत्मनेपदसंज्ञकतप्रत्यये द्वित्वेऽभ्यासकार्ये रूपम् ॥ ७१ ॥

वाच्यान्तरं—नृपेण हुतं हुताशं भर्त्तुरनन्तरमरुन्धतीञ्च सवत्सां धेनुञ्च प्रदक्षिणीकृत्य सन्मङ्गलोदग्रतरप्रभावेण "सता" प्रतस्थे ॥ ७१ ॥

कोशः—"हविर्दाने जुहोत्यदः । स्वाहावौषड्वषड्भ्यश्च करोति कुरुते पदे" इत्याख्यातचन्द्रिका । "भर्त्ता पोष्टरि धारके" इत्यनेकार्थसङ्ग्रहः । "सन्साधौ धीरशस्तयोः" इति मेदिनी । "प्रभावस्तेजसि शक्तौ" इत्यनेकार्थसङ्ग्रहः ॥ ७१ ॥

तात्पर्यार्थः—दिलीपो हुतमग्निं पत्नीसहितं वसिष्ठञ्च तथा सवत्सां धेनुमपि परिक्रम्य प्रदक्षिणादिभिः सन्मङ्गलाचारैः प्रवृद्धतेजाः सन् राजधानीं प्रति जगाम ॥ ७१ ॥

भाषाऽर्थः—राजा दिलीप ने आहुति दिये हुये अग्नि की तथा रक्षा करने वाले वसिष्ठ जीकी प्रदक्षिणा कर चुकने के बाद उनकी पत्नी अरुन्धती तथा बछड़े के सहित नन्दिनी की भी प्रदक्षिणा करके अच्छे मङ्गलमय प्रदक्षिणा आदि करने से बढ़े हुये तेज वाले होते हुये प्रस्थान किया ॥ ७१ ॥

* अथ पत्नीसहितस्य दिलीपस्य रथेन गमनमाह—*

**श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः ।**
**ययावनुद्धातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥**

सञ्जीविनी—श्रोत्रेति । धर्मपत्नीसहितः सहिष्णुर्व्रतादिदुःखसहनशीलः स नृपः श्रोत्राभिरामध्वनिना कर्णाह्लादकरस्वनेनानुद्घातः पाषाणादिप्रतिघातरहितः, अत एव सुखयतीति सुखः, तेन रथेन स्वेन पूर्णेन सफलेन मनोरथेनेव मार्गमध्वानं ययौ ॥ मनोरथपक्षे—ध्वनिः श्रुतिः । अनुद्घातः प्रतिबन्धनिवृत्तिः ॥ ७२ ॥

अन्वयः—धर्मपत्नीसहितः, सहिष्णुः, सः, श्रोत्राभिरामध्वनिना, अनुद्धातसुखेन, रथेन, स्वेन, पूर्णेन, मनोरथेन, इव, मार्गं, ययौ ॥ ७२ ॥

व्याख्या—धर्मपत्नीसहितः = सुकृतभार्यासमेतः, सुदक्षिणायुत इति यावद् । सहिष्णुः = तितिक्षुः, व्रतादिदुःखसहनशील इति यावद् । सः = पूर्वोक्तः, दिलीप इति यावद्। श्रोत्राभिरामध्वनिना = कर्णानन्दप्रदनिनादेन, "मनोरथपक्षे" कर्णानन्दप्रदाकर्णनेन । अनुद्धातसुखेन = स्खलनरहितशर्मकरेण, पाषाणादिप्रतिघातरहितेनात एव सुखकरेणेति यावद् । "मनोरथपक्षे" प्रतिबन्धनिवृत्त्याऽत एव सुखकरेण । रथेन = स्यन्दनेन, स्वेन = आत्मीयेन, निजेनेति यावद् । पूर्णेन = पूरितेन, सफलेनेति यावद् । मनोरथेन = अभिलाषेण, इव = यथा, मार्गं = पन्थानं, ययौ = जगाम ॥ ७२ ॥

समासादि—श्रोत्रयोरभिरामः श्रोत्राभिरामः ( त०पु० ), श्रोत्राभिरामो ध्वनिर्यस्य स श्रोत्राभिरामध्वनिः ( ब० व्री० ) तेन तथोक्तेन । धर्मस्य पत्नी धर्मपत्नी ( त० पु० ), तया सहितो धर्मपत्नीसहितः ( त० पु० ) । सहनशीलः सहिष्णुः ( पुं० ) । उद्धननमुद्धातः ( पुं० ), न उद्धातोऽनुद्धातः ( न० त० पु० ), अनुद्धातेन सुखोऽनुद्धातसुखः ( त० पु० ) तेन तथोक्तेन । मन एव रथोऽत्र, मनो रथ इव वेति मनोरथः ( पुं० ) तेन मनोरथेन ॥ ७२ ॥

व्याकरणं—सहिष्णुः = षह ( मर्षणे—अकारेत् ) + इष्णुच् + सु, "अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्" इतीष्णुच्प्रत्यये सौ रूपम् । ययौ = या ( प्रापणे ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ७२ ॥

वाच्यान्तरं—धर्मपत्नीसहितेन सहिष्णुना तेन श्रोत्राभिरामध्वनिनाऽनुद्धातसुखेन रथेन स्वेन पूर्णेन मनोरथेनेव मार्गो यये ॥ ७२ ॥

कोशः—"सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी" इत्यमरः । "उद्धातस्तु पुमान् पादस्खलने समुपक्रमे । पवनाभ्यासयोगस्य कालभेदे च कीर्त्तितः । उत्तुङ्गे मुद्गरेऽपि" इति । "पूर्णं शक्ते समग्रे ना पूरितेऽत्वभिधेयवत्" इति च मेदिनी ॥ ७२ ॥

तात्पर्यार्थः—सुदक्षिणासहितो राजा दिलीपो नतोन्नतपाषाणादिप्रतिघातरहितेनात एव सुखप्रदेन रथेन निजेन सफलमनोरथेनेव मार्गमुल्लङ्घितवान् ॥ ७२ ॥

भाषाऽर्थः—धर्मपत्नी सुदक्षिणा के सहित व्रतादि सम्बन्धी दुःखों के सहन करने वाले उन राजा दिलीप ने कानों को सुख देने वाली है ध्वनि जिसकी, तथा नीचे ऊंचे पत्थरों के ठोकर लगने से जिसमे नहीं गिर सकता, अत एव सुखप्रद रथ से जो सुनने में कानों को सुख देने वाला है, तथा प्रतिबन्ध के दूर हो जाने से आनन्द प्रद है ऐसे अपने सफल हुये मनोरथ के समान रास्ता को तय करने लगे ॥ ७२ ॥

*अथ सतृष्णः सन् प्रजावर्गो वसिष्ठाश्रमात्प्रतिनिवृत्तं सपत्नीकं दिलीपं ददर्शेत्याह—*

**तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजाऽर्थव्रतकर्शिताङ्गम् ।**
**नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥**

सञ्जीविनी—तमिति । अदर्शनेन प्रवासनिमित्तेनाहितौत्सुक्यं जनितदर्शनोत्कण्ठम् प्रजाऽर्थेन संतानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतमङ्गं यस्य तम् । नवोदयं नवाभ्युदयं प्रजास्तृप्तिमनाप्नुवद्भिरतिगृध्नुभिर्नेत्रैः । ओषधीनां नाथं सोममिव तं राजानं पपुः, अत्यास्थया ददृशुरित्यर्थः । चन्द्रपक्षे—अदर्शनं कलाक्षयनिमित्तम् प्रजाऽर्थं लोकहितार्थं व्रतं देवताभ्यः कलादाननियमः ( तं च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः ) इति व्यासः । उदय आविर्भावः । अन्यत्समानम् ॥ ७३ ॥

अन्वयः—अदर्शनेन, आहितौत्सुक्यं, प्रजाऽर्थव्रतकर्शिताङ्गं, नवोदयं, प्रजाः, तृप्तिम्, अनाप्नुवद्भिः, नेत्रैः, ओषधीनां, नाथं, सोमम्, इव, तं, पपुः ॥ ७३ ॥

व्याख्या—अदर्शनेन = अनवलोकनेन, वसिष्ठाश्रमनिवासजन्येन, "चन्द्रपक्षे" कलाक्षयजन्येनादर्शनेनेति यावद् । आहितौत्सुक्यम् = आस्थापितौत्कण्ठ्यं, प्रजासु स्वदर्शनसम्बन्ध्यौत्सुक्यं येन स्थापितमिति भावः । प्रजाऽर्थव्रतकर्शिताङ्ग = सन्ततिप्रयोजनकनियमह्रसितगात्रं, चन्द्रपक्षे—लोकहितार्थदेवसम्बन्धिकलादानरूपनियमकृशीकृतगात्रं, नवोदयं = नवीनसमुन्नतिं, "चन्द्रपक्षे" नवीनोद्गमं, नवीनाविर्भावमिति यावत् । प्रजाः = जनाः, तृप्तिं = तर्पणम्, अप्राप्नुवद्भिः = अनधिगच्छद्भिः, अतिशयगर्धनैरिति भावः । नेत्रैः = नयनैः, ओषधीनां = फलपाकान्तव्रीहियवादीनां, नाथं = स्वामिनं, चन्द्रमिति यावद् । इव = यथा, तं = पूर्वोक्तं, राजानं दिलीपमिति यावत् । पपुः = अधयन्, सापेक्षमवलोकयामासुरिति भावः ॥ ७३ ॥

समासादि—उत्सुकस्य भाव औत्सुक्यं (न० लि०), आहितमौत्सुक्यं प्रजासु स्वदर्शनसम्बन्धि येन स आहितौत्सुक्यम् (ब० व्री०)। न दर्शनमदर्शनं (न० त० पु०) तेनादर्शनेन। प्रजा एवार्थः प्रयोजनं यस्य तत्प्रजाऽर्थं (ब० व्री०), प्रजाऽर्थं च तद् व्रतं प्रजाऽर्थव्रतं (त० पु० क० धा०), तेन कर्शितं प्रजाऽर्थव्रतकर्शितं (त० पु०), प्रजाऽर्थव्रतकर्शितमङ्गं यस्य स प्रजाऽर्थव्रतकर्शिताङ्गः (ब० व्री०) तं तथोक्तम्। नव उदयो यस्य स नवोदयः (ब० व्री०) तं नवोदयम् ॥ ७३ ॥

व्याकरणम्—आहितम्=आङ्+डुधाञ् (धारणपोषणयोः—डुञित्)+क्तः+सु, "दधातेर्हिः" इति ह्यादेशे रूपम्। पपुः=पा (पाने)+लिट्, लिटो झेरुसि धातोर्द्वित्वेऽभ्यासकार्ये "आतो लोप इटि च" इत्याकारलोपे रूपम्। तृप्तिं=तृप (प्रीणने—अकारेत्)+क्तिन्+अम् ॥ ७३ ॥

वाच्यान्तरम्—अदर्शनेनाहितौत्सुक्यः प्रजाऽर्थव्रतकर्शिताङ्गो नवोदयः प्रजाभिस्तृप्तिमनाप्नुवद्भिर्नेत्रैरोषधीनां नाथ इव स पपे ॥ ७३ ॥

कोशः—"अल्पत्वे लिश्यते क्रुश्यत्यमी ह्रसति चुण्डते। चत्वारः" इत्याख्यातचन्द्रिका। उद्गच्छत्युन्नमति चाप्युज्जिहीत उदीयते। उदञ्चत्युदयत्येतावात्मने द्वा वुदेति च। गत्यर्थाः प्राय उत्पूर्वा उदयस्याभिधायकाः" इत्यपि ॥ ७३ ॥

तात्पर्यार्थः—प्रवासनिमित्तकेनानवलोकनेन दर्शनार्थमतीवोत्कण्ठिताः प्रजाः पुत्रार्थं गोसेवारूपव्रतेन कृशीकृतशरीरं तं दिलीपं सतृष्णैर्नेत्रैरोषधीशं चन्द्रमिव ददृशुः ॥ ७३ ॥

भाषाऽर्थः—प्रवास करने के कारण से नहीं दीख पड़ने से "चन्द्रपक्ष में" कला के क्षय हो जाने से नहीं दीख पड़ने से लोगों में देखने की उत्कण्ठा जिसने उत्पन्न कर दी है तथा पुत्र के लिये गो सेवा रूप व्रत करने से जिनका शरीर कृश हो गया "चन्द्रपक्ष में" लोक के हित के लिये देवताओं को अमृत रूपी कलाओं का दान रूप नियम से जिनका शरीर कृश हो गया है, तथा जिनकी नवीन उन्नति हुई है "चन्द्रपक्ष में" जिनका नवीन आविर्भाव हुआ है, ऐसे औषधियों के स्वामी चन्द्रमा की भांति उन राजा दिलीप को प्रजाओं ने तृप्ति को नहीं प्राप्त करते हुये नेत्रों से देखा ॥ ७३ ॥

*अथ पुनर्वसिष्ठाश्रमादयोध्यां प्राप्तस्य दिलीपस्य राज्यभारधारणमाह—*

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

सञ्जीविनी—पुरन्दरेति। पुरः पुरीरसुराणां दारयतीति पुरन्दरः शक्रः। 'पूःसर्वयोर्दारिसहोः" इति खच्प्रत्ययः। "वाचंयमपुरन्दरौ च' इति मुमागमो निपातितः। तस्य श्रीरिव श्रीर्यस्य स नृपः पौरैरभिनन्द्यमानः। उत्पताकमुच्छ्रितध्वजम्। 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्" इत्यमरः। पुरं प्रविश्य भुजङ्गेन्द्रेण समानसारे तुल्यबले। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। भुजे भूयो भूमेर्धुरमाससञ्ज स्थापितवान् ॥ ७४ ॥

अन्वयः—पुरन्दरश्रीः, सः, पौरैः, अभिनन्द्यमानः, उत्पताकम्, पुरं, प्रविश्य, भुजङ्गेन्द्रसमानसारे, भुजे, भूयः, भूमेः, धुरम्, आससञ्ज ॥ ७४ ॥

व्याख्या—पुरन्दरश्रीः=इन्द्रशोभः, इन्द्रतुल्यशोभावानिति यावत्। सः=पूर्वोक्तः, राजा दिलीप इति यावद्। पौरैः=पुरोद्भवैः, अयोध्यावासिजनैरिति भावः। अभिनन्द्यमानः=अभितुष्यमाणः, अभिनन्दनविषयीक्रियमाण इति यावद्। सन्निति शेषः। उत्पताकम्=उच्छ्रितकेतनम्, पुरं=नगरम्, अयोध्याऽभिधमिति भावः। प्रविश्य=प्रवेशं कृत्वा, भुजङ्गेन्द्रसमानसारे=सर्पश्रेष्ठतुल्यबले, सर्पराजवासुकिना तुल्ये बले भूभारधारणविषय इति

भावः। भुजे = बाहौ, भूयः = पुनः, द्वितीयवारमिति यावद्। भूमेः = पृथिव्याः, धुरं = भारम्, आससञ्ज = आलम्बनं कृतवान्। अस्मिन् सर्गे प्रारम्भत एतावच्छ्लोकावधि सर्वत्रोपजातिनामकं वृत्तं बोध्यं, तल्लक्षणं यथा वृत्तरत्नाकरे—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीया वुपजातयस्ताः" इति। तथा च क्व चित् क्व चिद् उपेन्द्रवज्रेन्द्रवज्रेत्याख्ये वृत्ते अपि दृग्गोचरीभवतः, तल्लक्षणे क्रमश ऊहनीये ते यथा—"उपेन्द्रवज्रा जतजास्ततो गौ" इति। "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति च॥ ७४॥

समासादि—पुरः पुरीरसुराणां दारयतीति पुरन्दरः। (पुं०), तस्य श्रीरिव श्रीर्यस्य स पुरन्दरश्रीः (उ० स०)। उदुच्छ्रिता पताका यस्मिंस्तदुच्छ्रितपताकं (ब० व्री०) तत्तथोक्तम्। पुरे भवाः पौराः (पुं०) तैः पौरैः। अभिनन्द्यतेऽसावित्यभिनन्द्यमानः (पुं०)। भुजाभ्यां गच्छन्तीति भुजङ्गाः (पुं०), तेषु, इन्द्रो भुजङ्गेन्द्रः (त० पु०), तेन समानोभुजङ्गेन्द्रसमानः (त० पु०), भुजङ्गेन्द्रसमानः सारो यस्य स भुजङ्गेन्द्रसमानसारः (ब० व्री०) तस्मिंस्तथोक्ते॥ ७४॥

व्याकरणं—प्रविश्य = प्र + विश + (प्रवेशने—अकारेत्) + क्त्वा + ल्यप्। अभिनन्द्यमानः = अभि + (टुनदि (समृद्धौ—टुविदित्) + यक्) नन्द्य + लट् + मुक् + शानच् + सु। आससञ्ज = आङ् + षञ्ज (परिष्वङ्गे—अकारेत्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम्॥ ७४॥

वाच्यान्तरं—पुरन्दरश्रिया तेन पौरैरभिनन्द्यमानेनोत्पताकं पुरं प्रविश्य भुजङ्गेन्द्रसमानसारे भुजे भूयो भूमेर्धूराससञ्जे॥ ७५॥

कोशः—"इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः। वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः" इत्यमरः। "श्रीर्लक्ष्म्यां सरलद्रुमे। वेषोपकरणे वेषरचनायां मतौ गिरि। शोभात्रिवर्गसम्पत्त्योः" इत्यनेकार्थसंग्रहः। "विलम्बत्यासजत्यपि। आलम्बने" इत्याख्यातचन्द्रिका॥ ७४॥

तात्पर्यार्थः—इन्द्रतुल्यो दिलीपः पुरवासिप्रजाजनैः स्तूयमानः सन् सर्वत्रोच्छ्रितपताकं पुरं प्रविश्य पुनः पृथिव्याः पालनरूपभारं धृतवान्॥ ७४॥

भाषार्थः—इन्द्र के समान कान्ति वाले उन राजा दिलीप ने पुरवासियों से अभिनन्दन किये जाते हुये, जिसमें पताकायें फहरा रही थीं ऐसे "अयोध्या" नामक नगर में प्रवेश करके सर्पराज वासुकि के समान बल रखने वाले बाहु पर फिर पृथ्वी के पालन रूप भार को धारण किया॥ ७४॥

*अथ नन्दिनीप्रसादात्सुदक्षिणागर्भधारणमाह—*

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः-
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः॥ ७५॥

सञ्जीविनी—अथेति। अथ द्यौः सुरवर्त्म। 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः। अत्रेर्महर्षेर्नयनयोः समुत्थमुत्पन्नं नयनसमुत्थम्। "आतश्चोपसर्गे" इति कप्रत्ययः। ज्योतिरिव चन्द्रमिवेत्यर्थः। 'ऋक्षेशः स्यादत्रिनेत्रप्रसूतः' इति हलायुधः। चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—(नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः। तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा॥ समेत्य धारयामासुर्न च ताः समशक्नुवन्। स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभावितः॥ पपात भासयंल्लोकाञ्छीतांशुः सर्वभावनः॥) इति। सुरसरिद् गङ्गा वह्निना निष्ठ्यूतं निक्षिप्तं। "च्छ्वोः शूडनुनासिके च" इत्यनेन निपूर्वात्ष्ठीवतेर्वकार-

स्य ऊद्। 'नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः' इत्यमरः। ऐशं तेजः स्कन्दमिव। अत्र रामायणं-( ते गत्वा पर्वतं राम ! कैलासं धातुमण्डितम्। अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः॥ देवकार्यमिदं देव ! समाधत्स्व हुताशन !। शैलपुत्र्यां महातेजो-गङ्गायां तेज उत्सृज॥ देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः। गर्भं धारय वै देवि ! देवतानामिदं प्रियम्॥ इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत्। स तस्या महिमां दृष्ट्वा समन्तादवकीर्य च॥ समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः। सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन !॥ ) इति। राज्ञी सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै संततिलक्षणायै गुरुभिर्महद्भिर्लोकपालानामनुभावैस्तेजोभिरभिनिविष्टमनुप्रविष्टं गर्भमाधत्त दधावित्यर्थः। अत्र मनुः-( अष्टानां लोकपालानां वपुर्धारयते नृपः ) इति। अत्र 'आधत्त' इत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते। तथा मन्त्रे च दृश्यते-(यथेयं पृथिवी मह्युत्ताना गर्भमादधे। एवं तं गर्भमाधेहि दशमे मासि सूतवे॥ ) इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारण आधानशब्दप्रयोगदर्शनादिति। मालिनीवृत्तमेतत्। तदुक्तम्—( ननमयययुतेयं मालिनी भोगिलोकैः ) इति लक्षणात्॥ ७९ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः॥ २ ॥

अन्वयः—अथ, द्यौः, अत्रेः, नयनसमुत्थं, ज्योतिः, इव, सुरसरिद्, वह्निनिष्ठ्यूतम्, ऐशं, तेजः, इव, राज्ञी, नरपतिकुलभूत्यै, गुरुभिः, लोकपालानुभावैः, अभिनिविष्टं, गर्भम्, आधत्त॥ ७९ ॥

व्याख्या—अथ = अनन्तरम्, भूपालनभारधारणानन्तरमिति यावद्। द्यौः = व्योम, अत्रेः = तदाख्यमहर्षेः, नयनसमुत्थं = नेत्रोत्पन्नं, ज्योतिः = प्रकाशम्, अत्रिनेत्रप्रसूतं चन्द्रमिति यावद्। इव = यथा, सुरसरिद् = अमरनदी, गङ्गेति यावद्। वह्निनिष्ठ्यूतम् = अग्निक्षिप्तम्, ऐशम् = ईशसम्बन्धि, शंकरसम्बन्धीति यावद्। तेजः = रेतः, स्कन्दमिति यावद्। इव = यथा, राज्ञी = राजपत्नी, सुदक्षिणेति यावद्। नरपतिकुलभूत्यै = मनुष्येश्वरान्वयसम्पत्त्यै, दिलीपस्य सन्ततिरूपायै कुलसम्पत्त्या यिति भावः। गुरुभिः = श्रेष्ठैः, लोकपालानुभावैः = भुवनरक्षकतेजोभिः। अष्टदिगीशांशैरिति भावः। अभिनिविष्टम् = अनुप्रविष्टम्, गर्भं = भ्रूणम्, आधत्त = दधार॥ अस्मिन् पद्ये "मालिनी" नाम वृत्तं, तल्लक्षणं यथा श्रुतबोधे—"प्रथममगुरुषट्कं विद्यते यत्र कान्ते ! तदनु च दशमं चेदक्षरं द्वादशान्त्यम्। करिभिरथ तुरङ्गैर्यत्र कान्ते ! विरामः, सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा" इति। अन्यत्रापि वृत्तरत्नाकरोक्तं लक्षणमेतज्ज्ञेयं तद्यथा—"ननमयययुतेयं मालिनी भोगिलोकैः" इति। तदुदाहरणं यथाऽत्रैव—

| न | न | म | य | य | |
|---|---|---|---|---|---|
| ।।। | ।।। | ऽऽऽ | ।ऽऽ | ।ऽऽ | इति॥ ७९ ॥ |
| अथन | यनस | मुत्थंज्यो | तिरत्रे | रिवद्यौः | |

समासादि—नयनयोः समुत्थं नयनसमुत्थं (त०पु०) तत्तथोक्तम्। द्योतनमिति ज्योतिः (न०लि०)तज्ज्योतिः। दीव्यन्त्यस्यामिति द्यौः (स्त्री०)। सुराणां सरित् सुरसरित् (त०पु०)। वह्निना निष्ठ्यूतं वह्निनिष्ठ्यूतं (त०पु०) तत्तथोक्तम्। ईशस्येदमैशम् (न०लि०)। नराणाम्पतिर्नरपतिः (त०पु०), तस्य कुलं नरपतिकुलं (त०पु०), तस्य भूतिर्नरपतिकुलभूतिः (त०पु०) तस्यै नरपतिकुलभूत्यै। गीर्यते उद्गीर्यते शब्द्यते वा गर्भः (पुं०) तं गर्भम्। लोकं पालयन्तीति लोकपालाः (पुं०), तेषामनुभावा लोकपालानुभावाः (त० पु०) तैस्तथोक्तैः॥ ७९ ॥

व्याकरणं—समुत्थं = सम् + ष्ठा (गतिनिवृत्तौ) + कः + अम्। ज्योतिः = द्युत (दीप्तौ-अकारेत्) + इसिन् + अम्, द्युतेरिसिन्नादेश्च जः" इत्यौणादिके रिसिन्प्रत्यये धात्वादेश्च जत्वे लघूपधगुणेऽमो लुकि रूपम्। द्यौः = दिवु (क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु—उदित्) + डिविः + सु, "दिवेर्डिविः" इत्यौणादिके डिविप्रत्यये टिलोपे ततः सौ "दिव औत्" इत्यौकारान्तादेशे यणेऽक्विविधित्वेन स्थानिवत्त्वाभावाद्धल्ङ्याब्भ्यिति सुलोपाभावे रुत्वे विसर्गे रूपम्। निष्ठ्यूतं = नि + ष्ठिवु (निरसने—उदित्) + क्तः + अम्। ऐशम् = ईश + अण् + अम्। गर्भं = गॄ (निगरणे—शब्दे वा) + भन् + अम्, "अर्तिगॄभ्यां भन्" इत्यौणादिके भन्प्रत्यये गुणे रपरेऽमि रूपम्। आधत्त = आङ् + डुधाञ् (धारणपोषणयोः—डुञित्) + लङ्, लङस्तप्रत्यये शपः श्लौ द्वित्वेऽभ्यासकार्ये "श्नाऽभ्यस्तयोरातः" इत्याकारलोपे "दधस्तथोश्च" इति भष्भावे जश्त्वे चर्त्वे रूपम्। अभिनिविष्टम् अभि + नि + विश (प्रवेशने—अकारेत्) + क्तः + अम्॥ ७५॥

वाच्यान्तरम्—अथ दिवाऽत्रेर्नयनसमुत्थं ज्योतिरिव, सुरसरिता वह्निनिष्ठ्यूतमैशं तेज इव, राज्ञ्या नरपतिकुलभूत्यै गुरुभिर्लोकपालानुभावैरभिनिविष्टो गर्भ आधीयत॥ ७५॥

कोशः—"ज्योतिरग्नौ दिवाकरे। पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः" इति मेदिनी। "द्यौदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्" इत्यमरः। "तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः" इति। "भूतिर्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम्" इति च मेदिनी। "गर्भो भ्रूण इमौ समौ" इत्यमरः॥ ७५॥

तात्पर्यार्थः—यथा व्योमात्रिमुनेर्नयनसमुत्पन्नं चन्द्रं, यथा गङ्गा वह्निक्षिप्तं शिवसम्बन्धि स्कन्दोत्पत्तिविधायकं वीर्यं च दधार तथैव राज्ञी सुदक्षिणाऽपि दिलीपकुलस्थापनार्थमष्टदिग्पालानां विशिष्टतेजोभिरनुप्रविष्टं गर्भं धृतवती॥ ७५॥

भाषाऽर्थः—इसके बाद आकाश ने जैसे अत्रि मुनि के नेत्रों से उत्पन्न ज्योतिःस्वरूप चन्द्रमा को और देवनदी गंगाजी ने जैसे अग्नि से फेंके भये शंकर सम्बन्धी (स्कन्दको पैदा करने वाले) वीर्य को धारण किया उसी भांति रानी सुदक्षिणा ने भी राजा दिलीप के कुल की "सन्तान रूप" सम्पत्ति के लिये श्रेष्ठ लोकपालों के तेज से गर्भ को धारण किया॥ ७५॥

इत्थं श्रीव्रजमोहनात्मजनुषा गोस्वामिविद्वद्वर—
श्रीदामोदरशास्त्रिशिष्यपदवीभाजाऽच्युतानुग्रहाद्।
श्रीब्रह्मान्वितशङ्करेण विहिता व्याख्या सुधाऽऽख्या नवा।
पूर्तिं श्रीरघुवंशकाव्यसुभगे सर्गे द्वितीयेऽभ्यगात्॥ २॥

इति श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिश्रीदामोदरशास्त्रिणामन्तेवासिना मिश्रोपाह्वसरयूपारीणपङ्क्तिपावनान्ववायावतंसविविधकलाकोविदश्रौतस्मार्तकर्मनिष्ठगौतमगोत्रोद्भवश्रीव्रजमोहनशर्मतनुजन्मना श्रीब्रह्मशङ्करशर्मणा कृतया सुधाऽऽख्यया व्याख्ययाऽन्वितः
श्रीरघुवंशमहाकाव्ये दिलीपस्य नन्दिनीवरप्रदानो नाम
द्वितीयः सर्गः समाप्तः।

# अथ तृतीयः सर्गः ।

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः ।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात् ॥

'राज्ञी गर्भमाधत्त' ( २।७५ ) इत्युक्तं, सम्प्रति गर्भलक्षणानि वर्णयितुं प्रस्तौति—

**अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।**
**निदानमिक्ष्वाकुकुलस्य सन्ततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १ ॥**

सञ्जीविनी—अथेति । अथ गर्भधारणानन्तरं सुदक्षिणा । उपस्थितोदयं प्राप्तकालं भर्तुर्दिलीपस्येप्सितं मनोरथम् । भावे क्तः । पुनः सखीजनस्योद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रिकाप्रादुर्भावम् । यद्वा कौमुदी नाम दीपोत्सवतिथिः । तदुक्तं भविष्योत्तरे—( कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता ) इति । तस्या मुखं प्रारम्भम् । 'सखीजनोद्वीक्षणकौमुदीमहम्' इति पाठं केचित्पठन्ति । इक्ष्वाकुकुलस्य संततेरविच्छेदस्य निदानं मूलकारणम् । 'निदानं त्वादिकारणम्' इत्यमरः । एवंविधं दौर्हृदलक्षणं गर्भचिह्नं वक्ष्यमाणं दधौ । स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी । यथाऽऽह वाग्भटः—( मातृजमस्य हृदयं मातुश्च हृदयेन तत् । संबद्धं तेन गर्भिण्याः श्रेष्ठं श्रद्धाविमाननम् ॥ ) इति । तत्संबन्धित्वाद्गर्भो दौर्हृदमित्युच्यते । सा च तद्योगाद्दौर्हृदिनीति । तदुक्तं संग्रहे—( द्विहृदयां नारीं दौर्हृदिनीमाचक्षते ) इति । अत्र दौर्हृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन च निरूपणाद्रूपकालंकारः । अस्मिन् सर्गे वंशस्थं वृत्तम्—( जतौ तु वंशस्थमुदीरितं जरौ ) इति लक्षणात् ॥ १ ॥

अन्वयः—अथ, सुदक्षिणा, उपस्थितोदयम्, भर्तुः, ईप्सितं, सखीजनोद्वीक्षणकौमुदीमुखम्, इक्ष्वाकुकुलस्य, सन्ततेः, निदानं, दौर्हृदलक्षणं, दधौ ॥ १ ॥

व्याख्या—अथ = अनन्तरं, गर्भधारणानन्तरमिति यावत् । सुदक्षिणा = तदाख्या दिलीपपत्नी, उपस्थितोदयं = प्राप्तोद्गमनं, समागताविर्भावकालमिति भावः । भर्तुः = स्वामिनः, दिलीपस्येति यावत् । ईप्सितम् = अभीष्टं, सखीजनोद्वीक्षणकौमुदीमुखम् = आलिलोकचक्षुर्ज्योत्स्नाप्रारम्भं, सखीजनानां नयनाह्लादकरमिति भावः । इक्ष्वाकुकुलस्य = तदाख्यसूर्यवंश्यनृपतिवंशस्य, सन्ततेः = पुत्रस्य, निदानम् = आदिकारणम्, "एवं विध" दौर्हृदलक्षणं = गर्भलक्ष्म, वक्ष्यमाणं शरीरकार्श्यप्रभृतीति भावः । दधौ = अदधात्, धृतवतीति यावद् ॥ १ ॥

समासादि—उपस्थित उदयो यस्य तदुपस्थितोदयं (ब० व्री०) तत्तथोक्तम् । कौ पृथिव्यां मोदन्ते जना अनेनेति कुमुदश्चन्द्रः (पुं०), तस्येयं कौमुदी (स्त्री०), उद्वीक्ष्यत एभिरित्युद्वीक्षणानि (न० लि०), सख्य एव जनाः सखीजनाः (क० धा०), तेषामुद्वीक्षणानि सखीजनोद्वीक्षणानि (त० पु०), तेषां कौमुदीसखी जनोद्वीक्षणकौमुदी (त० पु०), तस्या मुखं सखीजनोद्वीक्षणकौमुदीमुखं (त० पु०) तत्तथोक्तम् । नितरां दीयतेऽसाधारणतया जन्यतेऽनेनेति निदानं (न० लि०) तन्निदानम् । इक्ष्वाकोः कुलमिक्ष्वाकुकुलं (त० पु० ) तस्येक्ष्वाकुकुलस्य । दुर्हृदः कर्म भावो वा दौर्हृदम् (न० लि०), तस्य लक्षणं दौर्हृदलक्षणं तत्तथोक्तम् (त० पु०) ॥ १ ॥

व्याकरणं—कौमुदी = ( कुमुदः = कु + ङि + मुद (हर्षे—अकारेत्) + कः) कुमुद + ङस् + अण् + ङीप् + सु । निदानं = नि + डुदाञ् (दाने—डुवित्) + ल्युट् + अम्, "करणाधिकरणयोश्च" इति ल्युट्प्रत्ययेऽनादेशे रूपम् । दधौ = डुधाञ् (धारणपोषणयोः—डुवित्) + लिट्, लिटस्तिपो णल औकारादेशे धातोर्द्वित्वेऽभ्यासकार्ये रूपम् ॥ १ ॥

वाच्यान्तरम्—अथ सुदक्षिणयोपस्थितोदयं भर्तुरीप्सितं सखीजनोद्वीक्षणकौमुदीमुखमिक्ष्वाकुकुलस्य सन्ततेर्निदानं दौहृदलक्षणं दधे ॥ १ ॥

कोशः—"आलिः सखी वयस्या च" इति । "चन्द्रिका कौमुदी ज्योत्स्ना" इति चामरः "सन्ततिः स्तात् पङ्क्तौ गोत्रे पारम्पर्ये च पुत्रयोः" इति मेदिनी ॥ १ ॥

तात्पर्यार्थः—अथ गर्भधारणानन्तरं सुदक्षिणा भर्तुर्दिलीपस्याभीष्टं प्राप्ताविर्भावसमयं सखीजननयनाह्लादकरमिक्ष्वाकुवंशस्य पुत्रस्य मुख्यकारणं वक्ष्यमाणं शरीरकार्श्यादि गर्भलक्षण दधार ॥ १ ॥

भाषाऽर्थः—उसके (गर्भधारण करने के) वाद रानी सुदक्षिणा ने, जिसका समय उपस्थित होगया है, और जो स्वामी महाराज दिलीप का अभीष्ट है, तथा सखी लोगों के नेत्रों को आह्लादित करने वाली चन्द्रिका का जो प्रादुर्भाव स्वरूप है; और जो इक्ष्वाकुवंश के सन्तान (पुत्र) का मुख्य कारण है, ऐसे गर्भ के लक्षण जो कि आगे शरीर की कृशता आदि कहे जायँगे उस को धारण किया ॥ १ ॥

सम्प्रति क्षामताऽऽद्यं गर्भलक्षणं वर्णयति—

**शरीरसादादसमग्रभूषणा मुखेन साऽलक्ष्यत लोध्रपाण्डुना ।**
**तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥**

सञ्जीविनी—शरीरेति । शरीरस्य सादात्कार्श्यादसमग्रभूषणा परिमिताभरणा लोध्रपुष्पेणेव पाण्डुना मुखेनोपलक्षिता सा सुदक्षिणा। विचेया मृग्यास्तारका यस्यां सा तथोक्ता। विरलनक्षत्रेत्यर्थः। तनुप्रकाशेनाल्पकान्तिना शशिनोपलक्षितेषदसमाप्तप्रभाता प्रभातकल्पा। प्रभातादीषदूनेत्यर्थः। "तसिलादिष्वाकृत्वसुचः" इति प्रभातशब्दस्य पुंवद्भावः। शर्वरी रात्रिरिव । अलक्ष्यत । शरीरसादादिगर्भलक्षणमाह वाग्भटः—(क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम् । जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ) ॥ इति ॥ २ ॥

अन्वयः—शरीरसादाद्, असमग्रभूषणा, लोध्रपाण्डुना, मुखेन, "उपलक्षिता" सा, विचेयतारका, तनुप्रकाशेन, शशिना, "उपलक्षिता" प्रभातकल्पा, शर्वरी, इव, अलक्ष्यत ॥२॥

व्याख्या—शरीरसादाद् = देहविशरणात्, तनोः कार्श्यादिति यावद् । असमग्रभूषणा = असम्पूर्णाभरणा, धृतकतिपयालङ्करणेति यावद् । लोध्रपाण्डुना = गालवपाण्डुरेण, लोध्रपुष्पेणेव पाण्डुवर्णेनेति यावद् । मुखेन = वदनेन, उपलक्षितेति शेषः । सा = सुदक्षिणा, तदाख्या दिलीपपत्नी, विचेयतारका = अन्वेषणार्हनक्षत्रा, कतिपयनक्षत्रयुतेति भावः । तनुप्रकाशेन = सूक्ष्मद्योतेन, स्वल्पकान्तिमतेति यावद् । शशिना = चन्द्रेण, उपलक्षितेति शेषः । प्रभातकल्पा = प्रत्यूषकल्पा, प्रातःकालादीषदूनेति भावः । शर्वरी = रात्रिः, इव = यथा, अलक्ष्यत = आलोक्यत, जनैरिति शेषः ॥ २ ॥

समासादि—सदनं सादः (पुं०), शरीरस्य सादः शरीरसादः (त० पु०) तस्माच्छरीरसादाद् । अविद्यमानानि समग्राणीत्यसमग्राणि (ब० व्री०), असमग्राणि भूषणानि यस्याः साऽसमग्रभूषणा ( ब० व्री० ) । लोध्रवत् पाण्डु लोध्रपाण्डु तेन लोध्रपाण्डुना (उ० स०) । तनुः प्रकाशो यस्य स तनुप्रकाशः (ब० व्री०) तेन तनुप्रकाशेन । विचेतुं योग्या विचेयाः (स्त्री०), विचेयास्तारका यस्यां सा विचेयतारका (ब० व्री०) । प्रभातादीषदूनेति प्रभातकल्पा (स्त्री०) । शशोऽस्त्यस्मिन्निति शशी (पुं०) तेन शशिना । शृणाति चेष्टा इति शर्वरी (स्त्री०) ॥ २९ ॥

व्याकरणं—सादः = षद्लृ (विशरणगत्यवसादनेषु—लृदित् ) + घञ् + सु, भावे घञ्प्रत्यये सौ रूपम् । अलक्ष्यत = अट् + लक्ष (दर्शनाङ्कनयोः ) + णिच् + यक् + लङ् । प्रभातकल्पा = प्रभाता + सु + कल्पप् + टाप् + सु, "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्

प्रत्यये "तसिलादिष्वाकृत्वसुचः" इति प्रभातशब्दस्य पुंवद्भावे ततष्टाप साहल्ङ्यादिलोपे रूपम्। शशिना = शश + सु + इनिः + टा। शर्वरी = शृ (हिंसायाम्) + ष्वरच् + ङीप् + सु, "कशृगृवृभृचतिभ्यः ष्वरच्" इति ष्वरच्प्रत्यये धातोर्गुणे रपरे षित्वाद् ङीपि सोर्लुकि रूपम्॥२॥

वाच्यान्तरं—"जनाः" शरीरसादादसमग्रभूषणां लोध्रपाण्डुना मुखेन "उपलक्षितां" तां विचेयतारकां तनुप्रकाशेन शशिना "उपलक्षितां" प्रभातकल्पां शर्वरीमिवालक्षयद् ॥२॥

कोशः—"समग्रं सकलं पूर्णमखण्डं स्यादनूनके" इति। "अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्। मण्डनञ्च" इति। "सूक्ष्मं दभ्रं कृशं तनु" इति। "प्रकाशो द्योत आतपः" इति चामरः ॥ २ ॥

तात्पर्यार्थः—यथोषःकाले क्षीणकान्तिना चन्द्रमसा युक्ता कतिपयनक्षत्रा रात्रिर्भवति, तथैव पाण्डुवर्णेन मुखेनोपलक्षिता सुदक्षिणाऽपि शरीरस्य कार्श्याद् धृतकतिपयालङ्कारा बभूव ॥ २ ॥

भाषाऽर्थः—शरीर के कृश हो जाने के कारण से सारे आभूषणों को नहीं पहने हुई लोध्र के फूल के रङ्ग की तरह पाण्डु वर्ण वाले मुख से उपलक्षित (लक्ष्य की जाती हुई) उस रानी सुदक्षिणा को, गिने जाने लायक (विरल) नक्षत्रों वाली थोड़ी कान्ति से युक्त चन्द्रमा से उपलक्षित सवेरा होने में थोड़ी ही देरी जिसमें है, ऐसी रात्रि के समान लोगों ने देखा ॥ २ ॥

*संप्रति सुदक्षिणाकर्तृकं मृद्भक्षणं कौशलेन कविः प्रकाशयन्नाह—*

**तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।**
**करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥**

संजीविनी—तदिति। क्षितीश्वरो रहसि मृत्सुरभि मृदा सुगन्धि तस्या आननं तदाननं सुदक्षिणामुखमुपाघ्राय तृप्तिं नाययौ। कः कमिव। शुचिव्यपाये ग्रीष्मावसाने। 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते। ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि' इति विश्वः। पयोमुचां मेघानां पृषतैर्बिन्दुभिः। 'पृषन्ति बिन्दुपृषताः' इत्यमरः। सिक्तमुक्षितं वनराज्याः पल्वलमुपाघ्राय करी गज इव। अत्र करिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसंधेयः। गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव। एतेन दोहदाख्यं गर्भलक्षणमुच्यते ॥ ३ ॥

अन्वयः—क्षितीश्वरः, रहसि, मृत्सुरभि, तदाननम्, उपाघ्राय, तृप्तिं, न, आययौ, "कः कमिव" शुचिव्यपाये, पयोमुचां, पृषतैः, सिक्तं, वनराजिपल्वलम्, "उपाघ्राय," करी, इव॥३॥

व्याख्या—क्षितीश्वरः = पृथ्वीपतिः, राजा दिलीप इति यावद्। रहसि = विजने, एकान्त- इति यावद्। मृत्सुरभि = मृत्तिकाघ्राणतर्पणः, मृत्तिकया शोभनगन्धविशिष्टमिति भावः। तदाननम् = पूर्वोक्तसुदक्षिणामुखम्, उपाघ्राय = उपशिङ्घ्य, नासिकया गन्धग्रहणं कृत्वेति यावत्। तृप्तिं = तर्पणं, न = नहि, आययौ = प्राप, तृप्तो न बभूवेति भावः। "कः कमिव" इति शेषः। शुचिव्यपाये = ग्रीष्मनाशे, ग्रीष्मावसान इति यावत्। पयोमुचां = वारिदानां, पृषतः = बिन्दुभिः, सिक्तम् = आर्द्रीकृतं, वनराजिपल्वलं = विपिनपङ्क्त्यल्पजलाशयं, विपिनमध्यस्थितं स्वल्पजलाशयमिति यावद्। "उपाघ्राय" करी = गजः, इव = यथा ॥ ३ ॥

समासादि—आनन्त्यनेनेत्याननं (न०लिं०), तस्या आननं तदाननं (त०पु०) तत्तथोक्तम्। मृदा सुरभि मृत्सुरभि (त०पु०) तन्मृत्सुरभि। क्षितेरीश्वरः क्षितीश्वरः (त०पु०)। करः शुण्डादण्डोऽस्यास्तीति करी (पुं०)। पयांसि मुञ्चन्तीति पयोमुचः (पुं०) तेषां पयोमुचाम्। विशेषेणापायन व्यपायः (पुं०), शुचेर्व्यपायः शुचिव्यपायः (त०पु०) तस्मिन्, शुचिव्यपाये। वनानां राजिर्वनराजिः (त० पु०) तस्याः पल्वलो वनराजिपल्वलः (त० पु०) तं तथोक्तम् ॥ ३ ॥

व्याकरणम्—आननम् = अन ( प्राणने—अकारेत् ) + ल्युट् + सु, "करणाधिकरणयोश्च" इति ल्युट्प्रत्ययेऽनादेशे वृद्धौ रूपम् । उपाघ्राय = उप + घ्रा ( गन्धोपादाने ) + क्त्वा + ल्यप् । आययौ = आङ् + या (प्रापणे) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्यं णल औकारादेशे रूपम्। सिक्तं = षिच (क्षरणे-अकारेत् ) + क्तः + अम्, "चोः कु" रिति कुत्वे रूपम्॥३॥

वाच्यान्तरं—क्षितीश्वरेण रहसि मृत्सुरभि तदाननमुपाघ्राय तृप्तिर्नाययये, "केन क इव" शुचिव्यपाये पयोमुचाम् पृषतैः सिक्तं वनराजिपल्वलमुपाघ्राय करिणेव ॥ ३ ॥

कोशः—"मृन्मृत्तिका" इति । "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः । रहश्चोपांशु चालिङ्गे" इति चामरः। "घ्राणे जिघ्रति शिङ्घति" इति। "अथ वर्षति। उनत्ति शीकते शर्धत्यपि मर्धति सिञ्चति । आर्द्रीकरोति च ज्ञेयमात्मनेऽपि चतुष्टयम । सीकयति तेमयतीत्यादि जेषति सूदति । सचते पर्षति गरत्यपि मेषति मर्षति । घरत्युक्षति सेके स्युनॆपत्यपि च शिम्यति । गडत्येवं मेहति च तथा मिन्वति निन्वति । क्लिद्यति स्तिम्यति स्तीम्यत्यार्द्रीभावे च तिम्यति" इति चाख्यातचन्द्रिका ॥ ३॥

तात्पर्यार्थः—गजो यथा ग्रीष्मावसाने वारिदविन्दुभिरार्द्रीकृतं वनमध्यस्थं स्वल्पजलाशयमुपाघ्राय तृप्तिं नाप्नोति, तथैव दिलीपोऽप्येकान्ते मृद्भक्षणेन तद्गन्धयुतं सुदक्षिणाया आननमुपाघ्राय तृप्तिं न प्राप ॥ ३ ॥

भाषाऽर्थः—पृथ्वी के स्वामी राजा दिलीप ने एकान्त में मिट्टी के खाने से सुगन्ध युक्त उस सुदक्षिणा के मुख को सूंघ कर, गर्मी के अखीर में मेघों के बूंदों से सींचे हुये वन की कतारो के बीच में मौजूद छोटे तालाव (थोड़े जल वाले गड्ढे) को सूंघ कर हाथी के समान तृप्ति को नहीं प्राप्त किया ॥ ३ ॥

दोहदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते—

**दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।**
**अतोऽभिलाषे प्रथमं तथाविधे मनो ववन्धान्यरसान्विलङ्घ्य सा ॥४॥**

सञ्जीविनी—दिवमिति । हि यस्माद्दिगन्तविश्रान्तरथश्चक्रवर्ती तस्याः सुतस्तत्सुतः। मरुत्वानिन्द्रः। 'इन्द्रो मरुत्वान्मघवा' इत्यमरः । दिवं स्वर्गमिव भुवं भोक्ष्यते । "भुजोऽनवने" इत्यात्मनेपदम् । अतः प्रथमं सा सुदक्षिणा तथाविधे भूविकारे मृद्रूपे । अभिलष्यत इत्यभिलाषो भोग्यवस्तु तस्मिन् । कर्मणि घञ्प्रत्ययः । रस्यन्ते स्वाद्यन्त इति रसा भोग्यार्थाः । अन्ये च ते रसाश्च तान्विलङ्घ्य विहाय मनो ववन्ध। विदधावित्यर्थः । दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्षते ॥ ४ ॥

अन्वयः—हि, दिगन्तविश्रान्तरथः, तत्सुतः, मरुत्वान्, दिवम्, इव, भुवं, भोक्ष्यते, अतः, प्रथमं, सा, तथाविधे, अभिलाषे, अन्यरसान्, विलङ्घ्य, मनः, ववन्ध ॥ ४ ॥

व्याख्या—हि = यतः, यस्मात्कारणादित्यर्थः । दिगन्तविश्रान्तरथः = आशाप्रान्तकृतविश्रामस्यन्दनः, सर्वदिग्गामिरथशालीति यावत् । तत्सुत. = पूर्वोक्तसुदक्षिणासूनुः, मरुत्वान् = इन्द्रः, दिवं = स्वर्गम्, इव = यथा, भुवं = महीम्, भोक्ष्यते = उपभोक्ष्यते, शासनं करिष्यतीति यावद् । अतः = एतस्मात्, कारणादिति यावत् । प्रथमं = पूर्वम्, आदाविति यावद् । सा = पूर्वोक्ता, सुदक्षिणेति यावत् । तथाविधे = तत्प्रकारके, भूविकारे मृद्भक्षणरूप इति यावद् । अभिलाषे = कामे, उपभोग्यवस्तुनीति भावः । अन्यरसान् = इतरास्वाद्यमानभोग्यपदार्थान् विलङ्घ्य = न्यक्कृत्य, तिरस्कृत्येति यावद् । मनः = चित्तम्, ववन्ध = ननाह, नियोजयामासेति यावद् ॥ ४ ॥

समासादि—मरुतः सन्त्यस्येति मरुत्वान् (पुं०) । दिशामन्ता दिगन्ताः (त० पु०), तेषु

विश्रान्तो दिगन्तविश्रान्तः (त० पु०), दिगन्तविश्रान्तो रथो यस्य स दिगन्तविश्रान्तरथः (ब० व्री०)। तस्याः सुतस्तत्सुतः (त० पु०)। अभिलप्यत इत्यभिलापः (पुं०) तस्मिन्नभिलापे। तथा विधेव विधा यस्य स तथाविधः (उ० स०) तस्मिंस्तथाविधे। रस्यन्त इति रसाः (पुं०), अन्ये च ते रसा इत्यन्यरसाः (क०धा०) तानन्यरसान् ॥ ४ ॥

व्याकरणम्—मरुत्वान् = मरुत् + मतुप् + सु, मतुप्प्रत्यये "झयः" इति वत्वे "तसौ मत्वर्थे" इति भत्वाज्जशत्वाभावे सौ रूपम्। भोक्ष्यते = भुज (पालनाभ्यवहारयोः—अकारेत्) + स्य + लृट्, "भुजोऽनवने" इत्यात्मनेपदसंज्ञके तप्रत्यये रूपम्। अभिलापे = अभि + लप (कान्तौ—अकारेत्) + घञ् + ङि, "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्प्रत्यये वृद्धौ रूपम्। बबन्ध = बन्ध (बन्धने—अकारेत्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम्। विलङ्घ्य = वि + लघि (गतौ—इदित्) + नुम् + क्त्वा + ल्यप् ॥ ४ ॥

वाच्यान्तरं—हि दिगन्तविश्रान्तरथेन तत्सुतेन मरुत्वता द्यौरिव भूर्भोक्ष्यतेऽतः प्रथमं तया तथाविधेऽभिलापेऽन्यरसान् विलङ्घ्य मनो बबन्धे ॥ ४ ॥

कोशः—"पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः" इत्यमरः। "सन्दानयति बध्नाति मूर्वत्यन्दति कीलति। पाशयत्यन्तति जुटति सिनुते च कञ्चते॥ कचते टङ्कयति च योजयत्यपि मन्यति। काञ्चते ग्रन्थयति च सिनाति च सिनोति च॥ संयच्छत्यात्मने षट् स्युर्नह्यत्यपि दधाति च। युनातीति मवते च बन्धे मवति योजति॥ इत्याख्यातचन्द्रिका ॥ ४ ॥

तात्पर्यार्थः—यथा सुरपतिः स्वर्गं भुङ्क्ते, तथैव सुदक्षिणायास्तनयोऽपि चक्रवर्त्ती भूत्वा सम्पूर्णां पृथिवीं भोक्ष्यते, अत एव सा सुदक्षिणाऽन्यानास्वाद्यपदार्थान् विहाय प्रथमं तथाविधे भूविकारे मृद्भक्षणरूपेऽभिलापे मनो विदधौ ॥ ४ ॥

भाषाऽर्थः—क्योंकि दिशाओं के अन्त में रथ को विश्राम कराने (पहुंचाने) वाला (चक्रवर्त्ती) उस (सुदक्षिणा) का पुत्र इन्द्र जैसे स्वर्ग का भोग करता है उसी भांति पृथ्वी का भोग करेगा, इस कारण से प्रथम उस (सुदक्षिणा) ने उस प्रकार के मिट्टी रूप भोग्य वस्तु में अन्य चखने लायक वस्तुओं को छोड़ कर मन को लगाया ॥ ४ ॥

*अथ लज्जया निजदोहदं वक्तुमशक्नुवानायाः सुदक्षिणायाः सखीर्दिलीपस्तद्वाञ्छितं वस्तु पप्रच्छेत्याह—*

**न मे ह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मागधी।**
**इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥ ५ ॥**

सञ्जीविनी—नेति। मगधस्य राज्ञोऽपत्यं स्त्री मागधी सुदक्षिणा। "द्व्यञ्मगधकलिङ्गसूरमसादण्" इत्यण्प्रत्ययः। ह्रिया किंचित्किमपीप्सितमिष्टं मे मह्यं न शंसति नाचष्टे। केषु वस्तुषु स्पृहावतीत्यनुवेलमनुक्षणमादृत आदृतवान्। कर्तरि क्तः। 'आदृतौ सादरार्चितौ' इत्यमरः। प्रियायाः सखीः सहचरीरुत्तरकोसलेश्वरो दिलीपः पृच्छति स्म पप्रच्छ। "लट् स्मे" इत्यनेन भूतार्थे लट्। सखीनां विश्रम्भभूमित्वादिति भावः ॥ ५ ॥

अन्वयः—मागधी, ह्रिया, किञ्चिद्, ईप्सितम्, मे, न, शंसति, "अतः" केषु, वस्तुषु, स्पृहावती, इति, अनुवेलम्, आदृतः, प्रियासखीः, उत्तरकोसलेश्वरः, पृच्छति स्म ॥ ५ ॥

व्याख्या—मागधी = मगधपतिसुता, सुदक्षिणेति यावद्। ह्रिया = लज्जया, किञ्चित् = किमपि, अनिर्दिष्टनाम, वस्त्विति यावद्। ईप्सितं = वाञ्छितम्, मे = मह्यं, न = नहि, शंसति = कथयति, अत इति शेषः। केषु = अनिर्दिष्टनामसु, वस्तुषु = पदार्थेषु, भोग्यवस्तुविषयेष्विति यावत्। स्पृहावती = इच्छावती, इति = इत्याकारकं, वचनमिति भावः। अनुवेलं = वारम्वारम्, आदृतः = सादरः, "सन्" इति शेषः। प्रियासखीः = भार्यासहचरीः, सुदक्षिणायाः प्रियवयस्या इति भावः। उत्तरकोसलेश्वरः = उत्तरकोसलदेशाधिपतिः, दिलीप-

इति यावत् । पृच्छति स्म = पृष्टवान् ॥ ५ ॥

समासादि—स्पृहाऽस्त्यस्या इति स्पृहावती ( स्त्री० ) । मगधस्य राज्ञोऽपत्यं स्त्री चेद् मागधी ( स्त्री० ) । वेलायां वेलायामित्यनुवेलम् ( अ० ) । प्रियायाः सख्यः प्रियासख्यः (त० पु०) ताः प्रियासखीः । उत्तरे च ते कोसला उत्तरकोसलाः (क० धा०), तेषामीश्वर-उत्तरकोसलेश्वरः ॥ ५ ॥

व्याकरणं—शंसति = शंसु ( स्तुतौ—उदित् ) + शप् + लट्, लटस्तिपि रूपम् । स्पृहा-वती = स्पृहा + मतुप् + ङीप् + सु, "उगितश्च" इति ङीपि सौ रूपम् । पृच्छति स्म = प्रच्छ ( ज्ञीप्सायाम्—अकारेत् ) + शः + लट्, "लट् स्मे" इति भूतार्थे लटि तस्य तिपि शप्रत्यये "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति संप्रसारणे पूर्वरूपे रूपम् । आदृतः = आङ् + दृङ् (आदरे—ङित्) + क्तः + सुः, कर्त्तरि क्तप्रत्यये सौ रूपम् ॥५॥

वाच्यान्तरम्—मागध्या ह्रिया किञ्चिदीप्सितं मे न शस्यते, केषु वस्तुषु स्पृहावत्या "भूयते" इत्यनुवेलमादृतेन प्रियासख्य उत्तरकोसलेश्वरेण पृच्छयन्ते स्म ॥ ५ ॥

कोशः—"अनुयुङ्क्ते प्रश्नयति प्रश्ने ज्ञीप्सति पृच्छति" इत्याख्यातचन्द्रिका । "वेला बुधस्त्रियां काले सीमनीश्वरभोजने । अक्लिष्टमरणेऽम्भोधेस्तीरनीरविकारयोः" इत्यनेकार्थ-संग्रहः ॥ ५ ॥

तात्पर्यार्थः—सुदक्षिणा लज्जया किमपि निजेप्सितं न वक्ति, अतो न जाने केषु २ वस्तुषु तस्या इच्छा वर्त्तते, इति प्रतिक्षणं सुदक्षिणायाः प्रियासखीः सादरं दिलीपः पप्रच्छ ॥ ५ ॥

भावार्थः—मगध देश के राजा की लड़की रानी सुदक्षिणा लज्जा से किसी अभिलाषा को मुझ से नहीं प्रगट करती है, अतः किन वस्तुओं में पाने की उसकी इच्छा रहती है इस बात को बारंबार आदर पूर्वक रानी के सखियों से उत्तर कोसल देश के अधिपति राजा दिलीप पूछा करते थे ॥ ५ ॥

* अथ सुदक्षिणाया यद् यद् वाञ्छितमभूत् तत्तद् झटित्येव समानीय दिलीपाज्ञया पुरःस्थितमभूदित्याह— *

**उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।**
**न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥**

सञ्जीविनी—उपेत्येति। दोहदं गर्भिणीमनोरथः।'दोहदं दौर्हृदं श्रद्धा लालसं च समं स्मृ-तम्' इति हलायुधः । सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावमुपे-त्य प्राप्य यद्वस्तु वव्र आचकांक्ष तदाहृतमानीतम्। भर्त्रेति शेषः । अपश्यदेव । अलभतेत्यर्थः । कुतः । हि यस्मादस्य भूपतेस्त्रिदिवेऽपि स्वर्गेऽपीष्टं वस्त्वनासाद्यमनवाप्यं नाभूत् । किं याच्ञया । नेत्याह—अधिज्यधन्वन इति । नहि वीरपत्नीनामलभ्यं नाम किञ्चिदस्तीति भावः । अत्र वाग्भटः—( पादशोफो विदाहोऽन्ते श्रद्धा च विविधात्मिका ) इति । एतच्च पत्नीमनोरथपूरणाकरणे दृष्टदोषसम्भवाद् । न तु राज्ञः प्रीतिलौल्यात् । तदुक्तम्—( देयमप्यहितं तस्यै हितोपहितमल्पकम् । श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा । ) अन्यत्र च—( दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ) इति ॥ ६ ॥

अन्वयः—सा, दोहददुःखशीलताम्, उपेत्य, यद्, वव्रे, तद्, आहृतम्, अपश्यद्, एव, हि, अस्य, भूपतेः, त्रिदिवे, अपि, इष्टम्, अनासाद्यं, न, अभूत् ॥ ६ ॥

व्याख्या—सा = पूर्वोक्ता, सुदक्षिणेति यावद् । दोहददुःखशीलतां = गर्भिणीवाञ्छा-व्यथास्वभावम्, उपेत्य = प्राप्य, यद् = अनिर्दिष्टनाम, किञ्चिद्वस्त्विति यावद् । वव्रे = वृत-वती, प्राप्तुमिच्छां कृतवतीति यावत्। तद् = निर्दिष्टं, सद् वस्त्विति शेषः । आहृतम् = आनी-तं, दिलीपाज्ञया जनैरिति शेषः । अपश्यद् = दृष्टवती, एव = अवधारणेऽर्थे, हि = यतः,

अधिज्यधन्वनः=अधिरोपितमौर्वीकशरासनवतः । एतेन वस्त्वानयने वीरतैव निमित्तं न याच्ञेति सूचितम् । अस्य=एतस्य, भूपतेः=पृथ्वीश्वरस्य, दिलीपस्येति यावत् । त्रिदिवे=स्वर्गे, अपि=समुच्चयेऽर्थे, इष्टं=वाञ्छितं, वस्त्विति शेषः । अनासाद्यम्=अनधिगम्यम्, अप्राप्यमिति यावद् । न=नहि । अभूत्=अवर्त्तत ॥ ६ ॥

समासादि—दोहमाकर्षं ददाति यत्तद् दोहदं (न० लिं०), दुःखशीलस्य भावो दुःखशीलता (स्त्री०), दोहदेन दुःखशीलता दोहददुःखशीलता (त०पु०), तां तथोक्ताम् । ब्राह्मवैष्णवरौद्रभेदेन सात्विकराजसतामसभेदेन वा त्रिविधो दीव्यति व्यवहरति प्रकाशते वा त्रिदिवः (पुं०) तस्मिंस्त्रिदिवे । भुवः पतिर्भूपतिः (त० पु०) तस्य भूपतेः । आसादितुं योग्यमासाद्यं (न० लिं०), न आसाद्यमित्यनासाद्यं (न० त० पु०) । अधिरोपिता ज्या यत्र तदधिज्यं (व० व्री०) । अधिज्यन्धनुर्यस्यासावधिज्यधन्वा (व० व्री०) तस्याधिज्यधन्वनः ॥ ६ ॥

व्याकरणम्—उपेत्य=उप+इण्(गतौ–णित्)+तुक्+क्त्वा+ल्यप् । दोहदं=दोह+अम्+डुदाञ्(दाने–डुनित्)+कः+अम्, "आतोऽनुपसर्गे कः" इति कप्रत्यये कित्वादाकारलोपे रूपम् । वव्रे=वृञ् (वरणे–ञित्)+लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये यणादेशे रूपम् । अपश्यत्=अट्+दृशिर् (प्रेक्षणे—इरित्)+शप्+लङ्, लङस्तिपि शपि "पाघ्राध्मे"ति पश्यादेशे इडागमे रूपम् । आहृतम्=आङ्+हृञ् (हरणे–ञित्)+क्तः+अम् । त्रिदिवे=त्रि+जस्+दिवु (क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु—उदित्)+कः+ङि, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये कित्वाद् गुणाभावे रूपम् । अभूत्=अट्+भू (सत्तायाम्)+लुङ्, लुङस्तिपि च्लेः सिचो लुकि धातोरडागमे रूपम् ॥ ६ ॥

वाच्यान्तरं—तया दोहददुःखशीलतामुपेत्य यद्ववे तदाहृतमदृश्यत, हि—अधिज्यधन्वनोऽस्य भूपतेस्त्रिदिवेऽपीष्टेनानासाद्येन नाभावि ॥ ६ ॥

कोशः—"दोहदो गर्भलक्षणे अभिलाषे तथा गर्भे" इत्यनेकार्थसंग्रहः । अयमिच्छा मात्रवाच्यपि गर्भिणीच्छायां प्रयुज्यते । "पीड़ा बाधा व्यथा दुःखम्" इत्यमरः ॥ ६ ॥

तात्पयार्थः—गर्भावस्थायां सुदक्षिणा यद् यद्वस्त्वाचकांक्ष तदेव तत्सखीमुखाज् ज्ञात्वा स्वर्गस्थितमपि दिलीपः स्वप्रभावादानीय तत्पुरः स्थापितवान् ॥ ६ ॥

भाषाऽर्थः—उस सुदक्षिणा ने गर्भिणियों के मनोरथ द्वारा जो दुःख पाने का स्वभाव है उसे पाकर जिस वस्तु के पाने की इच्छा की उसी को महाराज दिलीप से मँगवाई गई देखा । क्योंकि—धनुष को चढ़ाये हुये इन महाराज दिलीप को स्वर्ग में वांछित वस्तु हो तो वह पाने के लायक नहीं हुआ यह नहीं अर्थात् पाने के योग्य ही हुआ ॥ ६ ॥

* अथ सुदक्षिणा दोहदप्राप्तौ सत्यां पुष्यमाणावयवतया रराजेत्याह— *

क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।
पुराणपत्रापगमादनन्तरं लतेव सन्नद्धमनोज्ञपल्लवा ॥ ७ ॥

संजीविनी—क्रमेणेति । सा सुदक्षिणा क्रमेण दोहदव्यथां च निस्तीर्य प्रचीयमानावयवा पुष्यमाणावयवा सती । पुराणपत्राणामपगमान्नाशादनन्तरं संनद्धाः संजाताः प्रत्यग्रत्वान्मनोज्ञाः पल्लवा यस्याः सा लतेव । रराज ॥ ७ ॥

अन्वयः— सा, क्रमेण, दोहदव्यथां, निस्तीर्य, प्रचीयमानावयवा, "सती" पुराणपत्रापगमाद्, अनन्तरं, सन्नद्धमनोज्ञप ल्लवालता, इव, रराज ॥ ७ ॥

व्याख्या—सा=पूर्वोक्ता, सुदक्षिणेति यावत् । क्रमेण=अनुक्रमेण, दोहदव्यथां=दौर्हृददुःखं, गर्भिणीमनोरथेन यत् प्राप्तिकालात्प्राग् दुःखं भवति तदित्यर्थः । च=अन्वाचयेऽर्थे, निस्तीर्य=अतिक्रम्य, प्रचीयमानावयवा=पुष्यमाणप्रतीका, सतीति

शेषः । पुराणपत्रापगमात् = प्राचीनपर्णविगलनाद्, जीर्णपर्णानां पतनादिति यावद् । अनन्तरम् = अव्यवहितोत्तरं, सन्नद्धमनोज्ञपल्लवा = सम्बद्धमनोरमकिसलया, संजातसुन्दरनवीनपल्लवेति यावद् । लता = वल्ली, इव = यथा, रराज = शुशुभे ॥ ७ ॥

समासादि—दोहदेन व्यथा दोहदव्यथा ( त० पु० ) तां दोहदव्यथाम् । प्रचीयन्त इति प्रचीयमानाः ( पुं० ), प्रचीयमाना अवयवा यस्याः सा प्रचीयमानावयवा ( ब० व्री० ) । पुराणानि च तानि पत्राणि पुराणपत्राणि ( क० धा० ), तेषामपगमः पुराणपत्रापगमः ( त० पु० ) तस्मात्पुराणपत्रापगमात् । सन्नद्धा मनोज्ञाः पल्लवा यस्याः सा सन्नद्धमनोज्ञपल्लवा ( ब० व्री० ) ॥ ७ ॥

व्याकरणं—निस्तीर्य = निस् + तॄ ( प्लवनसन्तरणयोः ) + क्त्वा + ल्यप्, "ॠत इद्धातोः" इतीत्वे रपरत्वे "हलि च" इति दीर्घे क्त्वो ल्यपि रूपम् । रराज = राजृ ( दीप्तौ—ऋदित् ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ७ ॥

वाच्यान्तरं—तया क्रमेण दोहदव्यथां च निस्तीर्य प्रचीयमानावयवया "सत्या" पुराणपत्रापगमादनन्तरं सन्नद्धमनोज्ञपल्लवया लतयेव रेजे ॥ ७ ॥

कोशः—"अङ्गं प्रतीकोऽवयवः" इति । "पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्" इति । "पल्लवोऽस्त्री किसलयम्" इति चामरः ॥ ७ ॥

तात्पर्यार्थः—प्राचीनपत्राणां वसन्तसमये पतनादनन्तरं यथा वल्ली नवकिसलयसंजाततयाऽतीव शोभते, तथैव राज्ञी सुदक्षिणाऽपि क्रमेण गर्भिणीमनोरथजन्यं दुःखमतिक्रम्य, पूर्णाभिलाषतयाऽतिशयां पुष्टिमापद्यमानैरवयवैः शुशुभे ॥ ७ ॥

भाषाऽर्थः—और वह रानी सुदक्षिणा क्रम से गर्भिणियों के मनोरथ से जो व्यथा होती है, उसे अतिक्रमण करके, जिसके अवयव पुष्ट हो रहे हैं, ऐसी होती हुई, पुराने पत्तों के गिरने के बाद, नवीन होने से सुन्दर पल्लव जिसमें उत्पन्न होगये हैं, ऐसी लता के समान सुशोभित हुई ॥ ७ ॥

लक्षणान्तरं वर्णयति—

**दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् ।**
**तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८ ॥**

सञ्जीविनी—दिनेष्विति । दिनेषु दोहददिवसेषु गच्छत्सु सत्सु नितान्तपीवरमतिस्थूलम् । आ समान्तान्नीले मुखे चूचुके यस्य तत् । तदीयं स्तनद्वयम् । भ्रमरैरभिलीनयोरभिव्याप्तयोः सुजातयोः सुन्दरयोः पङ्कजकोशयोः पद्ममुकुलयोः श्रियं तिरश्चकार । अत्र वाग्भटः—( अश्लेष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ ) इति ॥ ८ ॥

अन्वयः—दिनेषु, गच्छत्सु, "सत्सु" नितान्तपीवरम्, आनीलमुखं, तदीयं, स्तनद्वयम् भ्रमराभिलीनयोः, सुजातयोः, पङ्कजकोशयोः, श्रियं, तिरश्चकार ॥ ८ ॥

व्याख्या—दिनेषु = दिवसेषु, दोहददिवसेष्विति यावद् । गच्छत्सु = व्यतियत्सु, सत्स्विति शेषः । नितान्तपीवरम् = एकान्तस्थूलम्, आनीलमुखं = समन्तात्कृष्णाननम्, आकृष्णचूचुकमिति यावत् । तदीयं = तत्सम्बन्धि, सुदक्षिणाया इत्यर्थः । स्तनद्वयं = कुचद्वितयम्, भ्रमराभिलीनयोः = द्विरेफाभिव्याप्तयोः, सुजातयोः = शोभनोत्पन्नयोः, मनोरमयोरिति यावत् । पङ्कजकोशयोः = कमलकुड्मलयोः, श्रियं = शोभां, तिरश्चकार = अधरीचकार ॥ ८ ॥

समासादि—गच्छन्तीति गच्छन्ति(न०लि०) तेषु गच्छत्सु । आ समन्तान्नील इत्यानीले (अ० भा०), आनीले मुखे यस्य तदानीलमुखं (ब० व्री०) । द्वौ अवयवौ यस्येति तद् द्वयम् ( न० लि० ), स्तनयोर्द्वयं स्तनद्वयं ( त० पु० ) । भ्रमरैरभिलीना विति भ्रमराभिलीनौ ( त० पु० ) तयोर्भ्रमराभिलीनयोः । सु शोभनौ जातौ सुजातौ ( क० धा० ) तयोः सुजा-

तयोः । पङ्के जातं पङ्कजं ( न० लिं० ), तस्य कोशौ पङ्कजकोशौ ( त० पु० ) तयोः पङ्कजकोशयोः ॥ ८ ॥

व्याकरणं—तिरश्चकार = तिरस् + डुकृञ् ( करणे-डुञित् ) + लिट् , लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ "विभाषा कृञि", इति वैकल्पिकगतिसंज्ञायां रूपम् ॥ ८ ॥

वाच्यान्तरं—दिनेषु गच्छत्सु "सत्सु" नितान्तपीवरेणानीलमुखेन तदीयेन स्तनद्वयेन भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रीस्तिरश्चक्रे ॥ ८ ॥

कोशः—"पीनपीव्नी तु स्थूलपीवरे" इति । "कृष्णे नीलासितश्यामकालश्यामलमेचकाः" इति । "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इति चामरः । "कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोपेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे" इति मेदिनी ॥ ८ ॥

तात्पर्यार्थः—यादृशी शोभा पङ्कजकुड्मलयोर्भ्रमरसंयोगाद् भवति तादृशी शोभाऽस्याः सुदक्षिणाया अतिशयस्थूलयोः स्तनयोरपि नीलवर्णचूचुकविशिष्टतयाऽऽसीत् ॥ ८ ॥

भाषाऽर्थः—कुछ दिन व्यतीत होने पर अत्यन्त मोटे और चारो तरफ से नील वर्ण मुख वाले उस सुदक्षिणा के दोनों कुचों ने भौरों से व्याप्त सुन्दर कमल के दो कलियों की शोभा को "अपनी शोभा से" नीचा कर दिया ॥ ८ ॥

* अथ नृपो गर्भिण्याः सुदक्षिणाया गर्भं विशिष्टमहापुरुपयुक्तममन्यतेत्याह— *

**निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।**
**नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥ ९ ॥**

सञ्जीविनी—निधानेति । नृपः ससत्त्वामापन्नसत्त्वा गर्भिणीमित्यर्थः । 'आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । महिषीं निधानं निधिर्गर्भे यस्यास्तां, सागराम्बरां समुद्रवसनाम् । भूमिमिवेत्यर्थः । 'भूतधात्री रत्नगर्भा विपुला सागराम्बरा' इति कोशः । अभ्यन्तरे लीनः पावको यस्यास्तां शमीमिव । शमीतरौ वह्निरस्तीत्यत्र लिङ्गं 'शमीगर्भादग्निं जनयतीति' । अन्तःसलिलामन्तर्गतजलां सरस्वतीं नदीमिव । अमन्यत । एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि ॥ ९ ॥

अन्वयः—नृपः, ससत्वाम्, महिषीं, निधानगर्भां, सागराम्बराम्, इव, अभ्यन्तरलीनपावकां, शमीम्, इव, अन्तःसलिलां, सरस्वतीं, नदीम्, इव, अमन्यत ॥ ९ ॥

व्याख्या—नृपः = भूपः, राजा दिलीप इति यावत् । ससत्वां = जन्तुसहितां, गर्भिणीमिति यावद् । महिषीं = कृताभिषेकां, राज्ञीं सुदक्षिणामिति यावद् । निधानगर्भां = निधिकुक्षिं, अभ्यन्तरे निधिं दधतीमित्यर्थः । सागराम्बराम् = अब्धिवस्त्रां, पृथिवीमिति यावद् । इव = यथा, अभ्यन्तरलीनपावकाम् = मध्यश्लिष्टवह्निम्, अग्निगर्भामिति यावद् । शमीं = सक्तुफलां, शमीत्याख्यं विशेषतरुमिति यावद् । इव = यथा, अन्तःसलिलां = मध्यजलाम् । अदृश्यमानजलामिति यावद् । सरस्वतीं = तदाख्यां, नदीं = सरितम्, इव = यथा, अमन्यत = अजानात् ॥ ९ ॥

समासादि—निधानं गर्भे यस्याः सा निधानगर्भा ( ब० व्री० ) तां निधानगर्भाम् । सागर एवाम्बरं यस्याः सा सागराम्बरा ( ब० व्री० ) तां सागराम्बराम् । शमयति रोगान् या सा शमी ( स्त्री० ) तां शमीम् । अभ्यन्तरे लीनोऽभ्यन्तरलीनः ( त० पु० ), अभ्यन्तरलीनः पावको यस्याः साऽभ्यन्तरलीनपावका ( ब० व्री० ) तां तथोक्ताम् । अन्तः सलिलं यस्याः साऽन्तःसलिला ( ब० व्री० ) तां तथोक्ताम् । सरांसि सन्त्यस्यामिति सरस्वती ( स्त्री० ) तां सरस्वतीम् । सत्वेन सहिता ससत्वा ( ब० व्री० ) तां ससत्त्वाम् । मह्यतेऽसाविति महिषी ( स्त्री० ) तां महिषीम् ॥ ९ ॥

व्याकरणं—शमीं = ( शमु ( उपशमे—उदित् ) + णिच् ) शमि + अच् + ङीप् + अम्,

पचादित्वादच् प्रत्यये णिलोपे "षिद्गौरादिभ्यश्च" इति गौरादित्वाद् ङीषि रूपम्। सरस्वतीं=सरस्+मतुप्+ङीप्+अम्। महिषीम्=मह ('पूजायाम्—अकारेत्)+टिषच्+ङीप्+अम्, "अविमह्योष्टिषच्" इति टिषच्प्रत्यये टित्वाद् ङीपि रूपम्। अमन्यत=अट्+मनु( अवबोधने—उदित्)+श्यन्+लङ्, लङस्तिपि रूपम्॥ ९॥

वाच्यान्तरं—नृपेण ससत्त्वा महिषी निधानगर्भा सागराम्बरेवाभ्यन्तरलीनपावका शमीवान्तःसलिला सरस्वती नदीवामन्यत॥ ९॥

कोशः—"शमी सक्तुफला शिवा" इति। "अथ नदी सरित्" इति। "कृताभिषेका महिषी" इति चामरः॥ ९॥

तात्पर्यार्थः—राजा दिलीपो निजाभ्यन्तरे रत्नानि निदधतीं पृथ्वीमिव, अन्तःस्थितपावकयुतां शमीमिव, अदृश्यमानसलिलां सरस्वतीमिव सुदक्षिणां महापुरुषयुतं गर्भं दधतीं मन्यते स्म॥ ९॥

भाषाऽर्थः—राजा दिलीप ने गर्भिणी रानी सुदक्षिणा को, गर्भ में रत्नों के निधि को रखने वाली पृथ्वी तथा भीतर में छिपी हुई अग्नि को रखने वाले शमी वृक्ष और अन्तर्गत जल वाली सरस्वती नदी के समान समझा॥ ९॥

*अथ दिलीपस्य पुंसवनादिक्रियाकरणमाह—*

**प्रियाऽनुरागस्य मनः समुन्नतेर्भुजार्जितानां च दिगन्तसंपदाम्।**
**यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशी र्व्यधत्त सः॥ १०॥**

सञ्जीविनी—प्रियेति। धीरः स राजा प्रियायामनुरागस्य मनसः समुन्नतेरौदार्यस्य भुजेन भुजबलेन करेण चाऽर्जितानां, न तु वाणिज्यादिना। दिगन्तेषु संपदां धृतेः 'पुत्रो मे भविष्यतीं'ति संतोषस्य च। 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः। सदृशीरनुरूपाः। पुमान्सूयतेऽनेनेति पुंसवनं तदादिर्यासां ताः क्रिया यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान्। आदिशब्देनानवलोभनसीमन्तोन्नयने गृह्येते। अत्र (मासि द्वितीये तृतीये वा पुंसवनं यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्) इति पारस्करः। (चतुर्थेऽनवलोभनम्) इत्याश्वलायनः। (षष्ठेऽष्टमे वा सीमन्तोन्नयनम्) इति याज्ञवल्क्यः॥ १०॥

अन्वयः—धीरः, सः, प्रियाऽनुरागस्य, मनःसमुन्नतेः, भुजार्जितानां, दिगन्तसम्पदां, च, धृतेः, च, सदृशीः, पुंसवनादिकाः, क्रियाः, यथाक्रमं, व्यधत्त॥ १०॥

व्याख्या—धीरः=प्राज्ञः, सः=पूर्वोक्तः, राजा दिलीप इति यावद्। प्रियाऽनुरागस्य=पत्नीस्नेहस्य, सुदक्षिणाविषयकप्रेम्ण इति यावद्। मनःसमुन्नतेः=चित्तसमुन्नमनस्य, चेतसऔदार्यस्येति यावद्। भुजार्जितानां=बाहुसर्जितानाम्, बाहुबलेन स्वायत्तीकृतानामिति भावः। दिगन्तसम्पदाम्=आशाप्रान्तसम्पत्तीनां, चतुर्दिगन्तव्याप्यैश्वर्याणामिति यावद्। च=समुच्चयेऽर्थे, धृतेः=धैर्यस्य, "पुत्रो मे भविष्यति" इत्याकारकस्य सन्तोषस्येति भावः। च=समुच्चयेऽर्थे, सदृशीः=अनुरूपाः, पुंसवनादिकाः=पुंसवनाख्यसंस्कारप्रभृतीः, क्रियाः=कृत्यानि, संस्कारानिति यावद्। यथाक्रमं=क्रममनतिक्रम्य, यस्या यादृक् क्रमस्तस्यास्तादृशेन क्रमेणेत्यर्थः। व्यधत्त=विदधे, कृतवानिति यावत्॥ १०॥

समासादि—प्रीणाति या सा प्रिया (स्त्री०) तस्यामनुरागः प्रियाऽनुरागः (त०पु०), तस्य प्रियाऽनुरागस्य। मनसः समुन्नतिर्मनःसमुन्नतिः (त०पु०) तस्या मनःसमुन्नतेः। भुजाभ्यामर्जिता भुजार्जिताः (त० पु०) तासां भुजार्जितानाम्। दिशामन्ता दिगन्ताः (त०पु०), तेषु संपदो दिगन्तसम्पदः (त०पु०) तासां दिगन्तसम्पदाम्। क्रममनतिक्रम्येति यथाक्रमम् (अ०भा०)। पुमान् सूयतेऽनेनेति पुंसवनम् (न०लि०), तदादिर्यासां ताः पुंसवनादिकाः (ब०व्री०) तास्तथोक्ताः। धियं रातीति धीरः (पुं०)॥ १०॥

व्याकरणं—धीरः = धीर + अम् + रा (दाने) + कः + सु, "आतोऽनुपसर्गे कः" इति क प्रत्यये रूपम् । व्यधत्त = वि + अट् + डुधाञ् (धारणपोषणयोः—डुञित्) + श्लु + लङ्, लङस्तप्रत्यये श्लौ धातोर्द्वित्वेऽभ्यासकार्ये "श्नाभ्यस्तयोरातः" इत्याकारलोपे "दधस्तथोश्च" इति भष्भावे जश्त्वे चर्त्वेऽडागमे रूपम् ॥ १० ॥

वाच्यान्तरं—धीरेण तेन प्रियाऽनुरागस्य मनःसमुन्नतेर्भुजार्जितानां दिगन्तसम्पदाञ्च धृतेश्च सदृश्यः पुंसवनादिकाः क्रिया यथाक्रमं व्यधीयन्त ॥ १० ॥

कोशः—"धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः" इत्यमरः ॥ १० ॥

तात्पर्यार्थः—दिलीपस्य सुदक्षिणायां यावान् स्नेहो यावन्मनस औदार्यं, यावती च निजभुजेनोपार्जिता सम्पत्तिः, "इयता कालेन पुत्रमुखं द्रक्ष्यामि" इत्याशया यावान् मनसि सन्तोषश्च तावतैव स्नेहेन प्रेम्णा तावत्यैव सम्पत्त्या च तथा तावता सन्तोषेण स तस्याः सुदक्षिणायाः शास्त्रोक्तान् पुंसवनादिगर्भसंस्कारान् यथाक्रमं चकार ॥ १० ॥

भाषाऽर्थः—बुद्धिमान् उन राजा दिलीप का जैसा रानी सुदक्षिणा में स्नेह था, तथा जैसी उनमें मन की उदारता थी, और बाहुबल से उपार्जित चारों दिशाओं के प्रान्त की जैसी सम्पत्ति थी, तथा मेरे पुत्र होगा इससे जितना सन्तोष था, उसके अनुरूप पुंसवन आदिक सभी संस्कारों को जैसा जिसका क्रम है उसी क्रम से उन्होंने किया ॥ १० ॥

*दिलीपः सुदक्षिणां गर्भगौरवादितस्ततो गन्तुमसक्तां दृष्ट्वा ननन्देत्याह—*

सुरेन्द्रमात्राऽऽश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥ ११ ॥

संजीविनी—सुरेन्द्रेति । गृहागतो नृपः *सुरेन्द्राणां लोकपालानां मात्राभिरंशैराश्रितस्यानुप्रविष्टस्य गर्भस्य गौरवाद्भारात्प्रयत्नेन मुक्तासनया* । आसनादुत्थितयेत्यर्थः । उपचारस्याञ्जलावञ्जलीकरणे खिन्नहस्तया पारिप्लवनेत्रया तरलाक्ष्या । 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः । तया सुदक्षिणया ननन्द । 'सुरेन्द्रमात्राऽऽश्रित' इत्यत्र मनुः—(अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः ) इति ॥ ११ ॥

अन्वयः—गृहागतः, नृपः, सुरेन्द्रमात्राऽऽश्रितगर्भगौरवात्, प्रयत्नमुक्तासनया, उपचाराञ्जलिखिन्नहस्तया, पारिप्लवनेत्रया, तया, ननन्द ॥ ११ ॥

व्याख्या—गृहागतः = सदनप्राप्तः, सुदक्षिणावासगृहं गत इति यावद् । नृपः = भूपः, दिलीप इति यावद् । सुरेन्द्रमात्राऽऽश्रितगर्भगौरवात् = त्रिदशश्रेष्ठांशसेवितभ्रूणभाराद्, अष्टदिक्पालांशैरनुप्रविष्टगर्भस्य भारादिति भावः । प्रयत्नमुक्तास[नया] = आयासपरित्यक्तपीठया, गृहागतस्य नृपस्य सम्मानप्रदर्शनार्थं प्रयत्नेनासनादुत्थितयेति भावः । उपचाराञ्जलिखिन्नहस्तया = अभिवादनरूपोपचारहस्तसम्पुटशिथिलकरया, पारिप्लवनेत्रया = चञ्चलनयनया, तया = पूर्वोक्तया, सुदक्षिणयेति यावद् । ननन्द = आनन्दितवान् ॥ ११ ॥

समासादि—सुरेष्विन्द्राः सुरेन्द्राः (त०पु०), तेषां मात्राः सुरेन्द्रमात्राः (त०पु०), ताभिराश्रितः सुरेन्द्रमात्राऽऽश्रितः (त०पु०) सुरेन्द्रमात्राऽऽश्रितश्चासौ गर्भः सुरेन्द्रमात्राऽऽश्रितगर्भः (क०धा०), गुरोर्भावो गौरवं (न०लिं०), सुरेन्द्रमात्राऽऽश्रितगर्भस्य गौरवं सुरेन्द्रमात्राऽऽश्रितगर्भगौरवं (त०पु०) तस्मात्तथोक्तात् । प्रयत्नेन मुक्तं प्रयत्नमुक्तं (त०पु०), प्रयत्नमुक्तमासनं यया सा प्रयत्नमुक्तासना (व०व्री०) तया तथोक्तया । गृहमागत इति गृहागतः (त० पु०) । उपचारायाञ्जलिरुपचाराञ्जलिः (त०पु०), तस्मिन् खिन्नौ वुपचाराञ्जलिखिन्नौ (त० पु० ), उपचाराञ्जलिखिन्नौ हस्तौ यस्याः सोपचाराञ्जलिखिन्नहस्ता (व०व्री०) तया तथोक्तया । पारिप्लवे नेत्रे यस्याः सा पारिप्लवनेत्रा (व०व्री०) तया पारिप्लवनेत्रया ॥ ११ ॥

व्याकरणं—गौरवं = गुरु + अण् + सु, "ओर्गुणः" इति गुणेऽवादेशे रूपम् । ननन्द =

टुनदि (समृद्धौ—द्विदित्)+लिट्, लिटस्तिपो णलि धातोर्नुमागमे द्वित्वेऽभ्यासकार्ये रूपम् ॥ ११ ॥

वाच्यान्तरं—गृहागतेन नृपेण सुरेन्द्रमात्राऽऽश्रितगर्भगौरवात् प्रयत्नमुक्तासनयोपचाराञ्जलिखिन्नहस्तया पारिप्लवनेत्रया तया ननन्दे ॥ ११ ॥

कोशः—"पीठमासनम्" इत्यमरः । "अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च" इति मेदिनी । "मोदते ह्लादते माद्यत्यानन्दति च तुष्यति । हृष्यति प्रीयते निर्वात्यपि नन्दति तृपते ॥ निर्वृणोत्यात्मने सुख्यत्येते प्रीतौ सुखायते । प्रचेतीभवतीत्येवं प्रमनीभवतीति च । सुमनायत इत्येवं सुनाभवतीत्यपि" इत्याख्यातचन्द्रिका ॥ ११ ॥

तात्पर्यार्थः—अष्टानां लोकपालानां तेजोभिः संयुतः स गर्भस्तथा क्रमेण वर्धनेन भारवान् जातो यथा सा सुदक्षिणा गृहं प्राप्तस्यापि राज्ञो दिलीपस्य स्वागतार्थं निजासनादुत्थातुं कथञ्चित् समर्था बभूव, तथा च तत्प्रणामार्थमञ्जलिबन्धनेऽपि तदीयौ हस्तौ शिथिलौ बभूवतुः। अत एताभ्यां व्यापाराभ्यां तामासन्नप्रसवां विचार्य दिलीपोऽतिशयितां मुदमाप ॥ ११ ॥

भाषाऽर्थः—गृह में आये हुये राजा दिलीप लोकपालों के अंशों से भरे हुये गर्भ की गुरुता से कोशिस करके अपने आसन का परित्याग किये हुई, तथा उपचारार्थ (प्रणाम करने के लिये) अञ्जलि बांधने में शिथिल हाथ वाली होती हुई अत एव चञ्चल नेत्रों वाली उस रानी सुदक्षिणा से बहुत खुश हुये ॥ ११ ॥

*अथ प्रसवोन्मुखीं सुदक्षिणां राजा प्रसन्नः सन् ददर्शेत्याह—*

**कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि ।**
**पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥ १२ ॥**

सञ्जीविनी—कुमारेति । अथ । कुमारभृत्या बालचिकित्सा । "संज्ञायां समजनिषद०" इत्यादिना क्यप् । तस्यां कुशलैः कृतिभिः । 'कृती कुशल इत्यपि' इत्यमरः । आप्तैर्हितैर्भिषग्भिर्वैद्यैः । 'भिषग्वैद्यौ चिकित्सके' इत्यमरः । गर्भस्य भर्मणि भरणे । 'भरणे पोषणे भर्म' इति हैमः । 'भृतिर्भर्म' इति शाश्वतः । भृञो मनिच्प्रत्ययः । 'गर्भकर्मणि' इति पाठे गर्भाधानप्रतीताऔचित्यभङ्गः । अनुष्ठिते कृते सति । काले दशमे मासि । अन्यत्र ग्रीष्मावसाने । प्रसवस्य गर्भमोचनस्योन्मुखीम् । आसन्नप्रसवामित्यर्थः । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । प्रियां भार्याम् । अभ्राण्यस्याः संजातान्यभ्रिता ताम् । "तदस्य सञ्जातं तारकादिभ्य इतच्" इतीतच्प्रत्ययः । दिवमिव । पतिर्भर्ता प्रतीतो हृष्टः सन् । 'ख्याते हृष्टे प्रतीतः' इत्यमरः । ददर्श दृष्टवान् ॥ १२ ॥

अन्वयः—अथ, कुमारभृत्याकुशलैः, आप्तैः, भिषग्भिः, गर्भभर्मणि, अनुष्ठिते, "सति" काले, प्रसवोन्मुखीं, प्रियाम्, अभ्रितां, दिवम्, इव, पतिः, प्रतीतः, "सन्" ददर्श ॥ १२ ॥

व्याख्या—अथ=अनन्तरम्, आसन्नप्रसवलक्षणदर्शनानन्तरमिति भावः । कुमारभृत्याकुशलैः=बालकभृतिदक्षैः, बालचिकित्सायां बालपोषणे वा निपुणैरिति यावद् । आप्तैः=प्रत्ययितैः, विश्वासपात्रैरिति यावद् । भिषग्भिः=चिकित्सकैः, गर्भभर्मणि=भ्रूणभरणे, अनुष्ठिते=कृते, सतीति शेषः । काले=समये, दशमे मासीति भावः, पक्षे—ग्रीष्मान्ते वर्षाऽऽरम्भकाल इति भावः । प्रसवोन्मुखीं=गर्भमोचनोत्काम्, आसन्नप्रसवामित्यर्थः । प्रियाम्=पत्नीं, सुदक्षिणामिति यावद् । अभ्रितां=सञ्जातमेघां, वर्षणोन्मुखैर्मेघैरावृतामिति भावः । दिवम्=आकाशम्, इव=यथा, पतिः=भर्त्ता, दिलीप इति यावत् । प्रतीतः=हृष्टः, प्रसन्न इति यावत् । "सन्" इति शेषः । ददर्श=अपश्यत् ॥ १२ ॥

समासादि—कुमारयन्तीति कुमाराः (पुं०), भ्रियन्ते कर्मकरा अनयेति भृत्या (स्त्री०), कुमाराणां भृत्या कुमारभृत्या (त०पु०), तत्र कुशलाः कुमारभृत्याकुशलाः (त०पु०), तैस्त-

थोक्तैः। भिषज्यन्तीति भिषजः (पुं०) तैर्भिषग्भिः। गर्भस्य भर्म गर्भभर्म(त० पु०) तस्मिन्गर्भभर्मणि। उद् मुखं यस्याः सोन्मुखी (ब० व्री०), प्रसवस्योन्मुखीति प्रसवोन्मुखी (त० पु०) तां तथोक्ताम्। अभ्रन्तीत्यभ्राणि (न० लिं०), तानि सञ्जातान्यस्यामित्यभ्रिता (स्त्री०) तामभ्रिताम्॥ १२॥

व्याकरणं—कुमाराः=कुमार (क्रीडायाम्—अदन्तोऽयम्)+अच्+जस्, पचादित्वादच्प्रत्यये रूपम्। भृत्या=भृञ् (भरणे—ञित्)+क्यप्+टाप्+सु, "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" इति क्यप्प्रत्यये तुगागमे कित्वाद् गुणाभावे टापि रूपम्। अनुष्ठिते=अनु+ष्ठा (गतिनिवृत्तौ)+क्तः+ङि। भिषग्भिः=भिषज (रुग्जये—अकारेत्)+क्विप्+भिस्, "अन्येभ्योऽपि दृश्यते" इति क्विप्प्रत्यये भिसि रूपम्। भर्म=भृञ् (भरणे—ञित्)+मनिन्+सु, "सर्वधातुभ्यो मनिन्" इत्यौणादिके मनिन्प्रत्यये गुणे रपरे सोर्लुकि रूपम्। प्रतीतः=प्रति+इण् (गतौ—णित्)+क्तः+सु। ददर्श=दृशिर् (प्रेक्षणे—इरित्)+लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये गुणे रपरे रूपम्। अभ्रम्=अभ्र (गतौ—अकारेत्)+अच्+सु, पचादित्वादच्प्रत्यये सोरमि रूपम्। अभ्रिताम्=अभ्र+इतच्+टाप्+अम्, तारकादित्वादितच्प्रत्यये रूपम्॥ १२॥

वाच्यान्तरम्—अथ कुमारभृत्याकुशलैराप्तैर्भिषग्भिर्गर्भभर्मण्यनुष्ठिते "सति" काले प्रसवोन्मुखी प्रियाऽभ्रिता द्यौरिव पत्या प्रतीतेन "सता" ददृशे॥ १२॥

कोशः—"कुमारोऽश्वानुवारके। युवराजे शिशौ स्कन्दे शुके वरुणपादपे" इत्यनेकार्थसङ्ग्रहः। "भृत्यो दासे भृतौ भृत्या" इति मेदिनी। "आप्तः प्रत्ययितस्त्रिषु" इत्यमरः। "भर्म भारे भृतौ हेम्नि" इत्यनेकार्थसङ्ग्रहः। "अभ्रं मेघो वारिवाहः" इत्यमरः॥ १२॥

तात्पर्यार्थः—पश्चाद् शिशुचिकित्सानिपुणैर्विश्वासपात्रैः सद्वैद्यैर्गर्भस्य पोषणे कृते सति प्रसन्नो दिलीप आसन्नतरप्रसवां पत्नीं सुदक्षिणां प्रावृष आरम्भकाले वर्षणोन्मुखीं मेघच्छन्नां नभःस्थलीमिव ददर्श॥ १२॥

भाषाऽर्थः—उसके (आसन्न प्रसव के लक्षण जानने के) बाद बालचिकित्सा में निपुण विश्वासपात्र वैद्यों के द्वारा गर्भ की रक्षा कर चुकने पर समय प्राप्त होने पर अर्थात् दशवें महीने में, "आकाशपक्ष में" वर्षा ऋतु के आरम्भ कालमें, बच्चा जनने के तरफ उन्मुख होती हुई प्यारी पत्नी सुदक्षिणा को वर्षणोन्मुख मेघों से व्याप्त आकाश स्थली की भांति स्वामी राजा दिलीप ने प्रसन्न होते हुये देखा॥ १२॥

*अथ सुदक्षिणा पुत्ररत्नं प्रासूतेत्याह—*

**ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम्।**
**असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम्॥१३॥**

सञ्जीविनी—ग्रहैरिति। ततः शच्येन्द्राण्या समा। 'पुलोमजा शचीन्द्राणी' इत्यमरः। सा सुदक्षिणा समये प्रसूतिकाले सति दशमे मासीत्यर्थः। (दशमे मासि जायते)इति श्रुतेः। उच्चसंश्रयैरुच्चसंस्थैस्तुङ्गस्थानगैरसूर्यगैरनस्तमितैः कैश्चिद्यथासम्भवं पञ्चभिर्ग्रहैः सूचिता भाग्यसंपद्यस्यतं पुत्रम्। त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनान्युत्पादकानि यस्याः सा त्रिसाधना शक्तिः।'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजा' इत्यमरः। अक्षयमर्थमिव। असूत। 'षूङ् प्राणिगर्भविमोचने' इत्यात्मनेपदिषु पठ्यते। तस्माद्धातोः कर्तरि लङ्। अत्रेदमनुसंधेयम्—(अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः॥) इति। सूर्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्तक्रमविशिष्टा उच्चस्थानानि। स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि। तत्रोच्चेष्वपि दशमाद्यो राशित्रिंशांशा यथाक्रममुच्चेषु परमोच्चा नीचेषु परमनीचा इति जात-

करश्लोकार्थः । अत्रांशस्त्रिंशो भागः । यथाऽऽह नारदः—( त्रिंशद्भागात्मकं लग्नम् ) इति । सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं लघुजातके—रविणाऽस्तमयो योगो वियोगस्तूदयो भवेत् ) इति । ते च स्वोच्चस्थाः फलन्ति नास्तगानापि नीचगाः। तदुक्तं राजमृगाङ्के—(स्वोच्चे पूर्णं स्वर्क्षकेऽर्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभे खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किञ्चित्पादं नूनं स्वत्रिकोणे ददाति ॥) इति। तदिदमाह कविरुच्चसंस्थैरसूर्यगैरिति च । एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गो भवति । तदुक्तं कूटस्थीये—(सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः ॥ इति ) तदिदमाह पञ्चभिरिति ॥ १३ ॥

अन्वयः—ततः, शचीसमा, समये, "सति" उच्चसंश्रयैः, असूर्यगैः, पञ्चभिः, ग्रहैः, सूचितभाग्यसंपदम्, पुत्रं, त्रिसाधना, शक्तिः, अक्षयम्, अर्थम्, इव, असूत ॥ १३ ॥

व्याख्या—ततः = तदनन्तरं, शचीसमा = इन्द्राणीतुल्या, समये = काले, प्रसूतिकाले दशमे मासीत्यर्थः । सतीति शेषः । उच्चसंश्रयैः = तुङ्गस्थानैः, उच्चस्थानसंस्थैरिति यावत् । असूर्यगैः = असूरगामिभिः, अनस्तमितैः सूर्यसान्निध्यं परिहरद्भिरिति भावः । कैश्चिद् यथासंभवमिति शेषः । पञ्चभिः = पञ्चसंख्योपेतैः, ग्रहैः = खेऽटैः, सूचितभाग्यसंपदं = विज्ञापितभागधेयसंपत्तिम्, अनुमापितसौभाग्याधिक्यमिति यावत् । पुत्रं = तनयं, त्रिसाधना = उपायत्रययुता, प्रभावमन्त्रोत्साहात्मकोत्पादकत्रयोपेतेति भावः । शक्तिः = उत्साहाद्यात्मिका, अक्षयम् = अविनाशिनम्, अर्थं = रायं, धनमिति यावत्, इव = यथा, असूत = उत्पादयामास ॥ १३ ॥

समासादि—गृह्णन्तीति ग्रहाः (पुं०) तैर्ग्रहैः । उच्चः संश्रयो येषान्त उच्चसंश्रयाः (ब० व्री०) तैरुच्चसंश्रयैः । सूर्यं गच्छन्तीति सूर्यगाः (पुं०), न सूर्यगा इत्यसूर्यगाः (न० त० पु०) तैरसूर्यगैः । भज्यत इति भाग्यं (न० लि०), तस्य सम्पदिति भाग्यसंपद् (त० पु०), सूचिता भाग्यसंपद् यस्य स सूचितभाग्यसंपद् (ब० व्री०) तं तथोक्तम् । सम्यगेतीति समयः (पुं०) तस्मिन् समये । शचते या सा शची (स्त्री०), शच्या समा शचीसमा (त० पु०) । साध्यन्त एभिरिति साधनानि (न० लि०), त्रीणि साधनानि यस्याः सा त्रिसाधना (ब० व्री०), क्षयणं क्षयः (पुं०), अविद्यमानः क्षयो यस्यासौ चक्षयः (ब० व्री०) तमक्षयम् ॥ १३ ॥

व्याकरणं—ग्रहाः = ग्रह (उपादाने—अकारेत्)+अच्+जस्, "विभाषा ग्रहः" इत्यस्य वकल्पिकत्वात् पक्षे पचादित्वादच्प्रत्यये जसि रूपम् । सूर्यगाः = सूर्य+अम्+गम्लृ (गतौ—लृदित्)+डः, "अन्यत्रापि दृश्यत इति वक्तव्यम्" इति वार्त्तिकेन डप्रत्यये डित्वसामर्थ्यादभ चिदभस्यापि टेर्लोपतयाऽत्रापि टिलोपे जसि रूपम् । भाग्यम् = भज (सेवायाम्—अकारेत्)+ण्यत्+सु, "ऋहलोर्ण्यत्" इति ण्यत् प्रत्यये णित्वादुपधावृद्धौ "चजोः कु घिण्यतोः" इति जस्य कुत्वेन गकारे सोरमि रूपम् । असूत = अट्+सूङ् (प्राणिगर्भविमोचने—ङित्)+लङ्, लङस्तिपि शपोऽदादित्वाल्लुकि धातोरडागमे रूपम् । समयः = सम्+इण् (गतौ—णित्)+अच्+सु, पचादित्वादच्प्रत्यये गुणेऽयादेशे सौ रूपम् । शची+शच (व्यक्तायां वाचि—अकारेत्)+इन्+ङीप्+सु, "सर्वधातुभ्य इन्" इत्यौणादिकइन्प्रत्यये नकारलोपे "कृदिकारादक्तिनः" इति ङीप्प्रत्यये सोर्हल्ङयादिलोपे रूपम् । क्षयः = क्षि (क्षये)+अच्+सु, "एरच्" इत्यच्प्रत्यये रूपम् ॥ १३ ॥

वाच्यान्तरं—तत. शचीसमया समये "सति" उच्चसंश्रयैरसूर्यगैः पञ्चभिर्ग्रहैः सूचितभाग्यसम्पत् पुत्रस्त्रिसाधनया शक्त्याऽक्षयोऽर्थ इवासूयत ॥ १३ ॥

कोशः—"ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनाऽऽदौ च सैंहिकेयोपरागयोः" इति मेदिनी । "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इति । "पुलोमजा

शचीन्द्राणी" इति चामरः । "साधनं मृतसंस्कारे सैन्ये सिद्धौपधौ गतौ। निर्वर्त्तनोपाय, मेढ़े दापनेऽनुगमे धने" इति । "शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्" इति च मेदिनी ॥ १३ ॥

तात्पर्यार्थः—यथा प्रभावोत्साहमन्त्रजा शक्तिर्महीपतेरविनाशि धनमुत्पादयति तथैवेन्द्राणीतुल्या सुदक्षिणाऽपि पञ्चभिरुच्चस्थानगैरनस्तमितैश्च ग्रहैः सूचितभाग्यैश्वर्य पुत्रं प्रसवसमये दशमे मासि सम्प्राप्ते सत्युत्पादयामास ॥ १३ ॥

भाषाऽर्थः—उसके बाद इन्द्राणी के तुल्य रानी सुदक्षिणा ने प्रसव का समय दशवां महीना होने पर उच्च स्थान में स्थित सूर्य के सान्निध्य से अस्त को नहीं प्राप्त होते हुये पांच ग्रहों के द्वारा जिसकी भाग्य सम्पत्ति सूचित हो रही है ऐसे पुत्र को प्रभाव उत्साह मन्त्र इन तीन उपायों से उत्पन्न होने वाली शक्ति जैसे अक्षय अर्थ को उत्पन्न करती है, उसी भांति उत्पन्न किया ॥ १३ ॥

* अथ रघोर्जन्मसमये शुभशंसि सर्वं लक्षणं बभूवेत्याह— *

**दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।**
**बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥१४॥**

सञ्जीविनी—दिश इति। तत्क्षणं तस्मिन्क्षणे । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । दिशः प्रसेदुः प्रसन्ना बभूवुः। मरुतो वाताः सुखा मनोहरा ववुः । अग्निः प्रदक्षिणार्चिः सन्हविराददे स्वीचकार । इत्थं सर्वं शुभशंसि शुभसूचकं बभूव । तथाहि ।तादृशां रघुप्रकाराणां भवो जन्म लोकाभ्युदयाय ।भवतीति शेषः। ततो देवा अपि संतुष्टा इत्यर्थः ॥ १४॥

अन्वयः—तत्क्षणं, दिशः, प्रसेदुः, मरुतः, सुखाः, ववुः, अग्निः, प्रदक्षिणार्चिः, "सन्" हविः, आददे, "इत्थं" सर्वं, शुभशंसि, बभूव, हि, तादृशां, भवः, लोकाभ्युदयाय, "भवति"॥१४॥

व्याख्या—तत्क्षणं = तन्मुहूर्तं, रघुजन्मसमय इति भावः । दिशः = आशाः, पूर्वाऽऽदिदिश इति यावद् । प्रसेदुः = प्रसन्ना बभूवुः, मरुतः = वायवः, सुखाः = प्रियाः, सुखस्पर्शा इति यावद् । ववुः = अवहन्, अग्निः = वह्निः, प्रदक्षिणार्चिः = प्रदक्षिणज्वालः, सन्निति शेषः । हविः = होतव्यं, हवनीयमाज्यादिकम्, आददे = आदत्त, स्वीचकारेति यावद् । इत्थमिति शेषः ।सर्वं = सकलं, शुभशंसि = कल्याणसूचकं, बभूव = आसीत्, हि = यतः, तादृशां = तत्प्रकाराणां, रघुसदृशां जनानामिति भावः । भवः = जन्म, लोकाभ्युदयाय = भुवनोन्नत्यै, जनोन्नत्या यिति वा, जगतों हितायेति भावः ।भवतीति शेषः ॥ १४ ॥

समासादि—दिशन्त्यवकाशमिति दिशः (स्त्री०) । सुखयन्तीति सुखाः (पुं०) । अर्च्यत इत्यर्चिः (स्त्री०) प्रदक्षिणाऽर्चिर्यस्य स प्रदक्षिणार्चिः (ब० व्री०) शुभानि शंसितुं शीलमस्येति शुभशंसि (न०लि०) । तच्च तत्क्षणं तत्क्षणं ( क० धा०) तत् तत्क्षणम् । लोकानामभ्युदयं इति लोकाभ्युदयः (त०पु०) तस्मै लोकाभ्युदयाय ॥ १४ ॥

व्याकरणं—दिशः = दिश(अतिसर्जने—अकारेत् ) + क्विन् + जस्, "ऋत्विग्दधृक्०" इत्यादिना क्विन्प्रत्यये जसि रूपम् । प्रसेदुः = प्र + षद्लृ (विशरणगत्यवसादनेषु—लृदित् ) + लिट्, लिटो झेरुसि द्वित्वे "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्येत्वाभ्यासलोपयो रूपम् । ववुः = वा (गतिगन्धनयोः) + लिट्, लिटो झेरुसि द्वित्वेऽभ्यासह्रस्वे "आतो लोप इटि च" इत्याकारलोपे रूपम् । अर्चिः = अर्च (पूजायाम्—अकारेत् ) + इसिः + सु, "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः" इत्यौणादिक इसिप्रत्यये सौ रूपम् । आददे = आङ् + डुदाञ् (दाने—डुञित् ) + लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये धातोराकारलोपे रूपम् । बभूव = भू (सत्तायाम् ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् ॥ १४ ॥

वाच्यान्तरं—तत्क्षणं दिग्भिः प्रसेदे मरुद्भिः सुखैर्ववे ; अग्निना प्रदक्षिणार्चिषा "सता"

हविराददे सर्वेण शुभशंसिना बभूवे हि तादृशां भवेन लोकाभ्युदयाय "भूयते" ॥ १४ ॥

कोशः—"पवते वाति वातस्य" इत्याख्यातचन्द्रिका। "वह्नेर्द्वयोर्ज्वालकीला वर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः। "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" इति। मेदिनी ॥१४॥

तात्पर्यार्थः—यस्मिन् क्षणे रघोर्जन्माभूत्, तस्मिन्क्षणे सकलाः पूर्वाऽऽद्यो दिशः प्रसन्ना बभूवुः, सुखस्पर्शा वायवो ववुः, अग्निः प्रदक्षिणज्वालः सन् हविराज्यादिकं स्वीचकार, इत्थं सर्वं कल्याणसूचकम् बभूव, यत एवंविधानां महापुरुषाणां जन्म जगद्धितायैव भवति ॥१४॥

भाषाऽर्थः—उस क्षण (रघु के जन्म समय) में दिशायें निर्मल हो गईं, सुख पहुंचाने वाला जिसका स्पर्श है, ऐसा वायु वहने लगा, अग्नि, दक्षिण के तरफ घूम कर जिसकी ज्वाला निकल रही है ऐसा होता हुआ, हवि घृत-आदि को ग्रहण करने लगा, और सभी "उस समय" शुभ-सूचक लक्षण होने लगे, क्योंकि—इस तरह के महा-पुरुषों का जन्म जगत् के कल्याण के लिये होता है ॥१४॥

*अथ सद्योजातशिशोस्तेजसाऽभिभूय प्रदीपानां क्षीणकान्तित्वमाह—*

**अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा।**
**निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥१५॥**

सञ्जीविनी—अरिष्टशय्यामिति। 'अरिष्टं सूतिकागृहम्' इत्यमरः। अरिष्टे सूतिकागृहे शय्यां तल्पं परितोऽभितः। *अभितः परितः समयानिकषाहाप्रतियोगेषु दृश्यते* इति द्वितीया। विसारिणा सुजन्मनः शोभनोत्पत्तेः। 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः। तस्य शिशोर्निजेन नैसर्गिकेण तेजसा सहसा हतत्विषः क्षीणकान्तयो निशीथदीपा-अर्धरात्रप्रदीपाः। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः। आलेख्यसमर्पिताश्चित्रार्पिता इव बभूवुः। निशीथशब्दो दीपानां प्रभाऽऽधिक्यसंभावनाऽर्थः ॥१५॥

अन्वयः—अरिष्टशय्याम्, परितः, विसारिणा, सुजन्मनः, तस्य, निजेन, तेजसा, सहसा, हतत्विषः, निशीथदीपाः, आलेख्यसमर्पिताः, इव, बभूवुः ॥१५॥

व्याख्या—अरिष्टशय्यां = सूतिकागृहतल्पं, सूतिकागृहस्थिततल्पस्येति भावः। परितो-योगे द्वितीया बोध्या। परितः = सर्वतः, सर्वदिग्भागेष्विति यावद्। विसारिणा = प्रसारिणा, सुजन्मना = शोभनजननस्य, तस्य = पूर्वोक्तस्य, सुदक्षिणायामुत्पन्नस्य शिशोरिति भावः। निजेन = स्वीयेन, स्वाभाविकेनेति यावत्। तेजसा = दीप्त्या, सहसा = अतर्कितेऽर्थे, हतत्विषः = नष्टकान्तयः, क्षीणप्रभा इति यावद्। निशीथदीपाः = अर्धरात्रप्रदीपाः, आलेख्यसमर्पिताः = चित्रलिखिताः, इव = यथा, बभूवुः = आसन् ॥१५॥

समासादि—न रिष्यते स्म हिंस्रैरित्यरिष्टम् (न० लिं०), तत्र शय्या अरिष्टशय्या (त० पु०) तामरिष्टशय्याम्। विसरणं विसारः (पु०), सोऽस्यास्तीति विसारि (न० लिं०) तेन विसारिणा। सुष्ठु जन्म यस्य स सुजन्मा (ब० व्री०) तस्य सुजन्मनः। निशेरतेऽस्मिन्निति निशीथः (पुं०), तत्र दीपा निशीथदीपाः (त०पु०)। हता त्विड् येषान्ते हतत्विषः (ब०व्री०)। आलेख्ये समर्पिता आलेख्यसमर्पिताः (त० पु०) ॥१५॥

व्याकरणम्—अरिष्टं = नञ् + रिष (हिंसायाम्—अकारेत्) + क्तः + सु। विसारिणा = (वि + सृ (गतौ) + घञ् + सु, भावे प्रत्ययः) विसार + सु + इनिः + टा। निशीथः = नि + शीङ् (स्वप्ने—ङित्) + थक् + सु, "निशीथगोपीथावगथाः" इत्यौणादिके थक्प्रत्यये रूपम्। बभूवुः = भू (सत्तायाम्) + लिट्, लिटो झेरुसि रूपम् ॥१५॥

वाच्यान्तरम्—अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा हतत्विड्भिर्निशीथदीपैरालेख्यसमर्पितैरिव बभूवे ॥१५॥

क्रोशः—समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इति। "विसृत्वरो विसृमरः प्रसारी च विसारिणि" इति चामरः। "तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः" इति मेदिनी। "अतर्किते तु सहसा" इति। "आलेख्याश्चर्ययोश्चित्रम्" इति चामरः ॥१५॥

तात्पर्यार्थः—तस्मिन् क्षणे सद्योजातस्य तस्य शिशोः सर्वतः प्रसरणशीलेन नैसर्गिक-तेजसाऽभिभूताः सन्तोऽर्धरात्रसमयेऽपि सूतिकागृहसंस्थापिताः प्रदीपाः क्षीणप्रभाश्चित्रगता-इव जाताः ॥१५॥

भाषाऽर्थः—सूतिका गृह में शय्या के चारो तरफ फैलने वाले, सुन्दर जन्म लेने वाले उस बालक रघु के स्वाभाविक तेज से एकाएक क्षीणकान्ति जिन्हों की हो गई है, ऐसे अर्ध-रात्र के समय के सभी प्रदीप चित्र में लिखे हुये की भांति हो गये (मालूम पड़ने लगे) ॥१५॥

*अथ दिलीपस्य कुमारजन्मशंसिने जनाय छत्रचामररहितं सर्वं वस्त्वदेयमासीदित्याह—*

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम्।
अदेयमासीत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥१६॥

सञ्जीविनी—जनायेति। भूपतेर्दिलीपस्यामृतसंमिताक्षरममृतसमानाक्षरम्। 'सरूपसम-संमिताः' इत्याह दण्डी। कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचरायान्तःपुरचारिणे जनाय त्रयमेवादेयमासीत्। तत् किं शशिप्रभमुज्ज्वलं छत्रम् उभे चामरे च। छत्रादीनां राज्ञः प्रधानाङ्गत्वादिति भावः ॥१६॥

अन्वयः—भूपतेः, अमृतसम्मिताक्षरं, कुमारजन्म, शंसते, शुद्धान्तचराय, जनाय, त्रयम्, एव, अदेयम्, आसीत्, "तत् किं" शशिप्रभं, छत्रम्, उभे, चामरे, च ॥१६॥

व्याख्या—भूपतेः = धराऽधिपस्य, दिलीपस्येति यावद्। अमृतसम्मिताक्षरं = पीयूष-समवर्णं, कुमारजन्म = शिशुजननं, शंसते = ब्रुवते, शुद्धान्तचराय = अन्तःपुरचारिणे, अन्तः-पुरे यातायातं कर्तुं योग्यायेति यावद्। जनाय = लोकाय, त्रयं = त्रितयम्, एव = अवधा-रणेऽर्थे, अदेयं = वितरणानर्हम्, आसीत् = बभूव, तत् किमिति शेषः। शशिप्रभं = चन्द्र-च्छवि, चन्द्रवदुज्ज्वलमिति भावः। छत्रम् = आतपत्रं, चक्रवर्त्तिनां प्रसिद्धतरं श्वेतच्छत्रमिति यावद्। उभे = द्वे, चामरे = बालव्यजने, अत्रापि विभक्तिविपरिणामेन शशिप्रभमित्यस्या-न्वयस्तेन "शशिप्रभे" इति पदेन "चामरे" इत्यस्य विशेषणं बोध्यम्। च = समुच्चयेऽर्थे ॥१६॥

समासादि—शुद्धा उपधाशुद्धा रक्षका अन्ते समीपे यस्य स शुद्धान्तः (ब० व्री०), चरतीति चरः (पुं०), शुद्धान्ते चरः शुद्धान्तचरः (त० पु०) तस्मै शुद्धान्तचराय। शंस-तीति शंसन्, तस्मै शंसते (पुं०)। कुमारस्य जन्म कुमारजन्म (त० पु०)। न म्रियन्ते-ऽनेनेत्यमृतं (न० लिं०), तेन सम्मितान्यमृतसंमितानि (त० पु०), अमृतसम्मितान्य-क्षराणि यस्मिंस्तदमृतसंमिताक्षरं (ब० व्री०) तदमृतसम्मिताक्षरम्। दातुं योग्यं देयं (न० लिं०), न देयमित्यदेयम् (न० त० पु०)। त्रयोऽवयवा यस्येति त्रयम् (न० लिं०)। शशिनः प्रभेव प्रभा यस्य तच्छशिप्रभम् (उ० स०)। छादयत्यनेनेतिच्छत्रम् (न० लिं०)। चम्येत आभ्यामिति चमरे त एव चामरे (न० लिं०) ॥ १६ ॥

व्याकरणं—शंसते = शंसु (स्तुतौ—उदित्) + शप् + लट् + शतृ + ङे। अमृतं = नञ् + मृत + सु (मृङ् (प्राणत्यागे—ङित्) + तन्), "तनिमृङ्भ्यां किच्च" इत्यौणादिके तनिप्रत्यये तस्य च कित्वाद् गुणाभावे नञ् समासे नलोपे रूपम्। अदेयं = नञ् + देय + सु, (डुदाञ् (दाने—डुञित्) + यत्, "अचो यत्" इति यत्प्रत्यये "ईद्यति" इतीत्वे नञ्-समासे रूपम्। आसीत् = आट् + अस (भुवि-अकारेत्) + लङ्, लङस्तिपि रूपम्। त्रयं = त्रि + जस् + तयप् + सु, "द्वित्रिभ्यां तयस्यायज्वा" इति तयपोऽयजादेशे रूपम्। छत्रं = छद (अपवारणे—अकारेत्) + णिच्) छादि + ष्ट्रन् + सु, "सर्वधातुभ्यः ष्ट्रन्" इत्यौणादिके

ष्ट्रन् प्रत्यये "ततुत्रतथसिसुसरकसेषु च" इतीडभावे णेर्लोपे "इस्मन्त्रन्क्विषु च" इति ह्रस्वे सौ रूपम् । चामरे=चमु ( अदने—उदित् )+अरः+अण्+औ, "अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्" इत्यौणादिके चित्संज्ञकेऽरप्रत्यये ततः "प्रज्ञादिभ्यश्च" इत्यण्प्रत्यये वृद्धौ रूपम् ॥ १६ ॥

वाच्यान्तरम्—भूपतेरमृतसम्मिताक्षरं कुमारजन्म शंसते शुद्धान्तचराय जनाय त्रयेणैवादेयेनाभूयत, "केन तेन" शशिप्रभेण छत्रेणोभाभ्यां चामराभ्याञ्च ॥ १६ ॥

कोशः—"पीयूषममृतं सुधा" इति । "छत्रन्त्वातपत्रम्" इति । "चामरं तु प्रकीर्णकम्" इति चामरः । "चामरा चामरं बालव्यजनं रोमगुच्छकम्" इति च रभसः ॥ १६ ॥

तात्पर्यार्थः—राजा दिलीपो रघुजन्मनि भूते सति यः कश्चन जनोऽन्तःपुरादागत्य तज्जन्मवृत्तान्तमश्रावयत् तस्मै चन्द्रवदुज्ज्वलं छत्रं तथा चामरद्वयं विहाय सर्वं वस्तु दातुं प्रभुरभूत् ॥ १६ ॥

भाषाऽर्थः—राजा दिलीप को अमृत के समान अक्षर हैं जिसके ऐसे "पुत्र का जन्म हुआ है" इस बात को कहते हुए अन्तःपुर में चलने फिरने वाले जो लोग हैं, उनके लिये तीन ही वस्तु नहीं देने के योग्य थीं, एक चन्द्र के समान उज्ज्वल वर्ण छत्र और दो चामर बाकी कुल वस्तुयें देने के योग्य थीं ॥ १६ ॥

*सुताननं पश्यतो नृपस्य हर्षातिरेकमाह—*

**निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।**
**महोदधेः पूर इवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥**

सञ्जीविनी—निवातेति । निवातो निर्वातप्रदेशः । 'निवातावाश्रयावातौ' इत्यमरः । तत्र यत्पद्मं तद्वत्स्तिमितेन निष्पन्देन चक्षुषा नेत्रेण कान्तं सुन्दरं सुताननं पुत्रमुखं पिबतस्तृष्णया पश्यतो नृपस्य गुरुरुत्कटः प्रहर्षः (कर्ता) इन्दुदर्शनाद् गुरुर्महोदधेः पूरो जलौघ इव । आत्मनि शरीरे न प्रबभूव स्थातुं न शशाक । अन्तर्न माति स्मेति यावत् । नह्यल्पाधारेऽधिकं मीयत इति भावः । यद्वा हर्ष आत्मनि स्वस्मिन्विषये न प्रबभूव । आत्मानं नियन्तुं न शशाक । किंतु बहिर्निर्जगामेत्यर्थः ॥ १७ ॥

अन्वयः—निवातपद्मस्तिमितेन, चक्षुषा, कान्तं, सुताननं, पिबतः, नृपस्य, गुरुः, प्रहर्षः, इन्दुदर्शनाद्, "गुरुः", महोदधेः, पूरः, इव, आत्मनि, न, प्रबभूव ॥ १७ ॥

व्याख्या—निवातपद्मस्तिमितेन=अवातकमलनिश्चलेन, वातरहितप्रदेशस्थकमलतुल्यनिश्चलेनेति यावद् । चक्षुषा=नयनेन, कान्तं=मनोरमं, सुताननं=तनयमुखम्, पिबतः=पानं कुर्वतः, तृष्णया पश्यत इति भावः । नृपस्य=भूपस्य, दिलीपस्येति यावद् । गुरुः=अलघुः, प्रहर्षः=अतिशयितानन्दः, पुत्रदर्शनजन्य इति भावः । कर्तृपदमेतद् । इन्दुदर्शनाद्=चन्द्रावलोकनाद्, "गुरुः=महान्", महोदधेः=बृहज्जलनिधेः, पूरः=अम्भसां वृद्धिः, इव=यथा, आत्मनि=शरीरे, न=नहि, प्रबभूव=प्रभुर्बभूव, स्थातुं नाशक्नोत्, अन्तर्न ममा विति भावः ॥ १७ ॥

समासादि—निरुद्धो निवृत्तो वा वातोऽस्मात् स निवातः ( ब० व्री० ), तत्र पद्मं निवातपद्मं ( त० पु० ), तद्वत् स्तिमितं निवातपद्मस्तिमितं ( उ० स० ), तेन तथोक्तेन । सुतस्याननं सुताननं ( त० पु० ) तत्सुताननम् । उदकानि धीयन्तेऽस्मिन्नित्युदधिः ( पुं० ) महांश्चासा वुदधिर्महोदधिः ( क० धा० ) तस्य महोदधेः । पूरयतीति पूरः ( पुं० ) । इन्दोर्दर्शनमिन्दुदर्शनं ( त० पु० ) तस्मादिन्दुदर्शनात् । प्रकृष्टो हर्षः प्रहर्षः ( ब० व्री० ) ॥ १७ ॥

व्याकरणम्—उदधिः=उदक+जस्, डुधाञ् ( धारणपोषणयोः—डुञित् )+किः "कर्मण्यधिकरणे च" इति किप्रत्यये कित्वादातो लोपे "उदकस्योदः संज्ञायाम्" इत्युदक-

स्योदादेशे सौ रूपम् । पूरः = पूरी ( आप्यायने—ईदित् ) + णिच् + अच्, + जस्, पचादित्वादच्प्रत्यये णिलोपे सौ रूपम् । प्रवभूव = प्र + भू ( सत्तायाम् ) + लिट् ॥ १७ ॥

वाच्यान्तरं—निवातपद्मस्तिमितेन चक्षुपा कान्तं सुताननं पिवतो नृपस्य गुरुणा प्रहर्षेणेन्दुदर्शनाद् गुरुणा महोदधेः पूरेणेवात्मनि न प्रवभूवे ॥ १७ ॥

कोशः—"निवातो वातरहिते दृढसन्नाह आश्रये" इति । "स्तिमितौ क्लिन्ननिश्चलौ" इति । "पूरः स्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः" इति चानेकार्थसङ्ग्रहः ॥ १७ ॥

तात्पर्यार्थः—कमलनयनो राजा दिलीपो निष्पन्देन चक्षुषा सुताननं यदा दृष्टवांस्तदा तद्दर्शनजन्यो महानानन्दः शशिनो दर्शनात्समुद्रस्य जलप्रवाह इव तद्देहे स्थातुं न शशाक किन्तु वहिर्निर्जगाम ॥ १७ ॥

भाषाऽर्थः—वायु से रहित प्रदेश में स्थित कमल की भांति निश्चल नेत्रों से सुन्दर पुत्र के मुख को तृष्णा पूर्वक देखते हुये राजा दिलीप का पुत्र दर्शन से उत्पन्न महान् आनन्द चन्द्र के देखने से महान् समुद्र के जल की वृद्धि के समान शरीर के भीतर ठहरने में समर्थ न हो सका किन्तु बाहर निकल पड़ा ॥ १७ ॥

*अथ दिलीपसूनोर्वसिष्ठमहर्षिकृतजातकर्मतयाऽतीवतेजोयुक्ततामाह—*

**स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।**
**दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥**

सञ्जीविनी—स इति । स दिलीपसूनुः । तपस्विना पुरोधसा पुरोहितेन । 'पुरोधास्तु पुरोहितः' इत्यमरः । वसिष्ठेन । तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यं स्यादिति भावः । तपोवनादेत्यागत्य । अखिले समग्रे जातकर्मणि जातस्य कर्तव्यसंस्कारविशेषे कृते सति । प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः । आकरोद्भवः खनिप्रभवः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । मणिरिव । अधिकं बभौ वसिष्ठमन्त्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः । अत्र मनुः—( प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ) इति ॥ १८ ॥

अन्वयः—सः, दिलीपसूनुः, पुरोधसा, तपोवनाद्, एत्य, अखिले, जातकर्मणि, कृते, "सति" प्रयुक्तसंस्कारः, आकरोद्भवः, मणिः, इव, अधिकम्, बभौ ॥ १८ ॥

व्याख्या—सः = पूर्वोक्तः, सुदक्षिणायां सद्यःसमुत्पन्न इति भावः । दिलीपसूनुः = तन्नामकनृपतितनयः, तपस्विना = प्रशस्ततपःशालिना, पुरोधसा = पुरोहितेन, वसिष्ठेनेति यावत् । तपोवनात् = पुण्यकाननाद्, निजाश्रमादिति यावद् । एत्य = आगत्य, अखिले = सम्पूर्णे, जातकर्मणि = जातकर्माख्यसंस्कारविशेषे, कृते = अनुष्ठिते, सतीति शेषः । प्रयुक्तसंस्कारः = कृतप्रतियत्नः, प्रयोगविषयीकृतजातकर्मसंस्कारः । मणिपक्षे—प्रयोगविषयीकृतशाणोल्लेखनादिरिति भावः । आकरोद्भवः = खनिसमुत्पन्नः, मणिः = अश्मजातिः, रत्नमिति यावद् । इव = यथा, अधिकम् = अत्यन्तम्, बभौ = शुशुभे ॥ १८ ॥

समासादि—जातस्य कर्म जातकर्म ( त० पु० ) तस्मिन् जातकर्मणि । प्रशस्तं तपोऽस्यास्तीति तपस्वी ( पुं० ) तेन तपस्विना । पुरोऽग्रे धीयत इति पुरोधाः ( पुं० ) तेन पुरोधसा । दिलीपस्य सूनुर्दिलीपसूनुः ( त० पु० ) । मण्यत इति मणिः ( पुं० ) । आकीर्यन्ते धातवोऽत्रेत्याकरः ( पुं० ) तस्मादुद्भवो यस्य स आकरोद्भवः ( व्य० प० ब० व्री० ) । संस्करणं संस्कारः ( पुं० ), प्रयुक्तः संस्कारो यस्य स प्रयुक्तसंस्कारः ॥ १८ ॥

व्याकरणम्—एत्य = आङ् + इण् ( गतौ—णित् ) + क्त्वा + ल्यप् + तुक् । पुरोधसा = पुरस् + डुधाञ् ( धारणपोषणयोः—डुञित् ) + असिः + टा, "पुरसि च" इत्यौणादिकोऽसिप्रत्ययः स च डित् तेन टिलोपे टारूपम् । मणिः = मण ( शब्दे—अकारेत् ) + इन् + सु, "सर्वधातुभ्य इन्" इत्यौणादिक इन्प्रत्यये सौ रूपम् । आकरः = आङ् + कॄ ( विक्षेपे ) +

घः+सु, "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्यये गुणे रपरे सौ रूपम् । बभौ=भा (दीप्तौ) +लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये णल औकारादेशे रूपम् ॥ १८ ॥

वाच्यान्तरं—तेन दिलीपसूनुना तपस्विना पुरोधसा तपोवनादेत्याखिले जातकर्मणि कृते सति प्रयुक्तसंस्कारेणाकरोद्भवेन मणिनेवाधिकं बभे ॥ १८ ॥

कोशः—"रत्नं मणिर्द्वयोरश्मजातौ मुक्ताऽऽदिकेऽपि च" इत्यमरः । "संस्कारः प्रतियत्नेऽनुभावे मानसकर्मणि" इति मेदिनी ॥ १८ ॥

तात्पर्यार्थः—यथा खनेः सद्योनिष्कासितो हीरकादिर्मणिः शाणोल्लेखनादिसंस्कारसंस्कृततया नितरां शोभितो दीप्तिमान् भवति, तथैव दिलीपसूनुरपि स्वयमतीवतेजस्वी सन्नपि तपस्विना पुरोधसा वसिष्ठमहर्षिणा कृतजातकर्माख्यसंस्कारः सन् परं शोभासम्पन्नो- बभूव ॥ १८ ॥

भाषाऽर्थः—वे राजा दिलीप के नवजात पुत्र, तपस्वी पुरोहित वसिष्ठ महर्षि के द्वारा तपोवन से आकर सम्पूर्ण जातकर्म नामक संस्कार विशेष के किये जाने पर जिसका शान पर चढ़ाना आदि संस्कार हो चुका है, ऐसे खान से निकले हुये मणि की भांति अधिक सुशोभित हुये ॥ १८ ॥

*दिलीपस्य तनयसमुत्पन्ने सति भुवि चाकाशे सर्वत्र परमानन्दद्योतकमङ्गलवाद्यध्वनिरभूदित्याह—*

**सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।**
**न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥ १९ ॥**

सञ्जीविनी—सुखेति । सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः । श्रुतिसुखा इत्यर्थः । मङ्गलतूर्यनिस्वना मङ्गलवाद्यध्वनयो वारयोषितां वेश्यानाम् । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । प्रमोदनृत्यैर्हर्षनर्तनैः सह मागधीपतेर्दिलीपस्य सद्मनि केवलं गृह एव न व्यजृम्भन्त । किन्तु द्यौरोको येषां ते दिवौकसो देवाः। पृषोदरादित्वात्साधुः। तेषां पथ्याकाशेऽपि व्यजृम्भन्त । तस्य देवांशत्वाद् देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः ॥ १९ ॥

अन्वयः—सुखश्रवाः, मङ्गलतूर्यनिस्वनाः, वारयोषिताम्, प्रमोदनृत्यैः, सह, मागधीपतेः, सद्मनि, केवलं, न, व्यजृम्भन्त, "किन्तु" दिवौकसां, पथि, अपि, "व्यजृम्भन्त" ॥ १९ ॥

व्याख्या—सुखश्रवाः=सुखकरश्रवणाः, कर्णसुखकरा इति यावद् । मङ्गलतूर्यनिस्वनाः= कल्याणमुरजादिवाद्यध्वनयः, वारयोषितां=वेश्यानाम्, प्रमोदनृत्यैः=प्रीतिनर्त्तनैः, सह= साकम्, मागधीपतेः=मगधराजपुत्रीस्वामिनः, दिलीपस्येति यावत्। सद्मनि=सद्मने, केवलम्=मुख्यतया, एवेति यावद् । न=नहि, व्यजृम्भन्त=विजृम्भितवन्तः, विस्तारमाप्तवन्तः । किन्त्विति शेषः । दिवौकसां=देवानाम्, पथि=मार्गे, आकाश इति यावद् । अपि= समुच्चयेऽर्थे, व्यजृम्भन्त । देवा अपि स्वीयोपकारितया दुन्दुभयो नेदुरिति भावः ॥ १९ ॥

समासादि—सुखयतीति सुखः (पुं०), सुखः श्रावो येषान्ते सुखश्रवाः (ब० व्री०) । मङ्गलार्थानि तूर्याणि मुरजादीनि वाद्यानीति मङ्गलवाद्यानि (त० पु०), तेषां निस्वना मङ्गलतूर्यनिस्वनाः (त० पु०) । प्रमोदस्य नृत्यानि प्रमोदनृत्यानि (त० पु०) तैः प्रमोदनृत्यैः । वारस्य वृन्दस्य योषित इति वारयोषितः (त० पु०) तासां वारयोषिताम् । मागध्याः पतिर्मागधीपतिः (त० पु०) तस्य मागधीपतेः । दिवमोको येषान्ते दिवौकसः ( ब० व्री० ) तेषां दिवौकसाम् ॥ १९ ॥

व्याकरणं—व्यजृम्भन्त=वि+जृभि (गात्रविनामे—इदित्)+नुम्+शप्+लङ्, लङो झे रूपम् । दिवौकसां=दिव+सु+ओकस्+सु, अत्र दिवशब्दोऽदन्तस्ततो बहुव्रीहिसमासे वृद्धा वामि रूपम्, दिवशब्दस्यादन्तत्वे प्रमाणं—यथा मेदिन्यामुक्तं—"द्यौः स्त्री स्वर्गे च गगने दिवं क्लीवं तयोः स्मृतम्" इति ॥ १९ ॥

वाच्यान्तरं—सुखश्रवैर्मङ्गलतूर्यनिस्वनैर्वारयोषितां प्रमोदनृत्यैः सह मागधीपतेः सद्मनि केवलं न व्यजृम्भन्त किन्तु दिवौकसां पथ्यपि ॥ १९ ॥

कोशः—"ताण्डवं नटनं लास्यं नृत्यं नृत्तं च नर्त्तने" इत्यमरः। "स्फुरति स्फोटते फुल्ल-त्युन्मीलत्यपि पुष्यति। विजृम्भते विकचते विकासे विकसत्यपि" इत्याख्यातचन्द्रिका ॥१९॥

तात्पर्यार्थः—दिलीपसूनोर्जन्ममहोत्सवे न केवलं राजभवन एव नृत्यगीतवाद्यानि बभूवुः, किन्तु नभस्यपि गन्धर्वा वादित्राणि वादयाञ्चक्रुरप्सरसश्च हर्षातिरेकान्ननृतुः ॥ १९ ॥

भाषाऽर्थः—सुनने में सुखकर मङ्गलवाद्य मृदङ्ग आदिकों की ध्वनि, वेश्याओं के आनन्द सम्बन्धी नाच के साथ मगध देश के राजा की लड़कीसुदक्षिणा के स्वामी महाराज दिलीप के गृहमें केवल नहीं स्फुट हुआ किन्तु देवताओं के मार्ग आकाश में भी ॥ १९ ॥

*अथ कुमारजन्मतो दिलीपस्य पितॄणामृणाभिधानाद् बन्धनान्मुक्तिमाह—*

**न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः।**
**ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥२०॥**

सञ्जीविनी—नेति। रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य। अत एव चौराद्यभावात् संयतो बद्धो न बभूव नाभूत्। किं तेनात आह—विसर्जयेदिति। सुतजन्मना हर्षितस्तोषितः सन् यं बद्धं विसर्जयेद्विमोचयेत्। किं स राजा तदा पितॄणामृणाभिधानाद्बन्धनात्केवलमेकं यथा तथा स्वयमेव। एक एवेत्यर्थः। 'केवलः कृत्स्न एकश्च केवलश्चावधीरितः' इति शाश्वतः। मुमुचे कर्मकर्तरि लिट्। स्वयमेव मुक्त इत्यर्थः। अस्मिन्नर्थे—[ एष वा अनृणो यः पुत्री ] इति श्रुतिः प्रमाणम् ॥ २० ॥

अन्वयः—रक्षितुः, तस्य, संयतः, न, बभूव, सुतजन्महर्षितः, "सन्" यं, विसर्जयेत्, "किन्तु" सः, तदा, पितॄणाम्, ऋणाभिधानाद्, बन्धनात्, केवलं, "यथा स्यात् तथा" स्वयम्, मुमुचे ॥ २० ॥

व्याख्या—रक्षितुः=पालयितुः, साधुरक्षणशीलस्येति भावः, तस्य=पूर्वोक्तस्य, दिलीपस्येति यावद्। अनेन चौराद्यभावतोक्ता तेन संयताभावे हेतुः प्रदर्शित इति भावः। संयतः= बद्धः, कश्चिदिति शेषः। न=नहि बभूव=आसीत, सुतजन्महर्षितः=पुत्रोत्पत्तिमुदितः, सन्निति शेषः। यं=कंचन, बद्धमिति यावद्। विसर्जयेद्=मोचयेत्, किन्त्विति शेषः। सः= पूर्वोक्तः, राजा दिलीप इति यावद्। तदा=तस्मिन् समये, पितॄणां=पूर्वपुरुषाणाम्, ऋणाभिधानाद्=उद्धाराख्याद्, बन्धनात्=संयमनात्, केवलम्=एकं, यथा स्यात्तथेति शेषः। स्वयम्=आत्मना, एव=अवधारणेऽर्थे, एक एवेत्यर्थः। मुमुचे=मुक्तो बभूव ॥ २० ॥

समासादि—रक्षतीति रक्षिता तस्य रक्षितुः (पुं०)। सुतस्य जन्म सुतजन्म (त० पु०), तेन हर्षितः सुतजन्महर्षितः (त० पु०)। अभिधीयतेऽदोऽभिधानं (न० लि०), ऋणमभिधानं यस्य तदृणाभिधानं (ब० व्री०) तस्मादृणाभिधानाद् ॥ २० ॥

व्याकरणं—संयतः=सम्+यम (उपरमे—अकारेत्)+क्तः, निष्ठायां क्तप्रत्यये कित्वादनुनासिक लोपे सौ रूपम्। रक्षितुः=रक्ष (पालने—अकारेत्)+इट्+तृच्+ङस्। विसर्जयेद्=वि+( सृज ( विसर्गे—अकारेत् )+णिच् ) सर्जि+शप्+यासुट्+वि० लि०, लिङस्तिपि रूपम्। अभिधानम्=अभि+डुधाञ् (धारणपोषणयोः—डुञित्)+ल्युट्+सु, "कृत्यल्युटो बहुलम्" इतिकर्मणि ल्युट् प्रत्ययेऽनादेशे सौ रूपम्। मुमुचे=मुच्लृ (मोक्षणे—लृदित्)+लिट्, कर्मकर्तरि लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये रूपम् ॥ २० ॥

वाच्यान्तरं—रक्षितुस्तस्य संयतेन न बभूवे, सुतजन्महर्षितेन सता यो विसृज्येत, किन्तु तेन तदा पितॄणामृणाभिधानाद्बन्धनात्केवलं स्वयमेव मुमुचे ॥ २० ॥

कोशः—"बद्धे कीलितसंयतौ" इत्यमरः। "केवलः कुहने पुमान्। नपुंसकन्तु निर्णीते

वाच्यवच्चैककृत्स्नयोः । केवली ज्ञानभेदे" इति मेदिनी ॥ २० ॥

तात्पर्यार्थः—उत्तमशासनकर्तृत्वेन तदीयराज्ये चौराद्यभावात् कश्चिज्जनः कारागारे निबद्धो नासीद् यं पुत्रजन्मप्रसन्नः सन् राजा मोचयेत् किन्तु स स्वयमेव पितॄणामृणाभिधानाद्बन्धनादेको मुक्तो बभूव नान्यः ॥ २० ॥

भाषार्थः—भली भांति रक्षा करने वाले उन दिलीप महाराज का कोई कैदी नहीं था कि जिसे पुत्र जन्म से प्रसन्न होते हुये छोड़ैं । किन्तु वे महाराज उस समय पितरों के ऋण रूपी बन्धन से अकेले स्वयम् ही मुक्त हुये ॥ २० ॥

*अथ राजा दिलीपः स्वपुत्रस्य रघुरिति नामकरणं चकारेत्याह—*

**श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।**
**अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ २१ ॥**

सञ्जीविनी—श्रुतस्येति । अर्थविच्छब्दार्थज्ञः पार्थिवः पृथिवीश्वरो दिलीपः । अयमर्भको बालकः श्रुतस्य शास्त्रस्यान्तं पारं यायात् । तथा युधि परेषां शत्रूणामन्तं पारं च यायात् । यातुं शक्नुयादित्यर्थः । "शकि लिङ् च" इति शक्यार्थे लिङ् । इति हेतोर्धातोः । 'अघिवघिलघिगत्यर्थाः' इति लघिधातोर्गमनाख्यमर्थमर्थवित्त्वादवेक्ष्यालोच्य । आत्मसंभवं पुत्रं नाम्ना रघुं चकार । "लङ्घिबंह्योर्नलोपश्च" इत्यप्रत्यये 'बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते' इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् । अत्र शङ्खः—( अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ) इति ॥ २१ ॥

अन्वयः—अर्थवित्, पार्थिवः, अयम्, अर्भकः, श्रुतस्य, अन्तं, यायात्, तथा, युधि, परेषाम्, "अन्तं," च, "यायाद्", इति, धातोः, गमनार्थम्, अवेक्ष्य, आत्मसम्भवं, नाम्ना, रघुं, चकार ॥ २१ ॥

व्याख्या—अर्थविद् = अभिधेयज्ञः, शब्दार्थवेत्तेति यावत् । पार्थिवः = क्ष्माभृद्, दिलीप इति यावद् । अयम् = एषः, नवजात इति भावः । अर्भकः = शिशुः, श्रुतस्य = शास्त्रस्य, अन्तम् = पारं, यायाद् = गच्छेत्, तथा = तेन प्रकारेण, युधि = सङ्ग्रामे, परेषां = शत्रूणाम्, "अन्तं = पारं, च = समुच्चयेऽर्थे, यायाद् = गच्छेद्," इति = हेत्वर्थे, धातोः = शब्दयोनेः, भूप्रभृतेरिति यावद् । गमनार्थं = यानाभिधेयं, गमनेऽर्थे वर्तमानतामिति यावद् । अवेक्ष्य = दृष्ट्वा, विचार्येति यावद् । आत्मसम्भवं = स्वोत्पन्नं, तनयमिति यावद् । नाम्ना = अभिधानेन, रघुं = रघुनामानं, चकार = विदधौ, ॥ २१ ॥

समासादि—अर्ध्यते वृद्धिं प्राप्यतेऽसावर्भकः (पुं०) । पृथिव्या ईश्वरः पार्थिवः (पुं०) । गमनमेवार्थो गमनार्थः (क० धा०) तं गमनार्थम् । अर्थं वेत्तीत्यर्थवित् (पुं०) । लङ्घत इति रघुस्तं रघुम् (पुं०) । सम्भवतीति सम्भवः (पुं०), आत्मनः सम्भवो यस्यात्मसम्भवः ( व्य० प० ब० व्री० ) तमात्मसम्भवम् ॥ २१ ॥

व्याकरणं—यायात् = या (प्रापणे) + यासुट् + वि० लि०, लिङस्तिपि रूपम् । अर्भकः = ऋधु (वृद्धौ—उदित्) + वुन् + सु, "अर्भकपृथुकपाका वयसि" इत्यौणादिको वुन् प्रत्ययो धातोर्भकारान्तादेशे गुणे वोरकादेशे सौ रूपम् । अवेक्ष्य = अव + ईक्ष (दर्शने—अकारेत्) + क्त्वा + ल्यप् । चकार = डुकृञ् (करणे—डुञित्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रूपम् ॥ २१ ॥

वाच्यान्तरम्—अर्थविदा पार्थिवेनार्भकेण श्रुतस्यान्तो यायेत तथा युधि परेषामन्तश्च यायेतेति धातोर्गमनार्थमवेक्ष्यात्मसम्भवो नाम्ना रघुश्चक्रे ॥ २१ ॥

कोशः—"श्रुतमाकर्णिते शास्त्रे" इत्यनेकार्थसङ्ग्रहः । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इति । "दस्युशात्रवशत्रवः । अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः" इति चामरः ॥ २१ ॥

तात्पर्यार्थः—अयं मे बालको निखिल शास्त्रसिन्धोः पारं यास्यति तथा समस्त शत्रुसैन्यस्यापि व्यूहं भित्त्वा पारं यास्यतीति हेतोः शब्दार्थविज्ञो राजा दिलीपो लविधातोर्गमनार्थं विचार्य स्वपुत्रस्य रघुरिति नाम चकार ॥ २१ ॥

भाषाऽर्थः—शब्दों के अर्थों को जानने वाले पृथ्वी के स्वामी राजा दिलीप ने, यह बालक शास्त्र के पार (निश्चय) को जा सकेगा (जान सकेगा), तथा युद्ध में शत्रुओं के पार (नाश) को जा सकेगा (कर सकेगा) इस कारण से लघि धातु का जाना रूप अर्थ को विचार कर अपने लड़के का रघु ऐसा नाम रक्खा ॥ २१ ॥

*अथ रघोर्बाल्ये प्रतिदिनं शरीरवृद्धिमाह—*

**पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने ।**
**पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥**

सञ्जीविनी—पितुरिति। स रघुः समग्रसंपदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नाच्छुभैर्मनोहरैः शरीरावयवैः। हरिदश्वदीधितेः सूर्यस्य रश्मेः। "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः" इत्यमरः। अनुप्रवेशाद्बालचन्द्रमा इव। दिने दिने प्रतिदिनम्। "नित्यवीप्सयोः" इति द्विर्वचनम्। वृद्धिं पुपोष। अत्र वराहसंहितावचनम्—(सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मंदिरस्यान्तः ॥) इति ॥ २२ ॥

अन्वयः—समग्रसम्पदः, पितुः, प्रयत्नाद्, शुभैः, शरीरावयवैः, हरिदश्वदीधितेः, अनुप्रवेशाद्, बालचन्द्रमाः, इव, दिने दिने, वृद्धिम्, पुपोष ॥ २२ ॥

व्याख्या—स = पूर्वोक्तः, रघुरिति यावद्। समग्रसम्पदः = सम्पूर्णलक्ष्मीकस्य, पितुः = जनकस्य, दिलीपस्येति भावः। प्रयत्नाद् = आयासाद्, शुभैः = मङ्गलैः, शरीरावयवैः = देहप्रतीकैः, हरिदश्वदीधितेः = अर्ककिरणस्य, अनुप्रवेशात् = अन्तःप्रवेशाद्, बालचन्द्रमाः = शिशुचन्द्रः, नवशशीति यावद्। इव = यथा, दिने दिने = प्रतिदिवसम्, वृद्धिं = वर्धनं, पुपोष = पोषं कृतवान् ॥ २२ ॥

समासादि—समग्रा सम्पद् यस्य स समग्रसम्पद् (ब० व्री०) तस्य समग्रसम्पदः। शरीरञ्चावयवाश्चेति शरीरावयवानि (द्वं०) तैः शरीरावयवैः। हरितोऽश्वा यस्यासौ हरिदश्वः (ब० व्री०), तस्य दीधितिर्हरिदश्वदीधितिः (त० पु०) तस्या हरिदश्वदीधितेः। बालश्चासौ चन्द्रमा बालचन्द्रमाः (क० धा०) ॥ २२ ॥

व्याकरणम्—पुपोष = पुष (पुष्टौ—अकारेत्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये गुणे रूपम् ॥ २२ ॥

वाच्यान्तरं—तेन समग्रसम्पदः पितुः प्रयत्नाज्जनैः शरीरावयवैर्हरिदश्वदीधितेरनुप्रवेशाद् बालचन्द्रमसेव दिने दिने वृद्धिः पुपुषे ॥ २२ ॥

कोशः—"भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः। विकर्त्तनार्कमार्त्तण्डमिहिरारुणपूषण." इति। "किरणोस्त्रमयूखांशुगभस्तिघृणिघृष्णयः। भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इति चामरः ॥ २२ ॥

तात्पर्यार्थः—यथा शुक्लपक्षे सूर्यकिरणस्यानुप्रवेशात्प्रतिपच्चन्द्रस्य प्रतिदिनं कलाभिर्वृद्धिर्भवति, तथैव तस्य कुमारस्यापि पितुर्दिलीपस्य प्रयत्नाद् मनोहरैरङ्गोपाङ्गैर्वृद्धिर्बभूव ॥ २२ ॥

भाषाऽर्थः—वह बालक रघु पूर्ण सम्पत्तिशाली पिता दिलीप के प्रयत्न से मनोहर अङ्ग और उपाङ्गों से सूर्यकी किरणों के भीतर प्रवेश करने से बाल चन्द्रमा (प्रतिपद् के चन्द्रमा) की भांति प्रतिदिन वृद्धि को प्राप्त करने लगा ॥ २२ ॥

*अथ पुत्रेण रघुणा सपत्नीको दिलीपः परमानन्दं प्रापेत्याह—*

**उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।**
**तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥ २३ ॥**

सञ्जीविनी—उमेति । उमावृषाङ्कौ पार्वतीवृषभध्वजौ शरजन्मना कार्तिकेयेन । 'कार्तिकेयो महासेनः शरजन्मा षडाननः' इत्यमरः। यथा ननन्दतुः । शचीपुरंदरौ जयन्तेन जयन्ताख्येन सुतेन । 'जयन्तः पाकशासनिः' इत्यमरः । यथा ननन्दतुः । तथा तत्समौ ताभ्यामुमावृषाङ्काभ्यां शचीपुरन्दराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजयन्ताभ्यां सदृशेन सुतेन ननन्दतुः । मागधी प्राग्व्याख्याता ॥ २३ ॥

अन्वयः—उमावृषाङ्कौ, शरजन्मना, यथा, "ननन्दतुः", शचीपुरन्दरौ, जयन्तेन, यथा, "ननन्दतुः", तथा, तत्समौ, सा, मागधी, नृपः, च, तत्सदृशेन, सुतेन, ननन्दतुः, ॥ २३ ॥

व्याख्या—उमावृषाङ्कौ = गौरीरुद्रौ, शरजन्म(१)ना = षडाननेन, यथा = येन प्रकारेण, ननन्दतुरित्यस्य सर्वत्र सम्बन्धो बोध्यः । शचीपुरन्दरौ = पुलोमजेन्द्रौ, जयन्तेन = पाकशासनिना, इन्द्रपुत्रेणेति यावद् । यथा = येन प्रकारेण, "ननन्दतुः" । तथा = तेन प्रकारेण, तत्समौ = पूर्वोक्तपार्वतीपरमेश्वरशचीपुरन्दरसमानौ, सा = पूर्वोक्ता, मागधी = मगधराजपुत्री, सुदक्षिणेति यावद् । नृपः = राजा, दिलीप इति यावद् । च = समुच्चयेऽर्थे, तत्सदृशेन = पूर्वोक्तकुमारजयन्तसमानेन, सुतेन = पुत्रेण, रघुणेति यावद् । ननन्दतुः = अनन्दताम्, आनन्दं प्रापतुरिति यावद् ॥ २३ ॥

समासादि—वृषोऽङ्को यस्यासौ वृषाङ्कः ( ब० व्री० ), ओमहेशस्य मा लक्ष्मीरित्युमा ( त० पु० ), उमा च वृषाङ्कश्चेत्युमावृषाङ्कौ ( द्वं० ) । शरेषु जन्मास्येति शरजन्मा ( व्य० प० ब० व्री० ) तेन शरजन्मना । जयतीति जयन्तः ( पुं० ) तेन जयन्तेन । शची च पुरन्दरश्चेति शचीपुरन्दरौ ( द्वं० ) । समान इव पश्यतीति सदृशः ( पुं० ), ताभ्यां सदृशस्तत्सदृशः ( त० पु० ), तेन तत्सदृशेन । तौ च तौ चेति ते ( ए० शे० ), तैः समाविति तत्समौ ( त० पु० ) ॥ २३ ॥

व्याकरणं—जयन्तेन = जि ( जये )+झच्+टा, "तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च" इत्यौणादिको झच् प्रत्ययः स च पित् ततो "झोऽन्त" इत्यन्तादेशे गुणेऽयादेशे टारूपम् । ननन्दतुः = टुनदि ( समृद्धौ—टुविदित् )+लिट्, इदित्वाद्धातोर्नुमागमे लिटस्तसोऽतुसि द्वित्वेऽभ्यासकार्ये रूपम् । सदृशः = समान+सु+दृशिर् ( प्रेक्षणे—इरित् )+कञ्+सु, "समानान्ययोश्चेति वाच्यम्" इति कञ् प्रत्यये ,"दृग्दृशवतुषु" इति समानस्य सभावे रूपम् ॥ २३ ॥

वाच्यान्तरम्—उमावृषाङ्काभ्यां शरजन्मना यथा शचीपुरन्दराभ्यां जयन्तेन यथा ननन्दे तथा तत्समानाभ्यां तया नृपेण च तत्सदृशेन सुतेन ननन्दे ॥ २३ ॥

कोशः—"उमा कात्यायनी गौरी" इति । "जयन्तः पाकशासनिः" इति चामरः ॥२३॥

---

( १ ) पुरा किल पार्वत्या सह रहसि बहुवर्षपूग कामक्रीडामनुभवति भगवति भवे चन्द्रमौलौ, तारकासुरेणोद्वेजित परमकातरतया देवगणस्तद्विनाशाय तत्र समागत "कैलिमन्दिरे महादेव" इति तत्रस्थैरुद्रानुचरैरुपश्रुत्य समयातिपातमक्षममाणो वह्निं कपोतरूपेण तत्र प्राहिणोत्, त तथाविधमवलोक्य व्रीडितोऽत एव सुरतादुपरतः स्खलितवीर्य सन् "कस्त्वं कपटवेषं धृत्वाऽऽगतोऽसि गृह्यता मे शुक्रमि"त्युक्त्वा परमासह्यं स्ववीर्यं भगवान् भूतभावन शम्भुस्तस्मै ददौ, स च कपोतरूपो वह्निस्तदादाय धर्तुमशक्नुवानो बहिर्निर्गतो झटिति गङ्गायां निचिक्षेप, साऽपि परमेश्वरस्य तद्वीर्यं दुर्विषह्य मत्वा शरस्तम्बे न्यक्षिपत्, तस्मात्तत्र बालो व्यजायत, इति तस्य शरेषु जन्मतया शरजन्मेत्याभिधानमित्यैतिह्यमिहानुभाव्य भवद्भिः ।

तात्पर्यार्थः—यथा षडाननं पुत्रं पार्वतीपरमेश्वरौ, जयन्तं शचीपुरन्दरौ च प्राप्य परमानन्दमधिजग्मतुस्तथा रघुं सुतं लब्ध्वा सुदक्षिणादिलीपा वपि परां प्रीतिमापतुः ॥ २३ ॥

भाषाऽर्थः—पार्वती और भगवान् शङ्कर ने कार्तिकेय से जैसा, और इन्द्राणी तथा इन्द्र ने जयन्त से जैसा आनन्द पाया, उसी तरह से उन दोनों (पार्वती और शङ्कर जी तथा इन्द्राणी और इन्द्र) के सदृश वह सुदक्षिणा और राजा दिलीप ( ये दोनों ) ने उन दोनों ( कार्तिकेय और जयन्त ) के सदृश पुत्र रघु से आनन्द पाया ॥ २३ ॥

*सम्प्रति पुत्रलाभे सत्यपि परस्पराश्रयं सुदक्षिणादिलीपयोः प्रेम परस्परस्योपरि प्राग्वत् प्रतिदिनं ववृध इत्याह—*

**रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।**
**विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ २४ ॥**

सञ्जीविनी—रथाङ्गेति । रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ ।"पुमान्स्त्रिया" इत्येकशेषः । तयोरिव तयोर्दम्पत्योर्भावबन्धनं हृदयाकर्षकं परस्पराश्रयमन्योऽन्यविषयं यत्प्रेम बभूव तदेकेन केवलेन ताभ्यामन्येन वा । 'एके मुख्यान्यकेवलाः' इत्यमरः । सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि पर्यचीयत ववृधे । कर्मकर्तरि लङ् । अकृत्रिमत्वात्स्वयमेवोपचितमित्यर्थः । यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं हीयते । अत्र तु तयोः प्रागेकैककर्तृकमेकैकविषयं प्रेम संप्रति द्वितीयविषयलाभेऽपि नाहीयत । प्रत्युतोपचितमेवाभूदिति भावः ॥ २४ ॥

अन्वयः—रथाङ्गनाम्नोः, इव, तयोः, भावबन्धनम्, परस्पराश्रयं, यत्, प्रेम, बभूव, तद्, एकसुतेन, विभक्तम्, अपि, परस्परस्य, उपरि, पर्यचीयत ॥ २४ ॥

व्याख्या—रथाङ्गनाम्नोः = चक्रवाकयोः, चक्रवाकस्त्रीपुंसयोरिति यावद् । इव = यथा, तयोः = पूर्वोक्तयोः, सुदक्षिणादिलीपयोरिति यावद् । भावबन्धनम् = आत्मप्रसितिः, हृदयाकृष्टिकरमिति यावत् । परस्पराश्रयम् = अन्योऽन्यविषयं, यद् = लोकोत्तरं, प्रेम = प्रीतिः, बभूव = अभूत्, तद् = पूर्वोक्तं, प्रेमेति यावद् । एकसुतेन = केवलपुत्रेण, रघुणेति यावद् । विभक्तं = कृतविभागम्, अपि = सम्भावनायां, समुच्चयेऽर्थे वा, परस्परस्य = अन्योऽन्यस्य, उपरि = उपरिष्टात्, पर्यचीयत = अवर्धत ॥ २४ ॥

समासादि—रथस्याङ्गं रथाङ्गं चक्रं (त०पु०), रथाङ्गस्य नाम यस्य स रथाङ्गनामा (व्य० प०व०व्री०), रथाङ्गनाम्नी च रथाङ्गनामा चेति रथाङ्गनामानौ (ए०शे०) तयो रथाङ्गनाम्नोः । भावस्य बन्धनं भावबन्धनं ( त० पु० ) । परस्परमाश्रयो यस्य तत्परस्पराश्रयम् (ब० व्री०)। एकश्चासौ सुत एकसुतः ( क० धा० ) तेनैकसुतेन ॥ २४ ॥

व्याकरणम्—बभूव = भू ( सत्तायाम् ) + लिट्, लिटस्तिपो णलि वुगागमे द्वित्वेऽभ्यासस्यात्वे हलादिशेषे रूपम् । विभक्तं = वि + भज (सेवायाम्–अकोरत्) + क्तः, निष्ठायां क्तप्रत्यये कुत्वे सौ रूपम् । पर्यचीयत = परि + अट् + चिञ् ( चयने–ञित् ) + यक् + लङ्, लङस्तिपि रूपम् ॥ २४ ॥

वाच्यान्तरं—रथाङ्गनाम्नोरिव तयोर्भावबन्धनेन परस्पराश्रयेण येन प्रेम्णा बभूवे, तेनैकसुतेन विभक्तेनापि परस्परस्योपरि पर्यचीयत ॥ २४ ॥

कोशः—"कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः" इति । "बन्धनं प्रसितिश्चारः" इति । "विषय आश्रये" इति चामरः ॥ २४ ॥

तात्पर्यार्थः—चक्रवाकपक्षिणोरिव तयोः सुदक्षिणादिलीपयोः परस्पराश्रयं चित्ताकर्षकं यदखण्डितं प्रेमासीत् तदेकेन सुतेन रघुणा कृतविभागमपि न हीयते स्म प्रत्युतोपचितमेवाभूद्॥२४॥

भाषाऽर्थः—चकवा चकवी की भांति उन दोनों ( सुदक्षिणा और दिलीप ) के हृदय

को आकृष्ट करने वाला अन्योऽन्य विषयक जो प्रेम था वह केवल लड़के रघु के द्वारा बँट जाने पर भी परस्पर एक दूसरे के ऊपर बढ़ता गया ॥ २४ ॥

*अथ रघोर्धात्र्या अङ्गुलिमवलम्व्य गमनेन प्रणिपातोपदेशेन नम्रतया च दिलीपस्य प्रमोदवृद्धिमाह—*

**उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।**
**अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥ २५ ॥**

सञ्जीविनी—उवाचेति । सोऽर्भकः शिशुः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । धात्र्योपमात्रा । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति विश्वः । प्रथममुदितमुपदिष्टं वच उवाच । तदीयामङ्गुलिमवलम्ब्य ययौ च । प्रणिपातस्य शिक्षयोपदेशेन नम्रोऽभूच्च । इति यत्तेन पितुर्मुदं ततान ॥ २५ ॥

अन्वयः—सः, अर्भकः, धात्र्या, प्रथमोदितं, वचः, उवाच, तदीयाम्, अङ्गुलिम्, अवलम्ब्य, ययौ, च, प्रणिपातशिक्षया, नम्रः, अभूत्, च, "इति यत्", तेन, पितुः, मुदं, ततान ॥ २५ ॥

व्याख्या—सः = पूर्वोक्तः, अर्भकः = शिशुः, रघुरिति भावः । धात्र्या = उपमात्रा, प्रथमोदितं = प्रागादिष्टं, वचः = वचनम्, उवाच = अवोचत्, तदीयां = तत्सम्बन्धिनीं, धात्र्या- इति भावः । अङ्गुलिं = करशाखाम्, अवलम्ब्य = अवलम्बनं कृत्वा, ययौ = जगाम, च = अन्वाचयेऽर्थे, प्रणिपातशिक्षया = प्रणमनोपदेशेन, नम्रः = नमनशीलः, अभूत् = बभूव, च = अन्वाचयेऽर्थे, "इति यदिति" पदमत्राध्याहार्यम् । तेन = पूर्वोक्तेन प्रकारेण, पितुः = जनकस्य, दिलीपस्येति यावद् । मुदं = हर्षं, ततान = अतनोत, विस्तारितवानिति यावद् ॥२५॥

समासादि—धीयत इति धात्री ( स्त्री० ) तया धात्र्या । प्रथममुदितं प्रथमोदितं ( त० पु० ) । तस्येयं तदीया ( स्त्री० ) तां तदीयाम् । नमनशीलो नम्रः ( पुं० ) । प्रणिपतनं प्रणिपातः ( पुं० ), शिक्षणं शिक्षा ( स्त्री० ), प्रणिपातस्य शिक्षा प्रणिपातशिक्षा ( त० पु० ) तया प्रणिपातशिक्षया ॥ २५ ॥

व्याकरणम्—उवाच = ब्रूञ् ( व्यक्तायां वाचि—ञित् ) + लिट्, लिटस्तिपो णलि "ब्रुवो वचिः" इति वचादेशे द्वित्वे "लिट्यभ्यासस्योभयेषाम्" इति सम्प्रसारणे पूर्वरूपेऽभ्यासहलो लोपे तत उपधावृद्धौ रूपम् । धात्र्या = धेट् ( पाने-टित् ) + ष्ट्रन् + ङीप् + टा, धातोरात्वे "धः कर्मणि ष्ट्रन्" इति ष्ट्रन् प्रत्यये षित्वाद् ङीपि टारूपम् । उदितं = वद् ( व्यक्तायां वाचि-अकारेत् ) + क्तः + सु, निष्ठायां क्तप्रत्यये कित्वात् सम्प्रसारणे पूर्वरूपे सौ रूपम् । ययौ = या ( प्रापणे ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् । अवलम्ब्य = अव + लबि ( अवस्रंसने—इदित् ) + नुम् + क्त्वा + ल्यप् । नम्रः = णम ( प्रह्वत्वे शब्दे च-अकारेत् ) + रः + सु, "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति रप्रत्यये सौ रूपम् । ततान = तनु ( विस्तारे-उदित् ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रूपम् ॥ २५ ॥

वाच्यान्तरं—तेनार्भकेण धात्र्या प्रथमोदितं वच ऊचे, तदीयामङ्गुलिमवलम्ब्य यये च, प्रणिपातशिक्षया नम्रेणाभावि चेति यत् तेन पितुर्मुत् तेने ॥ २५ ॥

कोशः—"अङ्गुल्यः करशाखाः स्युः" इत्यमरः ॥ २५ ॥

तात्पर्यार्थः—स कुमारो रघुरुपमात्रा प्रथमोपदिष्टं "हे पितः" इत्यादिरूपं वचनमुवाच, तस्या अङ्गुलिमालम्ब्य कति चित् पदानि चलितुं प्रारब्धवान्, प्रणामं कुर्वित्याकारकशिक्षणेन प्रणामं कृतवान्, इत्येतत् सर्वं शैशवं चेष्टितं विलोक्य दिलीपः सातिशयं मुदमाप॥२५॥

भाषाऽर्थः—वह बालक रघु धाई के द्वारा पहले उच्चारण किये हुये "पिताजी आदि"

वचन का उच्चारण करने लगा और उसकी अँगुली का सहारा लेकर चलने लगा, तथा प्रणाम करने की शिक्षा से बड़ों के सामने नम्र होने लगा, इन सब पूर्वोक्त प्रकारों से पिता के हर्ष को बढ़ाने लगा ॥ २५ ॥

*अथ दिलीपस्य पुत्रमङ्के समारोप्य तदीयाङ्गस्पर्शेनानन्दनिमीलिताक्षतामाह—*

**तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।**
**उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥**

सञ्जीविनी—तमिति । शरीरयोगजैः सुखैस्त्वचि त्वगिन्द्रियेऽमृतं निषिञ्चन्तं वर्षन्तमिव तं पुत्रमङ्कमारोप्य मुदाविर्भावादुपान्तयोः प्रान्तयोः संमीलितलोचनः सन् नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ । रसः स्वादः ॥ २६ ॥

अन्वयः—शरीरयोगजैः, सुखैः, त्वचि, अमृत, निषिञ्चन्तम्, इव, तम्, अङ्कम्, आरोप्य, उपान्तसम्मीलितलोचनः, "सन्" नृपः, चिरात्, सुतस्पर्शरसज्ञतां, ययौ ॥ २६ ॥

व्याख्या—शरीरयोगजैः = देहसंगतिसमुत्पन्नैः, सुखैः = आनन्दैः, त्वचि = त्वगिन्द्रिये, अमृतं = पीयूषं, निषिञ्चन्तं = निषेकं कुर्वन्तं, वर्षन्तमिति यावत् । तं = पूर्वोक्तं, पुत्रं रघुमिति यावद् । अङ्कम् = उत्सङ्गम्, आरोप्य = उत्थाप्य, धृत्वेति यावद् । उपान्तसम्मीलितलोचनः = प्रान्तनिमीलितनयनः, हर्षाविर्भावादिति भावः । सन्निति शेषः । नृपः = राजा, दिलीप इति यावद् । चिरात् = बहुकालात्परं, सुतस्पर्शरसज्ञतां = पुत्रस्पर्शनस्वादनैपुण्यं, ययौ = प्राप ॥ २६१ ॥

समासादि—शरीरस्य योगः शरीरयोगः ( त० पु० ), तस्माज्जातानीति शरीरयोगजानि तैः शरीरयोगजैः । निषिञ्चतीति निषिञ्चन् ( पुं० ), तं निषिञ्चन्तम् । उपान्तयोः सम्मीलिते उपान्तसम्मीलिते ( त० पु० ), ते लोचने यस्यासा वुपान्तसम्मीलितलोचनः ( ब० व्री० ) । सुतस्य स्पर्शः सुतस्पर्शः ( त० पु० ), तस्य रसः सुतस्पर्शरसः ( त० पु० ), तं जानातीति सुतस्पर्शरसज्ञः ( पुं० ), तस्य भावः सुतस्पर्शरसज्ञता तां तथोक्ताम् ॥ २६ ॥

व्याकरणम्—आरोप्य = आङ् + (रुप ( विमोहने—अकारेत् ) + णिच्) रोपि + क्त्वा + ल्यप् । निषिञ्चन्तं = नि + षिच ( क्षरणे—अकारेत् ) + नुम् + शः + लट् + शतृ + अम्, तुदादित्वाच्छप्रत्यये "शे मुचादीनाम्" इति नुमागमे लटः शत्रादेशेऽमि रूपम् । ययौ = या ( प्रापणे ) + लिट् ॥ २६ ॥

वाच्यान्तरं—शरीरयोगजैः सुखैस्त्वच्यमृतं निषिञ्चन्तं तमङ्कमारोप्योपान्तसंमीलितलोचनेन सता नृपेण चिरात् सुतस्पर्शरसज्ञता यये ॥ २६ ॥

कोशः—"अङ्को रूपकभेदाङ्कचिह्नरेखाऽऽजिभूषणे । रूपकाशान्तिकोत्सङ्गस्थाने" इति मेदिनी ॥ २६ ॥

तात्पर्यार्थः—पुत्रस्य रघोरङ्गस्पर्शजन्यैरानन्दैः सर्वाङ्गेषु सुधामिव लेपयन्तं तं स्वाङ्कमारोप्यानन्दपारवश्यान्निमीलितनयनः सन् स दिलीपश्चिरकालादभिलषितं सुतस्पर्शसुखास्वादमनुभूतवान् ॥ २६ ॥

भाषाऽर्थः—"पुत्र के" अङ्ग सङ्ग से उत्पन्न आनन्द के द्वारा मानो त्वचा पर अमृत बरसाते हुये उस पुत्र को गोद में बिठा कर नेत्र प्रान्त को बन्द किये हुये राजा दिलीप बहुत दिनों से अभिलषित पुत्र के स्पर्शसुख की अभिज्ञता को प्राप्त किया ॥ २६ ॥

*अथ दिलीपो रघुणा स्ववंशस्य प्रतिष्ठावत्त्वं मन्यते स्मेत्याह—*

**अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।**
**स्वमूर्त्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥ २७ ॥**

सञ्जीविनी—अमंस्तेति। स्थितेरभेत्ता मर्यादापालकः स नृपः परार्ध्यजन्मनोत्कृष्टजन्मनाऽनेन रघुणाऽन्वयं वंशम्। प्रजानां पतिर्ब्रह्मा। गुणाः सत्त्वादयः। तेष्वग्र्येण मुख्येन सत्त्वेन वर्तते व्याप्रियत इति गुणाग्र्यवर्त्ती। तेन स्वस्य मूर्त्तिभेदेनावतारविशेषेण विष्णुनाऽऽत्मनः सर्गं सृष्टिमिव। स्थितिमन्तं प्रतिष्ठावन्तममंस्त मन्यते स्म। मन्यतेरनुदात्तत्वादिट्प्रतिषेधः। अत्रोपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि। तत्र रघुपक्षे गुणा विद्याविनयादयः। 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे। स्तम्भे सत्त्वादिसंध्यादिविद्याऽऽदिहरितादिषु॥' इति विश्वः। शेषं सुगमम्॥ २७॥

अन्वयः—स्थितेः, अभेत्ता, परार्ध्यजन्मना, अनेन, अन्वयं, प्रजानां, पतिः, गुणाग्र्यवर्तिना, स्वमूर्तिभेदेन, आत्मनः, सर्गम्, इव, स्थितिमन्तम्, अमंस्त, च॥ २७॥

व्याख्या—स्थितेः=मर्यादायाः, अभेत्ता=अभेदकः, मर्यादारक्षको दिलीप इति भावः। परार्ध्यजन्मना=वर्यजनुषा, उत्कृष्टजन्मवतेति यावद्। अनेन=एतेन, रघुणेति यावद्। अन्वयं=कुलं, प्रजानां=जनानां, पतिः=प्रभुः, विधाता महीपालश्चेति यावद्। गुणाग्र्यवर्तिना=गुणप्रधानवृत्तिमता, सत्त्वगुणिनेति यावद्। रघुपक्षे-प्राधान्येन विद्याविनयादिगुणवता, स्वमूर्तिभेदेन=आत्मशरीरविशेषेण, अवतारभेदेन विष्णुनेति यावद्। आत्मनः=स्वस्य, सर्गं=सृष्टिम्, इव=यथा, स्थितिमन्तम्=मर्यादावन्तं, प्रतिष्ठावन्तमिति यावद्। अमंस्त+मन्यते स्म॥ २७॥

समासादि—परस्मिन्नर्थे भवं परार्ध्यं (न० लिं०), परार्ध्यं जन्म यस्य स परार्ध्यजन्मा (ब० व्री०) तेन परार्ध्यजन्मना। न भेत्तेत्यभेत्ता (पुं०)। स्थितिरस्त्यस्येति स्थितिमांस्तं स्थितिमन्तम्। स्वस्य मूर्त्तिः स्वमूर्त्तिः (त० पु०), तस्या भेदः स्वमूर्त्तिभेदः (त० पु०) तेन स्वमूर्त्तिभेदेन। अग्रे भवमग्र्यं (न० लि०) गुणेष्वग्र्यं गुणाग्र्यम्। (त० पु) तेन वर्त्तितुं शीलमस्येति गुणाग्र्यवर्त्ती तेन गुणाग्र्यवर्त्तिना॥ २७॥

व्याकरणम्—अमंस्त=अट्+मन (ज्ञाने-अकारेत्)+च्लि+सिच्+लुङ्, लुङस्त प्रत्यये च्लेः सिचि धातोरडागमे रूपम्। परार्ध्यं=परार्ध+यत्+सु "परावराधमोत्तमपूर्वाच्च" इति यत्प्रत्ययेऽकारलोपे सौ रूपम्॥ २७॥

वाच्यान्तरं—स्थितेरभेत्रा परार्ध्यजन्मनाऽनेनान्वयः प्रजानां पत्या गुणाग्र्यवर्त्तिनाऽऽत्मनः सर्ग इव स्थितिमानमानि॥ २७॥

कोशः—"क्लीबे प्रधानं प्रमुखं प्रवेकानुत्तमोत्तमाः। मुख्यवर्यवरेण्याश्च प्रवर्हानवरार्ध्यवत्। परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्" इति। "मर्यादा धारणा स्थितिः" इति चामरः। "भेदो द्वैधे विशेषे स्यादुपजापे विदारणे" इति। "प्रजापतिश्च दक्षादौ महीपाले विधातरि" इति च मेदिनी॥ २७॥

तात्पर्यार्थः—यथा सृष्टिस्थितिं लिप्सन् ब्रह्माऽऽत्मनोऽवतारभेदेन सत्वगुणवता विष्णुना सृष्टिं स्थितिमन्तं मन्यते तथैव प्रजास्थितिमभीप्सन् दिलीपोऽपि निजरूपभेदेन श्रेष्ठगुणवता रघुणा निजवंशं प्रतिष्ठाशालिनं मन्यते स्म॥ २७॥

भाषाऽर्थः—मर्यादा की रक्षा करनेवाले राजा दिलीप ने उत्कृष्ट जन्मवाले इस रघु के द्वारा वंश को, जिस भांति प्रजापति ब्रह्माजी सत्वगुणवाले अपने अवतार विशेष विष्णु भगवान् के द्वारा अपनी सृष्टि को स्थिर रहनेवाली मानते हैं उसी भांति स्थिर रहने वाला माना॥ २७॥

*अथ रघोश्चूडाकर्मसंस्कारानन्तरं विद्याऽऽरम्भमाह—*

**स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः।**
**लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत्॥ २८॥**

सञ्जीविनी—स इति। (चूडा कार्या द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये

वा कर्तव्या श्रुतिचोदनात् ॥ ) इति मनुस्मरणात्तृतीये वर्षे वृत्तचूलो निष्पन्नचूडाकर्मा सन्। डलयोरभेदः। स रघुः। ( प्राप्ते तु पञ्चमे वर्षे विद्याऽऽरम्भं च कारयेत् ) इति वचनात्पञ्चमे वर्षे चलकाकपक्षकैश्चञ्चलशिखण्डकैः। 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः। सवयोभिः स्निग्धैः। 'वयस्यः स्निग्धः सवयाः' इत्यमरः। अमात्यपुत्रैरन्वितः सन्। लिपेः पञ्चाशद्वर्णात्मिकाया मातृकाया यथावद्ग्रहणेन सम्यग्बोधेनोपायभूतेन वाङ्मयं शब्दजातम्। नद्या। मुखं द्वारम्। 'मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाययोः' इति यादवः। तेन कश्चिन्मकरादिः समुद्रमिव। आविशत्प्रविष्टः। ज्ञातवानित्यर्थः ॥ २८॥

अन्वयः—वृत्तचूलः, "सन्", सः, चलकाकपक्षकैः, सवयोभिः, अमात्यपुत्रैः, अन्वितः, "सन्", लिपेः, यथावद्, ग्रहणेन, वाङ्मयं, नदीमुखेन, समुद्रम्, इव, आविशत् ॥ २८ ॥

व्याख्या—वृत्तचूलः = अतीतचूडः, वृतचूडो वा, निष्पन्नचूडाकर्मेति यावद्। सन्निति शेषः। सः = पूर्वोक्तः, रघुरिति यावद्। चलकाकपक्षकैः = चञ्चलशिखण्डकैः। इतस्ततो धावनादिति भावः। सवयोभिः = समवयस्कैः, स्निग्धैरिति यावद्। अमात्यपुत्रैः = मन्त्रितनयैः, अन्वितः = सहितः, सन्निति शेषः। लिपेः = पञ्चाशद्वर्णात्मिकाया मातृकायाः, यथावत् = सम्यग्, ग्रहणेन = बोधेन, उपायभूतेनेति भावः। वाङ्मयं = शब्दजातं, नदीमुखेन = सरिद्द्वारेण, कश्चिन्मकरादिरिति शेषः। समुद्रम् = अब्धिम्, इव = यथा, आविशत् = आविवेश, ज्ञातवानिति यावद् ॥ २८ ॥

समासादि—वृत्ता चूला चूडाख्यं कर्म यस्य स वृत्तचूलः ( ब० व्री० )। काकस्य पक्षा इव काकपक्षाः ( त० पु० ) त एव काकपक्षकाः ( पुं० ), चलाः काकपक्षका येषान्ते चलकाकपक्षकास्तैश्चलकाकपक्षकैः (ब० व्री० )। अमा सह समीपे वा भवा अमात्याः (पुं०) तेषां पुत्रा अमात्यपुत्राः ( त० पु० ) तैरमात्यपुत्रैः। समानानि वयांसि येषान्ते सवयांसस्तैः सवयोभिः (ब० व्री० )। प्राचुर्येण वाग् वाङ्मयम् (न० लि०)। नद्या मुखं नदीमुखं ( त० पु० ) तेन नदीमुखेन ॥ २८ ॥

व्याकरणम्—अमात्याः = अमा + त्यप् + जस्, "अव्ययात्त्यप्" इति त्यप्प्रत्यये रूपम्। सवयोभिः = समान + वयस् + भिस्, बहुव्रीहिसमासे "ज्योतिर्जनपदे" त्यादिसूत्रेण समानस्य सादेशे रूपम्। वाङ्मयं = वाक् + मयट् "प्राचुर्ये मयट्" इति मयट्प्रत्यये रूपम्। आविशत् = आङ् + अट् + विश ( प्रवेशने-अकारेत् ) + शः + लङ्, लङस्तिपि रूपम् ॥ २८ ॥

वाच्यान्तरं—वृत्तचूलेन तेन चलकाकपक्षकैः सवयोभिरमात्यपुत्रैरन्वितेन सता लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेन समुद्र इवाविश्यत ॥ २८ ॥

कोशः—"वृत्तोऽधीतेऽप्यतीतेऽतिवर्तुलेऽपि वृते सति। दृढेऽन्यलिङ्गं वा क्लीबं छन्दश्चारित्रवृत्तिषु" इति मेदिनी। "मन्त्री धीसचिवोऽमात्य" इत्यमरः ॥ २८ ॥

तात्पर्यार्थः—यथा मकरादिर्नदीद्वारेण समुद्रं गच्छन्ति तथैव निष्पन्नचूडाकरणसंस्कारो रघुरपि पञ्चहायनः सन् वयस्यैर्मन्त्रिपुत्रैः सह पञ्चाशद्वर्णात्मिका मात्रिकामभ्यस्य तद्द्वारेणैव वाङ्मयं प्रविष्टवान् ॥ २८ ॥

भाषाऽर्थः—चूडा कर्म संस्कार हो चुकने पर उस बालक रघु ने चञ्चल शिखावाले अपने हमजोली मन्त्रि पुत्रों के सहित वर्णमाला का भली भांति परिचय पा चुकने पर उसी द्वारा समस्त वाङ्मय में नदी के द्वारा मकरादि जैसे समुद्र में प्रवेश करता है उसी भांति प्रवेश किया ॥ २८ ॥

*अथ रघोर्दिलीपकर्तृकमुपनयनसंस्कारमाह—*

अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम्।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥ २९ ॥

सञ्जीविनी—अथेति । ( गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो-गर्भाच्च द्वादशे विशः ॥ ) इति मनुस्मरणादथ गर्भैकादशेऽब्दे विधिवदुपनीतं गुरुप्रियमेनं रघुं विपश्चितो विद्वांसो गुरवो विनिन्युः शिक्षितन्तः । ते गुरवोऽत्रास्मिन्रघावबन्ध्ययत्नाश्च बभूवुः। तथाहि । क्रिया शिक्षा । 'क्रिया तु निष्कृतौ शिक्षाचिकित्सोपायकर्मसु' इति यादवः। वस्तुनि पात्रभूत उपहिता प्रयुक्ता प्रसीदति फलति । 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' इति कौटिल्यः ॥ २९ ॥

अन्वयः—अथ, विधिवद्, उपनीतं, गुरुप्रियम्, एनं, विपश्चितः, गुरवः, विनिन्युः, ते, अत्र, अबन्ध्ययत्नाः, च, बभूवुः, हि, क्रिया, वस्तूपहिता, प्रसीदति ॥ २९ ॥

व्याख्या—अथ = अनन्तरं, गर्भैकादशेऽब्द इति यावद् । विधिवद् = यथाविधि, शास्त्रानुकूलमिति यावद् । उपनीतं = कृतोपनयनं, गुरुसमीपे प्रापितमिति भावः । गुरुप्रियम् = उपदेष्टृप्रीतिकरम्, एनं = रघुं, विपश्चितः = विद्वांसः, गुरवः = शिक्षकाः, विनिन्युः = शिक्षयामासुः, ते = पूर्वोक्ताः, गुरव इति यावद् । अत्र = अस्मिन्, रघाविति यावद् । अबन्ध्य यत्नाः = अनिष्फलप्रयत्नाः, सफलयत्ना इति यावद् । च = अन्वाचयेऽर्थे, बभूवुः = अभूवन्, हि = यतः, क्रिया = शिक्षा, वस्तूपहिता = सत्पात्रप्रयुक्ता, प्रसीदति = फलति, सफला भवतीति भाव. ॥ २९ ॥

समासादि—विधिमर्हति विधिवद् ( अ० ) । प्रीणातीति प्रियः, ( पुं० ) गुरूणां प्रियो-गुरुप्रियः ( त० पु० ) तं गुरुप्रियम् । न बन्ध्योऽबन्ध्यः ( न० त० पु० ) अबन्ध्यो यत्नो-येषान्तेऽबन्ध्ययत्नाः ( ब० व्री० ) । वस्तुन्युपहिता वस्तूपहिता ( त० पु० ) ॥ २९ ॥

व्याकरणम्—उपनीतम् = उप + णीञ् ( प्रापणे-ञित् ) + क्तः + अम् । विधिवद् = विधि + वति, "तदर्हम्" इति वतिप्रत्ययेऽव्ययत्वात् सुपो लुकि रूपम् । विनिन्युः = वि + णीञ् ( प्रापणे-ञित् ) + लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये यणादेशे रूपम् । प्रसीदति = प्र + षद्लृ ( विशरणगत्यवसादनेषु-लृदित् ) + शप् + लट्, लटस्तिपि शपि "पाघ्राध्मे" ति सीदादेशे रूपम् ॥ २९ ॥

वाच्यान्तरम्—अथ विधिवदुपनीतो गुरुप्रिय एष विपश्चिद्भिर्गुरुभिर्विनिन्ये, तैरत्राबन्ध्ययत्नैश्च बभूवे, हि क्रियया वस्तूपहितया प्रसद्यते ॥ २९ ॥

कोशः—"विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी ॥ २९ ॥

तात्पर्यार्थः—गर्भैकादशेऽब्दे यथाविधि कृतोपनयनं रघुं विद्वांसो गुरवो विशेषतः शिक्षयामासुः, ते च सत्पात्र तमुपदिश्य सफलश्रमा जाताः, उक्तञ्च यतः-"पात्र विशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः" इति ।

भाषाऽर्थ.—इसके बाद गर्भ से ११ वें वर्ष में शास्त्रानुकूल उपनयन कर चुकने पर गुरुओं के प्रिय करनेवाले इन रघु को विद्वान् गुरु लोगों ने शिक्षा दी, और वे गुरु लोग इन रघु के विषय में सफल श्रमवाले हुये, क्योंकि-शिक्षा-सत्पात्र को दी हुई फलवती होती है ॥२९॥

*अथ रघोर्विद्याचतुष्टयावाप्तिमाह—*

धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३० ॥

सञ्जीविनी—धिय इति । अत्र कामन्दकः—( शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ ) इति । ( आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः । ) इति च । उदारधीरुत्कृष्टबुद्धिः स रघुः समग्रैर्धियो गुणैः । चत्वारोऽर्णवा उपमा यासां ताश्चतुरर्णवोपमाः। तद्धितार्थोत्तरपदसमाहारे च" इत्युत्तरपदसमासः । चतस्रो विद्याः । हरितां दिशामीश्वरः सूर्यः पवनातिपातिभिर्हरिद्भिर्निजा-

श्वैः ।'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' इति विश्वः । चतस्रो दिश इव । क्रमात्ततार । चतुर्णवोपमत्वं दिशामपि द्रष्टव्यम् ॥ ३० ॥

अन्वयः—उदारधीः, सः, समग्रैः, धियः, गुणैः, चतुर्णवोपमाः, चतस्रः, विद्याः, हरिताम्, ईश्वरः, पवनातिपातिभिः, हरिद्भिः, चतस्रः", दिशः, इव, क्रमात्, ततार ॥ ३० ॥

व्याख्या—उदारधीः = महामतिः, तीक्ष्णमतिरिति यावद् । सः = पूर्वोक्तः, रघुरिति यावद् । समग्रैः = सकलैः, धियः = बुद्धेः, गुणैः = शुश्रूषाप्रभृतिभिः, चतुर्णवोपमाः = समुद्रचतुष्टयसदृशाः, चतस्रः = चतुःसङ्ख्याकाः, विद्याः = आन्वीक्षिक्यादयः, हरितां = दिशाम्, ईश्वरः = प्रभुः, दिक्परिज्ञानस्य सूर्यस्याधीनतया सूर्य इत्यर्थः । पवनातिपातिभिः = वाताधिकवेगशालिभिः, हरिद्भिः = अश्वविशेषैः, निजतुरङ्गैरिति यावद् । "चतस्रः" दिशः = आशाः, इव = यथा, क्रमात् = क्रमेण, ततार = उत्तीर्णवान्, विद्याचतुष्टयपारगो बभूव ॥ ३० ॥

समासादि—ध्यायत्यनयेति धीः ( स्त्री० ), उदारा धीर्यस्यासा वुदारधीः ( ब० व्री० ), चत्वारोऽर्णवा उपमा यासान्ताश्चतुर्णवोपमाः ( ब० व्री० ) ताः पूर्वोक्ताः । पवनमतिलङ्घ्य पतितुं शीलमेषान्ते पवनातिपातिनस्तैः पूर्वोक्तैः ॥ ३० ॥

व्याकरणं—धियः = ध्यै ( चिन्तायाम् ) + क्विप् + ङस्, "ध्यायतेः सम्प्रसारणञ्च" इति क्विप् प्रत्यये संप्रसारणे पूर्वरूपे च "हलः" इति दीर्घे ङसि रूपम् । ततार = तॄ ( प्लवनसन्तरणयोः ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रूपम् ॥ ३० ॥

वाच्यान्तरम्—उदारधिया तेन समग्रैर्धियो गुणैश्चतुर्णवोपमाश्चतस्रो विद्या हरितामीश्वरेण पवनातिपातिभिर्हरिद्भिश्चतस्रो दिश इव क्रमात्ततरिरे ॥ ३० ॥

कोशः—"उदारो दातृमहतोर्दक्षिणे चाभिधेयवत्" इति मेदिनी ॥३०॥

तात्पर्यार्थः—यथा सूर्यो निजाश्वैरपारदिक्चतुष्टयस्य पारं श्रमं विनैव याति तथैव तीक्ष्णमती रघुरपि स्वकीयैः शुश्रूषाश्रवणग्रहणधारणप्रभृतिभिर्धियो गुणैरान्वीक्षिक्यादिविद्याचतुष्टयस्यानायासेन पारं ययौ ॥ ३० ॥

भाषार्थः—अच्छी बुद्धिवाले उन राजकुमार रघु ने समग्र (गुरु शुश्रूषा-श्रवण-ग्रहण-धारण-ऊहापोह-अर्थ ज्ञान-तत्वज्ञान ) इन बुद्धि के गुणों के द्वारा चार समुद्र के समान चार ( आन्वीक्षिकी-वेदत्रयी-वार्ता दण्डनीति ) विद्याओं को दिशाओं के स्वामी ( सूर्य ) जैसे पवन से भी अधिक वेगवान् अपने घोडों से चारो दिशाओं को क्रमसे पार करता है, उसी भांति पार किया ॥ ३० ॥

*अथ रघोर्दिलीपादेव धनुर्वेदग्रहणमाह—*

त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥

सञ्जीविनी—त्वचमिति । स रघुः । "कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमादिकानि च" ॥ इति मनुस्मरणान्मेध्यां शुद्धां रौरवीं रुरुसम्बन्धिनीम् । "रुरुर्महाकृष्णसारः" इति यादवः । त्वचं चर्म परिधाय वसित्वा मन्त्रवत्समन्त्रकमस्त्रमाग्नेयादिकं पितुरेवोपाध्यायादशिक्षताभ्यस्तवान् । "आख्यातोपयोगे" इत्यपादानसंज्ञा । पितुरेवेत्यवधारणमुपपादयति—नेति । तद्गुरुरेकोऽद्वितीयः पार्थिवः केवलं पृथिवीश्वर एव नाभूत् । किंतु क्षितौ स दिलीप एको धनुर्धरोऽप्यभूत् ॥ ३१ ॥

अन्वयः—सः, मेध्यां, रौरवीं, त्वचं, परिधाय, मन्त्रवत, अस्त्रम्, पितुः, एव, अशिक्षत, तद्गुरुः, एकपार्थिवः, केवलं, न, अभूत, "किन्तु", क्षितौ, सः, एकधनुर्धरः, अपि, "अभूत" ॥ ३१ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । मेध्यां = शुचिं, पवित्रामिति यावद् ।

रौरवीं=रुरुसम्बन्धिनीं, त्वचं=चर्म, परिधाय=परिधानं कृत्वा, धारयित्वेति यावद् । मन्त्रवत्=समन्त्रकम्, अस्त्रम्=आयुधम्, आग्नेयादिकमिति यावद् । पितुः=जनकाद्, दिलीपादिति यावद् । एव=अवधारणेऽर्थे, अशिक्षत=शिक्षां गृहीतवान्, तद्गुरुः=पूर्वोक्त रघुपिता, एकपार्थिवः=अद्वितीयपृथ्वीश्वरः, केवलम्=एकमात्रं, न=नहि, अभूत्=बभूव. किन्त्विति शेषः । सः=पूर्वोक्तः, दिलीप इति यावद् । एकधनुर्धरः=अद्वितीयधानुष्कः, अपि=समुच्चयेऽर्थे, अभूत् ॥ ३१ ॥

समासादि—मेधनार्हां मेध्या (स्त्री०) तां मेध्याम् । रुरोरियं रौरवी (स्त्री०) तां रौरवीम् । मन्त्रमस्त्यस्येति मन्त्रवत् (न०लिं०) । एकश्चासौ पार्थिव एकपार्थिवः (क०धा०)। धरतीति धरः (पुं०), धनुषो धरो धनुर्धरः (त० पु०), एकश्चासौ धनुर्धर एकधनुर्धरः (क० धा०) ॥ ३१ ॥

व्याकरणं—मेध्यां=मेधृ ( सङ्गमे—ऋदित् )+ण्यत्—टाप्+अम्, "ऋहलोर्ण्यत्" इति ण्यत्प्रत्यये टाप्यमि रूपम् । परिधाय=परि+डुधाञ् ( धारणपोषणयोः—डुवित् )+क्त्वा+ल्यप् । रौरवीं=रुरु+अण्+ङीप्+अम्, "तस्येदम्" इत्यणि "ओर्गुणः" इति गुणे वृद्धावावादेशे ङीप्यमि रूपम् । अशिक्षत=अट्+शिक्ष ( विद्योपादाने-अकारेत् )+शप्+लङ्, लङस्तप्रत्यये रूपम् । मन्त्रवत्=मन्त्र+सु+मतुप्+सु । अभूत्=अट्+भू ( सत्तायाम् )+लुङ्, लुङस्तिपि रूपम् ॥ ३१ ॥

वाच्यान्तरं—तेन मेध्यां रौरवीं त्वचं परिधाय मन्त्रवदस्त्रं पितुरेवाशिक्ष्यत, तद्गुरुणैकपार्थिवेन केवलं नाभावि, किन्तु क्षितौ तेनैकधनुर्धरेणाप्यभावि ॥ ३१ ॥

कोशः—"पूतं पवित्रं मेध्यं च" इति । "मेध्यं त्रिषु शुचौ रक्तवचारोचनयोः स्त्रियाम्" इति चामरमेदिन्यौ ॥ ३१ ॥

तात्पर्यार्थः—रघुर्ब्रह्मचारी सन् महाकृष्णसारमृगसम्बन्धिनीं त्वचं दधन्निजगुरोर्दिलीपादेव निखिलं समन्त्रकमाग्नेयादिकमस्त्रं शिक्षितवान्, यतस्तद्गुरुः केवलमद्वितीयश्चक्रवर्ती नृपो नासीत् किन्त्वद्वितीयधनुर्वेदविदपि ॥ ३१ ॥

भाषाऽर्थः—उस(रघु)ने पवित्र रुरु मृग के चर्म को धारण करके मन्त्रयुक्त ( आग्नेयादिक ) अस्त्रों को पिता ही से सीखा, क्योंकि—उनके पिता ( दिलीप महाराज ) अद्वितीय चक्रवर्ती महाराज केवल न थे, किन्तु-पृथ्वी में वह अद्वितीय धनुर्धर भी थे ॥ ३१ ॥

*अथ रघोर्यौवनावस्थायां पदार्पणमाह—*

**महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।**
**रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥**

सञ्जीविनी—महोक्षतामिति । रघुः क्रमाद्यौवनेन भिन्नशैशवो निरस्तशिशुभावः सन् । महानुक्षा महोक्षो महर्षभः। "अचतुरविचतुर०" इत्यादिसूत्रेण निपातनादकारान्तत्वम् । तस्य भावस्तत्ता तां स्पृशन्गच्छन्वत्सतरो दम्य इव। "दम्यवत्सतरौ समौ" इत्यमरः। द्विपेन्द्रभावं महागजत्वं श्रयन्व्रजन्कलभः करिपोत इव । गाम्भीर्येणाचापलेन मनोहरं वपुः पुपोष ॥ ३२ ॥

अन्वयः—रघुः, क्रमाद्, यौवनभिन्नशैशवः, "सन्", महोक्षतां, स्पृशन्, वत्सतरः, इव, द्विपेन्द्रभावं, श्रयन्, कलभः, इव, गाम्भीर्यमनोहरं, वपुः, पुपोष ॥ ३२ ॥

व्याख्या—रघुः=दिलीपसूनुः, क्रमात्=क्रमेण, परम्परयेतियावद् । यौवनभिन्नशैशवः=तारुण्यखण्डितबाल्यः, सन्निति शेषः । महोक्षतां=बृहद्बलीवर्दतां, स्पृशन्=अधिगच्छन्, वत्सतरः=दम्यः, वत्सभावमतिक्रम्य द्वितीयवयःस्पृष्ट इति यावद् । इव=यथा, द्विपेन्द्रभावं=गजराजत्वं, श्रयन्=गच्छन्, कलभः=करिशावकः, इव,=यथा, गाम्भीर्यमनोहरं=गभीरतासुन्दरं, अचञ्चलत्वमनोरममिति यावद् । वपुः=शरीरं, पुपोष=अपुषत् ॥३२॥

समासादि—उक्षतीत्युक्षा ( पुं० ), महांश्चासा वुक्षा चेति महोक्षः ( क० धा० ), तस्य भावो महोक्षता ( स्त्री० ) तां महोक्षताम् । वदतीति वत्सः ( पुं० ) । द्विपेष्विन्द्रो द्विपेन्द्रः ( त० पु० ) तस्य भावो द्विपेन्द्रभावः ( त० पु० ) तं द्विपेन्द्रभावम् । कलं भाषत इति कलभः (पुं०) । यूनो भावो यौवनं (न०लिं०), तेन भिन्नं यौवनभिन्नं (त०पु०), शिशोर्भावः शैशवं ( न०लिं० ), यौवनभिन्नं शैशवं यस्य स यौवनभिन्नशैशवः ( ब०व्री० ) । गम्भीरस्य भावो गाम्भीर्यं ( न० लिं० ), तेन मनोहरं गाम्भीर्यमनोहरं ( त० पु० ) तत्तथोक्तम् ॥ ३२ ॥

व्याकरणं—महोक्षः = महत् + सु + उक्षन् + सु + अच् + सु, "अचतुरविचतुर०" इत्यादिनाऽच्प्रत्ययान्तो निपात्यते सौ रूपम् । महोक्षताम् = महोक्ष + तल् + टाप् + अम् । वत्सः = वद ( व्यक्तायां वाचि—अकारेत् ) + सः + सु, "वृतॄवदिहनिकमिकपिभ्यः सः" इत्यौणादिके सप्रत्यये दस्य चत्वं सौ रूपम् । कलभः = कल + अम् + भाष ( व्यक्तायां वाचि-अकारेत् ) + डः, "अन्येष्वपि दृश्यते" इत्यत्रापेः सर्वोपाधिव्यभिचारार्थकतयाऽप्रत्यये टिलोपे सौ रूपम् ॥ ३२ ॥

वाच्यान्तरं—रघुणा क्रमाद् यौवनभिन्नशैशवेन सता महोक्षतां स्पृशता वत्सतरेणेव द्विपेन्द्रभावं श्रयता कलभेनेव गाम्भीर्यमनोहरं वपुः पुपुषे ॥ ३२ ॥

कोशः—"उक्षा महान् महोक्षः स्यात्" इति । "दम्यवत्सतरौ समौ" इति । "कलभः-करिशावकः" इति चामरः ॥ ३२ ॥

तात्पर्यार्थः—यथा वत्सतरो युवावस्थामापन्नः सन् महावृषो भवति यथा करिशावको-गजेन्द्रो भवति च तथैव क्रमेण प्राप्तयौवनः सन् रघुरपि पुष्टशरीरावयवतया गाम्भीर्यं दधानो महावपुष्मान् बभूव ॥ ३२ ॥

भाषाऽर्थः—रघु क्रम से युवावस्था के द्वारा लड़कपन दूर होने पर बड़े भारी बैल के भाव को प्राप्त किये हुये दमन करने लायक बछड़े की भांति तथा गजराज के भाव (स्वभाव) को प्राप्त किये हुये हाथी के बच्चे की भांति चञ्चलता न होने से सुन्दर शरीर को पुष्ट करने लगे ॥ ३२ ॥

*अथ दिलीपकर्तृकं रघोर्विवाहकरणमाह—*

अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद् गुरुः ।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥ ३३ ॥

सञ्जीविनी—अथेति । "गौर्नाऽऽदित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥" इति केशवः । गावो लोमानि केशा दीयन्ते खण्ड्यन्तेऽस्मिन्निति व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोडशादिषु वर्षेषु कर्तव्यं केशान्ताख्यं कर्मोच्यते । तदुक्तं मनुना—( केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥ ) इति । अथ गुरुः पिता । 'गुरुर्गीष्पतिपित्राद्यौ' इत्यमरः । अस्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयत् । कृतवानित्यर्थः । अथ नरेन्द्रकन्यास्तं रघुम् । दक्षस्य सुता रोहिण्यादयस्तमोनुदं चन्द्रमिव । 'तमोनुदोऽग्निचन्द्रार्काः' इति विश्वः । सत्पतिमवाप्याबभुः । रघुरपि तमोनुत् । अत्र मनुः—( वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥ ) इति ॥ ३३ ॥

अन्वयः—अथ, गुरुः, अस्य, गोदानविधेः, अनन्तरं, विवाहदीक्षां, निरवर्त्तयत्, नरेन्द्रकन्याः, तं, दक्षसुताः, तमोनुदम्, इव, सत्पतिम्, अवाप्य, आबभुः ॥ ३३ ॥

व्याख्या—अथ = पश्चात्, यौवनप्रवेशानन्तरमिति यावद् । गुरुः = दिलीप इति यावद् । अस्य = एतस्य, रघोरिति यावद् । गोदानविधेः = केशान्ताख्यसंस्कारविधानस्य, अनन्त-

रम् = अव्यवहितोत्तरं, विवाहदीक्षां = पाणिपीडनक्रियाम्, उद्वाहाख्यसंस्कारमिति यावद् । निरवर्त्तयत् = निर्वर्तयामास, सम्पादितवानिति यावद् । अथेत्यस्याक्षेपोऽत्र कर्त्तव्य । नरेन्द्रकन्याः = मनुजेश्वरकुमार्यः । तं = पूर्वोक्तं, रघुमिति यावद् । दक्षसुताः = तदाख्य-प्रजापतितनयाः, रोहिणीप्रभृतय इति यावद् । तमोनुदम् = अन्धकारापहं, चन्द्रमिति या-वद् । इव = यथा, सत्पति = प्रशस्तस्वामिनम्, अवाप्य = अधिगत्य, आबभुः = शुशुभिरे, शोभिता बभूवुरिति यावद् ॥ ३३ ॥

समासादि—गावो लोमानि दीयन्ते खण्ड्यन्तेऽत्रेति गोदानं ( न० लिं० ), तस्य विधि-र्गोदानविधिः ( त० पु० ) तस्य गोदानविधेः । विवाहस्य दीक्षा विवाहदीक्षा ( त० पु० ) तां विवाहदीक्षाम् । नरेन्द्रस्य कन्या नरेन्द्रकन्याः ( त० पु० ) । सँश्चासौ पतिः सत्पतिः ( क० धा० ) तं सत्पतिम् । तमोनुदतीति तमोनुत् ( पुं० ) तं तमोनुदम् । दक्षस्य सुता द-क्षसुताः ( त० पु० ) ॥ ३३ ॥

व्याकरणं—निरवर्त्तयत् = निर् + अट् + ( वृतु ( वर्त्तने-उदित् ) + णिच् ) वर्त्ति + शप् + लङ्, लङस्तिपि रूपम् । अवाप्य = अव + आप्लृ ( व्याप्तौ-लृदित् ) + क्त्वा + ल्यप् । आबभुः = आङ् + भा ( दीप्तौ ) + लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये ह्रस्वे धातो-राकारलोपे रूपम् ॥ ३३ ॥

वाच्यान्तरम्—अथ गुरुणाऽस्य गोदानविधेरनन्तरं विवाहदीक्षा निरवर्त्यत, नरेन्द्रक-न्याभिस्तं दक्षसुताभिस्तमोनुदमिव सत्पतिमवाप्याबभे ॥ ३३ ॥

कोशः—"दानं मतङ्गजमदे रक्षणच्छेदशुद्धिषु । विश्राणनेऽपि" इत्यनेकार्थसङ्ग्रहः॥३३॥

तात्पर्यार्थः—राजा दिलीपः प्रथमं कुमारस्य रघोः केशान्ताख्यं संस्कारं कृत्वा तत्प-श्चाद् विवाहदीक्षामपि कृतवान्, तदनन्तरं राजकन्याः श्रेष्ठगुणोपेतं सत्पतिं तं रघुमवाप्य यथा दक्षकन्या रोहिण्यादयश्चन्द्रं प्राप्य शोभिताः प्रसन्नाश्च बभूवुः तथैव बभूवुः ॥ ३३ ॥

भाषाऽर्थः—इसके बाद ( युवावस्था प्राप्त होने के बाद ) पिता दिलीप महाराज ने इन राजकुमार रघु का "केशान्त" नामक कर्म कर चुकने के बाद विवाह संस्कार किया, उसके बाद राजकन्यायें उन ( राजकुमार रघु ) को जैसे दक्ष की कन्यायें रोहिणी आदिक चन्द्र को, पति पाकर सुशोभित हुई थीं उसी भांति सुशोभित हुईं ॥ ३३ ॥

सम्प्रति यौवराज्ययोग्यतामाह—

**युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ।**
**वपुःप्रकर्षादजयद् गुरुं रघुस्तथाऽपि नीचैर्विनयाददृश्यत ॥ ३४ ॥**

सञ्जीविनी—युवेति । युवा । युगो नाम धुर्यस्कन्धगः सच्छिद्रप्रान्तो यानाङ्गभूतो दारु-विशेषः । 'यानाद्यङ्गे युगः पुंसि युग युग्मे कृतादिषु' इत्यमरः । युगवद् व्यायतौ दीर्घौ बाहू यस्य सः । अंसावस्य स्त इत्यंसलो बलवान् । मांसलश्चेति वृत्तिकारः । 'बलवान्मांसलोंऽ-सलः' इत्यमरः । "वत्सांसाभ्यां कामबले" इति लच्प्रत्ययः । कपाटवक्षाः परिणद्धकंधरो वि-शालग्रीवः । 'परिणाहो विशालता' इत्यमरः । रघुर्वपुषः प्रकर्षादाधिक्याद्यौवनकृताद् गुरुं पि-तरमजयत् । तथाऽपि विनयान्नम्रत्वेन नीचैरल्पकोऽदृश्यत । अनेनानौद्धत्यं च विवक्षितम्॥३४॥

अन्वयः—युवा, युगव्यायतबाहुः, अंसलः, कपाटवक्षाः, परिणद्धकन्धरः, रघुः, वपुःप्रक-र्षाद्, गुरुम्, अजयत्, तथा, अपि, विनयाद्, नीचैः, अदृश्यत ॥ ३४ ॥

व्याख्या—युवा = तरुणः, युगव्यायतबाहुः = यानाद्यङ्गदारुदीर्घभुजः, अंसलः = मांसलः, बलवानिति यावत् । कपाटवक्षाः = अररवदुरःस्थलः, कपाटतुल्यविस्तीर्णवक्षःस्थलशाली-त्यर्थः । परिणद्धकन्धरः = विशालशिरोधिः, रघुः = दिलीपसूनुः, वपुःप्रकर्षाद् = शरीराधि-क्याद्, यौवनकृतदेहोपचीयमानतयेति यावद् । गुरुं = पितरं, दिलीपमिति यावद् ।

अजयत् = जितवान्, तथाऽपि = तादृशपितृजयसम्भावनासत्त्वेऽपि, विनयाद् = नम्रतया, नीचैः = अल्पकः, पितुरपेक्षया न्यून इति भावः। अदृश्यत = ददृशे, लोकैर्दृश्यमानो बभूवेति भावः। एतेनास्या नौद्धत्यं द्योतितम् ॥ ३४ ॥

समासादि—युगवद् व्यायतौ युगव्यायतौ (उ० स०), युगव्यायतौ बाहू यस्यासौ युगव्यायतबाहुः, (ब० व्री०)। अंसावस्य स्त इत्यंसलः (पुं०)। कं शिरो वातं वा पाटयतीति कपाटं (न० लिं०), कपाटमिव विशालं वक्षो यस्यासौ कपाटवक्षा. (उ० स०)। धरतीति धरा (स्त्री०), कं शिरसो धरा कन्धरा (त० पु०), परिणद्धा कन्धरा यस्यासौ परिणद्धकन्धरः (ब० व्री०)। वपुषः प्रकर्षो वपुःप्रकर्षः (त० पु०) तस्माद्वपुः-प्रकर्षाद् ॥ ३४ ॥

व्याकरणम्—अंसलः = अंस + लच् + सु। कपाटं = क + अम् + पट (गतौ—अकारेत्) + अण् + सु, "कर्मण्यण्" इत्यण् प्रत्यये रूपम्। परिणद्धा = परि + णह (बन्धने—अकारेत्) + क्तः + टाप् + सु। कन्धरा = कं + (धृञ् (धारणे—ञित्) + अच् + टाप्) धरा + सु। पचादित्वादच् प्रत्यये तत्पुरुषसमासे च रूपम्। अजयत् = अट् + जि (जये) + शप् + लङ्, लङस्तिपि रूपम्। अदृश्यत = अट् + (दृशिर् (प्रेक्षणे—इरित्) + यक्) दृश्य + शप् + लङ् ॥ ३४ ॥

वाच्यान्तरं—यूना युगव्यायतबाहुनांऽसलेन कपाटवक्षसा परिणद्धकन्धरेण रघुणा वपुः-प्रकर्षाद् गुरुरजीयत तथाऽपि विनयाद् "जनास्तं" नीचैरपश्यन् ॥ ३४ ॥

कोशः—"वयःस्थस्तरुणो युवा" इति। "कपाटमररं तुल्ये" इति। "उरो वत्सं च वक्षश्च" इति। "अथ ग्रीवायां शिरोधिः कन्धरेत्यपि" इति चामरः ॥ ३४ ॥

तात्पर्यार्थः—यद्यपि राजकुमारो रघुर्युवावस्थामापन्नतयाऽङ्गोपाङ्गैरुपचितः सन दीर्घबाहु-र्विस्तीर्णवक्षःस्थलो विशालग्रीवो बलवान् जातो वपुषा गुरुं दिलीपमधरीकृतवांस्तथाऽपि विनयात्तत्समक्षमतीव ह्रस्वतनुर्लक्ष्यते स्म ॥ ३४ ॥

भाषाऽर्थः—युवावस्था को प्राप्त हुये युग (यान का अङ्गभूत दारुविशेष जूआ) की भांति लम्बी भुजा वाले, बलवान्, किवाड़ की तरह चौड़ी छाती वाले तथा विशाल ग्रीवा वाले रघु ने यद्यपि शरीर की अधिकता से पिता को जीत लिया था, तथाऽपि विनय से छोटा ही दीख पड़ते थे ॥ ३४ ॥

सम्प्रति तस्य यौवराज्यमाह—

**ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम्।**
**निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥ ३५ ॥**

सञ्जीविनी—तत इति। तत आत्मना चिरं धृतां नितान्तगुर्वीम्। "वोतो गुणवचनात्" इति ङीष्। प्रजानां धुरं पालनप्रयासं लघयिष्यता लघुं करिष्यता। "तत्करोति तदाचष्टे" इति लघुशब्दाण्णिच्। ततो "लृटः सद्वा" इति शतृप्रत्ययः। नृपेण दिलीपेनासौ रघुर्निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतो नम्र इति हेतोः। युवराज इति शब्दं भजतीति तथोक्तः। "भजो ण्विः" इति ण्विप्रत्ययः। चक्रे कृतः। (द्विविधो विनयः स्वाभाविकः कृत्रिमश्च) इति कौटिल्यः। तदुभयसंपन्नत्वात्पुत्रं युवराजं चकारेत्यर्थः। अत्र कामन्दकः—(विनयोपग्रहान्भूत्यै कुर्वीत नृपतिः सुतान्। अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ॥) इति ॥ ३५ ॥

अन्वयः—ततः, आत्मना, चिरं, धृतां, नितान्तगुर्वीम्, प्रजानां, धुरं, लघयिष्यता, नृपेण, असौ, निसर्गसंस्कारविनीतः, इति, युवराजशब्दभाक्, चक्रे ॥ ३५ ॥

व्याख्या—ततः = अनन्तरं, यौवराज्ययोग्यताऽनन्तरमिति भावः। आत्मना = स्वेन,

चिरं = बहुकालपर्यन्तं, धृतां = धारितां । नितान्तगुर्वीम् = एकान्तलघ्वीम्, अतिशयितभारवतीमिति यावत् । प्रजानां = जनानां, धुरं = भारं, पालनप्रयासमिति यावद् । लघयिष्यता = लघुं करिष्यता, नृपेण = राज्ञा, दिलीपेनेति यावद् । असौ = एषः, रघुरिति यावद् । निसर्गसंस्कारविनीतः = स्वभावशास्त्राभ्यासजनितवासनाविनम्रः, इति = हेतोः, युवराजशब्दभाक् = युवराजेतिपदलाञ्छनः, चक्रे = कृतः ॥ ३५ ॥

समासादि—नितान्तं गुर्वी नितान्तगुर्वी (त० पु०) तां नितान्तगुर्वीम् । लघुं करिष्यन्निति लघयिष्यन् (पुं०) तेन लघयिष्यता । निसर्गश्च संस्कारश्चेति निसर्गसंस्कारौ (द्व०), ताभ्यां विनीतो निसर्गसंस्कारविनीतः (त० पु०) । युवा चासौ राजा युवराजः (क० धा०), तस्य शब्दो युवराजशब्दः (त० पु०), तं भजतीति युवराजशब्दभाक् (पुं०) ॥ ३५ ॥

व्याकरणं—धृतां = धृञ् (धारणे—नित्) + क्तः + टाप् + अम् । लघयिष्यता = (लघु + णिच् +) लघि + इट् + स्य + लृट् + शतृ + टाप् । चक्रे = डुकृञ् (करणे—डुञित्) + लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये चुत्वे यणादेशे रूपम् । युवराजः = युवन् + सु + राजन् + सु + टच् + सु, तत्पुरुषसमासे "राजाहःसखिभ्यष्टच्" इति टच्प्रत्यये समासान्ते सौ रूपम् । युवराजशब्दभाक् = युवराजशब्द + अम् + भज (सेवायाम्—अकारेत्) + ण्विः + सु ॥ ३५ ॥

वाच्यान्तरं—तत आत्मना चिरं धृतां नितान्तगुर्वीं प्रजानां धुरं लघयिष्यन् नृपोऽमुं निसर्गसंस्कारविनीतमिति युवराजशब्दभाजं चकार ॥ ३५ ॥

कोशः—"तीव्रैकान्तनितान्तानि गाढबाढदृढानि च" इति । "संसिद्धिप्रकृती त्विमे । "स्वरूपं च स्वभावश्च निसर्गश्च" इति चामरः ॥ ३५ ॥

तात्पर्यार्थः—रघुः संप्रति सकलशास्त्राध्ययनेन स्वभावेन च नितरां विनम्रः सर्वकार्यकुशलः संजातोऽतः स्वकीयं प्रजापालनरूपं सातिशयगुरुं भारं चिरकालाद् धारणेन श्रान्तमनाः सन् श्रान्तिमपनेतुमिच्छया तं यौवराज्येऽभिषेचितवान् ॥ ३५ ॥

भाषाऽर्थः—उसके (युवराज पद की योग्यता होने के) बाद स्वयं बहुत दिनों से धारण किये हुये अत्यन्त भार युक्त प्रजा पालन सम्बन्धी भार को हल्का करने की इच्छा करते हुये राजा दिलीप ने यह रघु स्वभाव से तथा शास्त्र के अभ्यास करने से उत्पन्न वासना से नम्र है इस कारण से उसे युवराज पद से भूषित किया ॥ ३५ ॥

*अथ राज्यलक्ष्मीकर्तृकमांशिकरघोर्वरणमाह—*

**नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।**
**अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥ ३६ ॥**

सञ्जीविनी—नरेन्द्रेति । गुणान्विनयादीन्सौरभ्यादींश्चाभिलषतीति गुणाभिलाषिणी श्री राज्यलक्ष्मीः पद्माश्रया च नरेन्द्रो दिलीप एव मूलायतनं प्रधानस्थानं तस्मात् । अपादानात् । अनन्तरं संनिहितम् । युवराज इति संज्ञाऽस्य संजाता युवराजसंज्ञितम् । तारकादित्वादितच्प्रत्ययः । आत्मनः पदं स्थानमास्पदम् । "आस्पदं प्रतिष्ठायाम्" इति निपातः । स रघुरित्यास्पदं तदास्पदम् । कमलाच्चिरोत्पन्नान्नवावतारमचिरोत्पन्नमुत्पलमिव । अंशेनागच्छत् । स्त्रियो हि यूनि रज्यन्त इति भावः ॥ ३६ ॥

अन्वयः—गुणाभिलाषिणी, श्रीः, नरेन्द्रमूलायतनाद्, अनन्तरं, युवराजसंज्ञितं, तदास्पदं, कमलाद्, नवावतारम्, उत्पलम्, इव, अंशेन, अगच्छत् ॥ ३६ ॥

व्याख्या—गुणाभिलाषिणी = विनयादिगुणाकाङ्क्षिणी, पद्मालयापक्षे—सौरभ्यादिगुणाकाङ्क्षिणी, श्रीः = राज्यलक्ष्मीः, पद्मालया च, नरेन्द्रमूलायतनाद् = मनुजेश्वराद्यस्थानाद्, दिलीपरूपनिजप्रधानवासस्थानादिति यावद् । अनन्तरम् = अव्यवहितोत्तरं, सन्नि-

हितमिति यावद् । युवराजसंज्ञितं = युवराजेत्यभिधानकं, तदास्पदं = पूर्वोक्तरघुरूपात्मस्थानं, कमलात = सरसिजाद्, चिरोत्पन्नात्कमलादिति भावः । नवावतारं = नवीनावतरणं, नूतनोत्पन्नमिति यावद् । उत्पलं = नलिनम्, इव = यथा, अंशेन = भागेन, अगच्छत् = जगाम ॥ ३६ ॥

समासादि—मूलं च तदायतनं मूलायतनं (क० धा०), नरेन्द्र एव मूलायतनं नरेन्द्रमूलायतनं (क० धा०) तस्मात्तथोक्तात् । आत्मनः पदमित्यास्पदं (न० लिं०), स रघुरित्यास्पदं तदास्पदं (क० धा०) तत्तथोक्तम् । श्रयति हरिं गुणिनं वेति श्रीः पद्मा राज्यलक्ष्मीश्च (स्त्री०) । युवराज इति संज्ञा युवराजसंज्ञा (क० धा०), सा सञ्जाताऽस्येति युवराजसंज्ञितं (न० लिं०) तत्तथोक्तम् । गुणानभिलषतीति गुणाभिलाषिणी (स्त्री०) । अवतरणमवतारः (पुं०), नवोऽवतारो यस्य तद् नवावतारं (ब० व्री०), तन्नवावतारम् ॥ ३६ ॥

व्याकरणं—युवराजसंज्ञितं = युवराजसंज्ञा + इतच् = अम्, तारकादित्वादितच्प्रत्ययेऽमि रूपम् । अगच्छत् = अट् + गम्लृ (गतौ—लृदित्) + शप् + लङ्, लङस्तिपि शपि "इषुगमियमां छः" इति शित्वाच्छान्तादेशे तुगागमे चत्वे रूपम् ॥ ३६ ॥

वाच्यान्तरं—गुणाभिलाषिण्या श्रिया नरेन्द्रमूलायतनादनन्तरं युवराजसंज्ञितं तदास्पदं कमलान्नवावतारमुत्पलमिवांशेनाम्यत ॥ ३६ ॥

कोशः—"मूलं पार्श्वाद्ययोरुडौ । निकुञ्जशिफयोः स्वीये शिलायां च वशीकृतौ । प्रतिष्ठायाम्" इत्यनेकार्थसङ्ग्रहः । "प्रतिष्ठाकृत्यमास्पदम्" इति । "आस्पदं कृत्यपदयोः" इत्यमरोऽनेकार्थसङ्ग्रहश्च । "अंशो विभाजने प्रोक्त एकदेशेऽपि वस्तुनः" इति । "अवतारस्तु नद्यादितीर्थेऽवतरणेऽपि च" इति चानेकार्थसङ्ग्रहः ॥ ३६ ॥

तात्पर्यार्थः—यथा पद्मालया लक्ष्मीः प्राचीनात्कमलाद् नवोत्पन्नं कमलमंशेन याति गुणाभिलाषितया, तथैव राज्यलक्ष्मीरपि दिलीपरूपप्रधानवासस्थानाद् नवीनं युवराजपदलाञ्छनं रघुरूपात्मस्थानं विनयादिगुणाकृष्टमानसांऽशेनाध्यगच्छत् ॥ ३६ ॥

भाषाऽर्थः—विनयादि गुणों की अभिलाषा रखने वाली "कमल में निवास करने वाली लक्ष्मी के पक्ष में" सुगन्धि आदि गुणों की अभिलाषा रखने वाली राज्यलक्ष्मी तथा कमलालया लक्ष्मी, राजा दिलीप रूप प्रधान स्थान से समीप में स्थित युवराज इस पदवी को धारण करने वाले रघुरूप अपने स्थान को जैसे पुराने कमल से नवीन उत्पन्न हुये कमल को पद्मालया जाती है, वैसे ही एक अंशसे गई ॥ ३६ ॥

*अथ युवराजपदभाजा रघुणा दिलीपस्य सुदुःसहतामाह—*

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
वभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

सञ्जीविनी—विभावसुरिति । सारथिना सहायभूतेन । एतद्विशेषणमुत्तरवाक्येष्वप्यनुषञ्जनीयम् । वायुना विभावसुर्वह्निरिव । 'सूर्यवह्नी विभावसू' इत्यमरः । घनव्यपायेन शरत्समयेन सारथिना गभस्तिमान्सूर्य इव । कटो गण्डः । 'गण्डः कटो मदो दानम्' इत्यमरः । तस्य प्रभेदः स्फुटनम् । मदोदय इत्यर्थः । तेन करीव पार्थिवो दिलीपस्तेन रघुणाऽतितरामत्यन्तं सुदुःसहः सुष्ठुवसह्यो वभूव ॥ ३७ ॥

अन्वयः—सारथिना, वायुना, विभावसुः, इव, "सारथिना" घनव्यपायेन, गभस्तिमान्, इव, "सारथिना" कटप्रभेदेन, करी, इव, पार्थिवः, "सारथिना" तेन, अतितरां, सुदुःसहः, बभूव ॥ ३७ ॥

व्याख्या—सारथिना = सहायभूतेन, एतद्विशेषणमुत्तरवाक्येष्वप्यनुपञ्जनीयम् । वायुना = वातेन, विभावसुः = वह्निः, इव = यथा, "सारथिना" घनव्यपायेन = मेघविनाशेन, शरत्-

समयेनेत्यर्थः । गभस्तिमान्=अंशुमान्, सूर्य इति यावद् । इव=यथा, "सारथिना" कटप्रभेदेन=गण्डस्फुटनेन, मदोदयेनेति यावत् । करी=द्विपः, इव=यथा, पार्थिवः=राजा, दिलीप इति यावत् । "सारथिना", तेन=पर्वोक्तेन, रघुणेति यावत् । अतितराम्=अत्यन्तं, सुदुःसहः=दुर्विषह्यः, सोढुमशक्य इति यावत् । परैरजेय इति भावः । बभूव=अभूत् ॥३७॥

समासादि—विभा प्रभा वसु धनं यस्य स विभावसुः ( ब० व्री० ) । घनानां व्यपायो-नाशो यत्र स घनव्यपायः ( व्य० प० ब० व्री० ) तेन घनव्यपायेन । गभस्तिरस्त्यस्मिन्निति गभस्तिमान् ( पुं० ) । कटस्य प्रभेदः कटप्रभेदः ( त०पु० ) तेन कटप्रभेदेन । पृथिव्या-ईश्वरः पार्थिवः ॥ ३७ ॥

व्याकरणं—गभस्तिमान्=गभस्ति+सु+मतुप्+सु । बभूव=भू (सत्तायां)+लिट्३७॥

वाच्यान्तरं—सारथिना वायुना विभावसुनेव घनव्यपायेन गभस्तिमतेव कटप्रभेदेन करिणेव, पार्थिवेन तेनातितरां सुदुःसहेन बभूवे ॥ ३७ ॥

कोशः—"अंशुमान् भास्करे" इति मेदिनी । "किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः" इत्यमरः ॥ ३७ ॥

तात्पर्यार्थः—वातस्य साहाय्येनाग्निर्यथा सुदुःसहो भवति, विगतमेघस्य शरत्कालस्य साहाय्येन सूर्यो यथा सुदुःसहो भवति च, तथा मदोदयेन गजो यथा सुदुःसहो भवति । तथैव दिलीपोऽपि रघोः साहाय्येन सुदुःसहो जातः परैरजेय इति भावः ॥ ३७ ॥

भाषाऽर्थः—सहायभूत वायु से जैसे अग्नि, और मेघका नाश जिसमें है ऐसे सहायभूत शरत् काल से जैसे सूर्य, तथा, सहायभूत गण्डस्थल के फूटने से ( मदके उदय होने से ) जैसे हाथी, अत्यन्त सुदुःसह हो जाता है, उसी भांति राजा दिलीप भी सहायभूत उस रघु से "दुश्मनों के लिये" भलीभांति दु:सह हुये ( नहीं जीतने लायक हुये ॥ ३७ ॥

अथ रघोः साहाय्येन दिलीपकर्तृकमेकोनशताश्वमेधयज्ञसम्पादनमाह—

नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।
अपूर्णमेकोनशतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥

सञ्जीविनी—नियुज्येति । शतक्रतुरिन्द्र उपमा यस्य स शतक्रतूपमः स दिलीपः । ( शतं वै तुल्या राजपुत्रा देवा आशापालाः ) इत्यादिश्रुत्या । राजसुतैरनुद्रुतमनुगतं धनुर्धरं तं रघुं होमतुरङ्गाणां रक्षणे नियुज्य । एकेन क्रतुनाऽपूर्णमेकोनं क्रतूनामश्वमेधानां शतमपविघ्नमपगतविघ्नं यथा तथाऽऽप ॥ ३८ ॥

अन्वयः—शतक्रतूपमः, सः, राजसुतैः, अनुद्रुतं, धनुर्धरं, तं, होमतुरङ्गरक्षणे, नियुज्य, एकेन, अपूर्णं, क्रतूनां, शतम्, अपविघ्नं, "यथा स्यात्तथा" आप ॥ ३८ ॥

व्याख्या—शतक्रतूपमः=इन्द्रतुल्यः, सः=पूर्वोक्तः, दिलीप इति यावद् । राजसुतैः=नृपतनयैः, अनुद्रुतम्=अनुसृतं, कृतानुगमनमिति यावद् । धनुर्धरं=धानुष्कं, तं=पूर्वोक्तं, रघुमिति यावद् । होमतुरङ्गरक्षणे=हवनार्थाश्वपालने, अश्वमेधयज्ञसम्बन्धिघोटकरक्षण इति यावद् । नियुज्य=व्यापार्य, नियुक्तं कृत्वेति यावद् । एकेन=एकसंख्याकेन । अपूर्णं=न्यूनम्, एकोनमिति भावः । क्रतूनां=यज्ञानाम्, अश्वमेधाख्यानामिति यावद् । शतं=शतसंख्या-परिमितम्, अपविघ्नं=निरन्तरायं, विघ्नशून्यमिति यावत् । क्रियाविशेषणमिदम् । यथा-स्यात्तथेत्यत्राध्याहार्यम् । आप=आपत, अध्यगच्छदिति यावद् । अश्वमेधयज्ञानामेकोनं-शतं कृतवानिति भावः ॥ ३८ ॥

समासादि—तुरेण त्वरया गच्छन्तीति तुरङ्गाः (पुं०), होमार्थास्तुरङ्गा होमतुरङ्गाः ( त० पु० ), तेषां रक्षणं होमतुरङ्गरक्षणं ( त० पु० ), तस्मिंस्तथोक्ते । धरतीति धरः (पुं०) धनुषो धरा धनुर्धरः ( त० पु० ) तं धनुर्धरम् । राज्ञां सुता राजसुताः ( त० पु० ) तै राज-

सुतैः। न पूर्णमित्यपूर्णं ( न० त० पु० ) तदपूर्णम्। शतं क्रतवोऽस्येति शतक्रतुरिन्द्रः ( ब० व्री० ), स उपमा यस्येति शतक्रतूपमः ( ब० व्री० )। क्रियन्त इति क्रतवः ( पुं० ) तेषां क्रतूनाम्। अपगता विघ्ना यत्र तदपविघ्नम् ( ब० व्री० ) ॥ ३८ ॥

व्याकरणं—नि=युजिर् ( योगे-इरित् )+क्त्वा+ल्यप्। अनुद्रुतम्=अनु+द्रु ( गतौ )+क्तः+अम्। क्रतूनां=डुकृञ् (करणे-डुजित्)+कतुः+आम्, "कृञः कतुः" इत्यौणादिके कतुप्रत्यये यणादेशेऽमि रूपम्। आप=आप्लृ ( व्याप्तौ-लृदित् )+लिट् ॥ ३८ ॥

वाच्यान्तरं—शतक्रतूपमेन तेन राजसुतैरनुद्रुतं धनुर्धरं तं होमतुरङ्गरक्षणे नियुज्यैकेनापूर्णं क्रतूनां शतमपविघ्नमापे ॥ ३८ ॥

कोशः—"घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः" इति। "धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः" इति चामरः ॥ ३८ ॥

तात्पर्यार्थः—इन्द्रतुल्यप्रतापशाली दिलीपोऽनुजीविभूतैर्निजवश्यराज्ञां कुमारैरनुसृतं रघुमश्वमेधीयहयरक्षणे नियुक्तं कृत्वा क्रमेणैकोनशतान् क्रतूनश्वमेधाख्यान् निर्विघ्नं समाप्तिमगमयत् ॥ ३८ ॥

भाषाऽर्थः—इन्द्र के तुल्य उन दिलीप महाराज ने राज कुमारों से अनुसरण किये गये धनुष के धारण करने वाले उन युवराज रघु को होम के लिये जो "अश्वमेध यज्ञ सम्बन्धी" घोड़े थे उनकी रक्षा करने में नियुक्त करके एक कम सौ अश्वमेध यज्ञ को निर्विघ्न समाप्त किया ॥३८॥

अथ दिलीपस्य शततमाश्वमेधसम्बन्धितुरङ्गस्येन्द्रकर्तृकहरणमाह—

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥३९॥

सञ्जीविनी—तत इति। ततः परमेकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिनेष्टवता तेन दिलीपेन पुनः पुनरपि मखाय मखं कर्तुम्। "क्रियाऽर्थोपपदस्य०" इत्यादिना चतुर्थी। उत्सृष्टं मुक्तमनर्गलमप्रतिबन्धम्। अव्याहतस्वैरगतिमित्यर्थः। ( अपर्यावर्तयन्तोऽश्वमनुचरन्ति ) इत्यापस्तम्बस्मरणात्। तुरङ्गं धनुर्भृतां रक्षिणां रक्षकाणामग्रत एव शक्रो गूढविग्रहः सन्। जहार किल। किलेत्यैतिह्ये ॥ ३९ ॥

अन्वयः—ततः, परं, यज्वना, तेन, पुनः, मखाय, उत्सृष्टम्, अनर्गलं, तुरङ्गं, धनुर्भृतां, रक्षिणाम्, अग्रतः, एव, शक्रः, गूढविग्रहः, "सन्" जहार, किल ॥ ३९ ॥

व्याख्या—ततः=तस्माद्, एकोनशताश्वमेधक्रतुसमाप्तेः, परम्=अनन्तरं, यज्वना=विधिनेष्टवता, तेन=पूर्वोक्तेन, दिलीपेनेति यावत्। पुनः=भूयः, मखाय=यज्ञाय, अश्वमेधाख्ययज्ञं कर्तुमिति भावः। उत्सृष्टं=त्यक्तं, बन्धनान्युन्मुच्य स्वच्छन्दं पृथिव्यां विचरणाय विसृष्टमिति भावः। अनर्गलम्=अर्गलारहितं, प्रतिबन्धशून्यमिति यावद्। अव्याहतस्वच्छन्दगतिमिति भावः। तुरङ्गम्=अश्वं, धनुर्भृतां=धनुर्धराणां, रक्षिणाम्=अवश्यरक्षाकारिणाम्, अग्रतः=पुरतः, एव=अवधारणेऽर्थे, शक्रः=इन्द्रः, गूढविग्रहः=अलक्ष्यशरीरः, सन्निति शेषः। जहार=हरणं कृतवान्, किल=ऐतिह्येऽर्थे ॥ ३९ ॥

समासादि—अविद्यमानाऽर्गला यस्यासा वनर्गलस्तमनर्गलम् (ब० व्री०)। धनुर्बिभ्रतीतिधनुर्भृतः। (पुं०) तेषां धनुर्भृताम्। अवश्यं रक्षन्तीति रक्षिणः (पुं०) तेषां रक्षिणाम्। गूढो विग्रहो यस्य स गूढविग्रहः (ब० व्री०) ॥ ३९ ॥

व्याकरणम्—उत्सृष्टम्=उद्+सृज ( विसर्गे—अकारेत् )+क्तः+अम्, क्तप्रत्यये "व्रश्चेति" षत्वेऽमि रूपम्। रक्षिणां=रक्ष (पालने—अकारेत्)+णिनिः+आम्, "आवश्यकाधमर्ण्ययोर्णिनिः" इति णिनिप्रत्यय आमि रूपम्। जहार=हृञ् ( हरणे—ञित् )+लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रपरे रूपम् ॥ ३९ ॥

वाच्यान्तरं—ततः परं यज्वना तेन पुनर्मखायोत्सृष्टोऽनर्गलस्तुरङ्गो धनुर्भृतां रक्षिणामत एव शक्रेण गूढविग्रहेण "सता" जह्रे किल ॥ ३९ ॥

कोशः—"यज्वा तु विधिनेष्टवान्" इति । "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इति चामरः ॥ ३९ ॥

तात्पर्यार्थः—अथैकोनशततमयज्ञसमाप्त्यनन्तरं दिलीपः पुनरश्वमेधयज्ञं कर्तुमश्वं मुमोच तदनन्तरमिन्द्रो गुप्तरूपः सन् सर्वेषां रक्षिणां धनुष्मतां पुरत एव तमश्वं हृतवान् ॥३९॥

भाषाऽर्थः—उसके ( ९९ वां यज्ञ समाप्ति होने के ) बाद विधिपूर्वक यज्ञ करने वाले उन दिलीप महाराज ने फिर से यज्ञ करने के लिये छोड़े हुये बगैर रोक टोक अपने मनसे चलने वाले घोड़े को धनुष के धारण करने वाले रक्षकों के आगे से ही इन्द्र गुप्त शरीर वाला होता हुआ हर ले गया ॥ ३९ ॥

*अथ रघोर्नन्दिनीदर्शनमाह—*

**विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत् ।**
**वसिष्ठधेनुश्च यदृच्छयाऽऽगता श्रुतप्रभावा ददृशेऽथ नन्दिनी ॥ ४० ॥**

सञ्जीविनी—विषादेति । तत्कुमारस्य सैन्यं सेना सपदि । विषाद इष्टनाशकृतो मनोभङ्गः । तदुक्तम्-( विषादश्चेतसो भङ्ग उपायाभावनाशयोः ) इति । तेन लुप्ता प्रतिपत्तिः कर्तव्यज्ञानं यस्य तत्तथोक्तम् । विस्मितमश्वनाशस्याकस्मिकत्वादाश्चर्याविष्टं सत् । स्थितं तस्थौ । अथ श्रुतप्रभावा यदृच्छया स्वेच्छयाऽऽगता । रघोः स्वप्रसादलब्धत्वादनुजिघृक्षयेति भावः । नन्दिनी नाम । वसिष्ठधेनुश्च ददृशे । द्वौ चकारावविलम्बसूचकौ ॥ ४० ॥

अन्वयः—तत्, कुमारसैन्यं, सपदि, विषादलुप्तप्रतिपत्ति, विस्मितं, "सत्" स्थितं, च, अथ, श्रुतप्रभावा, यदृच्छया, आगता, नन्दिनी, वसिष्ठधेनुः, च, ददृशे ॥ ४० ॥

व्याख्या—तत्=पूर्वोक्तं, कुमारसैन्यं=युवराजरघुसेना, सपदि=सद्यः, अश्वहरणक्षण एवेति भावः। विषादलुप्तप्रतिपत्ति=चेतोभङ्गविनष्टेतिकर्तव्यताकज्ञानशालि, किङ्कर्तव्यविमूढमिति भावः । विस्मितं=साश्चर्यम्, अश्वमेधीयहयादर्शनस्याकस्मिकत्वादाश्चर्यनिमग्नमिति भावः । सदिति शेषः । स्थितं=तस्थौ, व्यापारशून्यं निश्चलं स्थितमिति भावः। च=अन्वाचयेऽर्थे, अथ=पश्चात्, किङ्कर्तव्यविमूढतया निश्चलरूपेणावस्थानानन्तरमिति भावः। श्रुतप्रभावा=आकर्णितरघूत्पत्तिवरप्रदानरूपसामर्थ्या, यदृच्छया=स्वैरितया, आगता=सम्प्राप्ता, रघोर्निजप्रसादावाप्ततयाऽनुजिघृक्षयेति भावः। नन्दिनी=नन्दिनीनाम्नी, वसिष्ठधेनुः=वसिष्ठमहर्षिगौः, कामधेनुसुतेति यावद् । च=अन्वाचयेऽर्थे, ददृशे=अदृश्यत, सर्वैरिति शेषः ॥ ४० ॥

समासादि—विषादेन लुप्ता विषादलुप्ता ( त० पु० ), विषादलुप्ता प्रतिपत्तिर्यस्य तद्विषादलुप्तप्रतिपत्ति ( ब० व्री० ), सेनैव सैन्यं ( न० लिं० ), कुमारस्य सैन्यं कुमारसैन्यं ( त० पु० )। श्रुतः प्रभावो यस्याः सा श्रुतप्रभावा ( ब० व्री० )॥ ४० ॥

व्याकरणं—लुप्ता=लुप्लृ( छेदने-लृदित् )+क्तः+टाप्+सु । विस्मितं=वि+स्मिङ् ( ईषद्धसने-ङित् )+क्त+सु। सैन्यं=सेना+ष्यञ्+सु, "चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्" इति ष्यञ्प्रत्यये ञित्वादादिवृद्धौ "यस्येति च" इत्याकारलोपे रूपम् । ददृशे=दृशिर् ( प्रेक्षणे-इरित् )+लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वे कर्मणि लिट् प्रत्ययो बोध्यः ॥ ४० ॥

वाच्यान्तरं—तेन कुमारसैन्येन सपदि विषादलुप्तप्रतिपत्तिना विस्मितेन "सता" स्थितञ्च, अथ श्रुतप्रभावां यदृच्छयाऽऽगतां नन्दिनीं वसिष्ठधेनुञ्च ददृशे ॥ ४० ॥

कोशः—"प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये, बोधे" इत्यनेकार्थसङ्ग्रहः । "सद्यः सपदि तत्क्षणे" इति । "यदृच्छा स्वैरिता" इति चामरः ॥ ४० ॥

तात्पर्यार्थः—यदा तस्याश्वमेधीयहयस्य सहसा तिरोधानाद् रघोः सैन्यं विषादेन विनष्टेतिकर्तव्यताकज्ञानशालि बभूव तदैव सर्वत्र श्रुतप्रभावा नन्दिनी वसिष्ठधेनुः स्वेच्छया तत्राजगाम ॥ ४० ॥

भाषाऽर्थः—जब राजकुमार रघु की वह सेना उसी क्षण ( घोड़ा के न दीख पड़ने के क्षण ) विषाद से "क्या करना चाहिये क्या नहीं करना चाहिये" इस विचार से शून्य विस्मित होती हुई निश्चल स्थित हुई, तब उसके बाद जिसका प्रभाव सब कोई सुने हैं, ऐसी अपनी इच्छा से आई हुई नन्दिनी नाम की वसिष्ठ महर्षि की धेनु को लोगों ने देखा ॥ ४० ॥

*अथ नन्दिनीमूत्रेण कृतलोचनसम्मार्जनस्य रघोर्दिव्यदृष्टितामाह—*

**तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ।**
**अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥**

सञ्जीविनी—तदङ्गेति । सतां पुरस्कृतः पूजितो दिलीपनन्दनो रघुः पुण्येन तस्या नन्दिन्या यदङ्गं तस्य निस्यन्दो द्रवः स एव जलम्। मूत्रमित्यर्थः। तेन लोचने प्रमृज्य शोधयित्वा। अतीन्द्रियेष्विन्द्रियाण्यतिक्रान्तेषु । *अत्यादयः क्रान्ताद्यर्थे द्वितीयया* इति समासः । द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधाद्विशेष्यनिघ्नत्वम् । भावेष्वपि वस्तुषूपपन्नदर्शनः सम्पन्नसाक्षात्कारशक्तिर्बभूव ॥ ४१ ॥

अन्वयः—सताम्, पुरस्कृतः, दिलीपनन्दनः, पुण्येन, तदङ्गनिस्यन्दजलेन, लोचने, प्रमृज्य, अतीन्द्रियेषु, भावेषु, अपि, उपपन्नदर्शनः, बभूव ॥ ४१ ॥

व्याख्या—सतां = साधूनां, सज्जनानामिति यावत् । पुरस्कृतः = पूजितः, दिलीपनन्दनः = दिलीपाख्यनृपतितनयः, रघुरिति यावत् । पुण्येन = पावनेन, तदङ्गनिस्यन्दजलेन = पूर्वोक्तनन्दिनीशरीरद्रवसलिलेन, नन्दिनीमूत्रेणेत्यर्थः । लोचने = नयने, प्रमृज्य = शोधयित्वा, प्रमार्जनं कृत्वेति यावद् । अतीन्द्रियेषु = इन्द्रियातीतेषु, परोक्षेष्विति यावद् । भावेषु = वस्तुषु, अपि = समुच्चयेऽर्थे, उपपन्नदर्शनः = अधिगतसाक्षात्कारशक्तिः, बभूव = अभूत् ॥ ४१ ॥

समासादि—तस्या अङ्गं तदङ्गं ( त० पु० ), तस्य निस्यन्दस्तदङ्गनिस्यन्दः ( त० पु० ), स एव जलं तदङ्गनिस्यन्दजलं ( क० धा० ) तेन तथोक्तेन । लोच्यन्ते घटपटाद्य आभ्यामिति लोचने ( न० लिं० ) ते लोचने । इन्द्रियाण्यतिक्रान्ता अतीन्द्रियाः ( त० पु० ) तेष्वतीन्द्रियेषु । उपपन्नं दर्शनं यस्य स उपपन्नदर्शनः ( ब० व्री० ) । नन्दयतीति नन्दनः ( पुं० ), दिलीपस्य नन्दनो दिलीपनन्दनः ( त० पु० ) ॥ ४१ ॥

व्याकरणम्—प्रमृज्य = प्र + मृजू ( शुद्धौ–ऊदित् ) + क्त्वा + ल्यप् । पुरस्कृतः = पुरस् + डुकृञ् ( करणे–डुवित् ) + क्तः + सु । बभूव = भू ( सत्तायाम् ) + लिट्, लिटस्तिपि रूपम् ॥ ४१ ॥

वाच्यान्तरं—सतां पुरस्कृतेन दिलीपनन्दनेन पुण्येन तदङ्गनिस्यन्दजलेन लोचने प्रमृज्यातीन्द्रियेषु भावेष्वप्युपपन्नदर्शनेन बभूवे ॥ ४१ ॥

कोशः—पुण्यन्तु सुन्दरे । सुकृते पावने धर्मे" इति । "अथ पुरस्कृतम् । पूजिते स्वीकृते सिक्तेऽभिशस्तेऽप्रकृतेऽपि च" इति । 'दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः । स्वप्नलोचनयोश्चापि" इति चानेकार्थसङ्ग्रहः । "भावोऽभिप्रायवस्तुनोः" इत्यपि ॥ ४१ ॥

तात्पर्यार्थः—सज्जनानां पूज्यः स रघुर्वसिष्ठधेनोः पवित्रेण मूत्रेण निजलोचनयोः प्रमार्जनं कृत्वाऽप्रत्यक्षेष्वपि वस्तुषु प्राप्तदर्शनशक्तिर्बभूव ॥ ४१ ॥

भाषाऽर्थः—सज्जनों से पूजित दिलीप महाराज के पुत्र युवराज रघु, पवित्र उस नन्दिनी के अङ्ग में उत्पन्न जल ( मूत्र ) से दोनों आंखों को धोकर इन्द्रियों से नहीं प्रत्यक्ष

होने वाले भी वस्तुओं में देखने की शक्ति वाले हो गये ॥ ४१ ॥

*अथ पूर्वस्यां दिशि रघुकर्तृकमिन्द्रनीयमानाश्वमेधीयहयदर्शनमाह—*

**स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः ।**
**पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ ४२ ॥**

सञ्जीविनी—स इति । नरदेवसम्भवः स रघुः पुनः पुनः सूतेन निषिद्धचापलं निवारितौद्धत्यं रथस्य रश्मिभिः प्रग्रहैः । 'किरणप्रग्रहौ रश्मी' इत्यमरः । संयतं बद्धमश्वं हरन्त पर्वतपक्षाणां शातनं छेदकं देवमिन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श ॥ ४२ ॥

अन्वयः—नरदेवसम्भवः, सः, पुनः पुनः, सूतनिषिद्धचापलं, रथरश्मिसंयतम्, अश्वं, हरन्तम्, पर्वतपक्षशातन, देवम्, पूर्वतः, ददर्श ॥ ४२ ॥

व्याख्या—नरदेवसम्भवः = मनुजेश्वरजन्मा, दिलीपसूनुरिति यावत् । स = पूर्वोक्तः, रघुरिति भावः । पुनः पुनः = शश्वत्, सूतनिषिद्धचापल = सारथिनिवारितचाञ्चल्य, रथरश्मिसंयतं = स्यन्दनप्रग्रहबद्धम्, अश्वं = हयं, हरन्तं = हरणं कृत्वा नयन्तम्, पर्वतपक्षशातनं = गिरिपत्त्रच्छेदकं, देवम् = इन्द्रम्, पूर्वतः = पूर्वस्यां, दिशीति शेषः । ददर्श = अपश्यत् ॥ ४२ ॥

समासादि—पूर्वस्यामिति पूर्वतः ( अ० ) । शातयतीति शातनः ( पुं० ), पर्वाणि सन्त्येषामिति पर्वता ( पु० ), तेषां पक्षाः पर्वतपक्षाः, ( त० पु० ), तेषां शातन पर्वतपक्षशातनस्तं तथोक्तम् ( त० पु० ) । नरेषु देवो नरदेवः ( त० पु० ), तस्मात् सम्भवो यस्य स नरदेवसम्भवः (ब०ब्री०) चपलस्य भावश्चापलं ( न० लि० ), सूतेन निषिद्धं सूतनिषिद्धं (त० पु०), सूतनिषिद्धं चापलं यस्य स सूतनिषिद्धचापलः (ब० ब्री०) तं तथोक्तम् । रथस्य रश्मयो रथरश्मयः ( त० पु० ), तैः संयतो रथरश्मिसंयतः ( त० पु० ) तं तथोक्तम् ॥ ४२ ॥

व्याकरणम्—पूर्वतः = पूर्वा + तसिल्, "भस्याढे तद्धिते" इति पुंवद्भावेऽव्ययत्वात्सुपो लुकि रूपम् । ददर्श = दृशिर् ( प्रेक्षणे-इरित् ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४२ ॥

वाच्यान्तरं—नरदेवसम्भवेन तेन पुनःपुनः सूतनिषिद्धचापलं रथरश्मिसंयतमश्वं हरन् पर्वतपक्षशातनो देवः पूर्वतो ददृशे ॥ ४२ ॥

कोशः—"गरुत्पक्षच्छदाः पत्त्रं पतत्रं च तनूरुहम्" इति । "मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः" इति चामरः ॥ ४२ ॥

तात्पर्यार्थः—नन्दिनीमूत्रेण नयनप्रक्षालनसामर्थ्यात्प्राप्तदिव्यदृष्टिः सन् रघुः पूर्वस्यां दिशि रथरश्मिबद्धमश्वं हरन्तमिन्द्रं ददर्श ॥ ४२ ॥

भाषाऽर्थः—राजा दिलीपके लडके उन युवराज रघुने बारम्बार सारथि के द्वारा जिसकी उद्धतपना रोकी जारही थी, और जो कि रथ की डोरी से बँधा हुआ था, ऐसे घोड़े को हरण करके ले जाते हुये पर्वतों के पक्षों को काटने वाले देवराज इन्द्र को पूर्व दिशा में देखा ॥ ४२ ॥

*अथ सहस्राक्षतया देवराजमिन्द्रं ज्ञात्वा तन्निवर्तयितुकामो रघुरुवाचेत्याह—*

**शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।**
**अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥ ४३ ॥**

सञ्जीविनी—शतैरिति । रघुस्तमश्वहर्तारमनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णां शतैः हरिभिर्हरिद्वर्णैः । 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः । वाजिभिरश्वैश्च हरिमिन्द्रं विदित्वा । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति विश्वः। एनमिन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गम्भीरेण स्वरेण ध्वनिनैव निवर्तयन्निवावोचत् ॥ ४३ ॥

अन्वयः—रघुः, तम्, अनिमेषवृत्तिभिः, अक्ष्णां, शतैः, हरिभिः, वाजिभिः, च, हरिं, विदित्वा, एनं, गगनस्पृशा, धीरेण, स्वरेण, निवर्त्तयन्, इव, अवोचत् ॥ ४३ ॥

व्याख्या—रघुः = दिलीपसूनुः, तम् = पूर्वोक्तम्, अश्वहरणकर्त्तारमिति यावद् । अनिमेषवृत्तिभिः = निमेषव्यापाररहितैः, अक्ष्णां = चक्षुषां, शतैः = शतसङ्ख्याकैः, हरिभिः = हरिद्वर्णैः, वाजिभिः = अश्वैः, च = समुच्चयेऽर्थे, हरिम् = इन्द्रं, विदित्वा = ज्ञात्वा, एनम् = पूर्वोक्तम्, इन्द्रमिति यावद् । गगनस्पृशा = नभःस्पर्शकारिणा, आकाशव्यापिनेति यावद् । धीरेण = गम्भीरेण, स्वरेण = ध्वनिना, निवर्त्तयन् = परावर्त्तयन्, निजाभिमुखं कारयन्निति यावद् । अवोचत् = उवाच ॥ ४३ ॥

समासादि—निमेषस्य वृत्तिर्निमेषवृत्तिः ( त० पु० ), अविद्यमाना निमेषवृत्तिर्येषां तान्यनिमेषवृत्तीनि ( ब० व्री० ) तैस्तथोक्तैः । वाजाः पक्षा अभूवन्नेषामिति वाजिनः ( पुं० ) तैर्वाजिभिः । गगनं स्पृशतीति गगनस्पृक् ( पुं० ) तेन गगनस्पृशा । निवर्त्तयतीति निवर्त्तयन् (पुं०) ॥ ४३ ॥

व्याकरणं—विदित्वा = विद ( ज्ञाने-अकारेत् ) + इट् + क्त्वा । वाजिभिः = वाज + जस् + इनिः + भिस्, "अत इनिठनौ" इतीनिप्रत्यये रूपम् । अवोचत् = अट् + ब्रूञ् ( व्यक्तायां वाचि-ञित् ) + च्लि + अङ् + लुङ्, "ब्रुवो वचिः" इति वच्यादेशे "अस्यति वक्तिख्यातिभ्योऽङ्" इति च्लेरङादेशे "वच उम्" इत्युमागमे गुणेऽडागमे लुङस्तिपि रूपम् । निवर्त्तयन् = नि + ( वृतु ( वर्त्तने-उदित् ) + णिच् ) वर्त्ति + शप् + लट् + शतृ + सु ॥ ४३ ॥

वाच्यान्तरं—रघुणा तमनिमेषवृत्तिभिरक्ष्णां शतैर्हरिभिर्वाजिभिश्च हरिमिन्द्रं विदित्वैनं गगनस्पृशा धीरेण स्वरेण निवर्त्तयतेवावोचि ॥ ४३ ॥

कोशः—"वाजी बाणाश्वपक्षिषु" इति । "धीरो धैर्यान्विते स्वैरे" इति । "स्वैरः स्वच्छन्दमन्दयोः" इति च मेदिनी ॥ ४३ ॥

तात्पर्यार्थः—युवराजो रघुः सहस्राक्षतया हरिद्वर्णाश्वतया च तमश्वहर्त्तारं साक्षादिन्द्रमेव ज्ञात्वा निर्भयं गम्भीरेण स्वरेण तं परावर्त्तयन्निवोच्चैः सम्बोध्याब्रवीत् ॥ ४३ ॥

भाषार्थः—युवराज रघु उन्हें ( अश्व का हरण करने वाले को ) निमेष ( पलक का गिरना ) शून्य व्यापारों से सैकड़ों आँखो के द्वारा तथा हरे रङ्ग के घोड़ों के द्वारा इन्द्र जानकर उनसे आकाश में गूंज जाने वाले गम्भीर स्वर से लौटाते हुये की भांति बोले ॥ ४३ ॥

*अथ रघुरिन्द्रं प्रति किमाह तदेव श्लोकत्रयेण कथयन्नाह—*

**मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! सदा निगद्यसे ।**
**अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥ ४४ ॥**

सञ्जीविनी—मखांशेति । हे देवेन्द्र ! । मनीषिभिस्त्वमेव मखांशभाजां यज्ञभागभुजां प्रथमः सदा निगद्यसे कथ्यसे । तथाऽप्यजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य मद्गुरोः क्रियाविघाताय क्रतुविघाताय । क्रियां विहन्तुमित्यर्थः । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । कथं प्रवर्तसे ॥ ४४ ॥

अन्वयः—"हे" देवेन्द्र !, मनीषिभिः, त्वम्, एव, मखांशभाजां, प्रथमः, सदा, निगद्यसे, "तथाऽपि", अजस्रदीक्षाप्रयतस्य, मद्गुरोः, क्रियाविघाताय, कथं, प्रवर्त्तसे, ॥ ४४ ॥

व्याख्या—"हे" देवेन्द्र ! = हे सुरेश्वर !, मनीषिभिः = प्राज्ञैः, त्वम् = भवान्, एव = अवधारणेऽर्थे, मखांशभाजां = यज्ञभागभोक्तृणां, देवानामिति यावत् । प्रथमः = आदिः, सदा = सर्वदा, निगद्यसे = कथ्यसे, तथाऽपीति शेषः । अजस्रदीक्षाप्रयतस्य = निरन्तरदीक्षा-

प्रयत्नवतः, मद्गुरोः = मदीयपितुः, दिलीपस्येति यावत् । क्रियाविघाताय = क्रतुरूपकर्मनाशाय, क्रियां विहन्तुमित्यर्थः । कथं = कस्मात्, प्रवर्त्तसे = प्रवृत्तो भवसि ॥ ४४ ॥

समासादि—मखस्यांशा मखांशाः ( त० पु० ), तान् भजन्तीति मखांशभाजः ( पुं० ) तेषां तथोक्तानाम् । न जस्यतीत्यजस्रम् ( अ० ), अजस्रं दीक्षाऽजस्रदीक्षा ( अ० भा० ), तस्यां प्रयतोऽजस्रदीक्षाप्रयतः ( त० पु० ) तस्य तथोक्तस्य । मम गुरुर्मद्गुरुः ( त० पु० ) तस्य मद्गुरोः । क्रियाया विघातः क्रियाविघातः ( त० पु० ) तस्मै क्रियाविघाताय ॥ ४४ ॥

व्याकरणं—निगद्यसे = नि + ( गद ( व्यक्तायां वाचि–अकारेत् ) + यक् ) गद्य + शप् + लट्, लटस्तप्रत्यये रूपम् । अजस्रं = नञ् + (जसु ( मोक्षणे–उदित् ) + रः) जस्र + सु, "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति रप्रत्ययेऽव्ययत्वात् सोरमि चैकरूपता । प्रवर्त्तसे = प्र + वृतु ( वर्त्तने–उदित् ) + शप् + लट्, लटस्थासः सयादेशे गुणे रूपम् ॥ ४४ ॥

वाच्यान्तरं—हे देवेन्द्र ! मनीषिणस्त्वामेव मखांशभाजां प्रथमं सदा निगदन्ति, तथाऽप्यजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं "त्वया" प्रवृत्यते ॥ ४४ ॥

कोशः—"प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्" इति मेदिनी ॥ ४४ ॥

तात्पर्यार्थः—हे इन्द्र ! विद्वांसस्त्वामेव यज्ञभागभोगकर्तॄणां देवानां मध्ये प्रथमं प्रगणयन्ति, तथा मदीयः पिताऽपि श्रीमतां तृप्तिहेतुकं निरन्तरं यज्ञादि कर्म कुर्वन्नास्ते तत्किमिति तस्यैव यागकर्मविघातं कर्तुं भवानश्वहरणरूपकर्मणि प्रवर्तते ॥ १४४ ॥

भाषाऽर्थः—हे इन्द्र ! विद्वान् लोग आपही को यज्ञ के भाग को ग्रहण करने वाले देवताओं के मध्य में प्रथम सदा बतलाते हैं, और निरन्तर यज्ञसम्बन्धी दीक्षा लेने में प्रवृत्त ( सदा यज्ञ ही करते हुये ) मेरे पिता दिलीप महाराज के अश्वमेध यज्ञ को नष्ट करने के लिये आप क्यों प्रवृत्त हो रहे हैं ॥ ४४ ॥

*अथेन्द्रस्य मखविघातरूपं कर्म पुनर्निन्दन् रघुराह—*

**त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।**
**स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ॥४५॥**

सञ्जीविनी—त्रिलोकेति । त्रयाणां लोकानां नाथस्त्रिलोकनाथः । "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेनोत्तरपदसमासः । तेन त्रैलोक्यनियामकेन दिव्यचक्षुषाऽतीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः सदा नियम्या ननु शिक्ष्याः खलु । स त्वं धर्मचारिणां कर्मसु क्रतुषु स्वयमन्तरायो विघ्नो भवसि चेत् । विधिरनुष्ठानं च्युतः क्षतः । लोके सत्कर्मकथैवास्तमियादित्यर्थः ॥ ४५ ॥

अन्वयः—त्रिलोकनाथेन, दिव्यचक्षुषा, त्वया, मखद्विषः, सदा, नियम्याः, ननु, सः, त्वं, धर्मचारिणां, कर्मसु, स्वयम्, अन्तरायः, भवसि, चेत्, "तर्हि" विधिः, च्युतः ॥ ४५ ॥

व्याख्या—त्रिलोकनाथेन = भुवनत्रयप्रभुणा, त्रिलोक्या नियमनकर्त्तेति यावद् । दिव्यचक्षुषा = स्वर्गीयनेत्रेण, परोक्षार्थदर्शिनेति यावत् । त्वया = भवता, मखद्विषः = यज्ञशत्रवः, यागध्वंसका असुरादय इति यावद् । सदा = सर्वदा, नियम्याः = नियमनार्हाः, दण्डनीया इति यावद् । ननु = अवधारणेऽर्थे, सः = पूर्वोक्तः, मखद्विषां दण्डयितेति यावद् । त्वं = भवान्, धर्मचारिणां = सुकृताचरणशीलानां, कर्मसु = क्रियासु, यज्ञेष्विति यावत् । स्वयम् = आत्मना, अन्तरायः = विघ्नः, भवसि = वर्त्तसे, चेत् = यदि, तर्हीति शेषः । विधिः = अनुष्ठानं, धर्माचरणं यज्ञादीति भावः । च्युतः = नष्टः, जगति सत्कर्मकथैव लुप्ता स्यात् ॥ ४५ ॥

समासादि—त्रयश्च लोकाश्चेति त्रिलोकाः (क० धा०), तेषां नाथस्त्रिलोकनाथः (त०पु०) तेन त्रिलोकनाथेन । मखान् द्विषन्तीति मखद्विषः ( पुं० ) । नियमनार्हा नियम्याः ( पुं० ) । दिवि भवानि दिव्यानि ( न० लिं० ), दिव्यानि चक्षूंषि यस्य स दिव्यचक्षुः ( ब० व्री० )

त्वेन दिव्यचक्षुषा। धर्मं चरितुं शीलमस्येति धर्मचारी ( पुं० ) तेषां धर्मचारिणाम्। अयनमायः ( पुं० ), अन्तर्मध्ये, अन्तरस्य व्यवधानस्य वाऽऽयोऽन्तरायः ( पुं० ) ॥ ४५ ॥

व्याकरणं—नियम्याः = नि + यम ( उपरमे-अकारेत् ) + यत् + जस्, "अर्हे कृत्यतृचश्च" इत्यर्थे "पोरदुपधात्" इति यत्प्रत्यये जसि रूपम्। भवसि = भू ( सत्तायाम् ) + लिट् ॥ ४५ ॥

वाच्यान्तरं—त्रिलोकनाथो दिव्यचक्षुस्त्वं मखद्विपः सदा नियच्छेर्ननु, तेन त्वया धर्मचारिणां कर्मसु स्वयमन्तरायेण भूयते चेत् "तर्हि" विधिना च्युतेन "भूयेत" ॥ ४५ ॥

कोशः—"विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः। "पक्षान्तरे चेद् यदि" इत्यपि ॥ ४५ ॥

तात्पर्यार्थः—यदि कोऽपि जगति दुर्जनो यागादिधर्मकार्यविघातं कर्त्तुमीहेत तदा किल त्रैलोक्यनियामकेन त्वया दण्ड्यो भवेत्, किन्तु स्वयं त्वमेव यदि धर्मरक्षको भूत्वा धर्मिणां सत्क्रियाविघातं करोषि तर्हि लोके सत्कर्मकथैवास्तं गच्छेत् ॥ ४५ ॥

भाषाऽर्थः—त्रिलोकी के स्वामी, दिव्य दृष्टि वाले आप के द्वारा यज्ञ के विध्वंस करने वाले राक्षसादिक सदा दण्डनीय निश्चय करके हैं, अतः ऐसे जो आप हैं सो धर्म के आचरण करने वाले सज्जनों के यज्ञादि कर्म में स्वयम् यदि विघ्न हो रहे हैं तो यज्ञादि सत्कर्म नष्ट हुआ ही है अर्थात् लोक में तव सत्कर्म की कथा भी अस्त ही है ॥ ४५ ॥

*अथ रघुरश्वमोचनमेवार्थमुपसंहरन्नाह—*

**तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि।**
**पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ ४६ ॥**

सञ्जीविनी—तदङ्गमिति। हे मघवन्! तत्तस्मात्कारणान्महाक्रतोरश्वमेधस्याग्र्यं श्रेष्ठमङ्गं साधनममुं तुरङ्गं प्रतिमोक्तुं प्रतिदातुमर्हसि। तथाहि। श्रुतेः पथो दर्शयितारः सन्मार्गप्रदर्शका ईश्वरा महान्तो मलीमसां मलिनां पद्धतिं मार्गं नाददते न स्वीकुर्वते। असन्मार्गं नावलम्बन्त इत्यर्थः। 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः ॥ ४६ ॥

अन्वयः—"हे" मघवन्!, तद्, महाक्रतोः, अग्र्यम्, अङ्गम्, अमुं, तुरङ्गं, प्रतिमोक्तुम्, अर्हसि, "तथाहि" श्रुते, पथः, दर्शयितारः, ईश्वराः, मलीमसां, पद्धतिं, न, आददते, ॥ ४६ ॥

व्याख्या—"हे" मघवन्! = हे इन्द्र!, तत् = तस्मात्, कारणादिति यावद्। महाक्रतोः = महायज्ञस्य, अश्वमेधस्येति यावद्। अग्र्यं = श्रेष्ठम्, अङ्गम् = अवयवं, साधनमिति यावद्। अमुम् = एतं, तुरङ्गं = हयं, प्रतिमोक्तुं = प्रतिदातुम्, अर्हसि = योग्योऽसि, तथा हीति शेषः। श्रुतेः = वेदस्य, पथः = मार्गस्य, दर्शयितारः = प्रदर्शकाः, सन्मार्गोपदेष्टार इति यावद्। ईश्वराः = सामर्थ्यशालिनः, महान्त इति यावद्। मलीमसां = मलिनां, पद्धतिं = मार्ग, न = नहि, आददते = स्वीकुर्वते, असन्मार्गावलम्बनं न कुर्वत इत्यर्थः ॥ ४६ ॥

समासादि—अग्रे भवोऽग्र्यः ( पुं० ) तमग्र्यम्। महांश्चासौ क्रतुर्महाक्रतुः ( पुं० ) तस्य महाक्रतोः। पादाभ्यां हन्यत इति पद्धतिः ( स्त्री० ) तां पद्धतिम् ॥ ४६ ॥

व्याकरणम्—प्रतिमोक्तुम् = प्रति + मुच्लृ ( मोक्षणे-लृदित् ) + तुमुन्। अर्हसि = अर्ह ( पूजायाम्-अकारेत् ) + शप् + लट्, लटः सिपि रूपम्। आददते = आङ् + डुदाञ् ( दाने-डुञित् ) + श्लु + लट्, "आङो दोऽनास्यविहरणे" इति लटस्तङि झप्रत्यये श्लौ द्वित्वे झस्यातादेशे रूपम्। पद्धतिम् = पाद + भ्याम् + हन ( हिंसागत्योः -अकारेत् ) + क्तिन् + अम्, "स्त्रियां क्तिन्" इति क्तिन् प्रत्यये "हिमकाषिहतिषु च" इति पद्भावेऽमि रूपम् ॥ ४६ ॥

वाच्यान्तरं—हे मघवन्! तन्महाक्रतोरग्र्यमङ्गममुं तुरङ्गं प्रतिमोक्तुं "त्वया" अर्ह्यते, "तथाहि" श्रुतेः पथो दर्शयितृभिरीश्वरैर्मलीमसा पद्धतिर्नादीयते ॥ ४६ ॥

कोशः—"इन्द्रो मरुत्वान् मघवा बिडौजा पाकशासनः" इत्यमरः ॥ ४६ ॥

तात्पर्यार्थः—तस्मात् कारणाद् हे इन्द्र ! मत्पितुरश्वमेधयज्ञस्य प्रधानाङ्गभूतमिमं हयं मह्यं देहि धर्ममार्गप्रदर्शका भवादृशा महान्त ईदृशीं निन्दितां यज्ञविघातपद्धतिं स्वयं न स्वीकुर्वते, अर्थात् स्वयं यज्ञरक्षकाः सन्तो यज्ञविघातं कर्त्तुं प्रभवो न भवन्तीति भावः॥४६॥

भाषाऽर्थः—हे इन्द्र ! इस कारण से महायज्ञ ( अश्वमेध ) का प्रधान साधन इस घोड़े को छोड़ने के लिये आप समर्थ होवें क्योंकि-वेद के मार्ग को दिखाने वाले बड़े लोग मलिन ( निन्दित ) मार्ग ( यज्ञ का अश्व चुराना रूप ) का अवलम्बन नहीं करते हैं ॥४६॥

*अथ रघोर्वचो निशम्य प्रतिवचनं दातुकामस्येन्द्रस्य निजरथनिवर्त्तनमाह—*।

**इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।**
**निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥**

सञ्जीविनी—इतीति । इति रघुणा समीरितं प्रगल्भं वचो निशम्याकर्ण्य । दिवौकसः स्वर्गौकसः । 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः, । तेषामधिपतिर्देवेन्द्रो रघुप्रभावात्सविस्मयः सन् । रथं निवर्तयामास । उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥ ४७ ॥

अन्वयः—इति, रघुणा, समीरितं, प्रगल्भं, वचः, निशम्य, दिवौकसाम्, अधिपतिः, सविस्मयः, "सन्," रथं, निवर्त्तयामास, उत्तरं, प्रतिवक्तुं, प्रचक्रमे, च, ॥ ४७ ॥

व्याख्या—इति = उक्तप्रकारकं, रघुणा = दिलीपसूनुना, समीरितं = कथितं, प्रगल्भं = धृष्टं, वचः = वचनं, निशम्य = श्रुत्वा, दिवौकसां = देवानाम्, अधिपतिः = प्रभुः, इन्द्र इति यावत् । सविस्मयः = आश्चर्यान्वितः, सन्निति शेषः । रघुप्रभावादिति भावः । रथं = स्यन्दनं, निवर्त्तयामास = न्यवर्तयत्, उत्तरम् = प्रतिवाक्यम्, प्रतिवक्तुं = प्रतिगदितु, प्रचक्रमे = प्रत्यक्रमिष्ट, प्रारम्भं कृतवानिति यावत । च = अन्वाचयेऽर्थे ॥ ४७ ॥

समासादि—विस्मयेन सहितः सविस्मयः (ब० व्री०) ॥ ४७ ॥

व्याकरण—समीरितं = सम् + ईर (गतौ कम्पने च—अकारेत्) + इट् + क्तः + अम् । निवर्त्तयामास = नि + (वृतु—वर्त्तने—उदित्) + णिच् ) वर्त्ति + आम् + अस ( भुवि-अकारेत ) + लिट् , लिटस्तिपो णलि रूपम् । प्रचक्रमे = प्र + क्रमु (पादविक्षेपे—उदित्) + लिट् , लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये रूपम् । प्रतिवक्तुम् = प्रति + वच ( परिभाषणे—अकारेत् ) + तुमुन् ॥ ४७ ॥

वाच्यान्तरम्—इति रघुणा समीरित प्रगल्भं वचो निशम्य दिवौकसामधिपतिना सविस्मयेन "सता" रथो निवर्त्तयाञ्चक्रे, उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥ ४७ ॥

कोशः—"उत्तरा दिग्विशेषे च स्नुषायामर्जुनस्य च । विराटस्य सुते ना स्यादूर्ध्वोदीच्योत्तमे त्रिषु । नपुंसकं प्रतिवाक्ये" इति मेदिनी ॥ ४७ ॥

तात्पर्यार्थः—रघोरित्युक्तप्रकारकं धृष्टं वचः श्रुत्वा देवेन्द्रो रथं साश्चर्यं निवर्त्तयन् प्रतिवाक्यं दातुं प्रारेभे ॥ ४७ ॥

भाषाऽर्थः—इस प्रकार से रघु के द्वारा कहे हुये धृष्ट वचन को सुन कर देवताओं के स्वामी इन्द्र ने रघु के प्रभाव से आश्चर्य युक्त होते हुये रथ को लौटाया, और उत्तर देने के लिये आरम्भ किया ॥ ४७ ॥

*अथेन्द्र. किमात्मकं प्रतिवाक्यं प्रतिवक्तुं प्रारेभ इत्यतस्तदेवाह—*

**यदात्थ राजन्यकुमार ! तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।**
**जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥**

सञ्जीविनी—यदिति । हे राजन्यकुमार! क्षत्रियकुमार!। 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरः। यद्वाक्यमात्थ ब्रवीषि। "ब्रुवः पञ्चानामादित आहो ब्रुवः" इत्यने-

नाहादेशः। तत्तथा सत्यम्। किं तु यशोधनैरस्मादृशैः परतः शत्रुतो यशो रक्ष्यम्। ततः किमत आह—भवद्गुरुस्त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धमशेषं सर्वं मम तद्यश इज्यया यागेन लङ्घयितुं तिरस्कर्तुमुद्यत उद्युक्तः ॥ ४८ ॥

अन्वयः—"हे" राजन्यकुमार!, यद्, आत्थ, तत्, तथा, तु, यशोधनैः, परतः, यशः, रक्ष्यं, भवद्गुरुः, जगत्प्रकाशम्, अशेषं, मम, तद्, लङ्घयितुम्, उद्यतः, ॥ ४८ ॥

व्याख्या—"हे" राजन्यकुमार! = हे क्षत्रिययुवराज!, हे रघो! इति भावः। यत् = पूर्वोक्तं, वच इति भावः। आत्थ = कथयसि, त्वमिति शेषः। तद् = वचः, तथा = तादृशं, सत्यमिति भावः। अस्तीति शेषः। तु = किन्तु, यशोधनैः = कीर्त्तिवित्तशालिभिः, अस्मादृशैरिति भावः। परतः = शत्रुतः, यशः = कीर्त्तिः, रक्ष्यं = पालनीयम्, भवद्गुरुः = त्वत्पिता, दिलीप इति भावः। जगत्प्रकाशं = लोकातिप्रसिद्धम्, अशेषं = सम्पूर्ण, मम = इन्द्रस्य, तत् = पूर्वोक्तं, यश इति भावः। इज्यया = यागेन, शततमाश्वमेधयज्ञकरणेनेति भावः। लङ्घयितुं = लङ्घनं कर्त्तुं, तिरस्कर्त्तुमिति यावद्। उद्यतः = उद्युक्तः, कृतोद्योग इति यावद् ॥४८॥

समासादि—राजन्यस्य कुमारो राजन्यकुमारः (त० पु०) तत्सम्बुद्धौ हे राजन्यकुमार!। रक्षितुं योग्यं रक्ष्यं (न० लिं०)। परस्मादिति परतः (अ०)। यश एव धनं येषान्ते यशोधनाः (ब० व्री०) तैर्यशोधनैः। जगति प्रकाशं जगत्प्रकाशं (त० पु०)। भवतो गुरुर्भवद्गुरुः (त० पु०) ॥ ४८ ॥

व्याकरणम्—आत्थ = ब्रूञ् (व्यक्तायां वाचि—ञित्) + लट्, लटः सिपि "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति धातोराहादेशे सिपस्थलादेशे "आहस्थः" इति थान्तादेशे चर्त्वे रूपम्। लङ्घयितुं = (लघि (गतौ—इदित्) + णिच्) लङ्घि + इट् + तुमुन् ॥ ४८ ॥

वाच्यान्तरं—हे राजन्यकुमार! यद्वाक्यं त्वयोच्यते, तत्तथा "भूयते, तु यशोधनाः परतो-यशो रक्षन्ति, भवद्गुरुणा जगत्प्रकाशमशेषं मम तद् यश इज्यया लङ्घयितुमुद्यतेन "भूयते" ॥ ४८ ॥

कोशः—"प्रकाशः स्फुटहासयोः। उद्योतेऽतिप्रसिद्धे च" इत्यनेकार्थसङ्ग्रहः ॥ ४८ ॥

तात्पर्यार्थः—हे राजकुमार! त्वया यदुक्तं तत् सत्यं किन्त्वस्मादृशैः सर्वैस्त्वं यशोरक्ष्यमत एव त्वदीयः पिता शततममश्वमेधयज्ञं यदि पूरयितुं प्रभुर्भवेत् नहिं शतक्रतुरिति नाम यशश्चापि विलुप्ते स्यातामत एव निजं समस्तलोकेऽतिप्रसिद्धम् "अश्वमेधयज्ञशतककर्त्ता सुरपतिरेव नान्यः" इति यशो रक्षितुकाम एव हयहरणं कृतवानतो न दोषाय्रेति भावः ॥ ४८ ॥

भाषाऽर्थः—हे क्षत्रियकुमार! रघु तुम जिस बात को कह रहे हो सो उसी तरह से (ठीक) ही है, किन्तु यश ही को धन मानने वाले हमारे ऐसे लोगों को शत्रु से यश की रक्षा करनी उचित है, और आपके पिता जगत् में अतिशय प्रसिद्ध जो सम्पूर्ण मेरा यश है, उसे यज्ञ से लङ्घन करने के लिये उद्यत हो रहे हैं ॥ ४८ ॥

किं तद् यश इत्याह—

**हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः।**
**तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥ ४९ ॥**

सञ्जीविनी—हरिरिति। पुरुषेषूत्तम इति सप्तमीसमासः। "न निर्धारणे" इति षष्ठीसमासनिषेधात्। कर्मधारये तु "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इत्युत्तमपुरुष इति स्यात्। यथा हरिर्विष्णुरेक एव पुरुषोत्तमः स्मृतः। यथा च त्र्यम्बकः शिव एव महेश्वरः स्मृतः। नापरोऽपरः पुमान्न। तथा मां मुनयः शतक्रतुं विदुर्विदन्ति। "विदो लटो वा" इति झेरुसादेशः। नोऽस्माकम्। हरिहरयोर्मम चेत्यर्थः। एष त्रितयोऽपि शब्दो द्वितीयगामी नहि।

द्वितीयाप्रकरणे गम्यादीनामुपसंख्यानात्समासः ॥ ४९ ॥

अन्वयः—यथा, हरिः, एकः, "एव," पुरुषोत्तमः, स्मृतः, "यथा, च," त्र्यम्बकः, एव, महेश्वरः, "स्मृतः", न, अपरः, तथा, मां, मुनयः, शतक्रतुं, विदुः, नः, एषः, शब्दः, द्वितीयगामी, नहि ॥ ४९ ॥

व्याख्या—यथा = येन प्रकारेण, हरिः = विष्णुः, एकः = केवलः । "एव", पुरुषोत्तमः = पुरुषोत्तमेत्यभिधः, स्मृतः = कथितः, लोकैरिति शेषः । यथा चेत्यस्यात्राक्षेपः कर्त्तव्यः । त्र्यम्बकः = त्रिनेत्रः, शिव इति भावः । "एकः" । एव = अवधारणेऽर्थे, महेश्वरः = महेश्वर इति नामधेयः, "स्मृतः" न = नहि, अपरः = अन्यः, कश्चिज्जन इति भावः । तथा = तेन प्रकारेण, माम् = इन्द्रं, मुनयः = वाचंयमाः, मननशीला वसिष्ठादय इति भावः । शतक्रतुं = शतक्रतुरित्यभिधेयं । शताश्वमेधकर्त्तारमिति यावद् । विदुः = विदन्ति, जानन्तीति यावद् । नः = अस्माकं, हरिहरयोर्मम चेत्यर्थः । एषः = अधुनैवोक्तः, त्रितयोऽपीति भावः । शब्दः = हरिमहेश्वरशतक्रतुरूपः । द्वितीयगामी = अपराभिधायी, द्वितीयपुरुषबोधनकर्त्तेति यावद् । नहि = न, भवतीति शेषः ॥ ४९ ॥

समासादि—हरति पापानीति हरिर्विष्णुः (पुं०) । पुरुषेपूत्तमः पुरुषोत्तमः । (त०पु०) । महांश्चासा वीश्वरो महेश्वरः ( क०धा० ) । त्रीण्यम्बकानि यस्यासौ त्र्यम्बकः ( ब०व्री० ) । द्वितीयं गन्तुं शीलमस्येति द्वितीयगामी ( पुं० ) ॥ ४९ ॥

व्याकरणं—हरिः = हृञ् ( हरणे-ञित् ) + इः + सुः, "अच इः" इत्यौणादिक इ प्रत्यये गुणे रपरे सौ रूपम् । स्मृतः = स्मृ (स्मरणे) + क्तः + सुः । विदुः = विद (ज्ञाने-अकारेत्) + लट्, ल.ो झेः "विदो लटो वा" इत्युसादेशे रूपम् ॥ ४९ ॥

वाच्यान्तरं—यथा हरिणैकेनैव पुरुषोत्तमेन स्मृतेन भूयते, यथा च त्र्यम्बकेनैकेनैव महेश्वरेण स्मृतेन भूयते नापरेण तथाऽहं मुनिभिः शतक्रतुर्विद्ये न एतेन शब्देन द्वितीयगामिना नहि "भूयते" ॥ ४९ ॥

कोशः—"यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इति । "देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः" इति चामरः ॥ ४९ ॥

तात्पर्यार्थः—अस्मिन् जगति यथा पुरुषोत्तमशब्दः केवलविष्णुवाचको यथा महेश्वरशब्दस्त्रिनयनवाचकस्तथैवायं शतक्रतुशब्दोऽपि मद्वाचकः, एतेऽस्माकं बोधकाः पुरुषोत्तममहेश्वरशतक्रतुरूपाः शब्दाः परपुरुषगामिनो न भवन्ति ॥ ४९ ॥

भाषाऽर्थः—जिस प्रकार विष्णु ही केवल पुरुषोत्तम कहे जाते हैं, और जिस प्रकार से त्र्यम्बक ही केवल महेश्वर कहे जाते हैं, और दूसरा कोई नहीं कहा जाता है, उसी भांति से मुनि लोग मुझे शतक्रतु ( सौ अश्वमेध यज्ञ का करने वाला ) समझते हैं । हम लोगों के ये तीनों (पुरुषोत्तम-महेश्वर-शतक्रतु-) शब्द दूसरे पुरुष के बोध के लिये नहीं है ॥ ४९ ॥

*अथेन्द्रो रघुं स्वस्मादश्वमोचनप्रयासाद् निवारयितुकामो भयं प्रदर्शयन्नाह—*

**अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयाऽपहारितः ।**
**अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य संततेः ॥ ५० ॥**

सञ्जीविनी—अत इति । यतोऽहमेव शतक्रतुरतस्त्वदीयस्य पितुरयं शततमोऽश्वः कपिलानुकारिणा कपिलमुनितुल्येन मयाऽपहारितोऽपहृतः । अपहारित इति स्वार्थे णिच् । तवात्राश्वे प्रयत्नेनालम् । प्रयत्नो मा कारीत्यर्थः । निषेधस्य निषेधं प्रतिकरणत्वात्तृतीया । सगरस्य राज्ञः संततेः संतानस्य पदव्यां पदं मा निधा न निधेहि । निपूर्वाद्धाधातोर्लुङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः । महदास्कन्दनं ते विनाशमूलं भवेदिति भावः ॥ ५० ॥

अन्वयः—अतः, त्वदीयस्य, पितुः, अयम्, अश्वः, कपिलानुकारिणा, मया, अपहारितः,

तव, अत्र, प्रयत्नेन, अलं, सगरस्य, सन्ततेः, पद्व्यां, पदं, मा, निधाः ॥ ५० ॥

व्याख्या—अतः = एतस्माद्, यतोऽहमेव शतक्रतुरिति भावः । त्वदीयस्य = भवदीयस्य, पितुः = जनकस्य, दिलीपस्येति यावद् । अयम् = एषः, शततम इति भावः । अश्वः = हयः, अश्वमेधीय इति भावः । कपिलानुकारिणा = कपिलमुनिसदृशेन, तदनुकरणकारिणेति यावद् । मया = इन्द्रेण, अपहारितः = अपहृतः, तव = भवतः, अत्र = अस्मिन्, अश्व इति यावद् । प्रयत्नेन = प्रयासेन, अश्वमोचनरूपेणेति यावद् । अलं = पर्याप्तम्, अश्वमोचने प्रयत्नं मा कार्षीरित्यर्थः । सगर(१)स्य = तदाख्यनृपस्य, सन्ततेः = सन्तानस्य, पद्व्यां = मार्गे, पदं = चरणं, मा = नहि, निधाः = निधेहि । महता सह विरोधो विनाशमूलमेव भवतीति भावः ॥ ५० ॥

समासादि—कपिलमनुकर्तुं शीलमस्येति कपिलानुकारी ( पुं० ) तेन कपिलानुकारिणा । तवायन्त्वदीयः ( पुं० ) तस्य त्वदीयस्य । गरेण सहोत्पन्नः सगरः ( ब० व्री० ) तस्य सगरस्य ॥ ५० ॥

व्याकरणम्—अप + ( हृञ् ( हरणे + ञित् ) + णिच् ) हारि + क्तः + सु, अत्र स्वार्थे णिच्प्रत्यये ततो धातुत्वात्पुनः क्तप्रत्यये रूपम् । मा निधाः = माङ् + नि + डुधाञ् ( धारणपोषणयोः—डुञित् ) + च्लिः + सिच् + लुङ्, लुङः सिपि "न माङ्योगे" इत्यडभावे "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुकि रूपम् ॥ ५१ ॥

वाच्यान्तरम्—अतस्त्वदीयस्य पितुरमुमश्वं कपिलानुकार्यहमपहृतवान्, तवात्र प्रयत्नेनालं, सगरस्य सन्ततेः पद्व्यां पदं "त्वया" मा निधायि ॥ ५० ॥

कोशः—"अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इति । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इति चामरः ॥ ५० ॥

तात्पर्यार्थ—पुरा किल यथा सगरसूनवो मयाऽपहृतमश्वमन्विष्यन्तः प्राप्ताः कपिलाश्रमे बद्धमश्वं वीक्ष्य, "समाधिस्थोऽयमश्वापहारक" इति कथयन्तः कपिलतेजसा क्रोधाद् दग्धा अभूवन्, तथा त्वमपि मदीयक्रोधाग्निना दग्धो भविष्यस्यत एव सगरसुताचरितपथाचरणं मा कार्षीः ॥ ५० ॥

भाषार्थः—( क्यों कि मैं ही केवल अश्वमेध यज्ञ का करने वाला हूं दूसरा कोई नहीं है ) इस कारण से तुम्हारे पिता के इस घोडे को कपिल ऋषि के तुल्य मैंने चुरा लिया है, तुम्हारा इस घोड़े के विषय में "छुड़ाने के लिये" प्रयत्न करना वृथा है, और सगर महाराज के पुत्रों के मार्ग में पैर मत रक्खो । अर्थात् उनका अनुसरण मत करो ॥ ५० ॥

*अथ रघुः प्रत्युत्तरयन् युद्धार्थमिन्द्रमाह्वयत इत्याह—*

ततः प्रहस्यापभयः पुरंदरं पुनर्बभाषे तुरगस्य रक्षिता ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥५१॥

---

( १ ) पुरा किल वैवस्वतमनोः कुलेऽभूत्सगरो नाम कश्चिच्चक्रवर्ती पार्थिवः, स च हिमालयस्य भृगुप्रस्रवणे शतं समास्तपस्तप्त्वा महर्षिं भृगुं प्रसाद्य च ततस्तद्वरदानप्रभावात्स्वैका राज्ञी सुतं केवलमसमञ्जसमपरा च षष्टिसहस्राणि पुत्रान् जनयामास । तत कदाचित् सगरेणाश्वमेधयज्ञ प्रारब्धो दीक्षितेन सताऽश्वरक्षार्थं षष्टिसहस्रतनयाः सुता नियोजिता, पथि देवेन्द्रस्तत्कर्मासहमानस्तमपहृत्य पाताले सांख्यशास्त्रप्रवर्तकस्य समाधिस्थस्य कपिलमहर्षेः पश्चाद्भागे संस्थाप्य स्वपुरीं जगाम । ततो रक्षकाश्च सकलां वसुन्धरां सावधानतयाऽन्विष्यन्त पातालमधिजग्मुस्तत्र च कपिलाश्रमे बद्धमश्वं वीक्ष्य कपिलमेव श्वहर्त्तारमाशङ्क्य संप्रति च तं समाधिस्थमालक्ष्य जातसंरम्भतया विवेकशून्या सन्तस्तं मर्मस्पर्शिकटूक्तिभिभृशं तिरस्कृतवन्त । तदनन्तरं तेषां कोलाहलेन जातसमाधिभङ्गतयाऽतिकोपितेन महर्षिणा क्रोधपूर्णचक्षुषा निरीक्षिता सर्वेऽपि सगरसूनवो युगपद् भस्मीभूता अभूवन्नित्येतिह्यमत्रानुसन्धेयम् ।

सञ्जीविनी—तत इति । ततस्तुरगस्य रक्षिता रघुः प्रहस्य प्रहासं कृत्वा । अपभयो निर्भीकः सन् । पुनः पुरंदरं बभाषे । किमिति—हे देवेन्द्र ! यद्येषोऽश्वामोचनरूपस्ते तव सर्गो निश्चयः । 'सर्ग. स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिपु' इत्यमरः । तर्हि शस्त्रं गृहाण । भवान्रघुं मामनिर्जित्य । कृतमनेनेति कृती । कृतकृत्यो न खलु । "इष्टादिभ्यश्च" इतीनिप्रत्ययः । रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ॥ ५१ ॥

अन्वयः—ततः, तुरगस्य, रक्षिता, प्रहस्य, अपभयः, "सन्", पुनः, पुरन्दरं, बभाषे, यदि, एषः, ते, सर्गः, "तर्हि" शस्त्रं, गृहाण. भवान् , रघुम् , अनिर्जित्य, कृती, न, खलु ॥५१॥

व्याख्या—ततः = तदनन्तरं, तुरगस्य = अश्वस्य, अश्वमेधीयस्येति यावद् । रक्षिता = पालयिता, रघुरिति यावत् । प्रहस्य = प्रहासं कृत्वा, अपभयः = निर्भीकः, सन्निति शेषः । पुनः = भूयः, पुरन्दरम् = इन्द्रं , बभाषे = ऊचे, "हे देवेन्द्र !" इत्यस्याक्षेपोऽत्र कर्त्तव्यः । यदि = चेद्, एषः = अश्वमोचनाभावरूपः । ते = तव, सर्गः = निश्चयः, तर्हीति शेषः । शस्त्रम् = आयुधं, गृहाण = आदेहि, ग्रहणं कुर्विति यावद् । भवान् = त्वम् , इन्द्र इति यावद् । रघुं = दिलीपसूनुं, मामिति भावः । अनिर्जित्य = जयमकृत्वा, कृती = कृतकृत्यः, कृतार्थ इति यावद् । न = नहि, खलु = अवधारणेऽर्थे, भविष्यतीति शेषः ॥ ५१ ॥

समासादि—अपगतं भयं यस्मादित्यपभयः (ब०व्री०) । न निर्जित्येत्यनिर्जित्य (अ०) । कृतमनेनेति कृती ( पुं० ) ॥ ५१ ॥

व्याकरणम्—प्रहस्य = प्र + हस ( हसने-अकारेत् ) + क्त्वा + ल्यप् । बभाषे = भाष- ( व्यक्तायां वाचि—अकारेत् ) + लिट्, लिटस्तप्रत्ययस्यैशादेशो द्वित्वेऽभ्यासकार्ये रूपम् । गृहाण = ग्रह(उपादाने-अकारेत् ) + श्ना + शानच् + लोट् , लोटः सिपो ह्यादेशे 'हलः श्नः- शानज्झौ" इति श्नः शानजादेशे रूपम् । अनिर्जित्य = नञ् + निर् + जि (जये) + क्त्वा + ल्यप् । कृती = कृत + अम् + इनिः + सु ॥ ५१ ॥

वाच्यान्तरं—ततस्तुरगस्य रक्षित्रा प्रहस्यापभयेन "सता" पुनः पुरन्दरो बभाषे, यद्येतेन ते सर्गेण "भूयते" "तर्हि" शस्त्रं "त्वया" गृह्यताम् , भवता रघुमनिर्जित्य कृतिना न खलु भविष्यते ॥ ५१ ॥

कोशः—"आयुधं तु प्रहरणम् । शस्त्रमस्त्रम्" इत्यमरः । "कृती योग्ये बुधे" इत्यनेकार्थसङ्ग्रहः ॥ ५१ ॥

तात्पर्यार्थः—तत इन्द्रवाक्यश्रवणानन्तरं रघुः प्रहस्य सगर्वमिदमुवाच, यद् हे इन्द्र ! यद्यहमश्वमोचने त्वत्तः प्रयत्नं करिष्यामि तदा त्वं मां सगरसूनुमार्गं नेष्यसीत्येवं रूपस्ते यदि निश्चयः स्यात्तर्हि युद्धाय सज्जो भव, यावन्मां न जेष्यसि तावत् त्वं कदाऽप्यश्वहरणरूपे कार्ये समर्थो न भविष्यसि ॥ ५१ ॥

भाषाऽर्थः—उसके (इन्द्र की बात सुन चुकने के) बाद घोड़े की रक्षा करने वाले रघु हँस कर निर्भीक होते हुये फिर इन्द्र से बोले कि हे देवेन्द्र ! यदि यह "घोड़ा न छोड़ना रूप" आपका निश्चय है, तो शस्त्र को ग्रहण करिये, क्योंकि आप मुझे बगैर जीते कृतकृत्य निश्चय करके नहीं हो सकेंगे ॥ ५१ ॥

*अथ युयुत्सोः सशरं धनुः करिष्यमाणस्य रघोरालीढाख्यासनेनावस्थानमाह—*

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥

सञ्जीविनी—स इति । स रघुरुन्मुखः सन् । मघवन्तमिन्द्रमेवमुक्त्वा शरासनं चापं सशरं करिष्यमाणः । आलीढेनालीढाख्येन स्थानभेदेन विशेषशोभिनाऽतिशयशोभिना वपुःप्रकर्षेण देहौन्नत्येन विडम्बितेश्वरोऽनुसृतपिनाकी सन् । अतिष्ठत् । आलीढलक्षणमाह यादवः—(स्था-

नानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥ अन्वर्थं स्यात्समपदमालीढं तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य प्रत्यालीढविपर्ययः)इति ॥५२॥

अन्वयः—सः, उन्मुखः, "सन्", मघवन्तम्, एवम्, उक्त्वा, शरासनं, सशरं, करिष्यमाणः, आलीढविशेषशोभिना, वपुःप्रकर्षेण, विडम्बितेश्वरः, "सन्" अतिष्ठत् ॥ ५२ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । उन्मुखः = ऊर्ध्ववदनः, सन्निति शेषः । मघवन्तम् = इन्द्रम्, एवम् = इत्थं, पूर्वोक्तप्रकारेणेति यावद् । उक्त्वा = कथयित्वा, शरासनं = धनुः, सशरं = बाणसहितं, करिष्यमाणः = विधास्यमानः, आलीढविशेषशोभिना = आलीढाख्यस्थानभेदशालिना, वपुःप्रकर्षेण = देहौन्नत्येन, विडम्बितेश्वरः = तिरस्कृतपिनाकी, अनुसृतशङ्कर इति यावत् । सन्निति शेषः । अतिष्ठत् = तस्थौ ॥ ५२ ॥

समासादि—करिष्यत इति करिष्यमाणः (पुं०)। शरेण सहितं सशरं तत् सशरं (ब० व्री०)। शरा अस्यन्तेऽनेनेति शरासनं (न० लिं०) तच्छरासनम् । विशेषेण शोभितुं शीलमस्येति विशेषशोभी (पुं०), आलीढेन विशेषशोभीत्यालीढविशेषशोभी (त० पु०) तेन तथोक्तेन । वपुषः प्रकर्षो वपुःप्रकर्षः (त० पु०) तेन वपुःप्रकर्षेण । विडम्बित ईश्वरो येन स विडम्बितेश्वरः (ब० व्री०) ॥ ५२ ॥

व्याकरणम्—उक्त्वा = वच (परिभाषणे—अकारेत्)+क्त्वा, "वचिस्वपियजादीनां किति" इति संप्रसारणे पूर्वरूपं रूपम् । करिष्यमाणः = डुकृञ् (करणे—डुञित्)+इट्+स्य+लट्+शानच्+मुक् । अतिष्ठत् = अट्+ष्ठा (गतिनिवृत्तौ)+शप्+लङ्, लङ्स्तिपि शपि "पाघ्राध्मे"ति तिष्ठादेशेऽडागमे रूपम् ॥ ५२ ॥

वाच्यान्तरं— तेनोन्मुखेन "सता" मघवन्तमेवमुक्त्वा शरासनं सशरं करिष्यमाणेनालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरेण "सता" अस्थीयत ॥ ५२ ॥

कोशः—"इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः" इति । "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इति । "ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः" इति चामरः ॥५२॥

तात्पर्यार्थः—इत्थं देवेन्द्रमुक्त्वा धनुषि शरमारोप्योर्ध्वमुखो रघुः किञ्चिद् दक्षिणं चरणमग्रत आकुञ्च्य वामं च पश्चाद्विस्तार्य युद्धाय कृतनिश्चयः सन्, त्रिपुरदाहोद्यतः शम्भुरिवातिष्ठत्॥५२॥

भाषाऽर्थः—वह रघु ऊपर को मुख किये हुये इन्द्र से इस प्रकार कह कर धनुष को बाण से युक्त किया जाने वाला करते हुए आलीढ नामक (आगे की ओर दाहिना पैर कुछ नीचे को झुका हो और बायां पैर पीछे की ओर तना हुआ रखा हो तो उसे आलीढ नामक पैंतरा धनुर्विद्या के जानने वाले कहते हैं) पैंतरे से विशेष शोभा देने वाले देह के औन्नत्य से शङ्कर भगवान् का अनुसरण किये हुये खड़े हुये ॥ ५२ ॥

*अथ रघुबाणेन हृदिक्षतस्येन्द्रस्य स्वधनुष्यपि बाणारोपणमाह—*

**रघोरवष्टम्भमयेन पत्त्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ।**

**नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥**

सञ्जीविनी—रघोरिति । रघोरवष्टम्भमयेन स्तम्भरूपेण । 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि' इति विश्वः । पत्त्रिणा बाणेन हृदि हृदये क्षतो विद्धः । अत एवामर्षणोऽसहनः । क्रुद्ध इत्यर्थः । गोत्रभिदिन्द्रोऽपि । 'संभावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः' इति विश्वः । नवाम्बुदानामनी(१)कस्य वृन्दस्य मुहूर्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि । दिव्ये धनुषीत्यर्थः । अमोघमवन्ध्यं सायकं बाणं समधत्त संहितवान् ॥ ५३ ॥

अन्वयः—रघोः, अवष्टम्भमयेन, पत्त्रिणा, हृदि, क्षतः, "अत एव", अमर्षणः, गोत्रभिद्, अपि, नवाम्बुदानीकमुहूर्तलाञ्छने, धनुषि, अमोघं, सायकं, समधत्त ॥ ५३ ॥

(१) महाकविभिरनीकशब्द सेनाऽर्थको वृन्दार्थेऽपि प्रयुक्तः सर्वत्रेति बोध्यम् । (टी० कृ०)

व्याख्या—रघोः = दिलीपसूनोः, अवष्टम्भमयेन = स्तम्भरूपेण, सुवर्णमयेन वा, पत्रिणा = बाणेन, हृदि = हृदये, क्षतः = विद्धः, अत एवेति शेषः । अमर्षणः = कोपी, क्रुद्ध इति भावः । गोत्रभिद् = इन्द्रः, अपि = समुच्चयेऽर्थे, नवाम्बुदानीकमुहूर्त्तलाञ्छने = नूतनजलद-वृन्दक्षणमात्रलक्षणभूते, धनुषि = शरासने, दिव्ये चाप इति भावः । अमोघम् = अनिष्फलं, सायकं = शरं, समधत्त = सन्दधे, धनुः सशरं कृतवानित्यर्थः ॥ ५३ ॥

समासादि—अवष्टम्भस्य भावोऽवष्टम्भमयस्तेनावष्टम्भमयेन ( पुं० ) । प्राचुर्येणावष्टम्भो यत्रेति वा । पत्रमस्यास्तीति पत्री ( पुं० ) तेन पत्रिणा । गाम्भूमि त्रायन्त इति गोत्राः पर्वताः ( पुं० ), तान् भिनत्तीति गोत्रभिद् ( पुं० ) । न मर्षितुं शीलमस्येत्यमर्षणः ( न० स० ) । अम्बु ददातीत्यम्बुदः ( पुं० ), नवश्चासा वम्बुदो नवाम्बुदः (क० धा०), तस्यानीकं नवाम्बुदानीकं (त० पु०), मुहूर्त्त यल्लाञ्छनं मुहूर्त्तलाञ्छनं ( क० धा० ), नवाम्बुदानीकस्य मुहूर्त्तलाञ्छनं नवाम्बुदानीकमुहूर्त्तलाञ्छनं ( त० पु० ) तस्मिंस्तथोक्ते । न मोघ इत्यमोघः ( न० स० ) तममोघम् ॥ ५३ ॥

व्याकरणम्—अवष्टम्भमयेन = अवष्टम्भ + मयट्, + टा । क्षतः = क्षणु ( हिंसायाम्—उदित् ) + क्तः + सु, कित्वादनुनासिकलोपे रूपम् । अमर्षणः = नञ् (मृष (तितिक्षायाम्–अकारेत् ) + युच् ) मर्षण + सु, "क्रुधमण्डार्थेभ्यश्च" इति युच्प्रत्यये नञ्समासे रूपम् । समधत्त = सम् + अट् + डुधाञ् + ( धारणपोषणयोः—डुनित् ) + श्लु + लङ्, लङस्तप्रत्यये रूपम् ॥ ५३ ॥

वाच्यान्तरं—रघोरवष्टम्भमयेन पत्रिणा हृदि क्षतेनात एवामर्षणेन गोत्रभिदाऽपि नवाम्बुदानीकमुहूर्त्तलाञ्छने धनुष्यमोघः सायकः समधीयत ॥ ५३ ॥

कोशः—"गोत्रभिद्वज्री वासवो वृत्रहा वृषा" इति । "क्रोधनोऽमर्षणः कोपी" इति । चामरः ॥ ५३ ॥

तात्पर्यार्थः—सुवर्णमयेन तीक्ष्णेन रघुबाणेन हृदये विद्ध इन्द्रोऽपि शरवेधजन्यकोपाधिक्याद् लुप्तधैर्यो भूत्वा तीक्ष्णममोघं शरं स्वधनुषि संयोजितवान् ॥ ५३ ॥

भावार्थः—रघु के स्तम्भ रूप बाण के द्वारा हृदय में क्षत ( घाव ) हो जाने से क्रोधित, पर्वतों के भेदन करनेवाले ( इन्द्र ) भी नवीन मेघ के समूह की थोडी देर चिह्न ( शोभा ) को धारण करने वाले धनुष पर (कभी व्यर्थ नहीं जाने वाला) अमोघ बाण सन्धान किया॥५३॥

*अथेन्द्रबाणेन रघुर्वक्षःस्थले विद्ध इत्याह—*

**दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।**
**पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥**

सञ्जीविनी—दिलीपेति । भीमानां भयंकराणामसुराणां शोणिते रुधिर उचितः परिचितः स इन्द्रमुक्त आशुगः सायको दिलीपसूनो रघोर्बृहद्विशालं भुजान्तरं वक्षः प्रविश्य । अनास्वादितपूर्वं पूर्वमनास्वादितम् । सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेनेव पपौ ॥ ५४ ॥

अन्वयः—भीमासुरशोणितोचितः, सः, आशुगः, दिलीपसूनोः, बृहद्, भुजान्तरम्, प्रविश्य, अनास्वादितपूर्वं, मनुष्यशोणितं, कुतूहलेन, इव, पपौ ॥ ५४ ॥

व्याख्या—भीमासुरशोणितोचित. = भयङ्करदैत्यरक्तपरिचितः, सः = पूर्वोक्तः, इन्द्रमुक्त इति यावत् । आशुगः = बाणः, दिलीपसूनोः = दिलीपतनयस्य, रघोरिति यावद् । बृहद् = विपुलम्, भुजान्तरं = वक्षः, प्रविश्य = प्रवेशं कृत्वा, अनास्वादितपूर्वम् = अभक्षितप्रथमम्, अननुभूतपूर्वमिति यावद् । मनुष्यशोणितं = मनुजरक्तं, कुतूहलेन = कुतुकेन, इव = यथा, पपौ = पानं कृतवान् ॥ ५४ ॥

समासादि—दिलीपस्य सूनुर्दिलीपसूनुः ( त० पु० ) तस्य दिलीपसूनोः । भुजयोरन्तरं

भुजान्तरं ( त० पु० ) तद्भुजान्तरम् । भीमाश्च तेऽसुरा भीमासुराः ( क० धा० ), तेषां शोणितं, भीमासुरशोणितं ( त० पु० ), तत्रोचितो भीमासुरशोणितोचितः ( त० पु० )। आशु गच्छतीत्याशुगः ( पुं० )। न आस्वादितमनास्वादितं ( न० त० पु० ), पूर्वमनास्वादितमित्यनास्वादितपूर्वम् ( सु० सु० स० ) तत्तथोक्तम्। मनुष्यस्य शोणितं मनुष्यशोणितं ( त० पु० ) तत्तथोक्तम् ॥ ५४ ॥

व्याकरणम्—प्रविश्य = प्र + विश ( प्रवेशने—अकारेत् ) + क्त्वा + ल्यप् । पपौ = पा ( पाने ) + लिट्, लिटस्तिपो णल औत्वे द्वित्वेऽभ्यासकार्ये रूपम्। आशुगः = आशु + गम्लृ (गतौ—लृदित्) + डः, "अन्यत्रापि दृश्यत इति वक्तव्यम्" इति डप्रत्यये टिलोपे रूपम्॥५४॥

वाच्यान्तरम्—भीमासुरशोणितोचितेन तेनाशुगेन दिलीपसूनोर्बृहद् भुजान्तरं प्रविश्यानास्वादितपूर्वं मनुष्यशोणितं कुतूहलेनेव पपे ॥ ५४ ॥

कोशः—"उचितं विदितेऽभ्यस्ते मिते युक्तेऽपि" इत्यनेकार्थसङ्ग्रहः। "कौतूहलं कौतुकं च कुतुकन्तु कुतूहलम्" इत्यमरः ॥ ५४ ॥

तात्पर्यार्थः—भयङ्करदैत्यानां रुधिरपाने सर्वत्र विदितः स देवेन्द्रमुक्तो वाणो रघोर्वक्षःस्थलं प्रविश्यानुभूतपूर्वं मनुष्यरक्तं पिपासुरिव पपौ, अर्थाद् रघुर्वक्षःस्थले देवेन्द्रवाणेन विद्ध इति भावः ॥ ५४ ॥

भाषाऽर्थः—डर पैदा करने वाले दैत्यों के रक्त पान में अभ्यस्त या विदित उस ( इन्द्र से छोड़े हुए ) वाण ने दिलीप के पुत्र रघु के विशाल वक्षःस्थल में प्रविष्ट होकर जिसका पहले कभी स्वाद नहीं लिया है ऐसे मनुष्य के रक्त का कुतूहल से मानो पान किया ॥ ५४ ॥

*अथ रघुः पुनरिन्द्रबाहुमध्ये वाणेन विव्याधेत्याह—*

**हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ॥**
**भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥ ५५ ॥**

सञ्जीविनी—हरेरिति । कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य स तथोक्तः । 'सप्तम्युपमानपूर्वस्य—" इत्यादिना समासः। कुमारोऽपि रघुरपि सुरद्विपस्यैरावतस्यास्फालनेन। कर्कशा अङ्गुलयो यस्य स तस्मिन्। शच्याः पत्रविशेषकैरङ्किते शचीपत्रविशेषकाङ्किते हरेरिन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कितं सायकं निचखान निखातवान्। निष्कण्टकराज्यमाप्तस्यायं महानभिभव इति भावः ॥ ५५ ॥

अन्वयः—कुमारविक्रमः, कुमारः, अपि, सुरद्विपास्फालनकर्कशाङ्गुलौ, शचीपत्रविशेषकाङ्किते, हरेः, भुजे, स्वनामाङ्कितं, सायकं, निचखान ॥ ५५ ॥

व्याख्या—कुमारविक्रमः = कार्त्तिकेयतुल्यातिशक्तिशाली, कुमारः = युवराजः, रघुरिति यावद्। अपि = समुच्चयेऽर्थे, सुरद्विपास्फालनकर्कशाङ्गुलौ = देवगजताडनकठोरकरशाखे, ऐरावतताडनेन कठोराङ्गुलाविति यावद्। शचीपत्रविशेषकाङ्किते = इन्द्राणीपर्णतिलकचिह्निते, इन्द्राण्याः ललाटस्थलोल्लिखिततिलकचिह्नयुक्त इति भावः। हरेः = इन्द्रस्य, भुजे = बाहौ, स्वनामचिह्नं = आत्मनामधेयलक्ष्मयुक्तं, सायकं = शरं, निचखान = न्यखनत्, निखातवानिति यावद्। हरेर्बाहौ वाणेन विव्याधेति भावः ॥ ५५ ॥

समासादि—कुमारस्य विक्रम इव विक्रमो यस्य स कुमारविक्रमः ( त० पु० )। सुराणां द्विपः सुरद्विपः ( त० पु० ), तस्यास्फालनं सुरद्विपास्फालनं ( त० पु० ), तेन कर्कशाः सुरद्विपास्फालनकर्कशाः ( त० पु० ), सुरद्विपास्फालनकर्कशा अङ्गुलयो यस्य स सुरद्विपास्फालनकर्कशाङ्गुलिः ( ब० व्री० ) तस्मिंस्तथोक्ते। पत्त्ररूपाणि विशेषकाणि पत्त्रविशेषकाणि ( त० पु० क० धा० ), शच्याः पत्त्रविशेषकाणि शचीपत्त्रविशेषकाणि ( त० पु० ) तैरङ्कितः शचीपत्त्रविशेषकाङ्कितः (त० पु०) तस्मिंस्तथोक्ते। स्वस्य नाम स्वनाम (त० पु०),

स्वनाम चिह्नं यस्य स स्वनामचिह्नः ( ब० व्री० ) तं स्वनामचिह्नम् ॥ ५४ ॥

व्याकरणं—निचखान=खनु ( अवदारणे—उदित् )+लिट्, लिटस्तिपो णलि द्वित्वे-ऽभ्यासहलो लोपे चत्वं तत उपधावृद्धौ रूपम् ॥ ५५ ॥

वाच्यान्तरं—कुमारविक्रमेण कुमारेणापि सुरद्विपास्फालनकर्कशाङ्गुलौ शचीपत्रविशेषकाङ्किते हरेर्भुजे स्वनामचिह्नः सायको निचखने ॥ ५५ ॥

कोश.—"कुमारोऽश्वानुवारके । युवराजे शिशौ स्कन्दे शुके वरुणपादपे । कुमारं जात्यकनके कुमारी त्वपराजिता । नदीभिद्रामतरणी कन्यका नवमाल्युमा । जम्बूद्वीपविभागश्च" इत्यनेकार्थसङ्ग्रहः । "विक्रमस्त्वतिशक्तिता" इति । "स्यात्कर्कशः साहसिकः कठोरमसृणावपि" इति । "तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयं च तुरीयं च न स्त्रियाम्" इति चामरः ॥ ५५ ॥

तात्पर्यार्थः—कार्त्तिकेयसदृशपराक्रमी रघुरपि पुनरिन्द्रबाहुमध्ये स्वनामाङ्कितेन बाणेन विव्याध॥ ५५ ॥

भाषाऽर्थः—कार्त्तिकेय के समान अत्यन्त पराक्रमी युवराज रघु ने भी ऐरावत हाथी के उत्साहार्थ मारने से कठिन अँगुलियाँ जिस की हो रही हैं, तथा, इन्द्राणी के तिलक का जिसमें चिह्न है, ऐसे इन्द्रके बाहु के मध्य में अपने नाम का चिह्न जिसमें मौजूद है ऐसे बाण को गाड दिया ॥ ५५ ॥

*अथ रघुबाणेन वज्रचिह्नयुक्तध्वजच्छेदेन देवेन्द्रस्य क्रोधवृद्धिमाह—*

**जहार चान्येन मयूरपत्त्रिणा शरेण शक्रस्य महाशनिध्वजम् ।**
**चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥ ५६ ॥**

सञ्जीविनी—जहारेति। अन्येन मयूरपत्त्रिणा मयूरपत्त्रवता शरेण शक्रस्येन्द्रस्य महाशनिध्वजं महान्तमशनिरूपं ध्वजं जहार चिच्छेद च। स शक्रः। सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनादिव। तस्मै रघवे भृशमत्यर्थं चुकोप। तं हन्तुमियेषेत्यर्थः। "क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः" इत्यनेन संप्रदानाच्चतुर्थी ॥ ५६ ॥

अन्वयः—अन्येन, मयूरपत्त्रिणा, शरेण, शक्रस्य, महाशनिध्वजं, जहार, च, सः, सुरश्रियः, प्रसह्य, केशव्यपरोपणाद्, इव, तस्मै, भृशं, चुकोप ॥ ५६ ॥

व्याख्या—अन्येन=अपरेण, मयूरपत्त्रिणा=बर्हिणपक्षयुक्तेन, शरेण=बाणेन, शक्रस्य=इन्द्रस्य, महाशनिध्वजं=बृहद्वज्रवैजयन्तीं, जहार=हृतवान्, चिच्छेदेति यावद् । च=अन्वाचयेऽर्थे, सः=पूर्वोक्तः, इन्द्र इति यावद् । सुरश्रिय.=देवलक्ष्म्याः, प्रसह्य=बलात्कृत्य, हठार्थकमव्ययमेतत्। केशव्यपरोपणाद्=बालच्छेदनाद्, इव=यथा, तस्मै=पूर्वोक्ताय, रघव इति यावद् । भृशम्=अतिमात्रं, चुकोप=कोपं कृतवान्, तं हन्तुमुद्यतो बभूवेति भावः ॥ ५६ ॥

समासादि—मयूरस्य पत्रं मयूरपत्रं (त० पु०), तदस्मिन्नस्तीति मयूरपत्री तेन मयूरपत्रिणा (पुं०)। महांश्चासा वशनिर्महाशनिः (क० धा०), महाशनिरूपं ध्वजं महाशनिध्वजं (क० धा०) तत्पूर्वोक्तम्। सुराणां श्रीः सुरश्रीः (त० पु०) तस्याः सुरश्रियः। केशानां व्यपरोपणं केशव्यपरोपणं (त० पु०) तस्मात्तथोक्तात्॥ ५६ ॥

व्याकरणं—जहार=हृञ् (हरणे—ञित्)+लिट्, लिटस्तिपो णलि रूपम्। चुकोप=कुप (क्रुधौ—अकारेत्)+लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रपरे रूपम् ॥५६॥

वाच्यान्तरम्—अन्येन मयूरपत्त्रिणा शरेण शक्रस्य महाशनिध्वजो जह्रे च, तेन सुरश्रियः प्रसह्य केशव्यपरोपणादिव तस्मै भृशं चुकुपे ॥ ५६ ॥

कोशः—"ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः। शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः" इति। "पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्" इति चामरः ॥ ५६ ॥

तात्पर्यार्थः—ततो रघुः पुनरप्यन्येन बाणेन देवेन्द्रस्य वज्रलक्षणयुक्तं महद् ध्वजं यदा चिच्छेद तदा महेन्द्रोऽपि निजराज्यलक्ष्म्याः केशकर्त्तनमिव तद्ध्वजकर्त्तनं मत्वा भृशं क्रुद्धः सन् तं रघुं हन्तुमैच्छत ॥ ५६ ॥

भाषाऽर्थः—उसके बाद फिर रघु ने दूसरे, मयूर के पंखों से युक्त बाण से इन्द्र की बड़ी भारी वज्र के चिह्न से युक्त पताका को काट डाला, और तब इन्द्र ने देवताओं की राज्य-लक्ष्मी के केश जबरदस्ती कट जाने की तरह पताका कट जाने से उस रघु के ऊपर अत्यन्त कोप किया ॥ ५६ ॥

अथेन्द्ररघ्वोस्तुमुलं युद्धं बभूवेत्याह—

**तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः ।**
**बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्त्रिभिः ॥ ५७ ॥**

सञ्जीविनी—तयोरिति । जयैषिणोरन्योऽन्यजयाकाङ्क्षिणोस्तयोरिन्द्ररघ्वोः । गरुत्मन्तः पक्षवन्तः । 'गरुत्पक्षच्छदाः पत्त्रम्' इत्यमरः । आशीविषाः । आशिषि दंष्ट्रायां विषं येषां त-आशीविषाः सर्पाः। पृषोदरादित्वात्साधुः । 'स्त्री त्वाशीर्हिताशंसाऽहिदंष्ट्रयोः' इत्यमरः । त इव भीमदर्शनाः । सपक्षाः सर्पा इव द्रष्टॄणां भयावहा इत्यर्थः । तैरधोमुखैरूर्ध्वमुखैश्च । धन्वि-नोरुपर्यधोदेशावस्थितत्वादिति भावः । पत्त्रिभिर्बाणैरुपान्तस्थितास्तटस्थाः सिद्धा देवा-इन्द्रस्य, सैनिकाश्च रघोर्यस्मिंस्तत्तथोक्तं तुमुलं संकुलं युद्धं बभूव ॥ ५७ ॥

अन्वयः—जयैषिणोः, तयोः, गरुत्मदाशीविषभीमदर्शनैः, अधोमुखैः, ऊर्ध्वमुखैः, च, पत्त्रिभिः, उपान्तस्थितसिद्धसैनिकं, तुमुलं, युद्धम्, बभूव ॥ ५७ ॥

व्याख्या—जयैषिणोः = परस्परविजयाभिलाषिणोः, तयोः = पूर्वोक्तयोः, इन्द्ररघ्वोरिति यावत् । गरुत्मदाशीविषभीमदर्शनैः = पक्षवत्सर्पसदृशभयङ्करोपलब्धिभिः, पक्षवद्भिर्भुजङ्गैरिव द्रष्टॄणां "भयजनकैरित्यर्थः । अधोमुखैः = नम्रवदनैः, इन्द्रसम्बन्धिभिरिति भावः । ऊर्ध्वमुखैः = उपरिवदनैः, रघुसम्बन्धिभिरिति भावः । च = समुच्चयेऽर्थे, धनुष्मतोरिन्द्ररघ्वोरुपर्यधोदेशाव-स्थानादिति भावः। पत्त्रिभिः = शरैः, उपान्तस्थितसिद्धसैनिकं = समीपस्थितसिद्धाख्यदेवयो-निविशेषरघुसैन्यम् । इन्द्ररघुयुद्धे—इन्द्रपक्षीयं सिद्धवृन्दं रघुपक्षीयं सैन्यञ्चैतद्द्वयमपि ताट-स्थ्यमवलम्बितवदिति भावः । तुमुलं = सङ्कुलं, युद्धम् = आयोधनं,बभूव = अभूत् ॥ ५७ ॥

समासादि—अन्तस्य समीपमुपान्तम् (अ० भा०), उपान्ते स्थिता उपान्तस्थिताः (त० पु०), सिद्धाश्च सैनिकाश्चेति सिद्धसैनिकाः (द्वं०), उपान्तस्थिताः सिद्धसैनिका यस्मिंस्त-दुपान्तस्थितसिद्धसैनिकम् ( ब० व्री०), गरुतः सन्ति येषान्ते गरुत्मन्तः (पुं०) आशिषि विषं येषान्त आशीविषाः (व्य० प० ब० व्री०), गरुत्मन्तश्च त आशीविषा गरुत्मदाशी-विषाः (क० धा०), भीमं दर्शनं येषान्ते भीमदर्शनाः (ब०व्री०), गरुत्मदाशीविषा इव भीम-दर्शना गरुत्मदाशीविषभीमदर्शनाः (त० पु०) तैस्तथोक्तैः । जयमेषितुं शीलमनयोरिति जयैषिणौ तयोर्जयैषिणोः (पुं०) । अधो मुखं येषान्तेऽधोमुखास्तैरधोमुखैः (ब० व्री०) । ऊर्ध्वं मुखं येषान्त ऊर्ध्वमुखास्तैरूर्ध्वमुखैः (ब० व्री०) । पत्त्राणि सन्त्येष्विति पत्त्रिणस्तैः पत्त्रिभिः (पुं०) ॥ ५७ ॥

व्याकरणं—बभूव = भू (सत्तायां) + लिट् । पत्त्रिभिः = पत्त्र + जस् + इनिः + भिस् ॥५७॥

वाच्यान्तरं—जयैषिणोस्तयोर्गरुत्मदाशीविषभीमदर्शनैरधोमुखैरूर्ध्वमुखैश्च पत्त्रिभिरु-पान्तस्थितसिद्धसैनिकेन तुमुलेन युद्धेन बभूवे ॥ ५७ ॥

कोशः—"आशीस्तालुगता दंष्ट्रा यया विद्धो न जीवति" इति विषविद्या । "सर्पः पृदाकु-र्भुजगो भुजङ्गोऽहिर्भुजङ्गमः। आशीविषो विषधरः" इति । "तुमुलं रणसङ्कुलम्" इति चामरः॥५७॥

तात्पर्यार्थः—इत्थं परस्परविजयाभिलाषिणोस्तयोरिन्द्ररघ्वोः सपक्षसर्पतुल्यैर्भयङ्करै-

धोमुखैरूर्ध्वमुखैश्च बाणैस्तुमुलं युद्धमभूत्, तत्र च रघोः सैनिकाः पृथिवीतले सविस्मयं निरीक्षमाणाः स्थिताः, नभसि सिद्धाश्चासन् ॥ ५७ ॥

भाषाऽर्थः—परस्पर (एक दूसरे पर) विजय पाने की इच्छा रखने वाले उन दोनों इन्द्र और रघु का पक्षयुक्त (उड़ने वाले) सर्पों के समान देखने में भयङ्कर अधोमुख (इन्द्र के) तथा ऊर्ध्वमुख (रघु के) वाले बाणों से पास में ही स्थित हैं सिद्ध (इन्द्र के) और सैनिक (रघु के) जिसमें ऐसा घमासान युद्ध हुआ ॥ ५७ ॥

*अथेन्द्रकर्तृकं रघोरकिञ्चित्करत्वमाह—*

**अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः ।**
**शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥५८॥**

सञ्जीविनी—अतिप्रबन्धेति । वासवोऽतिप्रबन्धेनातिसातत्येन प्रहिताभिः प्रयुक्ताभिरस्त्रवृष्टिभिर्दुष्प्रसहस्य दुःखेन प्रसह्यत इति दुष्प्रसहं तस्य । दुःखेनाप्यसह्यस्येत्यर्थः । तेजसः प्रतापस्याश्रयं तं रघुम् । अम्बुदोऽद्भिः स्वतश्च्युतं निर्गतं वह्निमिव । निर्वापयितुं न शशाक । रघोरपि लोकपालात्मकस्येन्द्रांशसंभवत्वादिति भावः ॥ ५८ ॥

अन्वयः—वासवः, अतिप्रबन्धप्रहितास्त्रवृष्टिभिः, दुष्प्रसहस्य, तेजसः, आश्रयं, तम्, अम्बुदः, अद्भिः, स्वतश्च्युतं, वह्निम्, इव, निर्वापयितुं, न, शशाक ॥ ५८ ॥

व्याख्या—वासवः = इन्द्रः, अतिप्रबन्धप्रहितास्त्रवृष्टिभिः = अतिनैरन्तर्यप्रयुक्तायुधवर्षणैः, सयत्नं बाणवर्षणं कुर्वन्नपीति भावः । दुष्प्रसहस्य = दुःखेनापि सोढुमनर्हस्य, अतिदुःसहस्येति यावत् । तेजसः = प्रतापस्य, आश्रयं = स्थानं, तं = पूर्वोक्तं, रघुमिति यावद् । अम्बुदः = मेघः, अद्भिः = वारिभिः, स्वतश्च्युतं = स्वयं निर्गतं, वह्निम् = अग्निम्; इव = यथा, निर्वापयितुं = शान्तं कर्तुं, न = नहि, शशाक = अशक्नोत् ॥ ५८ ॥

समासादि—अस्त्राणां वृष्टयोऽस्त्रवृष्टयः (त० पु०), अतिप्रबन्धेन प्रहिता अतिप्रबन्धप्रहिताः (त० पु०) अतिप्रबन्धप्रहिताश्च ता अस्त्रवृष्टय इत्यतिप्रबन्धप्रहितास्त्रवृष्टयः (क० धा०) ताभिस्तथोक्ताभिः । दुःखेन प्रसह्यत इति दुष्प्रसहं (न० लिं०) तस्य दुष्प्रसहस्य । दैत्यानां वासं वातीति वासवः (पुं०) । अम्बूनि ददातीत्यम्बुदः ॥ ५८ ॥

व्याकरणं—शशाक = शक्लृ (शक्तौ—लृदित्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् । निर्वापयितुं = निर् + (डुवप् (बीजसन्ताने—ड्वित्) + णिच्) वापि + इट् + तुमुन् । वासवः = वास + अम् + वा (गतिगन्धनयोः) + कः, "आतोऽनुपसर्गे कः" इति कप्रत्यये धातोराकारलोपे सौ रूपम् ॥ ५८ ॥

वाच्यान्तरं—वासवेनातिप्रबन्धप्रहितास्त्रवृष्टिभिर्दुष्प्रसहस्य तेजस आश्रयं तमम्बुदेनाद्भिः स्वतश्च्युतं वह्निमिव निर्वापयितुं न शेके ॥ ५८ ॥

कोशः—"तेजस्त्विट्रेतसोर्बले । नवनीते प्रभावेऽग्नौ" इत्यनेकार्थसङ्ग्रहः ॥ ५८ ॥

तात्पर्यार्थः—यथा मेघः स्वतो निर्गतं वह्निं जलवर्षणेन निर्वापयितुं समर्थो न भवति, तथैवेन्द्रोऽपि निरन्तरबाणवृष्ट्या दुःसहतेजसः स्थानं स्वकीयांशतः समुत्पन्नं तं रघुं पराभवितुं न शशाक ॥ ५८ ॥

भाषाऽर्थ—इन्द्र अत्यन्त यत्न से प्रयोग किये हुये अस्त्रों की वृष्टि से अत्यन्त दुःसह प्रताप के स्थान उस रघु को, जैसे बादल जल की वृष्टि से अपने से उत्पन्न अग्नि (वैद्युताग्नि) को बुझाने के लिये समर्थ नहीं होता, उसी भांति बुझाने के लिये (शान्त करने के लिये) समर्थ नहीं हुये ॥ ५८ ॥

*अथ रघुकर्तृकमिन्द्रस्य धनुर्ज्याखण्डनमाह—*

**ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।**

**रघुः शशाङ्कार्धमुखेन पत्त्रिणा शरासनज्यामलुनाद्विडौजसः ॥ ५९ ॥**

सञ्जीविनी—तत इति । ततो रघुर्हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्ताम् । वेवेष्टि व्याप्नोतीति विट् व्यापकमोजो यस्य स तस्य विडौजस इन्द्रस्य । पृषोदरादित्वात्साधुः । शरासनज्यां धनुर्मौर्वीम् । शशाङ्कस्यार्धः खण्ड इव मुखं फलं यस्य तेन पत्त्रिणाऽलुनादच्छिनत् ॥ ५९ ॥

अन्वयः—ततः, रघुः, हरिचन्दनाङ्किते, प्रकोष्ठे, प्रमथ्यमानार्णवधीरनादिनीं, विडौजसः, शरासनज्यां, शशाङ्कार्धमुखेन पत्रिणा, अलुनात् ॥ ५९ ॥

व्याख्या—ततः = तदनन्तरं, रघुः = दिलीपसूनुः, हरिचन्दनाङ्किते = गोशीर्षाख्यचन्दनविशेषचिह्निते, प्रकोष्ठे = मणिवन्धे, प्रमथ्यमानार्णवधीरनादिनीम् = आलोड्यमानसमुद्रवद्गम्भीरराविणीं, विडौजसः = इन्द्रस्य, शरासनज्यां = धनुःशिञ्जिनीं, शशाङ्कार्धमुखेन = चन्द्रार्धवद्वदनेन, चन्द्रैकखण्डाकारफलकेनेति यावत् । पत्रिणा = शरेण, अलुनात् = चिच्छेद॥५९॥

समासादि—हरिचन्दनेनाङ्कितो हरिचन्दनाङ्कितः (त० पु०) तस्मिंस्तथोक्ते । प्रमथ्यत इति प्रमथ्यमानः (पुं०), स चासा वर्णवश्चेति प्रमथ्यमानार्णवः (क० धा०), धीरं नदितुं शीलमस्येति धीरनादिनी (पुं०), प्रमथ्यमानार्णव इव धीरनादिनी प्रमथ्यमानार्णवधीरनादिनी (उ० स०), तां तथोक्ताम् । शशाङ्कार्ध इव मुखं यस्येति शशाङ्कार्धमुखः (उ० स०) तेन तथोक्तेन । शरासनस्य ज्या शरासनज्या ( त० पु० ) तां तथोक्ताम् । विडतीति विडं भेदकमोजो यस्यासौ विडौजाः (पुं०) तस्य विडौजसः ॥ ५९ ॥

व्याकरणम्—अलुनात् = अट् + लूञ् (छेदने—ञित्) + श्ना + लङ्, लङस्तिपि श्नाप्रत्यये "प्वादीनां ह्रस्वः" इति ह्रस्वेऽडागमे रूपम् । विडं = विड (भेदने—अकारेत्) + कः + सु, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये रूपम् ॥ ५९ ॥

वाच्यान्तरं—ततो रघुणा हरिचन्दनाङ्किते प्रकोष्ठे प्रमथ्यमानार्णवधीरनादिनी विडौजस शरासनज्या शशाङ्कार्धमुखेन पत्रिणाऽलूयत ॥ ५९ ॥

कोशः—"प्रकोष्ठमन्तरं विद्यादरत्निमणिवन्धयोः" इति कात्यः । "तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्" इति । "अर्धं समेंऽशके" इति । "भित्तं शकलखण्डे वा पुंस्यर्धः" इति चामरः ॥ ५९ ॥

तात्पर्यार्थः—तदनन्तरं रघुरिन्द्रस्य हरिचन्दनानुलिप्ते कफोणेरधोमणिबन्धपर्यन्तभागे निरन्तराकर्षणेन विलोड्यमानसमुद्रसदृशगम्भीरशब्दकारिणीं धनुषो ज्यां चन्द्रार्धाकृतिफलकेन शरेणाच्छिनत् ॥ ५९ ॥

भाषाऽर्थ.—इसके वाद रघु ने हरिचन्दन लगे हुये प्रकोष्ठ (केहुनी से कलाई पर्यन्त भाग) में मथे जाते हुये समुद्र की भांति गम्भीर शब्द करने वाली इन्द्र के धनुष की प्रत्यञ्चा चन्द्र के आधे टुकड़े के समान फल वाले वाण से काट दिया ॥ ५९ ॥

*अथ रघोरुपरि मोक्तुमिन्द्रकर्तृकं वज्रधारणमाह—*

**स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रवलस्य विद्विषः ।**
**महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥**

सञ्जीविनी—स इति । विवृद्धमत्सरः प्रवृद्धवैर इन्द्रश्चापमुत्सृज्य प्रवलस्य विद्विषः शत्रोः प्रणाशनाय वधाय । महीं धारयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । तेषां पक्षव्यपरोपणे पक्षच्छेद उचितं स्फुरत्प्रभामण्डलमस्त्रं वज्रायुधमाददे जग्राह ॥ ६० ॥

अन्वयः—विवृद्धमत्सरः, सः, चापम्, उत्सृज्य, प्रवलस्य, विद्विषः, प्रणाशनाय, महीध्रपक्षव्यपरोपणोचितं, स्फुरत्प्रभामण्डलम्, अस्त्रम्, आददे ॥ ६० ॥

व्याख्या—विवृद्धमत्सरः = एधितक्रोधः, सः = पूर्वोक्तः, इन्द्र इति यावद् । चापं = श-

रासनं, खण्डितमौर्वीकमिति भावः। उत्सृज्य=त्यक्त्वा, प्रबलस्य=अतिबलशालिनः, विद्विषः=शत्रोः, रघोरिति भावः। प्रणाशनाय=वधाय, महीध्रपक्षव्यपरोपणोचितं=पर्वतपत्रशातनाभ्यस्तं, स्फुरत्प्रभामण्डलं=देदीप्यमानकान्तिचक्रवालम्, अस्त्रम्=आयुधं, वज्राख्यमिति यावद्। आददे=गृहीतवान्॥ ६०॥

समासादि—विवृद्धो मत्सरो यस्य स विवृद्धमत्सरः (ब० व्री०)। महीं धारयन्तीति महीध्राः (पुं०) तेषां पक्षा महीध्रपक्षाः (त० पु०), तेषां व्यपरोपणं महीध्रपक्षव्यपरोपणं (त० पु०)। तत्रोचितं महीध्रपक्षव्यपरोपणोचितं (त० पु०) तत्तथोक्तम्। प्रभाया मण्डलं प्रभामण्डलं (त० पु०), स्फुरत् प्रभामण्डलं यस्य तत् स्फुरत्प्रभामण्डलं (ब० व्री०) तत्तथोक्तम्॥ ६०॥

व्याकरणम्—उत्सृज्य=उद्+सृज (विसर्गे—अकारेत्)+क्त्वा+ल्यप्। आददे=आङ्+डुदाञ् (दाने—डुञित्)+लिट्, "आङो दोऽनास्यविहरणे" इत्यात्मनेपदं तेन लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये रूपम्॥ ६०॥

वाच्यान्तरं—विवृद्धमत्सरेण तेन चापमुत्सृज्य प्रबलस्य विद्विषः प्रणाशनाय महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे॥ ६०॥

कोशः—"मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान्। असह्यपरसम्पत्तौ कृपणे चाभिधेयवत्" इति मेदिनी। "चक्रवालन्तु मण्डलम्" इत्यमरः॥ ६०॥

तात्पर्यार्थः—इन्द्रो निजधनुर्ज्याच्छेदनादतीवक्रुद्धः सन् खण्डितज्यं धनुर्विहाय रघोर्वधाय पर्वतपक्षकर्त्तने प्रसिद्धं वज्राख्यमस्त्रं गृहीतवान्॥ ६०॥

भाषार्थः—"धनुष् की प्रत्यञ्चा के कटजाने से" जिसका क्रोध अत्यन्त बढ गया है, ऐसे इन्द्र ने धनुष् को छोड़ कर अत्यन्त बलवान् शत्रु रघु का नाश करने के लिये पर्वतों के पक्षों के काटने में प्रसिद्ध, चमकती हुई प्रभा का मण्डल जिसके चारो तरफ है ऐसे वज्र संज्ञक अस्त्र को ग्रहण किया॥ ६०॥

अथ रघोरिन्द्रप्रयुक्तवज्रप्रहारसहनमाह—

**रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः।**
**निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः॥ ६१॥**

सञ्जीविनी—रघुरिति। रघुस्तेन वज्रेण भृशमत्यर्थं वक्षसि ताडितो हतः सन्। सैनिकानामश्रुभिः सह भूमौ पपात। तस्मिन्पतिते ते रुरुदुरित्यर्थः। निमेषमात्रात्तद्व्यथां दुःखमवधूय तिरस्कृत्य सैनिकानां हर्षेण ये निःस्वनाः क्ष्वेडास्तैः सहोत्थितश्च। तस्मिन्नुत्थिते हर्षात् सिंहनादांश्चक्रुरित्यर्थः॥ ६१॥

अन्वयः—रघुः, तेन, भृशं, वक्षसि, ताडितः, "सन्", सैनिकाश्रुभिः, सह, भूमौ, पपात, निमेषमात्रात्, तद्व्यथाम्, अवधूय, सैनिकहर्षनिःस्वनैः, सह, उत्थितः, "च"॥ ६१॥

व्याख्या—रघुः=दिलीपसूनुः, तेन=पूर्वोक्तेन, इन्द्रप्रयुक्तेनेति यावद्। वज्रेण=अशनिना, भृशम्=अत्यथ, वक्षसि=उरसि, ताडितः=विद्धः, सन्निति शेषः। सैनिकाश्रुभिः=सेनासमवेतकजननेत्राम्बुभिः, सह=सार्धं, भूमौ=पृथिव्यां, पपात=अपप्तत्, रघौ भूमौ पतिते सति ते रुरुदुरित्यर्थः। निमेषमात्रात्=क्षणमात्राद्, तद्व्यथां=पूर्वोक्तवज्रप्रहारपीडाम्, अवधूय=निरस्य, अविगणय्येति यावत्। सैनिकहर्षनिःस्वनैः=सेनासमवेतजनप्रमोदनादैः, सह=साकम्, उत्थितः=उत्तस्थौ, चेति शेषः। रघावुत्थिते प्रमोदात् सिंहनादांश्चाकुर्वन्नित्यर्थः॥ ६१॥

समासादि—सेनायां समवेताः सैनिकाः (पुं०), तेषामश्रूणि सैनिकाश्रूणि (त० पु०) तैः सैनिकाश्रुभिः। निमेष एव निमेषमात्रं (न० लिं०) तस्मान्निमेषमात्रात्। तस्य व्यथा तद्व्यथा

(त० पु०) तां तद्व्यथाम् । हर्षेण निःस्वना हर्षनिःस्वनाः (त० पु०), सैनिकानां हर्षनिःस्वनाः सैनिकहर्षनिःस्वनाः (त० पु०) तैस्तथोक्तैः ॥ ६१ ॥

व्याकरणं—ताडितः =( तड ( आघाते—अकारेत् )+णिच् ) ताडि+इट्+क्तः+सु, "निष्ठायां सेटि" इति णिलोपे सौ रूपम् । पपात = पत्ल (पतने-लृदित् )+लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रूपम् । अवधूय = अव + धूञ् ( विधूनने-ञित् )+क्त्वा+ल्यप् । सैनिकाः = सेना + ङि + ठक्+जस्, "प्राग्वहतेष्ठक्" इति ठक् ॥ ६१ ॥

वाच्यान्तरं—रघुणा तेन भृशं वक्षसि ताडितेन "सता" सैनिकाश्रुभिः सह भूमौ पेते, निमेषमात्रात्तद्व्यथामवधूय सैनिकहर्षनिःस्वनैः सहोत्थितञ्च ॥ ६१ ॥

कोशः—"सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके" इति मेदिनी ॥ ६१ ॥

तात्पर्यार्थः—यदा वज्रेण वक्षसि रघुस्ताडितः सन् भूमौ निपपात तदा तत्सैनिकाः शोकाकुला रुरुदुः, पुनः क्षणमात्रादेव तं रघुमुत्थितमवलोक्य हर्षेण सिंहनादांश्च चक्रुः ॥६१ ॥

भाषाऽर्थः—रघु उस ( इन्द्र से छोड़े हुये ) वज्र से अत्यन्त छाती में चोट लगने से सैनिकों के अश्रु के साथ जमीन पर गिर पड़े, और क्षण भर के बाद ही उसकी पीड़ा को बरदाश्त करके सैनिकों के हर्ष से किये गये सिंहनाद के साथ ही उठ पड़े ॥ ६१ ॥

*अथ वज्रप्रहारसहनेन रघोरुपरि महेन्द्रः प्रसन्नो बभूवेत्याह—*

**तथाऽपि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।**
**तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥**

सञ्जीविनी—तथाऽपीति । तथाऽपि वज्रपातेऽपि शस्त्राणामायुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतोऽस्य रघोर्वीर्यातिशयेन । वृत्रं हतवानिति वृत्रहा । "ब्रह्मभ्रूणवृत्रेषु क्विप्" । तुतोष । स्वयं वीर एव वीरं जानातीति भावः । कथं शत्रोः संतोषोऽत आह—गुणैः सर्वत्र शत्रुमित्रोदासीनेषु पदमङ्घ्रिर्निधीयते । गुणैः सर्वत्र संक्रम्यत इत्यर्थः । गुणाः शत्रूनप्यावर्जयन्तीति भावः ॥ ६२ ॥

अन्वयः—तथाऽपि, शस्त्रव्यवहारनिष्ठुरे, विपक्षभावे, चिरं, तस्थुषः, अस्य, वीर्यातिशयेन, वृत्रहा, तुतोष, हि, गुणैः, सर्वत्र, पदं, निधीयते ॥ ६२ ॥

व्याख्या—तथाऽपि = वज्रप्रहारेऽपि, शस्त्रव्यवहारनिष्ठुरे = आयुधव्यापारक्रूरे, विपक्षभावे = शत्रुतायां, चिरं = बहुकालं, तस्थुषः = स्थितवतः, अस्य = एतस्य, रघोरिति यावद् ।, वीर्यातिशयेन = पराक्रमाधिक्येन, वृत्रहा = इन्द्रः, तुतोष = अतुष्यत्, प्रसन्नोऽभूदिति यावद् । स्वयं वीर एव वीराणामादरं करोतीति भावः । इन्द्रस्य प्रीतौ हेतुं कथयन्नाह—गुणैः = शौर्यादिभिः, सर्वत्र = शत्रुमित्रादिषु, पदं = चरणः, निधीयते = स्थाप्यते, गुणाः शत्रूनपि तोषयन्तीति भावः ॥ ६२ ॥

समासादि—शस्त्राणां व्यवहारः शस्त्रव्यवहारः ( त० पु० ), तेन निष्ठुरः शस्त्रव्यवहारनिष्ठुरः ( त० पु० ) तस्मिंस्तथोक्ते । विपक्षस्य भावो विपक्षभावः ( त० पु० ) तस्मिंस्तथोक्ते । तस्था विति तस्थिवांस्तस्य तस्थुषः ( पुं० ) । वीर्यस्यातिशयो वीर्यातिशयः ( त० पु० ) तेन वीर्यातिशयेन । वृत्रं हतवानिति वृत्रहा ( पुं० ) ॥ ६२ ॥

व्याकरणं—तुतोष = तुष ( प्रीतौ-अकारेत् )+लिट् , लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् । निधीयते = नि+(डुधाञ् ( धारणपोषणयोः-डुञित् )+यक् ) धीय+शप्+लट् , लटस्तप्रत्यये यकि कित्वाद् "ई हल्यघोः" इतीत्वे रूपम् ॥ ३२ ॥

वाच्यान्तरं—तथाऽपि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरं तस्थुषोऽस्य वीर्यातिशयेन वृत्रघ्ना तुतुषे, हि गुणाः सर्वत्र पदं निदधति ॥ ६२ ॥

कोशः—"व्यवहारः स्थितौ पणे । द्रुभेदे व्यवहारेऽपि" इति हैमः । "पदं व्यवसितत्राण-

स्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ॥ ६२ ॥

तात्पर्यार्थः—वज्रेण भृशमाहतोऽपि रघुः क्षणमात्रादेव तद्व्यथां तिरस्कृत्य पुनर्घोरं युद्धं कर्तुमुद्यतं रघुं वीक्ष्य तत्पराक्रमातिशयेन महेन्द्रः प्रसन्नो बभूव, यतः शौर्यादिगुणाः शत्रूनपि प्रसन्नान् कुर्वन्ति ॥ ६२ ॥

भाषाऽर्थः—उस प्रकार के वज्र प्रहार होने पर भी अस्त्रों के व्यवहार करने से निष्ठुर शत्रुभाव में बहुत देर से स्थित हुये इस रघु के पराक्रम की अधिकता से वृत्रासुर को (उसी वज्र से) मारने वाले इन्द्र, प्रसन्न हुये, क्यों कि-गुण ही सर्वत्र शत्रु मित्रादिकों में पैर को स्थापित करता है ( गुण से ही सर्वत्र आदर होता है ) ॥ ६२ ॥

*अथ प्रसन्नस्येन्द्रस्य हयादृते रघवे सर्वाभीष्टप्रदानमाह—*

**असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।**
**अवेहि मां प्रीतमृते तुरङ्गमात्किमिच्छसीति स्फुटमाह वासवः ॥ ६३ ॥**

सञ्जीविनी—असङ्गमिति । सारवत्तयाऽद्रिष्वप्यसङ्गमप्रतिबन्धं म आयुधं वज्रं त्वदन्येन न विसोढम् । अतो मां प्रीतं संतुष्टमवेहि । तुरङ्गमादृते तुरङ्गं वर्जयित्वा । "अन्यारादितरर्ते०" इति पञ्चमी । किमिच्छसीति स्फुटं वासव आह । तुरङ्गमादन्यद्देयं नास्तीति भावः ॥६३॥

अन्वयः—सारवत्तया, अद्रिषु, अपि, असङ्गम्, मे, आयुधं, त्वदन्येन, न, विसोढम्, "अतः" मां, प्रीतम्, अवेहि, तुरङ्गमाद्, ऋते, किम्, इच्छसि, इति, स्फुटं, वासवः, आह ॥६३॥

व्याख्या—सारवत्तया = स्थिरांशतया, दृढतयेति यावद् । अद्रिषु = गिरिषु, अपि = सम्भावनायाम्, असङ्गम् = प्रतिबन्धरहितम्, मे = मम, इन्द्रस्येति यावद् । आयुधम् = अस्त्रं, वज्राख्यमिति यावत । त्वदन्येन = भवदपरेण, केन चिज्जनेनेति भावः । न = नहि, विसोढं = सह्यम्, "अत एव" माम् = इन्द्रम्, प्रीतं = प्रसन्नम्, अवेहि = जानीहि, तुरङ्गमाद् = अश्वाद्, ऋते = विना, अश्वं वर्जयित्वेति भावः । किम् = अनिर्दिष्टं, वस्त्विति यावद् । इच्छसि = वाञ्छसे, इति = उक्तप्रकारकं, वच इति भावः । स्फुटं = व्यक्तं, "यथा स्यात्तथा" वासवः = इन्द्रः, आह = अब्रवीत्, अश्वादन्यद्देयं वस्तु नास्तीति भावः ॥ ६३ ॥

समासादि—सरोऽस्त्यस्मिन्निति सारवत् ( न०लिं० ), तस्य भावः सारवत्ता (स्त्री०) तया सारवत्तया । त्वत्तोऽन्य इति त्वदन्यस्तेन त्वदन्येन ( त० पु० ) ॥ ६३ ॥

व्याकरणं—विसोढं = वि + षह ( मर्षणे-अकारेत् ) + क्तः + सु, "सहिवहोरोदवर्णस्य" इत्योत्वे रूपम् । अवेहि = अव + आङ् + इण् ( गतौ-णित ) + लोट्, लोटः सिपि रूपम् । इच्छसि = इषु ( इच्छायाम्-उदित् ) + शः + लट्, लटः सिप "इषुगमियमां छः" इति छान्तादेशे रूपम् । आह = ब्रूञ् ( व्यक्तायां वाचि-ञित् ) + लट्, लटस्तिपि रूपम् ॥६३॥

वाच्यान्तरं—सारवत्तयाऽद्रिष्वप्यसङ्गं म आयुधं त्वदन्यो न विसोढवान्, "अतस्त्वया" अहं प्रीतोऽवेयै, तुरङ्गमादृते "त्वया" किमिष्यत इति स्फुटं वासवेनोच्यते ॥ ६३ ॥

कोशः—"सारो बले स्थिरांशे च" इति । "पृथग्विनाऽन्तरेणर्ते हिरुङ् नाना च वर्जने" इति चामरः ॥ ६३ ॥

तात्पर्यार्थः—वज्रप्रहारसहनेन रघोर्वीर्यातिशयं वीक्ष्य प्रसन्नो महेन्द्रः स्पष्टमिदमुवाच-यद् हे दिलीपसूनो ! इदं पर्वतपक्षच्छेदनदक्षं मदायुधं वज्रं त्वदन्येन केनापि जनेन नेतः पूर्वं विसोढं, तदमोघमपि सत् सम्प्रति मोघं जातमतो मां प्रसन्नं ज्ञात्वा यत्किमपि ते तुरङ्गं वर्जयित्वाऽभीष्टं स्यात् तद्वद्, अहं सर्वं तुभ्यं दास्यामि ॥ ६३ ॥

भाषाऽर्थः—सारवान् ( दृढ ) होने से पर्वतों में भी नहीं रुकने वाला मेरा अस्त्र जो यह वज्र है, इसे तुम्हारे अलावा किसी दूसरे ने नहीं सहन किया है, अतः मुझे तुम प्रसन्न समझो, और घोड़े को छोड़ कर क्या चाहते हो ? ऐसा इन्द्र ने प्रकाश रूप

से रघु से कहा ॥ ६३ ॥

*अथ रघुरिषुं प्रतिसंहरन् महेन्द्रं प्रत्योचदित्याह—*

ततो निषंगादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत्सुरेश्वम् ॥ ६४ ॥

सञ्जीविनी—तत इति । ततो निषङ्गात्तूणीरादसमग्रं यथा तथोद्धृतं सुवर्णपुङ्खद्युतिभी रञ्जिता अङ्गुलयो येन तमिषुं प्रतिसंहरन्निवर्तयन् । नाप्रहरन्तं प्रहरेदिति निषेधादिति भावः । प्रियं वदतीति प्रियंवदः । "प्रियवशे वदः खच्" इति खच्प्रत्ययः । "अरुर्द्विषदजन्तस्य" इति मुमागमः । नरेन्द्रसूनू रघुः सुरेश्वरं प्रत्यवदत् । न तु प्राहरदिति भावः ॥ ६४ ॥

अन्वयः—ततः, निषङ्गाद्, असमग्रं, "तथा स्यात्तथा" उद्धृतं, सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम्, इषुं, प्रतिसंहरन्, प्रियंवदः, नरेन्द्रसूनुः, सुरेश्वरं, प्रत्यवदत् ॥ ६४ ॥

व्याख्या—ततः = तदनन्तरम्, इन्द्रवचःश्रवणानन्तरमिति यावद् । निषङ्गात् = तूणीराद्, असमग्राम् = असम्पूर्णं, क्रियाविशेषणमिदमतो यथा स्यात्तथेति पदमध्याहार्यमत्र । उद्धृतं = निष्कासितं, पुनः प्रहर्तुमिच्छयेति भावः । सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिं = हेममयमूलभागदीप्तिरागकर्मीकृतऽकरशाखम्, इषुं = शरं, प्रतिसंहरन् = परावर्त्तयन्, नाप्रहरन्तं प्रहरेदिति शास्त्रनिषेधात् पुनरिषुधौ स्थापयन्तमिति भावः । प्रियंवदः = मिष्टभाषी, नरेन्द्रसूनुः = मनुजेश्वरतनयः, रघुरिति यावद् । सुरेश्वरं = देवराजं, प्रत्यवदत् = प्रत्यवोचत्, न तु प्रहारं कृतवानिति भावः ॥ ६४ ॥

समासादि—न समग्रमित्यसमग्रं (न०त०पु०) । सुवर्णस्य पुङ्खः सुवर्णपुङ्खः (त०पु०), तस्य द्युतयः सुवर्णपुङ्खद्युतयः ( त० पु० ) ताभी रञ्जिताः सुवर्णपुङ्खद्युतिरञ्जिताः ( त० पु० ) ता अङ्गुलयो येन स सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिः ( ब० व्री० ) तं तथोक्तम् । नरेष्विन्द्रो नरेन्द्रः ( त० पु० ), तस्य सूनुर्नरेन्द्रसूनुः ( त० पु० ), प्रतिसंहरतीति प्रतिसंहरन् ( पुं० ) । प्रियं वदतीति प्रियंवदः ( पुं० ) । सुराणामीश्वरः सुरेश्वरः ( त० पु० ) तं सुरेश्वरम् ॥ ६४ ॥

व्याकरणम्—उद्धृतम् = उद् + धृञ् ( धारणे-ञित् ) + क्तः + अम् । रञ्जिताः = रञ्ज ( रागे-अकारेत् ) + इट् + क्तः + टाप् + जस् । प्रतिसंहरन् = प्रति + सम् + हृञ् ( हरणे-ञित् ) + शप् + लट् + शतृ + सु । प्रत्यवदत् = प्रति + अट् + वद ( व्यक्तायां वाचि-अकारेत ) + शप् + लङ्, लङस्तिपि रूपम् ॥ ६४ ॥

वाच्यान्तरं—ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिमिषुं प्रतिसहरता प्रियंवदेन नरेन्द्रसूनुना सुरेश्वरः प्रत्योच्यत ॥ ६४ ॥

कोशः—"पुङ्खः स्यान्मङ्गलाचारे शराङ्गश्येनयोरपि" इत्यनेकार्थसङ्ग्रहः । "शक्लः प्रियंवदे" इत्यमरः ॥ ६४ ॥

तात्पर्यार्थः—युवराजो रघुरित्थं युद्धाद्विरतस्य महेन्द्रस्य सान्त्ववचनमाकर्ण्य निषङ्गादर्धनिष्कासितमिषुं पुनरिषुधौ स्थापयन् मधुरवचसा सुरपतिं प्रत्यवोचत् ॥ ६४ ॥

भाषार्थः—उसके ( इन्द्र की बात सुनने के ) बाद तरकस से पूरे नहीं निकाले हुये, जिसके सुवर्ण-मय मूल भाग की कान्ति से अङ्गुलियां रङ्ग गई हैं ऐसे बाण को फिर से तरकस में रखते हुये प्रिय वचन बोलने वाले महाराज दिलीप के कुमार रघु देवताओं के प्रभु इन्द्र से बोले ॥ ६४ ॥

*अथ रघुः किं तदवोचदित्यत आह—*

अमोच्यमश्वं यदि मन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि ।
अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥

सञ्जीविनी—अमोच्यमिति । हे प्रभो इन्द्र ! अश्वममोच्यं मन्यसे यदि ततस्तर्ह्यजस्रदीक्षायां प्रयतः स मद्गुरुर्मम पिता विधिनैव कर्मणि समाप्ते सति क्रतोर्यत्फलं तेन फलेनाशेषेण कृत्स्नेन युज्यतां युक्तोऽस्तु । अश्वमेधफललाभे किमश्वेनेति भावः ॥ ६५ ॥

अन्वयः—"हे" प्रभो !, अश्वम्, अमोच्यं, मन्यसे, यदि, ततः, अजस्रदीक्षाप्रयतः, सः, मद्गुरुः, विधिना, एव, कर्मणि, समाप्ते, "सति" क्रतोः, फलेन, अशेषेण, युज्यताम् ॥ ६५ ॥

व्याख्या—"हे" प्रभो! = हे स्वामिन् !, हे इन्द्र ! इति यावद् । अश्वं = हयं, अश्वमेधयज्ञाङ्गमिति यावद् । अमोच्यम् = अत्याज्यम्, मन्यसे = जानासि, त्वमिति शेषः । यदि = चेत्, ततः = तस्मात्, कारणादिति भावः । अजस्रदीक्षाप्रयतः = निरन्तरयज्ञदीक्षातत्परः, सः = पूर्वोक्तः, मद्गुरुः = मदीयजनकः, दिलीप इति यावद् । विधिना = विधानेन, श्रुत्युक्तप्रकारेणेति भावः । एव = अवधारणेऽर्थे, कर्मणि = कार्ये, अध्वररूपइति भावः । फलेन = लाभेन, अशेषेण = समग्रेण, युज्यतां = युक्तो भवतु, अश्वमेधयज्ञफललाभे सति किमश्वेनेति भावः ॥ ६५ ॥

समासादि—मोक्तुं योग्यो मोच्यः ( पुं० ), न मोच्य इत्यमोच्यः ( न० त०पु० ), तममोच्यम् । अजस्रं दीक्षाऽजस्रदीक्षा ( क० धा० ), तस्यां प्रयतोऽजस्रदीक्षाप्रयतः ( त० पु० ) । मम गुरुरिति मद्गुरुः ( त० पु० ) ॥ ६४ ॥

व्याकरणम्—अमोच्यम् = नञ् (मोच्यं = मुच्लृ (मोक्षणे—लृदित्) + ण्यत्) + मोच्य + सु, नञ् समासे नलोपेऽमि रूपम् । मन्यसे = मन (ज्ञाने—अकारेत्) + श्यन् + लट्, लटस्थासः स आदेशे रूपम् । युज्यतां = युजिर् (योगे—इदित्) + यक् + शप् + लोट्, लोटस्तप्रत्यये रूपम् ॥ ६५ ॥

वाच्यान्तरं—हे प्रभो ! "त्वया" । अश्वोऽमोच्यो मन्यते यदि ततोऽजस्रदीक्षाप्रयतेन तेन मद्गुरुणा क्रतोः फलेनाशेषेण युज्यताम् ॥ ६५ ॥

कोशः—"विधिर्विधाने दैवे च" इत्यमरः । "फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" । इत्यनेकार्थसङ्ग्रहः ॥ ६५ ॥

तात्पर्यार्थः—हे प्रभो ! यदि त्वमश्वमोचनमनुचितं मन्यसे तर्हि मदीयः पिताऽश्वं विनैव प्रारब्धशततमाश्वमेधयज्ञस्य सम्पूर्णं फलं प्राप्नोतु—इति मदभिलाषोऽस्ति तं पूरयेति भावः ॥ ६५ ॥

भाषाऽर्थः—हे प्रभो ! अश्व को यदि नहीं छोड़ने लायक आप समझते हैं, तो जो निरन्तर यज्ञ की दीक्षा में लगे हुये हैं ऐसे वे मेरे पिता महाराज दिलीप विधिपूर्वक कर्म की समाप्ति होने पर यज्ञ का जो फल होता है उस संपूर्ण फल से युक्त होवें, "यह मैं चाहता हूं" ॥६५॥

*अथ रघुः स्वपितुः समीपे स्वदूतमुखादेवाश्वप्राप्तिं विनैव यज्ञफलावाप्तिर्भविष्यतीति रूपं संदेशं प्रेषयितुमिन्द्रं प्रति पुनराह—*

**यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।**
**तवैव संदेशहराद्विशांपतिः शृणोति लोकेश ! तथा विधीयताम् ॥ ६६ ॥**

सञ्जीविनी—यथेति । सदोगतः सदोगृहं गतस्त्रिलोचनस्येश्वरस्यैकांशतयाऽष्टानामन्यतममूर्तित्वात् । दुरासदोऽस्मादृशैर्दुष्प्राप्यो विशांपतिर्यथेमं वृत्तान्तं तव संदेशहराद्वार्ताहरादेव शृणोति च । हे लोकेशेन्द्र ! तथा विधीयताम् ॥ ६६ ॥

अन्वयः—सदोगतः, त्रिलोचनैकांशतया, दुरासदः, विशांपतिः, यथा, इमं, वृत्तान्तं, तव, सन्देशहराद्, एव, शृणोति, च, "हे" लोकेश !, तथा, विधीयताम् ॥ ६६ ॥

व्याख्या—सदोगतः = सभास्थितः, यज्ञशालायां वर्त्तमान इति भावः । त्रिलोचनैकांशतया = महेश्वरान्यतमभागतया, शङ्करस्याष्टानामन्यतमयज्मानरूपमूर्त्तितयेति यावद् ।

विशांपतिः = मनुजानां प्रभुः, नरेन्द्रो दिलीप इति यावद् । यथा = येन प्रकारेण, इमम् = एतम्, पूर्वोक्तमिति यावद् । वृत्तान्तं = वार्त्ता, तव = भवतः, सन्देशहराद् = दूतात्, एव = अवधारणेऽर्थे, शृणोति = आकर्णयति, च = अन्वाचयेऽर्थे, "हे" लोकेश = हे जगत्पते !, हे इन्द्र ! इति यावत् । तथा = तेन प्रकारेण, विधीयतां = क्रियतां, त्वयेति शेषः ॥ ६६ ॥

समासादि—वृत्तोऽनुवर्त्तनीयो गवेषणीयोऽन्तः समाप्तिर्यस्य स वृत्तान्तः (ब० व्री०) तं वृत्तान्तम् । सदो गत इति सदोगतः (त० पु०) । त्रीणि लोचनानि यस्येति त्रिलोचनः (ब० व्री०), एकश्चासा वंश इत्येकांशः (क० धा०), त्रिलोचनस्यैकांशस्त्रिलोचनैकांशः (त० पु०), तस्य भावस्त्रिलोचनैकांशता (स्त्री०) तया तथोक्तया । दुःखेनासादयितुं योग्य इति दुरासदः (पुं०) । सन्देशं वाचिकं हरतीति सन्देशहरः (पुं०) तस्मात् सन्देशहरात् । लोकस्येशो-लोकेशः (त० पु०) तत्सम्बुद्धौ हे लोकेश ! ॥ ६६ ॥

व्याकरणं—सन्देशहरात् = सन्देश + अम् + हृञ् (हरणे—ञित्) + अच् + ङसिः, "हरतेरनुद्यमनेऽच्" इत्यच्प्रत्यये गुणे रपरे रूपम् । शृणोति = श्रु (श्रवणे) + श्नुः + लट्, लटस्तिपि "श्रुवः शृ च" इति धातोः शृवादेशे श्नुप्रत्यये च कृते गुणे णत्वे रूपम् । विधीयतां = वि + डुधाञ् (धारणपोषणयोः—डुञित्) + यक् + शप् + लोट्, लोटस्तप्रत्यये रूपम् ॥ ६६ ॥

वाच्यान्तरं—सदोगतेन त्रिलोचनैकांशतया दुरासदेन विशां पत्या यथाऽयं वृत्तान्तस्तव सन्देशहरादेव श्रूयते च, हे लोकेश ! तथा त्वं विधेहि ॥ ६६ ॥

कोशः—"वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्" इति । "समज्यापरिषद्गोष्ठीसभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्री नपुंसकयोः सदः" इति । "स्यात् सन्देशहरो दूतः" इति । "द्वौ विशौ वैश्यमनुजौ" इति चामरः ॥ ६६ ॥

तात्पर्यार्थः—हे इन्द्र ! यज्ञशालायां स्थितो मत्पिता महाराजो दिलीपोऽन्यजनदुरासदो यतो दीक्षितो महेश्वरस्याष्टानामन्यतममूर्त्तिरतस्तव दूत एव तत्र गत्वा हयप्राप्ति विनैव शततमाश्वमेधयज्ञसमाप्तिफलावाप्तिर्भविष्यतीतिरूपमिमं वृत्तान्तं तं श्रावयेद् यथा तथैव त्वं कुरु ॥ ६६ ॥

भाषाऽर्थः—और यज्ञमण्डप में मौजूद, शङ्कर भगवान् का भी एक अंश (यजमान रूपमूर्त्ति) होने से हमारे ऐसे लोगों के लिये बड़ी कठिनाई से प्राप्त होने के योग्य महाराजाधिराज दिलीप जी जिस प्रकार इस वृत्तान्त को तुम्हारे दूत से ही सुनें, हे लोकपाल इन्द्र जी ! वैसा आप करें ॥ ६६ ॥

*अथेन्द्रस्तथाऽस्त्वित्युक्त्वाऽमरावती ययौ रघुरपि यज्ञशालां गत इत्याह—*

**तथेति कामं प्रतिशुश्रुवान्रघोर्यथाऽऽगतं मातलिसारथिर्ययौ ।**
**नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥**

सञ्जीविनी—तथेतीति । मातलिसारथिरिन्द्रो रघोः सम्बन्धिनं कामं मनोरथं तथेति तथाऽस्त्विति प्रतिशुश्रुवान् । "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः । यथाऽऽगतं ययौ । सुदक्षिणासूनू रघुरपि नातिप्रमना विजयलाभेऽप्यश्वनाशान्नातीव तुष्टः सन् । नञर्थस्य सुप्सुपेति समासः । नृपस्य सदोगृहं प्रति न्यवर्तत ॥ ६७ ॥

अन्वयः—मातलिसारथिः, रघोः, कामं, तथा, इति, प्रतिशुश्रुवान्, यथाऽऽगतं, ययौ, सुदक्षिणासूनुः, अपि, नातिप्रमनाः, "सन्" नृपस्य, सदोगृहं, न्यवर्त्तत ॥ ६७ ॥

व्याख्या—मातलिसारथिः = मातलिपदाह्वयसूतवान्, इन्द्र इति यावद् । रघोः = दिलीपसूनोः, कामं = मनोरथं, दूतप्रेषणरूपमिति भावः । तथेति = तथाऽस्त्विति, प्रतिशुश्रुवान् = प्रतिज्ञातवान्, यथाऽऽगतं = येन मार्गेणागतस्तेनैव मार्गेण, ययौ = जगाम, सुदक्षिणासूनुः = दिलीपपत्नीतनयः, रघुरिति यावद् । अपि = समुच्चयेऽर्थे, नातिप्रमनाः = नातिहृष्टमानसः,

विजयलाभेऽपि हयनाशान्नातीव सन्तुष्टचित्त इति भावः । नृपस्य = राज्ञः, दिलीपस्येति यावद् । सदोगृहं = सभाभवनं, यज्ञमण्डपमिति यावद् । न्यवर्त्तत = निवृत्तो बभूव ॥ ६७ ॥

समासादि—प्रतिशुश्रावेति प्रतिशुश्रुवान् ( पुं० ) । मातलिः सारथिर्यस्य स मातलि-सारथिः ( ब० व्री० ) । प्रहृष्टं मनो यस्यासौ प्रमनाः ( ब० व्री० ), अत्यन्तं प्रमना अतिप्रमनाः ( सु० स० ), न अतिप्रमना इति नातिप्रमनाः ( सु० स० ) । सदसो गृहं सदोगृहं ( त०पु० ) तत्सदोगृहम् । सुदक्षिणायाः सूनुः सुदक्षिणासूनुः (त० पु०) ॥ ६७ ॥

व्याकरणं—प्रतिशुश्रुवान् = प्रति + श्रु (श्रवणे) + लिट् + क्वसुः + सु । ययौ = या (प्रापणे) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये णल औत्वे रूपम् । न्यवर्तत = नि + अट् + वृतु ( वर्त्तने—उदित् ) + शप् + लङ्, लङस्तप्रत्यये रूपम् ॥ ६७ ॥

वाच्यान्तरं—मातलिसारथिना रघोः कामस्तथेति प्रतिशुश्रुवे, यथाऽऽगतं ययो, सुदक्षिणासूनुनाऽपि नातिप्रमनसा नृपस्य सदोगृहं न्यवृत्यत ॥ ६७ ॥

कोशः—"वाञ्छा लिप्सा मनोरथः । कामोऽभिलाषो तर्षश्च" इत्यमरः ॥ ६७ ॥

तात्पर्यार्थः—इन्द्रो रघोः प्रार्थनां तथाऽस्त्विति वचसाऽङ्गीकृत्य येन पथाऽऽयातस्तेनैव पथा स्वपुरीं गतः, रघुरपि विजयलाभेऽपि हयाप्राप्तिकारणान्नातीवसन्तुष्टचित्तः सन् राज्ञो-दिलीपस्य यज्ञशालामगमत् ॥ ६७ ॥

भाषाऽर्थः—मातलि नामक सारथि है जिसका ऐसे इन्द्रजी रघु की अभिलाषा के संबन्धमें वैसा ही होगा "जैसा कि तुमने कहा है" ऐसी प्रतिज्ञा करके जिस मार्ग से आये थे उसी मार्ग से गये । और सुदक्षिणा के पुत्र रघु भी "विजय होने पर भी घोड़ा न मिलने से" अत्यन्त प्रसन्न चित्त नहीं होते हुए राजा दिलीप के सभा स्थान की ओर लौटे ॥ ६७ ॥

*अथ दिलीपकर्तृकं वज्रप्रहारक्षततनो रघोरभिनन्दनमाह—*

**तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।**
**परामृशन्हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥**

सञ्जीविनी—तमिति । हरेरिन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबोधितो ज्ञापितः । वृत्तान्तमिति शेषः। प्रजेश्वरो दिलीपो हर्षजडेन हर्षशिशिरेण पाणिना कुलिशव्रणाङ्कितम् । तस्य रघोरिदं तदीयम् । अङ्गं शरीरं परामृशंस्तं रघुमभ्यनन्दत् ॥ ६८ ॥

अन्वयः—हरेः, शासनहारिणा, प्रथमं, प्रबोधितः, प्रजेश्वरः, हर्षजडेन, पाणिना, कुलिशव्रणाङ्कितं, तदीयम्, अङ्गम्, परामृशन्, तम्, अभ्यनन्दत् ॥ ६८ ॥

व्याख्या—हरेः = इन्द्रस्य, शासनहारिणा = निदेशधारिणा, दूतेनेति यावत् । प्रथमं = पूर्वं, रघोरागमनात् पूर्वमेवेति भावः । प्रबोधितः = विज्ञापितः, वृत्तान्तमिति शेषः । प्रजेश्वरः = जनाधिपः, दिलीप इति यावद् । हर्षजडेन = प्रमोदशिशिरेण, पाणिना = हस्तेन, कुलिशव्रणाङ्कितं = वज्राघातचिह्नितं, वज्रप्रहारलक्षणलक्षितमिति यावत् । तदीयं = तत्सम्बन्धि, रघोरिति यावद् । अङ्गं = देहं, परामृशन् = स्पृशन्, तं = पूर्वोक्तं, रघुमिति यावद् । अभ्यनन्दत् = अभिनन्दितवान्, प्रशशंसेति यावद् ॥ ६८ ॥

समासादि—प्रजानामीश्वरः प्रजेश्वरः (त० पु०) । शासनं हर्त्तुं शीलमस्येति शासनहारी (पुं०) तेन शासनहारिणा । परामृशतीति परामृशन् (पुं०) । जलति घनीभवतीति जड., डलयोरेकत्वस्मरणाजडः (पुं०), हर्षेण जडो हर्षजडः (त० पु०) तेन हर्षजडेन । कुलिशस्य व्रणाः कुलिशव्रणाः (त० पु०), तैरङ्कितं कुलिशव्रणाङ्कितं (त० पु०) तत्तथोक्तम् ॥ ६८ ॥

व्याकरणम्—अभ्यनन्दत् = अभि + अट् + (टुनदि (समृद्धौ—टुविदित्) नन्द् + शप् + लङ्, लङस्तिपि रूपम् । प्रबोधितः = प्र + (बुध—अवगमने—अकारेत् ) + णिच्) बोधि + इट् + क्तः + सु । परामृशन् = परा + मृश (आमर्शने—अकारेत् ) + शः + लट् + शतृ + सु । जडः =

जल (घातने—अकारेत्) + अच् + सु, पचादित्वादच्प्रत्यये डलयोरेकत्वस्मरणाज्जडः ॥६८॥

वाच्यान्तरं—हरेः शासनहारिणा प्रथमं प्रबोधितेन प्रजेश्वरेण हर्षजडेन पाणिना कुलिशव्रणाङ्कितं तदीयमङ्गं परामृशता सोऽभ्यनन्द्यत ॥ ६८ ॥

कोशः—"अववादस्तु निर्देशो निदेशः शासनं च सः। शिष्टिश्चाज्ञा" इति। "सुषीमः शिशिरो जड." इति। "व्रणोऽस्त्रियामीर्ममरुः" इति चामरः ॥ ६८ ॥

तात्पर्यार्थः—रघोरागमनात् पूर्वमेवेन्द्रदूतमुखात् सर्वं वृत्तान्तं ज्ञात्वा, दिलीपः संमुखस्थं प्रणमन्तं प्रियं पुत्रं रघुमालिङ्ग्य वज्रप्रहारक्षतं तदीयमङ्गं परामृशन् परमभिनन्दितवान् ॥६८॥

भाषाऽर्थः—इन्द्र की आज्ञा को लाने वाले पुरुष से पहिले ही (रघु के आने के पहले ही) वृत्तान्त को जाने हुये प्रजाओं के मालिक राजा दिलीप ने हर्ष से कांपते हुये हाथ से वज्र के घाव से युक्त उन (रघु) के शरीर का स्पर्श करते हुये उन (रघु) का अभिनन्दन किया ॥ ६८ ॥

*दिलीपो नवनवतिसङ्ख्याकानश्वमेधयज्ञान् कृतवानित्याह—*

**इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।**
**समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥ ६९ ॥**

सञ्जीविनी—इतीति। महनीयशासनः पूजनीयाज्ञः क्षितीश इत्यनेन प्रकारेण। 'इति हेतुकरणप्रकर्षादिसमाप्तिषु' इत्यमरः। महाक्रतूनामश्वमेधानां नवभिरधिकां नवतिमेकोनशतमायुषः क्षये सति दिवं स्वर्गं समारुरुक्षुरारोढुमिच्छुः सोपानानां परम्परां पङ्क्तिमिव ततान ॥६९॥

अन्वयः—महनीयशासनः, क्षितीशः, इति, महाक्रतूनां, नवाधिकां, नवतिम्, आयुषः, क्षये, "सति", दिवं, समारुरुक्षुः, सोपानपरम्पराम्, इव, ततान ॥ ६९ ॥

व्याख्या—महनीयशासनः = पूजनीयनिदेशः, चक्रवर्त्तितया सर्वशिरोधार्य्याज्ञ इति यावत्। क्षितीशः = पृथ्वीपतिः, दिलीप इति यावत्। इति = अनेन प्रकारेण, महाक्रतूनां = बृहद्यज्ञानाम्, अश्वमेधाख्यानामिति यावत्। नवाधिकां = नवोत्तरां, नवतिं = नवतिसङ्ख्यापरिमिताम्, आयुषः = जीवितकालस्य, क्षये = समाप्तौ, सतीति शेषः। दिवं = स्वर्गं, समारुरुक्षुः = सम्यगारोढुमिच्छुः, सोपानपरम्पराम् = आरोहणपरिपाटीं, सोपानपङ्क्तिमिति यावत्। इव = यथा, ततान = विस्तारितवान्। सर्गारम्भत एवैतावच्छ्लोकावधि वंशस्थवृत्तोपेतं सर्वं पद्यं—तल्लक्षणं यथा वृत्तरत्नाकरे—"जतौ तु वंशस्थमुदीरितं जरौ"

ज त ज र
।ऽ। ऽऽ।।ऽ। ऽ।ऽ

इति। तदुदाहरणं यथा—इति क्षि तीशान वतिंन वाधिकाम्—इति। जगती भेदेषु १३८२ तमो भेदोऽस्य वृत्तस्येत्यप्यूह्यम् ॥ ६९ ॥

समासादि—क्षितेरीशः क्षितीशः (त० पु०)। नवभिरधिका नवाधिका (त० पु०) तां नवाधिकाम्। महान्तश्च ते क्रतवो महाक्रतवः (क० धा०) तेषां महाक्रतूनाम्। महनीयं शासनं यस्यासौ महनीयशासनः (ब० व्री०)। समारोढुमिच्छतीति समारुरुक्षति (सन्नन्तः), समारुरुक्षतीति समारुरुक्षुः (पुं०)। सोपानानां परम्परा सोपानपरम्परा (त०पु०) तां सोपानपरम्पराम् ॥ ६९ ॥

व्याकरणं—समारुरुक्षुः = सम् + आङ् + (रुह (बीजजन्मनि प्रादुर्भावे च—अकारेत्) + सन्) रुरुक्ष + उः, "सनाशंसभिक्ष उः" इत्युप्रत्यये सौ रूपम्। ततान = तनु(विस्तारे—उदित्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये तत उपधावृद्धौ रूपम् ॥ ६९ ॥

वाच्यान्तरं—महनीयशासनेन क्षितीशेनेति महाक्रतूनां नवाधिका नवतिरायुषः क्षये "सति" दिवमारुरुक्षुणा सोपानपरम्परेव तेने ॥ ६९ ॥

कोशः—"आयुर्जीवितकालो ना" इति । "आरोहणं स्यात् सोपानम्" इति चामरः । "परम्पराऽन्वये वधे । परिपाट्याम्" इत्यनेकार्थसङ्ग्रहः ॥ ६९ ॥

तात्पर्यार्थः—चक्रवर्त्तितया सर्वजनशिरोधार्याज्ञो नृपतिर्दिलीपो जीवनान्ते स्वर्गमारोढुमिच्छुः सन् यथा कोऽप्यूर्ध्वभागमारोढुकामः सोपानपङ्क्तिं रचयति तथैवाश्वमेधयज्ञान् नवाधिकनवतिसङ्ख्याकान् यथाविधि सम्पादितवान् ॥ ६९ ॥

भाषाऽर्थः—जिसकी आज्ञा सभी लोगों को माननीय है ऐसे पृथ्वी के मालिक राजा दिलीप ने इस प्रकार से नव अधिक नब्बे अर्थात् निन्यानबे ९९ अश्वमेध नामक महायज्ञ को जो पूरा किया सो मानों जीवन समाप्त होने पर ऊपर स्वर्ग पर चढने की इच्छा रखने को भांति सीढ़ियों की पंक्ति तइयार की ॥ ६९ ॥

*अथ रघवे राज्यं दत्वा सपत्नीकस्य दिलीपस्य वानप्रस्थाश्रमग्रहणमाह—*

**अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे**
**नृपतिककुदं दत्वा यूने सितातपवारणम् ।**
**मुनिवनतरुच्छायां देव्या तया सह शिश्रिये**
**गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥**

सञ्जीविनी—अथेति । अथ विषयेभ्यो व्यावृत्तात्मा निवृत्तचित्तः स दिलीपो यथाविधि । यथाशास्त्रं यूने सुनवे नृपतिककुदं राजचिह्नम् । 'ककुद्वत्ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि' इति विश्वः। सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोश्छायां शिश्रिये श्रितवान् । वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः । तथाहि । गलितवयसां वृद्धानामिक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानाम् । तद्राजसंज्ञकत्वादणो लुक् । इद वनगमनं कुलव्रतम् । देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः । तथा च याज्ञवल्क्यः–( सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् । ) इति । हरिणीवृत्तमेतत् । तदुक्तम्–( रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ) इति ॥ ७० ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
रघुराज्याभिषेको नाम तृतीयः सर्गः ॥ ३ ॥

अन्वयः—अथ, विषयव्यावृत्तात्मा, सः, यथाविधि, यूने, सूनवे, नृपतिककुदं, सितातपवारणं, दत्वा, तया, देव्या, सह, मुनिवनतरुच्छायां, शिश्रिये, हि, गलितवयसाम्, इक्ष्वाकूणाम्, इदं, कुलव्रतम्, "अस्ति" ॥ ७० ॥

व्याख्या—अथ=अनन्तरं, हयं विनैव शततमाश्वमेधयज्ञसमाप्त्यनन्तरमिति भाव. । विषयव्यावृत्तात्मा=इन्द्रियग्राह्यरूपादिनिवृत्तचेताः, विरक्तिपूर्णचित्त इति यावत् । सः=पूर्वोक्तः, राजा दिलीप इति यावद् । यथाविधि=विधिमनतिक्रम्य, शास्त्रोक्तरीत्येति यावद् । यूने=तरुणाय, सूनवे=तनयाय, रघव इति भावः । नृपतिककुदं=राजलक्ष्म, सितातपवारणं=शुक्लच्छत्रं, चक्रवर्तिधार्यमिति भावः । दत्त्वा=प्रदाय, तया=पूर्वोक्तया, देव्या=कृताभिषेकया, महिष्या सुदक्षिणयेति यावत् । सह=सार्धम्, मुनिवनतरुच्छायां=वाचंयमवसिष्ठाद्यधिष्ठितकाननपादपातपाभावं, शिश्रिये=सिषेवे, वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः । हि=यतः, गलितवयसां=जीर्णावस्थानां, वृद्धानामिति यावद् । इक्ष्वाकूणाम्=इक्ष्वाकुकुलोद्भवानां, राज्ञामिति यावद् । इदम्=एतद्, वृद्धावस्थायां वनगमनमिति भावः । कुलव्रतं=वंशनियमः । कुलाचार इति भावः । अस्तीति शेषः । अत्र हरिणीवृत्तं तल्लक्षणमुक्तं यथा वृत्तरत्नाकरे—"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति । तथा च श्रुतबोधेऽपि—"सुमुखि लघवः पञ्च प्राच्यास्ततो दशमान्तिकं—तदनु ललितालापे ! वर्णौ तृती-

यचतुर्थकौ । प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्कनकप्रभे !—यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा" ॥ इति । अत्यष्टिभेदेषु ४६११२ तमो भेदोऽस्य वृत्तस्य । अस्य चोदाहरणमत्रैव—

न स म र स ल० गु०

। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ

अथस विषय व्यावृत्ता त्मायथा विधिसू नवे । इति ॥ ७० ॥

समासादि—विषयेभ्यो व्यावृत्तो विषयव्यावृत्तः (त०पु०), विषयव्यावृत्त आत्मा यस्य स विषयव्यावृत्तात्मा (ब०व्री०) । विधिमनतिक्रम्येति यथाविधि (अ० भा०) । नृपतेः ककुदं नृपतिककुदं (त०पु०) तत्तथोक्तम् । आतपस्य वारणमित्यातपवारणं (त० पु०), सितञ्च तदातपवारणं सितातपवारणं (क०धा०) तत्तथोक्तम् । मुनीनां वनं मुनिवनं (त०पु०),तस्य तरवो मुनिवनतरवः (त०पु०), तेषां छाया मुनिवनतरुच्छाया (त०पु०) तां तथोक्ताम् । गलितं वयो येषान्ते गलितवयांसः (ब०व्री०) तेषां गलितवयसाम् । इक्ष्वाकोर्वंशे जाता इक्ष्वाकवस्तेषामिक्ष्वाकूणाम् (पुं०) । कुलस्य व्रतं कुलव्रतं (त० पु०) ॥ ७० ॥

व्याकरणं—दत्त्वा = डुदाञ् (दाने—डुभित्) + क्त्वा, "दो दद्घोः" इति ददादेशे रूपम् । शिश्रिये = श्रिञ् (सेवायां—ञित्) + लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये इयङादेशे रूपम् ॥ ७० ॥

वाच्यान्तरम्—अथ विषयव्यावृत्तात्मना तेन यथाविधि यूने सूनवे नृपतिककुदं सितातपवारणं दत्त्वा तया देव्या सह मुनिवनतरुच्छाया शिश्रिये, हि गलितवयसामिक्ष्वाकूणामनेन कुलव्रतेन "भूयते" ॥ ७० ॥

कोशः—"विषयो गोचरे देशे तथा जनपदेऽपि च । प्रबन्धाद् यस्य यो ज्ञातस्तत्र रूपादिके पुमान्" इति । "छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोर्दीप्तिसच्छोभापङ्क्तिषु स्त्रियाम्" इति।"देवी कृताभिषेकायां तेजनीपृक्कयोरपि" इति च मेदिनी ॥ ७० ॥

तात्पर्यार्थः—शततमाश्वमेधयज्ञे हयप्राप्तिं विनैव तत्समाप्तिकरणानन्तरं विरक्तो मुमुक्षुः सन् वृद्धो राजा दिलीपो यूने रघवे राज्यं दत्त्वा सुदक्षिणया सह वानप्रस्थाश्रमं स्वीकृत्य कुलक्रमागतं तपोवनगमनमेवानुष्ठितवान् ॥ ७० ॥

भाषाऽर्थः—इसके बाद विषयों (इन्द्रियग्राह्य रूपादिकों) से जिनका चित्त हट गया है, ऐसे दिलीप महाराज शास्त्रोक्त रीति से युवावस्था को प्राप्त पुत्र रघुको राजचिह्न श्वेतछत्र देकर उन महारानी सुदक्षिणा के साथ मुनिजनों के तपोवन के वृक्षों की छाया का सेवन करने लगे, (अर्थात्—वानप्रस्थाश्रम ले लिया), क्योंकि—वृद्ध इक्ष्वाकुवंश के राजाओं का यह (वन में जाना) कुल का नियम है ॥

इत्थं श्रीव्रजमोहनात्मजनुषा गोस्वामिविद्वद्वर-
श्रीदामोदरशास्त्रिशिष्यपदवीभाजाऽच्युतानुग्रहाद् ।
श्रीब्रह्मान्वितशङ्करेण विहिता व्याख्या सुधाऽऽख्या, नवा
पूर्त्तिं श्रीरघुवंशकाव्यसुभगे सर्गे तृतीयेऽभ्यगात् ॥ ३ ॥

इति श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिणामन्तेवासिना मिश्रोपाह्वसरयूपारीणपङ्क्तिपावनान्ववायावतंसविविधकलाकोविदश्रौतस्मार्त्तकर्मनिष्ठगौतमगोत्रोद्भवश्रीव्रजमोहनशर्मतनुजन्मना श्रीब्रह्मशङ्करशर्मणा कृतया सुधाऽऽख्यया व्याख्ययाऽन्वितः श्रीरघुवंशमहाकाव्ये रघुराज्याभिषेको नाम तृतीयः सर्गः समाप्तः ।

# चतुर्थः सर्गः।

शारदा शारदाम्भोजवदना वदनाम्बुजे।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात्॥

*अथ प्राप्तराज्यस्य रघोः कीदृशी शोभाऽऽसीत्तामेवाह*—

**स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ।**
**दिनान्ते निहितं तेजः सवित्रेव हुताशनः॥ १॥**

सञ्जीविनी—स इति। स रघुर्गुरुणा पित्रा दत्तं राज्यं,राज्ञः कर्म प्रजापरिपालनात्मकम्। पुरोहितादित्वाद्यक्। प्रतिपद्य प्राप्य। दिनान्ते सायंकाले सवित्रा सूर्येण निहितं तेजः प्रतिपद्य हुताशनोऽग्निरिव। अधिकं बभौ। ( सौरं तेजः सायमग्निं संक्रमते। आदित्यो वा अस्तं यन्नग्निमनुप्रविशति। अग्निं वा आदित्यः सायं प्रविशति ) इत्यादिश्रुतिः प्रमाणम्॥ १॥

अन्वयः—सः, गुरुणा, दत्तं, राज्यम्, प्रतिपद्य, दिनान्ते, सवित्रा, निहितं, तेजः, "प्रतिपद्य," हुताशनः, इव, अधिकम्, बभौ॥ १॥

व्याख्या—सः=पूर्वोक्तः, रघुरिति यावद्। गुरुणा=पित्रा, दिलीपेनेति यावद्। दत्तम्=अर्पितं, राज्यं=प्रजापालनात्मकं कर्म, प्रतिपद्य=प्राप्य, दिनान्ते=सायङ्काले, सवित्रा=रविणा, निहितं=स्थापितं, तेजः=दीप्तिं, "प्रतिपद्य", हुताशनः=वह्निः, इव=यथा, अधिकम्=अतिशयं, बभौ=शुशुभे॥ १॥

समासादि—राज्ञः कर्म राज्यं ( न० लिं० )। दिनस्यान्तो दिनान्तः ( त० पु० ) तस्मिन् दिनान्ते। सुवति प्रेरयति जनानिति सविता ( पुं० ) तेन सवित्रा। हुतमशनं यस्यासौ हुताशनः ( ब०व्री० )॥ १॥

व्याकरणं—राज्यं=राजन्+ङस्+यक्+अम्, "पत्यन्तपुरोहितादिभ्यो यक्" इति यक्प्रत्यये "नस्तद्धिते" इति टिलोपेऽमि रूपम्। दत्तं=डुदाञ् ( दाने-डुञित् )+क्तः+अम्, "दो दद्घोः" इति ददादेशे रूपम्। प्रतिपद्य=प्रति+पद (गतौ–अकारेत् )+क्त्वा+ल्यप्। बभौ=भा ( दीप्तौ )+लिट्, लिटस्तिपो णल औत्वे द्वित्वेऽभ्यासकार्ये रूपम्। निहितं=नि+डुधाञ् ( धारणपोषणयोः–डुञित् )+क्तः+अम्, "दधातेर्हिः" इति ह्यादेशे रूपम्। सवित्रा=षू ( प्रेरणे )+इट्+तृच्+टा, "ण्वुल्तृचौ" इति तृच्प्रत्यये रूपम्॥१॥

वाच्यान्तरं—तेन गुरुणा दत्तं राज्यं प्रतिपद्य दिनान्ते सवित्रा निहितं तेजः "प्रतिपद्य" हुताशनेनेवाधिकं बभे॥ १॥

कोशः—"तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि" इति। "भानुर्हंसः सहस्रांशुस्तपनः सविता रविः" इति चामरः॥ १॥

तात्पर्यार्थः—सूर्येऽस्तंगते यथाऽग्निरधिकं प्रकाशते, तथैव दिलीपे वनं गते सति रघुरपि प्रचकाशे॥ १॥

भाषाऽर्थः—वह रघु महाराज पिता के दिये हुये राज्य ( प्रजापालन रूप कर्म ) को पाकर सायङ्काल में सूर्य के द्वारा स्थापित तेज को पाकर जैसे अग्नि अधिक सुशोभित होता है उसी भांति अधिक सुशोभित होने लगे॥ १॥

अथ रघो राज्येऽवस्थानं श्रुत्वा शत्रूणां, हृदि संतापाधिक्यं बभूवेत्याह—

**दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम्।**
**पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः॥ २॥**

सञ्जीविनी—दिलीपेति। दिलीपानन्तरं राज्ये प्रतिष्ठितमवस्थितं तं रघुं निशम्याकर्ण्य पूर्वं दिलीपकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य संजातः प्रधूमितोऽग्निः संतापाग्निरुत्थित-

इव प्रज्वलित इव । पूर्वेभ्योऽधिकसंतापोऽभूदित्यर्थः । राजकर्तृकस्यापि निशमनस्याग्नावुपचाराच्च समानकर्तृकत्वविरोधः ॥ २ ॥

अन्वयः—दिलीपानन्तरं, राज्ये, प्रतिष्ठितं, तं, निशम्य, पूर्वं, राज्ञां, हृदये, प्रधूमितः, अग्निः, उत्थितः, इव, "अभूत्" ॥ २ ॥

व्याख्या—दिलीपानन्तरं=रघुपितुः पश्चाद्, दिलीपस्य वनगमनानन्तरमिति भावः । राज्ये=प्रजापालनात्मककर्मणि, प्रतिष्ठितं=कृतावस्थानं, तं=पूर्वोक्तं, रघुमिति यावद् । निशम्य=आकर्ण्य, पूर्वं=प्राग्, दिलीपराज्यकाल इति भावः । राज्ञां=नृपाणां, द्वेषकर्तृणामिति यावद् । हृदये=मनसि, प्रधूमितः=धूम्रयुक्तः, अग्निः=वह्निः, सन्तापरूप इति भावः । उत्थितः=प्रज्वलितः, जातशिख इति यावद् । अभूत्=बभूव ॥ २ ॥

समासादि—दिलीपस्यानन्तरमिति दिलीपानन्तरं (त० पु०) । प्रकृष्टो धूमः प्रधूमः (ब० व्री०), प्रधूमः सञ्जातोऽस्येति प्रधूमितः (पुं०) ॥ २ ॥

व्याकरणं—प्रतिष्ठितं=प्रतिष्ठा+इतच्+अम्, तारकादित्वादितच्प्रत्यये रूपम् । प्रधूमितः=प्रधूम+इतच्+सु । उत्थितः=उद्+ष्ठा (गतिनिवृत्तौ)+क्तः+सु ॥ २ ॥

वाच्यान्तरं—दिलीपानन्तरं राज्ये प्रतिष्ठितं तं निशम्य पूर्वं राज्ञां हृदये प्रधूमितेनाग्निनोत्थितेनेवाभावि ॥ २ ॥

कोशः "प्राक् पूर्वमग्रतः" इति धरणिः । "अग्निर्वैश्वानरो वह्निः" इत्यमरः ॥ २ ॥

तात्पर्यार्थः—दिलीपसमये येषां राज्ञां हृदि सन्तापाग्निर्धूम्रयुक्त आसीत् तेषामेव हृदीदानीं रघुं राज्येऽवस्थितं श्रुत्वा स प्रज्वलितो बभूव अर्थात् पूर्वेभ्योऽधिकसन्तापोऽभूत् ॥ २ ॥

भाषाऽर्थः—दिलीप महाराज के बाद राज्य पर बैठे हुए उन महाराज रघु को सुन कर पहले (दिलीप महाराज के) समय में जो राजाओं के हृदय में धूम्र युक्त सन्तापाग्नि थी सो इस समय प्रज्वलित हो उठी के समान हो गई, अर्थात् पहले की अपेक्षा अधिक सन्ताप हुआ ॥ २ ॥

*अथ रघुं राज्येऽवस्थितं दृष्ट्वा सर्वा अपि प्रजाः प्रसन्ना बभूवुरित्याह*—

**पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।**
**नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥**

सञ्जीविनी—पुरुहूतेति । पुरुहूतध्वज इन्द्रध्वजः । स किल राजभिर्वृष्ट्यर्थं पूज्यत इत्युक्तं भविष्योत्तरे—(एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर ! । पर्जन्यः कामवर्षी स्यात्तस्य राज्ये न संशयः । ) इति । ( चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम् । आहुः शक्रध्वजं नाम पौरलोकसुखावहम् ॥ )इति । पुरुहूतध्वजस्येव तस्य रघोर्नवाभ्युत्थानमभ्युन्नतिमभ्युदयं च पश्यन्तीति नवाभ्युत्थानदर्शिन्यः । उदूर्ध्वं प्रस्थिता उल्लसिताश्च नयनपङ्क्तयो यासां ताः सप्रजाः ससंतानाः प्रजा जनाः । 'प्रजा स्यात्संततौ जने, इत्युभयत्राप्यमरः । ननन्दुः ॥ ३ ॥

अन्वयः—पुरुहूतध्वजस्य, इव, तस्य, नवाभ्युत्थानदर्शिन्यः, उन्नयनपङ्क्तयः, सप्रजाः, प्रजाः, ननन्दुः ॥ ३ ॥

व्याख्या—पुरुहूतध्वजस्य=इन्द्रपताकायाः, इव=यथा, तस्य=पूर्वोक्तस्य, नवीनस्य राज्ञो रघोरिति भावः । नवाभ्युत्थानदर्शिन्यः=नवीनराज्याप्तिरूपाभ्युदयदर्शनशीलाः, उन्नयनपङ्क्तयः=ऊर्ध्वोल्लसितनेत्रमालाः, ऊर्ध्वावलोकनासक्ता इति भावः । सप्रजाः=सन्ततिसहिताः, प्रजाः=जनाः, पौरजना इति यावद् । ननन्दुः=अनन्दन्, प्रसन्ना बभूवुरिति यावद् ॥ ३ ॥

समासादि—पुरु प्रचुरं हूतमाह्वानं यज्ञेष्वस्य, पुरूणि हूतानि नामान्यस्येति वेति पुरुहूतः (ब० व्री०), तस्य ध्वजं पुरुहूतध्वजं (त०पु०) तस्य पुरुहूतध्वजस्य । नयनानां पङ्क्तयोनयनपङ्क्तयः (त० पु०), उदूर्ध्वं प्रस्थिता नयनपङ्क्तयो यासां ता उन्नयनपङ्क्तयः (ब०

ब्रीo )। नवञ्च तदभ्युत्थानं नवाभ्युत्थानं ( क० धा० ), तद् दर्शितुं शीलमासामिति नवाभ्युत्थानदर्शिन्यः ( स्त्री० )। प्रजाभिः सहिताः सप्रजाः ( ब० ब्री० ) ॥ ३ ॥

व्याकरणं—ननन्दुः = टुनदि ( समृद्धौ—टुविदित् ) + लिट्, लिटो झेरुसीदित्वान्नुमागमे द्वित्वेऽभ्यासकार्ये रूपम् ॥ ३ ॥

वाच्यान्तरं—पुरुहूतध्वजस्येव तस्य नवाभ्युत्थानदर्शिन्य उन्नयनपङ्क्तयः सप्रजाः प्रजाननन्दुः ॥ ३ ॥

कोशः—"इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः । वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः" इत्यमरः ॥ ३ ॥

तात्पर्यार्थः—यथेन्द्रध्वजस्योत्थानं दृष्ट्वा सर्वाः सन्ततिसहिताः प्रजाः प्रसन्ना भवन्ति, तथैव रघोरपि नवाभ्युदयं दृष्ट्वा प्रसन्ना बभूवुः ॥ ३ ॥

भाषाऽर्थः—इन्द्र की पताका की तरह उन रघु महाराज के नवीन अभ्युदय (तरक्की) को देखने वाली अत एव ऊपर को नेत्र समूहों को किये हुये सन्तान सहित प्रजावर्ग प्रसन्न हुये॥३॥

*अथ रघोः सिंहासनारूढक्षण एव शत्रुमण्डलमपि पदाक्रान्तमभूदित्याह—*

**सममेव समाक्रान्तं द्वयं द्विरदगामिना ।**
**तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ४ ॥**

सञ्जीविनी—सममेवेति । द्विरद इव द्विरदैश्च गच्छतीति द्विरदगामिना । "कर्त्तर्युपमाने" इति "सुप्यजातौ" इति च णिनिः । तेन रघुणा समं युगपदेव द्वयं समाक्रान्तमधिष्ठितम् । किं तद् द्वयम् । पितुरागतं पित्र्यम् । "पितुर्यत्" इति यत्प्रत्ययः । सिंहासनम् । अखिलमरीणां मण्डलं राष्ट्रं च ॥ ४ ॥

अन्वयः—द्विरदगामिना, तेन, समम्, एव, द्वयं, समाक्रान्तं, पित्र्यं, सिंहासनम्, अखिलम्, अरिमण्डलं, च ॥ ४ ॥

व्याख्या—द्विरदगामिना = गजवद्गमनशीलेन, गजगमनशीलेन वा, तेन = पूर्वोक्तेन, रघुणेति यावत् । समं = सदृग्, युगपदिति यावद् । एव = अवधारणेऽर्थे, द्वयं = द्वितयं, समाक्रान्तम् = अधिष्ठितं, किन्तद् द्वयमिति शेषः। पित्र्यं = जनकात्प्राप्तं, सिंहासनं = राजासनं, सिंहाकृतिविशिष्टमिति यावद् । अखिलं = सम्पूर्णम्, अरिमण्डलं = शत्रुराष्ट्रं, च = समुच्चयेऽर्थे॥४॥

समासादि—द्वौ रदौ यस्य स द्विरदः ( ब० ब्री० ), स इव गच्छति तेन गच्छतीति वा द्विरदगामी ( पुं० ) तेन द्विरदगामिना । सिंहाकारमासनं सिंहासनं ( त० पु० ) । पितुरागतं पित्र्यम् ( न० लि० ), अरीणाम् मण्डलमरिमण्डलं ( त० पु० ) ॥ ४ ॥

व्याकरणं—समाक्रान्तं = सम् + आङ् + क्रमु ( पादविक्षेपे—उदित् ) + क्तः + सु । पित्र्यं = पितृ + ङसि + यत् + सु ॥ ४ ॥

वाच्यान्तरं—द्विरदगामी स सममेव द्वयं समाक्रान्तवान्, पित्र्यं सिंहासनमखिलमरिमण्डलञ्च ॥ ४ ॥

कोशः—"समं साध्वखिलं सदृक्" इत्यनेकार्थसङ्ग्रहः । "सिंहासनन्तु तत् । हैमम्" इत्यमरः । "मण्डलं परिधौ कोठे देशे द्वादशराजसु । क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे" इति मेदिनी ॥ ४ ॥

तात्पर्यार्थः—गजारूढेन गजवद्लीलापूर्वकगमनकारिणा वा तेन रघुणा यदा सिंहासनमधिष्ठितं तदैव सकलशत्रुसमूहोऽपि युगपदेव पदाक्रान्तो बभूव ॥४॥

भाषाऽर्थः—हाथी के तरह लीलापूर्वक चलने वाले, अथवा, हाथी पर चढ के चलने वाले उस रघु ने साथ ही दोनों को दबाया, एक तो पिता से प्राप्त सिंहासन को दूसरे सम्पूर्ण शत्रु मण्डल को ॥ ४ ॥

अथ सिंहासनारोहणानन्तरं तस्य लक्ष्मीसंनिधानमाह—

**छायामण्डललक्ष्येण तमदृश्या किल स्वयम्।**
**पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥**

सञ्जीविनी—छायेति। अत्र रघोस्तेजोविशेषेण स्वयं संनिहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्षते। पद्मा लक्ष्मीः। 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः। सा स्वयमदृश्या किल किलेति संभावनायाम्। सती छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन न तु स्वरूपतो दृश्येन। छायामण्डलमित्यनेनानातपज्ञानं लक्ष्यते। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्युभयत्राप्यमरः। पद्मातपत्रेण पद्ममेवातपत्रं तेन कारणभूतेन साम्राज्यदीक्षितं साम्राज्ये साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितमभिषिक्तं तं भेजे। अन्यथा कथमेतादृशी कान्तिसंम्पत्तिरिति भावः ॥५॥

अन्वयः—पद्मा, स्वयम्, अदृश्या, किल, "सती" छायामण्डललक्ष्येण, पद्मातपत्रेण, साम्राज्यदीक्षित, तं, भेजे ॥५॥

व्याख्या—पद्मा = लक्ष्मीः, स्वयम् = आत्मना, अदृश्या = अलक्ष्या, किल = सम्भावनायां, सतीति शेषः। छायामण्डललक्ष्येण = कान्तिनिवहानुमेयेन, न तु साक्षात् स्वरूपतो दृग्गोचरीभूतेनेति भावः। अत्रच्छायामण्डलमिति पदेनानातपज्ञानमनुमीयते। पद्मातपत्रेण = कमलरूपच्छत्रेण, कारणभूतेनेति भावः। साम्राज्यदीक्षित = सम्राड्भावाभिषिक्तम्, मण्डलाधिपत्येऽभिषिक्तमिति यावत्। तं = पूर्वोक्तं, रघुमिति यावद्। भेजे = सिषेवे, अन्यथा कथमीदृशी शोभासमृद्धिरिति भावः ॥ ५ ॥

समासादि—छायाया मण्डलं छायामण्डलं ( त० पु० ), तेन लक्ष्यं छायामण्डललक्ष्यं (त० पु०) तेन छायामण्डललक्ष्येण। द्रष्टुं योग्या दृश्या ( स्त्री० ) न दृश्येत्यदृश्या ( न० त० पु० )। पद्ममेवातपत्रं पद्मातपत्रं ( क० धा० ) तेन पद्मातपत्रेण। दीक्षा संजाताऽस्य दीक्षितः (पुं०), सम्यग् राजतेऽसौ सम्राट् (पुं०) सम्राजः कर्म साम्राज्यं (न० लिं०) तत्र दीक्षितः साम्राज्यदीक्षितः ( त०पु० ) तं तथोक्तम् ॥ ५ ॥

व्याकरणं—भेजे = भज ( सेवायाम्-अकारेत् ) + लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वे "तृफलभजत्रपश्च" इत्येत्वाभ्यासलोपे रूपम् ॥ ५ ॥

वाच्यान्तरं—पद्मया स्वयमदृश्यया किल "सत्या" छायामण्डललक्ष्येण पद्मातपत्रेण साम्राज्यदीक्षितः स भेजे ॥ ५ ॥

कोशः—"किलशब्दस्तु वार्त्तायां सम्भाव्यानुनयार्थयोः" इति विश्वः ॥ ५ ॥

तात्पर्यार्थः—सिंहासनोपरि समुपविष्टं रघुं वीक्ष्य तत्तेजोविशेषेण स्वयं समुपस्थितया लक्ष्म्याऽप्रकटरूपया सत्या कान्तिमण्डलानुमेयेन कमलच्छत्रेण स सिषेवे, अन्यथा कथमेतादृशी शोभासम्पत्तिः कापि संभवितुं शक्नोति ॥ ५ ॥

भाषार्थः—लक्ष्मी स्वयम् अदृश्य रूप से विद्यमान हुई छाया ( कान्ति या छाया ) के मण्डल से जिसका अनुमान किया जा रहा है, ऐसे कमल रूप छत्र से मण्डलाधिपत्य रूप कर्म में जिसका अभिषेक हुआ है ऐसे उन रघु महाराज की सेवा करने लगी ॥ ५ ॥

सम्प्रति सरस्वतीसान्निध्यमाह—

**परिकल्पितसांनिध्या काले काले च वन्दिषु।**
**स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ६ ॥**

सञ्जीविनी—परिकल्पितेति। सरस्वती च काले काले सर्वेष्वपि योग्यकालेषु। "नित्यवीप्सयोः" इति वीप्सायां द्विवचनम्। बन्दिषु परिकल्पितसांनिध्या कृतसन्निधाना सती स्तुत्यं स्तोत्रार्हं तं रघुम्। अर्थ्याभिरर्थादनपेताभिः। "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः।

स्तुतिभिः स्तोत्रैरुपतस्थे । देवताबुद्धया पूजितवतीत्यर्थः । देवतात्वं च ( ना विष्णुः पृथिवीपतिः) इति वा लोकपालात्मकत्वाद्वेत्यनुसंधेयम् । एवं च सति 'उपाद् देवपूजासंगतिकरणमित्रकरणपथिषु' इति वक्तव्यादात्मनेपदं सिध्यति ॥ ६ ॥

अन्वयः—सरस्वती, च, काले काले, बन्दिषु, परिकल्पितसान्निध्या, "सती," स्तुत्यं, तम्, अर्थ्याभिः, स्तुतिभिः, उपतस्थे ॥ ६ ॥

व्याख्या—सरस्वती = वाग्देवता, भारतीति यावद् । च = अन्वाचयेऽर्थे, कालेकाले = समये समये, सर्वेष्वपि योग्यकालेष्विति यावद् । बन्दिषु = स्तुतिपाठकेषु, परिकल्पितसान्निध्या = कृतसन्निधाना, सतीति शेषः । स्तुत्यं = स्तवार्हं, तं = पूर्वोक्तं, रघुमिति यावद् । अर्थ्याभिः = अर्थादनपेताभि., सार्थैरिति यावद् । स्तुतिभिः = स्तवैः, उपतस्थे = उपस्थानं कृतवती, देवबुद्ध्याऽर्चितवतीत्यर्थः ॥ ६ ॥

समासादि—परिकल्पितं सान्निध्यं यया सा परिकल्पितसान्निध्या (ब०व्री०) । बन्दन्त इति बन्दिनस्तेषु बन्दिषु ( पुं० ) । स्तोतुं योग्यः स्तुत्यः (पुं०) तं स्तुत्यम् । अर्थादनपेता अर्थ्याः ( स्त्री० ) ताभिरर्थ्याभिः ॥ ६ ॥

व्याकरण—बन्दिषु = बदि ( अभिवादनस्तुत्योः—इदित् ) + णिनिः + सुप्, "आवश्यकाधमर्ण्ययोः" इतिणिनिप्रत्यये रूपम् । स्तुत्यं = ष्टुञ् ( स्तुतौ—ञित् ) + तुक् + क्यप् + अम्, "एतिस्तुशास्वृदृजुषः क्यप्" इति क्यप्प्रत्यये रूपम् । अर्थ्याभिः = अर्थ + यत् + टाप् + भिस्, "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्यये रूपम् ॥ ६ ॥

वाच्यान्तरं—सरस्वत्या च काले काले बन्दिषु परिकल्पितसान्निध्यया "सत्या" स्तुत्यः सोऽर्थ्याभिः स्तुतिभिरुपतस्थे ॥ ६ ॥

कोशः—"बन्दिनः स्तुतिपाठकाः" इति । "स्तवः स्तोत्रं स्तुतिर्नुतिः" इति चामरः । "सरस्वती सरिद्भिदि । वाच्यापगायां स्त्रीरत्ने गोवाग्देवतयोरपि" इत्यनेकार्थसङ्ग्रहः ॥ ६ ॥

तात्पर्यार्थः—तथा सर्वेष्वप्युचितावसरेषु बन्दिनां साहाय्यार्थं तत्समीपवर्त्तिनी भूत्वा सरस्वती स्तोतुं योग्यं तं रघुमुचितैः सार्थैः स्तोत्रैः सेवितवती ॥ ६ ॥

भाषार्थः—और सरस्वती देवी ने भी समय समय पर बन्दियों की समीपवर्त्तिनी होती हुई स्तुति करने के योग्य उन रघु महाराज की अर्थ से युक्त उचित स्तोत्रों द्वारा देव बुद्धि से या लोकपालों के अंश से उत्पन्न होने के कारण से पूजन किया ॥ ६ ॥

*अथ रघोरनन्यपूर्वमिव पृथ्वीशासनमासीदित्याह—*

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।
तथाऽप्यनन्यपूर्वेव तस्मिन्नासीद्वसुंधरा ॥ ७ ॥

सञ्जीविनी—मनुप्रभृतिभिरिति । वसुंधरा मनुप्रभृतिभिर्मन्वादिभिर्मान्यैः पूज्यै राजभिर्भुक्ता यद्यपि । भुक्तैवेत्यर्थः । यद्यपीत्यवधारणे । 'अप्यर्थे यदि वाऽर्थे स्यात्' इति केशवः । तथाऽपि । तस्मिन्राज्ञि । अन्यः पूर्वो यस्याः साऽन्यपूर्वा । अन्यपूर्वा न भवतीत्यनन्यपूर्वा । अनन्योपभुक्तेवासीत् । तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः ॥ ७ ॥

अन्वयः—वसुन्धरा, मनुप्रभृतिभिः, मान्यैः, राजभिः, भुक्ता, यद्यपि, तथाऽपि, तस्मिन्, अनन्यपूर्वा, इव, आसीत् ॥ ७ ॥

व्याख्या—वसुन्धरा = उर्वी, मनुप्रभृतिभिः = वैवस्वतमन्वादिभिः, मान्यैः = पूज्यैः, मानार्हैरिति यावद् । राजभिः = नृपैः, सूर्यवंश्यैरिति भावः । भुक्ता = पालिता, यद्यपि = अवधारणेऽर्थ, एवेत्यर्थः । तथाऽपि = पुनरपि, तस्मिन् = पूर्वोक्ते, रघाविति यावद् । अनन्यपूर्वा = नेतरोपभुक्ता, इव = यथा, आसीत् = अभूत्, तत्प्रथमस्वामिकेवानुरागवती बभूवेत्यर्थः ॥७॥

समासादि—मनुः प्रभृतिरादिर्येषान्ते मनुप्रभृतयः ( ब० व्री० ) तैर्मनुप्रभृतिभिः । मा-

नितुं योग्यास्ते मान्यास्तैर्मान्यैः ( पुं० )। अन्यः पूर्वो यस्याः साऽन्यपूर्वा, ( ब० व्री० ) न अन्यपूर्वेत्यनन्यपूर्वा ( न० त० पु० )। वसूनि धरतीति वसुन्धरा ( स्त्री० ) ॥ ७ ॥

व्याकरणं—भुक्ता = भुज ( पालनाभ्यवहारयोः—अकारेत् ) + क्तः + टाप् + सु । आसीत् = आट् + अस (भुवि—अकारेत) + ईट + लङ्, "अस्तिसिचोऽपृक्ते" इतीडागमे रूपम् ॥ ७ ॥

वाच्यान्तरं—वसुन्धरां मनुप्रभृतयो मान्या राजानो भुक्तवन्तो यद्यपि, तथाऽपि तस्मिन्ननन्यपूर्वयेवाभूयत ॥ ७ ॥

कोशः—"गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही। सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा" इत्यमरः ॥ ७ ॥

तात्पर्यार्थः—पृथ्वी यद्यपि पूर्वैर्मन्वादिभी राजभिरुपभुक्ताऽसीत्, तथाऽपि सा तस्मिन् रघौ प्रथमभर्तृकेवाऽनुरक्ताऽभूत् ॥ ७ ॥

भाषाऽर्थः—पृथ्वी मनु आदिक माननीय राजाओं से यद्यपि भोगी गई थी, तथाऽपि उन महाराज रघुमें अन्य से जैसे नही भोगी गई हो ऐसी अनुरक्त हुई ॥ ७ ॥

अत्र कारणमाह—

**स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।**
**आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८ ॥**

सञ्जीविनी—स इति । हि यस्मात्कारणात्स रघुर्युक्तदण्डतया यथाऽपराधदण्डतया सर्वस्य लोकस्य मन आददे जहार । क इव । अतिशीतोऽत्युष्णो वा न भवतीति नातिशीतोष्णः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः । दक्षिणो दक्षिणदिग्भवो नभस्वान्वायुरिव । मलयानिल इवेत्यर्थः। युक्तदण्डतेत्यत्र कामन्दकः—(उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥ ) इति ॥ ८ ॥

अन्वयः—हि, सः, युक्तदण्डतया, सर्वस्य, मनः, आददे, "क इव," नातिशीतोष्णः, दक्षिणः, नभस्वान्, इव ॥ ८ ॥

व्याख्या—हि = यतः, यस्मात् कारणादिति यावत् । सः = पूर्वोक्तः, रघुरिति यावद् । युक्तदण्डतया = उचितदण्डतया, अपराधानुसारेण दण्डदानेनेति भावः । सर्वस्य = सम्पूर्णस्य, लोकस्य = जनस्य; मनः = हृदयम्, आददे = गृहीतवान्, जहारेति यावद् । क इवेति शेषः । नातिशीतोष्णः = समशीतोष्णः, दक्षिणः = दक्षिणदिग्भवः, नभस्वान् = वातः, मलयानिल इति भावः, इव = यथा ॥ ८ ॥

समासादि—युक्तो दण्डो यस्यासौ युक्तदण्डः (ब०व्री०), तस्य भावो युक्तदण्डता (स्त्री०) तया युक्तदण्डतया । शीतश्चासावुष्णश्चेति शीतोष्णः (क०धा०) अतिशयितः शीतोष्णोऽतिशीतोष्णः (ब० व्री० ) नातिशीतोष्णो भवतीति नातिशीतोष्णः ( सु० स० ) । नभोऽस्त्यस्मिन्निति नभस्वान् ( पुं ) ॥ ८ ॥

व्याकरणम्—आददे = आङ् + डुदाञ् ( दाने—डुञित् ) + लिट् लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये रूपम्, "आङो दोऽनास्यविहरणे" इत्यात्मनेपदम् । नभस्वान् = नभस् + मतुप् + सु ॥ ८ ॥

वाच्यान्तरं—हि रघुणा युक्तदण्डतया सर्वस्य मन आददे, "केनेव" नातिशीतोष्णेन दक्षिणेन नभस्वतेव ॥ ८ ॥

कोशः—"नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः ॥ ८ ॥

तात्पर्यार्थः—यथा समशीतोष्णो दक्षिणदिग्भवः पवनः सर्वस्य लोकस्य मनो हरति तथैव यथाऽपराधदण्डविधानेन स रघुरपि सर्वप्रजावर्गस्य मनो जहार ॥ ८ ॥

भाषाऽर्थ—क्योंकि उस रघु-ने अपराध के अनुसार दण्ड देने से सभी लोगों के मन का

हरण कर लिया जैसे कि–न अत्यन्त शीत और न अत्यन्त गरम बहने वाला दक्षिण दिशाका पवन सब लोगों के मन का हरण करता है ॥ ८ ॥

*अथ रघोः सुप्रबन्धेन प्रजावर्गस्य दिलीपकर्तृकसुप्रबन्धविस्मरणमाह—*

**मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।**
**फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९ ॥**

सञ्जीविनी—मन्देति । तेन रघुणा प्रजा गुरौ दिलीपविषये । सहकारोऽतिसौरभश्चूतः 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । तस्य फलेन पुष्पोद्गमे पुष्पोदय इव ततोऽपि गुणाधिकतया हेतुना मन्दोत्कण्ठा अल्पौत्सुक्याः कृताः । गुणोत्तरश्चोत्तरो विषयः पूर्वं विस्मारयतीति भावः ॥ ९ ॥

अन्वयः—तेन, प्रजाः, गुरौ, सहकारस्य, फलेन, पुष्पोद्गमे, इव, "ततोऽपि", गुणाधिकतया, मन्दोत्कण्ठाः, कृताः ॥ ९ ॥

व्याख्या—तेन=पूर्वोक्तेन, रघुणेति यावत् । प्रजाः=जनाः, गुरौ=पितरि, दिलीपविषय इति भावः । सहकारस्य=आम्रस्य, फलेन=प्रसवेन, पुष्पोद्गमे=कुसुमोदये, इव=यथा, ततोऽपीति शेषः । गुणाधिकतया=औदार्यस्थैर्यकारुण्यप्रभावादिगुणाधिक्येन, हेतौ तृतीया । मन्दोत्कण्ठाः=स्वल्पौत्सुक्याः, कृताः=विहिताः ॥ ९ ॥

समासादि—मन्दोत्कण्ठा यासां ता मन्दोत्कण्ठाः ( ब०व्री० ) । गुणैरधिको गुणाधिकः ( त० पु० ), तस्य भावो गुणाधिकता ( स्त्री० ) तया गुणाधिकतया । पुष्पस्योद्गम इति पुष्पोद्गमः ( त० पु० ) तस्मिन् पुष्पोद्गमे ॥ ९ ॥

व्याकरणं—कृताः=डुकृञ् ( करणे–डुञित् )+क्तः+टाप्+जस् ॥ ९ ॥

वाच्यान्तरं—स प्रजा गुरौ सहकारस्य फलं पुष्पोद्गम इव ततोऽपि गुणाधिकतया मन्दोत्कण्ठा कृतवान् वा, तेन प्रजाभिर्गुरौ सहकारस्य फलेन पुष्पोद्गम इव ततोऽपि गुणाधिकतया मन्दोत्कण्ठाभिः कृताभिरभूयत ॥ ९ ॥

कोशः—"मन्दो मूढे शनौ रोगिण्यलसे भाग्यवर्जिते । गजजातिप्रभेदेऽल्पे स्वैरं मन्दरते खले" इत्यनेकार्थसङ्ग्रहः । "उत्कण्ठोत्कलिके समे" इत्यमरः ॥ ९ ॥

तात्पर्यार्थः—यथा लोका आम्रफलं सुमधुरमतिसुगन्धि प्राप्य तत्कलिकायां मन्दोत्कण्ठा भवन्ति तद्वद् दिलीपापेक्षया दयादाक्षिण्यादिगुणाधिक्य रघौ विलोक्य दिलीपविषये सर्वाः प्रजा मन्दौत्सुक्यवत्यो बभूवुः ॥ ९ ॥

भाषार्थः—उन रघु महाराज ने प्रजा वर्ग को अपने पिता महाराज दिलीप के विषय में जैसे आम का फल फूल ( बौर ) के निकलने के विषय में उस ( बौर ) की अपेक्षा अधिक गुण होने से लोगों को स्वल्प उत्कण्ठा वाला बना देता है उसी भांति बना दिया अर्थात् रघु के गुणों से लोग महाराज दिलीप को भूल गये ॥ ९ ॥

*अथ रघोः सदसतोर्मध्ये सदेवाभिमतमासीदित्याह*—

**नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।**
**पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ॥ १० ॥**

सञ्जीविनी—नयेति । नयविद्भिर्नीतिशास्त्रज्ञैर्नवे तस्मिन्राज्ञि विषये । तमधिकृत्येत्यर्थः । सद्धर्मयुद्धादिकमसत्कूटयुद्धादिकं चोपदर्शितम् । तस्मिन्राज्ञि पूर्वः पक्ष एवाभवत् । संक्रान्त इत्यर्थः । उत्तरः पक्षो नाभवत् । न संक्रान्त इत्यर्थः । तत्र सदसतोर्मध्ये सदेवाभिमतं नासत् । तदुद्भावनं तु ज्ञानार्थमेवेत्यर्थः । पक्षः साधनयोग्यार्थः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति केशवः ॥ १० ॥

अन्वयः—नयविद्भिः, नवे, राज्ञि, सद्, असद्, च, उपदर्शिते, तस्मिन्, पूर्वः, पक्षः, एव,

अभवत्, उत्तरः, "पक्षः" न, अभवत् ॥ १० ॥

व्याख्या—नयविद्भिः = नीतिज्ञैः, राजनीतिज्ञैरिति यावद् । नवे = नवीने, राज्ञि = नृपे, रघाविति यावद् । सत् = धर्मयुद्धादिकम्, असत् = छलपूर्णयुद्धादिकं, च = समुच्चयेऽर्थे, उपदर्शितं = निवेदितं, सदिति शेषः । तस्मिन् = पूर्वोक्ते, राज्ञि रघाविति यावद् । पूर्वः = प्रथमः, सदसतोर्मध्ये प्रथमो धर्म एवेति भावः । पक्षः = साध्यः, साधनयोग्यार्थ इति यावद् । एव = अवधारणेऽर्थे, अभवत् = आसीत्, उत्तरः = द्वितीयः, पूर्वापेक्षयाऽपर इति भावः । "पक्षः = अधर्मपक्षः" न = नहि, अभवत् = बभूव ॥ १० ॥

समासादि—नयं विदन्तीति नयविदः (पुं०) तैर्नयविद्भिः ॥ १० ॥

व्याकरणम्—उपदर्शितम् = उप + (दृशिर् (प्रेक्षणे—इरित्) + णिच्) दर्शि + इट् + क्तः + सु । अभवत् = अट् + भू (सत्तायाम्) + शप् + लङ्, लङस्तिपि रूपम् ॥ १० ॥

वाच्यान्तरं—नयविदो नवे राज्ञि सदसच्चोपदर्शितवन्तः, तस्मिन् पूर्वेण पक्षेणैवाभूयत, उत्तरेण नाभूयत ॥ १० ॥

कोशः—"नयः स्यान्नैथमादिषु । नीतिद्यूतभिदो." इत्यनेकार्थसङ्ग्रहः ॥ १० ॥

तात्पर्यार्थः—राजनीतिज्ञा राजमन्त्रिणो नूतनं तं राजानं रघुमधिकृत्य धर्मयुद्धादिकं सत् तथा कपटयुद्धादिकमसदुपदिष्टवन्तः परन्तु तस्मिन् पूर्वो धर्मपक्ष एवाभूद् रुचिविषयो नत्वधर्मपक्षोऽपरः ॥ १० ॥

भाषाऽर्थः—नीति जानने वाले मन्त्रियों ने नवीन महाराज रघु के विषय में अच्छा धर्मयुद्धादिक और बुरा कपट-युद्धादिक दोनों निवेदन कर के दिखाया, पर उन के विषय में पहिला धर्मयुद्धादिक पक्ष (करने के योग्य) निश्चय करके हुआ, दूसरा अधर्मयुद्धादिक पक्ष (करने के योग्य) नहीं हुआ ॥ १० ॥

*अथ रघो राज्ये द्रव्येषु गुणानां गन्धादीनामुत्कर्षमाह—*

पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११ ॥

सञ्जीविनी—पञ्चानामिति । पृथिव्यादीनां पञ्चानां भूतानामपि गुणा गन्धादय उत्कर्षमतिशयं पुपुषुः । अत्रोत्प्रेक्षते—तस्मिन्रघौ नाम नवे महीपाले सर्वं वस्तुजातं नवमिवाभवत् । तदेव भूतजातमिदानीमपूर्वगुणयोगादपूर्वमिवाभवदिति भावः ॥ ११ ॥

अन्वयः—पञ्चानां, भूतानाम्, अपि, गुणाः, उत्कर्षम्, पुपुषुः, तस्मिन्, नवे, महीपाले, "सति" सर्वं, नवम्, इव, अभवत् ॥ ११ ॥

व्याख्या—पञ्चानां = पञ्चसङ्ख्यापरिमितानां, भूतानां = पृथिव्यप्तेजोवाय्वाकाशानाम्, अपि = सम्भावनायां, गुणाः = गन्धरसरूपस्पर्शशब्दाः, उत्कर्षम् = अतिशयं, पुपुषुः = अपुष्यन्, तस्मिन् = पूर्वोक्ते, रघाविति यावद् । नवे = नूतने, महीपाले = पृथ्वीरक्षके, नृप इति यावत् । सतीति शेषः । सर्वं = निखिलं, वस्तुजातमिति भावः, नवं = नूतनम्, इव = यथा, अभवत् = आसीत् ॥ ११ ॥

समासादि—महीं पालयतीति महीपालः (पुं०) तस्मिन् महीपाले ॥ ११ ॥

व्याकरणम्—पुपुषुः = पुष (पुष्टौ—अकारेत्) + लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् । अभवत् = अट् + भू (सत्तायाम्) + शप् + लङ्, लङस्तिपि रूपम् ॥ ११ ॥

वाच्यान्तरं—पञ्चानां भूतानामपि गुणैरुत्कर्षः पुपुषे, तस्मिन्नवे महीपाले सर्वेण नवेनेवाभूयत ॥ ११ ॥

कोशः—"भूतं सत्योपमानयोः । प्राप्तेऽतीते पिशाचादौ पृथ्व्यादौ जन्तुयुक्तयोः" इत्यनेकार्थसङ्ग्रहः । "उत्कर्षोऽतिशये" इत्यमरः ॥ ११ ॥

तात्पर्यार्थः—पृथिव्यप्तेजोवाय्वाकाशानां पञ्चमहाभूतानामपि गुणा गन्धरसरूपस्पर्शशब्दा अप्युत्कर्षं प्रापुर्यतोऽपूर्वगुणयोगात्सर्वमपूर्वमिवाभवत्, नवीने राज्ञि सति सर्वं वस्तु नवीनमिवाभवत्॥ ११॥

भाषाऽर्थः—पृथिवी-जल-तेज-वायु-आकाश इन पांच महाभूतों के भी गुण गन्ध-रस-रूप-स्पर्श-शब्द, अत्यन्त पुष्ट हुये (अर्थात् पहले की अपेक्षा आधिक्य को प्राप्त किये) उस नवीन महाराज रघु के राजा होने पर सभी वस्तुयें नवीन के तरह हो गईं॥ ११॥

*अथ रघुरन्वर्थो राजाऽभूदित्याह—*

**यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।**
**तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥ १२॥**

सञ्जीविनी—यथेति। यथा चन्दयत्याह्लादयतीति चन्द्र इन्दुः। चदिधातोरौणादिको रप्रत्ययः। प्रह्लादनादाह्लादकरणादन्वर्थोऽनुगतार्थनामकोऽभूत्। यथा च तपतीति तपनः सूर्यः। "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यनेन ल्युट्प्रत्ययः। प्रतापात्संतापजननादन्वर्थः। तथैव स राजा प्रकृतिरञ्जनादन्वर्थः सार्थकराजशब्दोऽभूत्। यद्यपि राजशब्दो राजतेर्दीप्त्यर्थात्कनिन्प्रत्ययान्तो न तु रञ्जेस्तथाऽपि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना॥१२॥

अन्वयः—यथा, चन्द्रः, प्रह्लादनात्, अन्वर्थः, अभूत्, यथा, तपनः, प्रतापात्, "अन्वर्थः" तथा, एव, सः, राजा, प्रकृतिरञ्जनात् "अन्वर्थः", अभूत्"॥ १२॥

व्याख्या—यथा = येन प्रकारेण, चन्द्रः = इन्दुः, प्रह्लादनात् = आह्लादकरणात्, अन्वर्थः = सार्थकः, अभूत् = बभूव, यथा = येन प्रकारेण, चेति शेषः,। तपनः = सूर्यः, प्रतापात् = प्रकृष्टतापजननात्, "अन्वर्थः, अभूत्"। तथा = तेन प्रकारेण, एव = अवधारणेऽर्थे, सः = पूर्वोक्तः, रघुरिति यावत्, राजा = नृपः, प्रकृतिरञ्जनात् = पौरवर्गरागजननात्, अन्वर्थः = सार्थकनामा, सार्थकराजशब्द इति यावत्। अभूत्॥ १२॥

समासादि—चन्दयत्याह्लादयतीति चन्द्रः (पुं०)। तपतीति तपन (पुं०)। अर्थमनुगतोऽन्वर्थः (त०पु०)। राजते रञ्जयतीति राजा (पुं०)। अत्र धातूनामनेकार्थत्वात् रञ्जनार्थेको राजतिर्बोध्यः। प्रकृते रञ्जनं प्रकृतिरञ्जनं (त०पु०) तस्मात्प्रकृतिरञ्जनात्॥ १२॥

व्याकरणं—चन्द्रः = चदि (आह्लादे—इदित्) + रक् + सु, "स्फायितञ्चि" इत्यादिनौणादिके रक्प्रत्यये रूपम्। तपनः = तप (सन्तापे—अकारेत्) + ल्युः + सु, नन्द्यादित्वाल्ल्युप्रत्यये रूपम्। अभूत् = अट् + भू (सत्तायाम्—) + च्लि + सिच् + लुङ्, लुङ्स्तिपि रूपम्। राजा = राजृ (दीप्तौ-ऋदित्) + कनिन् + सु, "कनिन् युवृषि" इत्यादिना कनिन्प्रत्यये रूपम्॥ १२॥

वाच्यान्तरं—यथा चन्द्रेण प्रह्लादनादन्वर्थेनाभावि यथा च तपनेन प्रतापादन्वर्थेनाभावि तथैव तेन राज्ञा प्रकृतिरञ्जनादन्वर्थेनाभावि॥ १२॥

कोशः—"प्रतापस्तेजसि स्वेदे" इत्यनेकार्थसङ्ग्रहः। "भानुर्हंसः सहस्रांशुस्तपनः सविता रवि." इत्यमरः। "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गेऽमी पक्षत्यादयः स्त्रियाम्" इति मेदिनी॥ १२॥

तात्पर्यार्थः—लोकानामाह्लादजननात् यथा चन्द्रः, सन्तापजननात्सूर्यश्च यथा सार्थकनामानावभूतां तथा रघुरपि पौरवर्गस्य रागजननात् सार्थकनामा राजाऽभूत्॥ १२॥

भाषाऽर्थः—जिसप्रकार से चन्द्रमा आल्हाद उत्पन्न करने से सार्थक नाम वाला हुआ, और जिस प्रकार से सूर्य सन्ताप उत्पन्न करने से यथार्थ नामवाला हुआ, उसी प्रकार से वे रघु महाराज भी पुरवासी लोगों के अनुराग को पैदा करने से यथार्थ नाम वाले राजा हुये॥१२

*अथ चक्षुष्मतोऽपि रघोर्लोचनं शास्त्रमेवासीदित्याह—*

**कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।**

**चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ १३ ॥**

सञ्जीविनी—काममिति । विशाले तस्य रघोर्लोचने कामं कर्णान्तयोर्विश्रान्ते कर्णप्रान्तगते । चक्षुष्मत्ता तु । चक्षुःफलं त्वित्यर्थः । सूक्ष्मान्कार्यार्थान्कर्तव्यार्थान्दर्शयति प्रकाशयतीति सूक्ष्मकार्यार्थदर्शिना शास्त्रेणैव । शास्त्रं दृष्टिर्विवेकिनामिति भावः ॥ १३ ॥

अन्वयः—विशाले, तस्य, लोचने, कामं, कर्णान्तविश्रान्ते, "आस्ताम्", चक्षुष्मत्ता, तु, सूक्ष्मकार्यार्थदर्शिना, शास्त्रेण, एव, "आसीत्" ॥ १३ ॥

व्याख्या—विशाले = पृथुले, आयत इति यावत् । तस्य = पूर्वोक्तस्य, रघोरिति यावद् । लोचने = नेत्रे, कामं = प्रकामं, कर्णान्तविश्रान्ते = श्रवणप्रान्तगते, आस्तामिति शेषः । चक्षुष्मत्ता = नेत्रवत्त्वं, नेत्रफलमिति यावत् । तु = किन्तु, सूक्ष्मकार्यार्थदर्शिना = अणुकर्त्तव्यवस्तुप्रकाशिना, गूढकर्त्तव्यविषयालोचकेनेति यावद् । शास्त्रेण = नीतिधर्मप्रभृतिप्रतिपादकागमेन, आसीदिति शेषः । विवेकशालिनां नेत्रं शास्त्रमिति भावः । उक्तं च—"अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः" इति ॥१३॥

समासादि—कर्णयोरन्तौ कर्णान्तौ (त०पु०), तयोर्विश्रान्ते कर्णान्तविश्रान्ते (त०पु०) । चक्षुरस्त्यस्येति चक्षुष्मान् (पुं०), तस्य भावश्चक्षुष्मत्ता (स्त्री०) । शिष्यतेऽनेनेति शास्त्रम् (न०लि०) तेन शास्त्रेण । कार्यस्यार्थाः कार्यार्थाः (त०पु०), सूक्ष्माश्च ते कार्यार्थाः सूक्ष्मकार्यार्थाः (क०धा०), तान् द्रष्टुं शीलमस्येति सूक्ष्मकार्यार्थदर्शि (न०लि०) तेन सूक्ष्मकार्यार्थदर्शिना ॥ १३ ॥

व्याकरणं—चक्षुष्मत्ता = (चक्षुष् + सु + मतुप् + ) चक्षुष्मत् + ङस् + तल् + टाप् + सु । शास्त्रेण = शासु (अनुशिष्टौ–उदित्) + ष्ट्रन् + टा, "सर्वधातुभ्यः ष्ट्रन्" इत्यौणादिके ष्ट्रन्प्रत्यये रूपम् ॥ १३ ॥

वाच्यान्तरं—विशालाभ्यां तस्य लोचनाभ्यां कामं कर्णान्तविश्रान्ताभ्यामभावि, चक्षुष्मत्तया तु सूक्ष्मकार्यार्थदर्शिना शास्त्रेणाऽभावि ॥ १३ ॥

कोशः—"कामं प्रकामेऽनुमतावसूयाऽनुगमेऽपि च" इत्यनेकार्थसङ्ग्रहः । "विशाला त्विन्द्रवारुण्यामुज्जयिन्यान्तु योषिति । मृगपक्षिभिदोः पुंसि पृथुलेऽत्वभिधेयवत्" इति मेदिनी । 'आगमः शास्त्र आगतौ' इति । "सूक्ष्मं स्यात् कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके" इति च मेदिनी ॥ १३ ॥

तात्पर्यार्थः—यद्यपि तस्य रघोः कामं कर्णान्तगते विशाले नेत्रे आस्तां तथाऽपि स ताभ्यामेव नेत्रवान् नाभूत् किन्तु परोक्षार्थदर्शिना शास्त्ररूपेण नेत्रेण तस्य नेत्रशालित्वमासीत् ॥ १३ ॥

भाषाऽर्थः—यद्यपि बड़े २ उन रघु महाराज के लोचन हद्द से ज्यादा कान तक फैले हुये थे, परन्तु आंख का होना ( आंख का फल ) तो गूढ कर्तव्य विषयों के दिखाने वाले शास्त्र से ही था, अर्थात् वे शास्त्र से देख कर कार्य करते थे नकि केवल आंख से ॥ १३ ॥

*अथ रघोर्दिग्विजययोग्यसमयः शरदृतुः प्राप्त इत्याह—*

**लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।**
**पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥**

सञ्जीविनी—लब्धेति । अथ लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थ समाहितचित्तमेनं रघुं पङ्कजलक्षणा पद्मचिह्ना । श्रियोऽपि विशेषणमेतत् । शरत् । द्वितीया पार्थिवश्री राजलक्ष्मीरिव । समुपस्थिता प्राप्ता । 'रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा योधानामपि संग्रहोऽपि तुल्या मानव्यवस्थापनम् । साम्यं लिङ्गिषु दानधर्मकरणं त्यागं समानेऽर्चन कार्याण्येव महीभुजां प्रशमनान्येतानि राज्ये नवे ) ॥१४॥

अन्वयः—अथ, लब्धप्रशमनस्वस्थम्, एनं, पङ्कजलक्षणा, शरद्, द्वितीया, पार्थिवश्रीः, इव, समुपस्थिता ॥ १४ ॥

व्याख्या—अथ = पश्चात्, सिंहासनारोहणानन्तरमिति भावः । लब्धप्रशमनस्वस्थम् = प्राप्तराज्यस्थिरीकरणशान्तचित्तम्, प्राप्तस्य राज्यस्य पौरजनरक्षणप्रभृतिप्रशमनात्मककार्य-द्वारा स्थिरीकरणेन निरुद्विग्नचित्तमित्यर्थः । एनं = पूर्वोक्तं, रघुमिति यावद् । पङ्कजलक्षणा = कमलचिह्ना, पार्थिवश्रियोऽपि विशेषणमेतदित्यप्यूह्यम् । शरद् = आश्विनकार्त्तिकाभ्यामृतोर्नाम, शरदृतुरिति यावद् । द्वितीया = अपरा, पार्थिवश्रीः = राजलक्ष्मीः, इव = यथा, समुपस्थिता = प्राप्ता ॥ १४ ॥

समासादि—लब्धस्य प्रशमनं लब्धप्रशमनं (त०पु०), लब्धप्रशमनेन स्वस्थो लब्ध-प्रशमनस्वस्थः (त०पु०) तं तथोक्तम् । पार्थिवस्य श्रीः पार्थिवश्रीः (त०पु०) । द्वयोः पूरणी द्वितीया (स्त्री०) । शीर्यन्तेऽस्यां पाकेनौषधय इति शरत् ( स्त्री० ) । पङ्कजं लक्षणं यस्याः सा पङ्कजलक्षणा ( ब० व्री० ) ॥ १४ ॥

व्याकरणं—लब्धस्य = डुलभष् ( प्राप्तौ-डुकाराकारषकारेत् )+क्तः+ङस्, "झषस्त-थोर्धोऽधः" इति तस्य धत्वे जश्त्वे रूपम् । समुपस्थिता = सम्+उप+ष्ठा ( गतिनिवृत्तौ ) +क्तः+टाप्+सु । द्वितीया = द्वि+ओस्+तीयः+टाप्+सु, "द्वेस्तीयः" इति तीयप्रत्यये टापि रूपम् । शरत् = शॄ(हिंसायाम्)+अदि+सु, "शॄदृभसोऽदिः" इत्यदिप्रत्यये इकारस्ये-त्संज्ञायां लोपे च कृते धातोर्गुणे रूपम् ॥ १४ ॥

वाच्यान्तरम्—अथ लब्धप्रशमनस्वस्थ एष पङ्कजलक्षणया शरदा द्वितीयया पार्थिवश्रि-येव समुपतस्थे, अथवा-अथ लब्धप्रशमनस्वस्थमेनं पङ्कजलक्षणया शरदा द्वितीयया पार्थि-वश्रियेव समुपस्थितयाऽभावि ॥ १४ ॥

कोशः—"द्वितीया तिथिभित्पत्न्यो. पूरणे तूभयोस्त्रिषु" इति मेदिनी । 'शरद् स्त्री वत्स-रेऽप्यृतौ" इत्यपि ॥ १४ ॥

तात्पर्यार्थः—स रघुर्यदा प्राप्तराज्यः सन् पौरजनस्य रक्षणेन देशनगरग्रामेषु प्राकारादि-भिर्गुप्त्या योधानां सङ्ग्रहेण तुलया मानव्यवस्थापनेनेत्यादिना प्रशमनात्मककार्येण सर्वत्र शान्तिं राज्ये कृत्वा स्वस्थो बभूव, तदा शरद् ऋतुः प्रफुल्लकमलरूपेणोपलक्ष्यमाणाऽपरा राजलक्ष्मीरिव तं सेवितुं सम्प्राप्ता ॥ १४ ॥

भाषार्थः—इसके ( राजासन पर बैठने के ) बाद पाये हुये राज्य का ( पौरजनों की-रक्षा आदि प्रशमनात्मक कार्यों से ) प्रशमन ( शान्तिस्थापन ) करने से शान्त चित्त हुये इन रघु महाराज को कमल ही है चिह्न जिसका ऐसा शरद् ऋतु दूसरी कमलरूप चिह्नवाली राजलक्ष्मी की भांति प्राप्त हुई ॥ १४ ॥

*अथ शरदृतुगुणान् वर्णयन् कविरादौ सूर्यस्य रघोश्च साम्यस्थितिमाह—*

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः
प्रतापस्तस्य भानोश्च युगपद् व्यानशे दिशः ॥ १५ ॥

सञ्जीविनी—निर्वृष्टेति । निःशेषं वृष्टा निर्वृष्टाः । कर्तरि क्तः । अत एव लघवः । तैर्मेघैर्मु-क्तवर्त्मा त्यक्तमार्गः । अत एव सुदुःसहः । तस्य रघोर्भानोश्च प्रतापः पौरुषमातपश्च । 'प्रतापौ पौरुषातपौ' इति यादवः । युगपद्दिशो व्यानशे व्याप ॥ १५ ॥

अन्वयः—निर्वृष्टलघुभिः, मेघैः, मुक्तवर्त्मा, "अत एव," सुदुःसहः, तस्य, भानोः, च, प्र-तापः, युगपद्, दिशः, व्यानशे ॥ १५ ॥

व्याख्या—निर्वृष्टलघुभिः = निःशेषजलवर्षणभाररहितैः, मेघैः = जलदैः, मुक्तवर्त्मा = त्यक्तमार्गः, अत एवेति शेषः । सुदुःसहः = सौष्ठवेन दुःसोढुमशक्यः, अतितीव्र इति यावत् ।

तस्य = पूर्वोक्तस्य, रघोरिति यावद् । भानोः = रवेः, च = समुच्चयेऽर्थे, प्रतापः = पौरुषं, "सूर्यपक्षे" आतपश्च । युगपद् = समकालं, दिशः = आशाः, व्यानशे = व्याप्नोत् ॥ १९ ॥

समासादि—निःशेषं वृष्टा निर्वृष्टाः ( त० पु० ), निर्वृष्टा अत एव लघवो निर्वृष्टलघवः ( क० धा० ) तैर्निर्वृष्टलघुभिः । मेहन्तीति मेघाः (पुं०) तैर्मेघैः । मुक्तं वर्त्म यस्य स मुक्तवर्त्मा ( ब० व्री० ) । दुःखेन सोढुमशक्यो दुःसहः ( पुं० ), सुष्ठु दुःसहः सुदुःसहः (त०पु०), भातीति भानुः ( पुं० ) तस्य भानोः ॥ १९ ॥

व्याकरणम्—मेघैः = मिह ( सेचने-अकारेत् ) + अच् + भिस्, पचादित्वादच्प्रत्यये "न्यङ्क्वादीनां च" इति कुत्वे लघूपधगुणे रूपम् । सुदुःसहः = सु + दुस् + षह ( मर्षणे—अकारेत ) + खल् + सु । भानोः = भा ( दीप्तौ ) + नुः + ङस्, "दाभाभ्यां नुः" इत्यौणादिके नुप्रत्यये रूपम् । व्यानशे = वि + अशू ( व्याप्तौ—ऊदित् ) + लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये "अश्नोतेश्च" इतिनुडागमे रूपम् ॥ १९ ॥

वाच्यान्तरं—निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मना सुदुःसहेन तस्य भानोश्च प्रतापेन युगपद्दिशो-व्यानशिरे ॥ १९ ॥

कोशः—"युगपदेकदा" इत्यमरः ॥ १९ ॥

तात्पर्यार्थः—पूर्णतया जलवर्षणेन भाररहिता मेघाः सूर्यस्य नभोमार्गं रघोश्च स्थलमार्गं न रुरुधुः, ततो भानोरातपः सर्वदिक्षु व्याप्नोद्, रघोः प्रतापोऽपि दिग्विजयाय प्रयातुकामतया सर्वत्र व्याप्तो बभूव ॥ १९ ॥

भाषाऽर्थः—अच्छीतरह से जल बरसा चुकने से हलके हुये मेघों ने जिसके मार्ग को छोड़ दिया है अत एव अत्यन्त दुःसह रघु का प्रताप और सूर्य का तेज दोनों एक साथ ही सारे दिशाओं में व्याप्त होगया ॥ १९ ॥

*अथेन्द्रस्य वार्षिकधनुःसंहारानन्तरं रघोर्जैत्रधनुर्धारणमाह—*

**वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।**
**प्रजाऽर्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ २० ॥**

सञ्जीविनी—वार्षिकमिति । इन्द्रः । वर्षासु भवं वार्षिकम् । वर्षानिमित्तमित्यर्थः । "वर्षाभ्यष्ठक्" इति ठक्प्रत्ययः । धनुः संजहार । रघुर्जैत्रं जयशीलम् । जेतृशब्दात्तृन्नन्तात् "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण्प्रत्ययः । धनुर्दधौ । हि यस्मात्ताविन्द्ररघू प्रजानामर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधनविषये पर्यायेणोद्यते कार्मुके याभ्यां तौ पर्यायोद्यतकार्मुकौ । 'पर्यायोद्यमविश्रमौ' इति पाठान्तरे पर्यायेणोद्यमो विश्रमश्च ययोस्तौ पर्यायोद्यमविश्रमौ । द्वयोः पर्यायकरणादक्लेश इति भावः ॥२०॥

अन्वयः—इन्द्रः, वार्षिकं, धनुः, संजहार, रघुः, जैत्रं, "धनुः," दधौ, हि, तौ, प्रजाऽर्थसाधने, पर्यायोद्यतकार्मुकौ, "आस्ताम्" ॥ २० ॥

व्याख्या—इन्द्रः = पाकशासनः, वार्षिकं = प्रावृड्भव, वर्षानिमित्तमिति भावः । धनुः = शरासनं, संजहार = संहृतवान्, रघुः = दिलीपसूनुः, जैत्रं = विजयशीलं, "धनुः" । दधौ = गृहीतवान्, हि = यतः, तौ = पूर्वोक्तौ, इन्द्ररघू इति यावत् । प्रजाऽर्थसाधने = जनप्रयोजननिर्वर्तने, प्रजानां प्रयोजनस्य वृष्टिरूपस्य दिग्विजयरूपस्य च साधनविषय इति यावत् । पर्यायोद्यतकार्मुकौ = अनुक्रमसज्जीकृतशरासनौ, आस्तामिति शेषः ॥ २० ॥

समासादि—वर्षासु भवं वार्षिकं ( न० लिं० ) तद्वार्षिकम् । जेत्रिति जैत्रं ( न० लिं० ) तज्जैत्रम् । प्रजानामर्थः प्रजाऽर्थः ( त० पु० ), तस्य साधनं प्रजाऽर्थसाधनं ( त० पु० ) तस्मिन् प्रजाऽर्थसाधने । पर्यायेणोद्यते पर्यायोद्यते ( त० पु० ), कर्मणे प्रभवत इति कार्मुके ( न० लिं० ), पर्यायोद्यते कार्मुके याभ्यामिति पर्यायोद्यतकार्मुकौ (ब० व्री०) ॥ २० ॥

व्याकरणे—संजहार=सम्+हृञ् ( हरणे-ञित् )+लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् । दधौ=डुधाञ् ( धारणपोषणयोः-डुञित् )+लिट्, लिटस्तिपो णल औत्वे द्वित्वेऽभ्यासकार्ये रूपम् । कार्मुके=कर्मन्+ङे+उकञ्+औ, "कर्मण उकञ्" इत्युकञ्प्रत्यये "नस्तद्धिते" इति टिलोपे वृद्धौ रूपम् ॥ १६ ॥

वाच्यान्तरम्—इन्द्रेण वार्षिकं धनुः सजह्रे रघुणा जैत्रं धनुर्दधे हि ताभ्यां प्रजाऽर्थसाधने पर्यायोद्यतकार्मुकाभ्यामभावि ॥ १६ ॥

कोशः—"साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ । निर्वर्तनोपायमेढ्रे दापनेऽनुगमे धने" इति मेदिनी । "आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः । पर्यायश्च" इत्यमरः ॥ १६ ॥

तात्पर्यार्थः—शरदृतौ महेन्द्रो वर्षाकालोद्भवं धनुः संजहार, तथा रघुर्दिग्विजयाय जयशीलं धनुर्गृहीतवान्, यतस्ता विन्द्ररघू पर्यायेण स्वं स्वं धनुः सज्जीकृत्य प्रजानामर्थस्य वृष्टिरूपस्य दिग्विजयरूपस्य च निर्वर्तनविषये तत्परावास्ताम् ॥ १६ ॥

भाषाऽर्थः-इन्द्र ने वर्षा काल में उगने वाले धनुष् को रक्खा, और रघु ने विजय करने वाले धनुष् को धारण किया, क्योंकि वे दोनों इन्द्र और रघु प्रजाओं का प्रयोजन जो वर्षा का होना तथा दिग्विजय का करना है, सो इन दोनों के सिद्ध करने के विषय में बारी बारी से अपनेर धनुष् को धारण किये हुये रहते थे ॥ १६ ॥

*अथ शरदृतुकर्त्तृकं रघो राजचिह्नस्य छत्रचामररूपस्यानुकरणमाह—*

**पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।**
**ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७ ॥**

सञ्जीविनी—पुण्डरीकेति । पुण्डरीकं सिताम्भोजमेवातपत्रं यस्य स तथोक्तः । विकसन्ति काशानि काशाख्यतृणकुसुमान्येव चामराणि यस्य स तथोक्तः । ऋतुः शरदृतुः पुण्डरीकनिभातपत्रं काशनिभचामरं तं रघुं विडम्बयामासानुचकार । तस्य रघोः श्रियं पुनः शोभां तु न प्राप । 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिव कथ्यते' इति शाश्वतः ॥ १७ ॥

अन्वयः—पुण्डरीकातपत्रः, विकसत्काशचामरः, ऋतुः, "पुण्डरीकातपत्रं, विकसत्काश चामरं, तं, विडम्बयामास, तच्छ्रियं, पुनः, न, प्राप ॥ १७ ॥

व्याख्या—पुण्डरीकातपत्रः=सिताम्भोजच्छत्रः, श्वेतकमलरूपच्छत्रशालीति यावद् । विकसत्काशचामरः=परिस्फुटदिक्षुगन्धाप्रकीर्णकः, प्रफुल्लितकाशरूपचामरयुक्त इति भावः । ऋतुः=शरदाख्य ऋतुः, पुण्डरीकातपत्रं=श्वेतकमलतुल्यधवलच्छत्रयुक्तं, विकसत्काशचामरं =प्रफुल्लितकाशतुल्यधवलचामरयुक्तं, विभक्तिविपरिणामेन ऋतोर्विशेषणद्वयस्यैवात्र रवावन्वयो बोध्यः । तं=पूर्वोक्तं, रघुमिति यावद् । विडम्बयामास=अनुकृतवान्, तच्छ्रियं =पूर्वोक्तरघुशोभां, पुनः=तु, निश्चयार्थकमव्ययमेतद् । न=नहि, प्राप=प्राप्नोत् ॥ १७ ॥

समासादि—पुण्डयतीति पुण्डरीकं (न०लिं०), तदेवातपत्रं यस्य स पुण्डरीकातपत्रः (ब०व्री) । रघुपक्षे-पुण्डरीकमिव श्वेतमातपत्रं यस्य स पुण्डरीकातपत्रः ( ब०व्री० ) तं तथोक्तम् । विकसन्तश्च ते काशा विकसत्काशा (क०धा०), त एव चामराणि यस्य स विकसत्काशचामरः (ब०व्री०), रघुपक्षे-विकसत्काशा इव चामराणि यस्य स विकसत्काशचामरः (ब०व्री०) तं तथोक्तम् । तस्य श्रीस्तच्छ्रीः (त०पु०) तां तच्छ्रियम् ॥ १७ ॥

व्याकरणे—पुण्डरीकं=पुडि ( भूषायाम्-इदितं )+अरीकन्+सु, "कर्करीकादयश्च" इत्यौणादिकेऽरीकन्प्रत्यये रूपम् । विडम्बयामास=( विडम्ब ( अनुकरणे-अदन्तोऽयम् ) +णिच्-) विडम्बि+आम्+अस ( भुवि-अकारेत् )+लिट्, लिटस्तिपो णलि रूपम् । प्राप=प्र+आप्लृ (व्याप्तौ—लृदित) लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् ॥१७॥

वाच्यान्तरं—पुण्डरीकातपत्रेण विकसत्काशचामरेण ऋतुना स विडम्बयाञ्चक्रे तच्छ्रीः

पुनर्न प्रापे ॥ १७ ॥

कोशः—"पुण्डरीकं सिताम्भोजम्" इति । "अथो काशमस्त्रियाम् । इक्षुगन्धा पोटगलः" इति चामरः । "विडम्बयत्यनुकरोत्यात्मनेऽनुहरत्यदः । अनुकारे" इत्याख्यातचन्द्रिका॥१७॥

तात्पर्यार्थः—यद्यपि शरदृतुः श्वेतकमलरूपच्छत्रेण प्रफुल्लितकाशरूपचामरेण च श्वेतच्छत्रचामरधारिणश्चक्रवर्त्तिनो रघोरनुकरणं कृतवांस्तथाऽपि यादृशी सर्वोत्कृष्टतमा तस्य शोभाऽसीत् तादृशीं शोभां कथं चिदपि लब्धुं न शशाक ॥१७॥

भाषाऽर्थः—जिसका श्वेतकमल ही छत्र है तथा खिले हुये काश ही चामर हैं-ऐसा जो शरद् ऋतु है, उसने यद्यपि श्वेतकमल के समान श्वेत छत्र तथा खिले हुये काश के समान चामर वाले उन रघु महाराज का अनुकरण किया, तथाऽपि उनकी शोभा को नहीं प्राप्त किया ॥ १७ ॥

*अथ सर्वासां प्रजानां तस्मिन् रघौ पूर्णतमा प्रीतिरासीदित्याह—*

प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥ १८ ॥

सञ्जीविनी—प्रसादेति । प्रसादेन सुमुखे तस्मिन्रघौ विशदप्रभे निर्मलकान्तौ चन्द्रे च द्वयोर्विषये तदा चक्षुष्मतां प्रीतिरनुरागः समरसा समस्वादा । तुल्ययोगेति यावत् । 'रसो गन्धे रसः स्वादे' इति विश्वः । आसीत् ॥ १८ ॥

अन्वयः—प्रसादसुमुखे, तस्मिन् , विशदप्रभे, चन्द्रे, च, द्वयोः, तदा, चक्षुष्मतां, प्रीतिः, समरसा, आसीत् ॥ १८ ॥

व्याख्या—प्रसादसुमुखे = अनुग्रहशोभनानने, तस्मिन् = पूर्वोक्ते, रघाविति यावद् । विशदप्रभे = स्वच्छकान्तौ, चन्द्रे = चन्द्रमसि, च = समुच्चयेऽर्थे, द्वयोः = उभयोः, विषय इति शेषः । तदा = तस्मिन् काले, चक्षुष्मतां = नेत्रवतां, जनानामिति भावः । प्रीतिः = अनुरागः, समरसा = तुल्यस्वादा, समानयोगेति यावद् । आसीत् = बभूव ॥ १८ ॥

समासादि—सुष्ठु मुखं यस्य स सुमुखः (ब०व्री०), प्रसादेन सुमुखः प्रसादसुमुखः (त०पु०) तस्मिन् प्रसादसुमुखे । प्रकर्षेण भातीति प्रभा (स्त्री०) विशदा प्रभा यस्य स विशदप्रभः (ब०व्री०) तस्मिन् विशदप्रभे । चक्षूंषि सन्ति येषान्ते चक्षुष्मन्तः (पुं०) तेषां चक्षुष्मताम् । रस्यत आस्वाद्यतेऽसाविति रसः (पुं०), समो रसो यस्याः सा समरसा (ब०व्री०) ॥ १८ ॥

व्याकरणम्—आसीत् = अस ( भुवि—अकारत् )+लङ्, लडस्तिपि रूपम् ॥ १८ ॥

वाच्यान्तरम्—प्रसादसुमुखे तस्मिन् विशदप्रभे चन्द्रे च द्वयोस्तदा चक्षुष्मतां प्रीत्या समरसयाऽभूयत ॥ १८ ॥

कोशः—"प्रसादस्तु प्रसन्नता" इति । "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु" इति चामरमेदिन्यौ ॥ १८ ॥

तात्पर्यार्थः—शरदृतौ निर्मलाकाशे यथा स्वच्छकान्तिं चन्द्रं दृष्ट्वा सर्वे जनाः प्रसन्ना भवन्ति तथैवानुग्रहेण सुन्दरमुखं रघुमपि दृष्ट्वा प्रसन्ना बभूवुः ॥ १८ ॥

भाषाऽर्थः—लोगों के ऊपर अनुग्रह करने से देखने में सुन्दर मुखवाले उन रघु महाराज तथा स्वच्छकान्ति वाले चन्द्रमा इन दोनों के विषय में उस समय जिनके आँखें थीं ऐसे लोगों की प्रीति समान ही थी ॥ १८ ॥

*अथ रघुयशसां धवलिमवर्णनमाह—*

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ १९ ॥

सञ्जीविनी—हंसश्रेणीष्विति । हंसानां श्रेणीषु पङ्क्तिषु तारासु नक्षत्रेषु कुमुदानि येषु स-

न्तीति कुमुद्वन्ति । 'कुमुद्वान्कुमुदप्राये' इत्यमरः । "कुमुदनडवेतसेभ्यो ड्मतुप्" । तेषु । कुमुदप्रायेष्वित्यर्थः । वारिषु च तदीयानां रघुसंबन्धिनां यशसां विभूतयः सम्पदः पर्यस्ता इव प्रसारिताः किम् । इत्युत्प्रेक्षा । अन्यथा कथमेषां धवलिमेति भावः ॥ १९ ॥

अन्वयः—हंसश्रेणीषु, तारासु, कुमुद्वत्सु, वारिषु, च, तदीयानां, यशसां, विभूतयः, पर्यस्ताः, इव, "किमासन्नित्युत्प्रेक्षा" ॥ १९ ॥

व्याख्या—हंसश्रेणीषु = मानसौकःपङ्क्तिषु, तारासु = ऋक्षेषु, नक्षत्रेष्विति यावत्, कुमुद्वत्सु = कुमुदप्रायेषु, वारिषु = जलेषु, सरोवरादिष्विति भावः। तदीयानां = तत्सम्बन्धिनां, रघुसम्बन्धिनामिति यावद् । यशसां = कीर्त्तीनां, विभूतयः = संपत्तयः, श्वेतत्वलक्षणा इति भावः । पर्यस्ताः = प्रसारिताः, इव = यथा, किमासन्नित्युत्प्रेक्षा ॥ १९ ॥

समासादि—हंसानां श्रेण्यो हसश्रेण्यः (त०पु०) तासु हंसश्रेणीषु । तरन्त्याभिरिति ताराः (स्त्री०) तासु तारासु । प्रायेण कुमुदानि सन्ति येषु तानि कुमुद्वन्ति (न०लिं०) तेषु कुमुद्वत्सु । तस्येमानि तदीयानि (न०लि) तेषां तदीयानाम् ॥ १९ ॥

व्याकरण—तारासु = तॄ ( प्लवनसन्तरणयोः ) + अङ् + टाप् + सुप्, "षिद्भिदादिभ्योऽङ्" इति भिदादित्वादङ्प्रत्यये गुणे रपरे टापि रूपम् । पर्यस्ताः = परि + असु (क्षेपणे—उदित्) + क्तः + टाप् + जस्, "यस्य विभाषा" इतीडभावे रूपम् ॥ १९ ॥

वाच्यान्तरं—हंसश्रेणीषु तारासु कुमुद्वत्सु वारिषु च तदीयानां यशसां विभूतिभिः पर्यस्ताभिरिवाभूयत ॥ १९ ॥

कोशः—"हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः" इति । "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इति चामरः ॥ १९ ॥

तात्पर्यार्थः—हंसानां पङ्क्तिषु नक्षत्रेषु कुमुदयुक्तेषु सरोवरादिषु यच्छ्वेतत्वमासीत् तद् रघुयशसां श्वेतत्वलक्षणाः समृद्धयः प्रसारिता इवासन् ॥ १९ ॥

भाषाऽर्थः—हंसों की पङ्क्तियों में नक्षत्रों में, और कुमुद से युक्त जलों में रघुसम्बन्धी यश की सफेदीरूप विभूति मानो फैली हुई थी ॥ १९ ॥

*ग्रामीणस्त्रियोऽपि रघुयशोगानपरायणा आसन्नित्याह—*

**इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।**
**आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ २० ॥**

सञ्जीविनी—इक्षुच्छायेति । इक्षूणां छायेक्षुच्छायम् । "छाया बाहुल्ये" इति नपुंसकत्वम् । तत्र निषण्णा इक्षुच्छायनिषादिन्यः । 'इक्षुच्छायानिषादिन्यः' इति स्त्रीलिङ्गपाठे इक्षोश्छायेति विग्रहः । अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात् । शालीन्गोपायन्ति रक्षन्तीति शालिगोप्यः सस्यपालिकाः स्त्रियः । कर्मण्यण् । "टिड्ढाणञ्०" इत्यादिना ङीप् । गोप्तू रक्षकस्य तस्य रघोः । गुणेभ्य उदयो यस्य तद् गुणोदयं गुणोत्पन्नमाकुमारं कुमारादारभ्य कथोद्घातः कथाऽऽरम्भो यस्य तत् । कुमारैरपि स्तूयमानमित्यर्थः । यशो जगुर्गायन्ति स्म । अथवा कुमारस्य सतो रघोर्याः कथा इन्द्रविजयादयस्तत आरभ्याकुमारकथम् । तत्राप्यभिविधावव्ययीभावः । आकुमारकथमुद्घातो यस्मिन्कर्मणि । गानक्रियाविशेषणमेतत् । 'स्यादभ्यादानमुद्घात आरम्भः' इत्यमरः । 'आकुमारकथोद्भूतम्' इति पाठे कुमारस्य सतस्तस्य कथाभिश्चरितैरुद्भूतं यद्यशस्तद्यश आरभ्य यशो जगुरिति व्याख्येयम् ॥ २० ॥

अन्वयः—इक्षुच्छायनिषादिन्यः, शालिगोप्यः, गोप्तुः, तस्य, गुणोदयम्, आकुमारकथोद्घातं, यशः, जगुः ॥ २० ॥

व्याख्या—इक्षुच्छायनिषादिन्यः = रसालातपाभावस्थायिन्यः, शालिगोप्यः = कलमादिधान्यरक्षित्र्यः, कृषीवलस्त्रिय इति भावः । गोप्तुः = पालयितुः, तस्य = पूर्वोक्तस्य, रघोरिति

यावद् । गुणादयं = शौर्यादिगुणोद्भवम्, आकुमारकथोद्घातं = कुमारपर्यन्तप्रबन्धकल्पनाऽऽरम्भं, कुमारैरपि गीयमानमित्यर्थः। यशः = कीर्त्तिं, जगुः = अगायन्, कीर्त्तयामासुरिति यावद्॥२०॥

समासादि—इक्षूणां छायेक्षुच्छायं ( त० पु० ), निषीदितुं शीलमासामिति निषादिन्यः ( स्त्री० ), इक्षुच्छाये निषादिन्य इतीक्षुच्छायनिषादिन्यः ( त० पु० ) । गोपायतीति गोप्ता ( पुं० ) तस्य गोप्तुः । गुणेभ्य उदयो यस्य तद् गुणोदयं (व्य० प० ब० व्री०) तत्तथोक्तम् । कथाया उद्घातः कथोद्घातः ( त० पु० ), कुमारादारभ्येत्याकुमारम् (अ०भा०), आकुमारं कथोद्घातो यस्य तदाकुमारकथोद्घातं ( ब०व्री० ) तत्तथोक्तम् । शालीन् गोपायन्तीति शालिगोप्यः (स्त्री०) ॥ २० ॥

व्याकरणं—जगुः = गै ( शब्दे ) + लिट्, लिटो झेरुसि धातोरात्वे द्वित्वेऽभ्यासकार्ये चुत्वे रूपम् ॥ २० ॥

वाच्यान्तरम्—इक्षुच्छायनिषादिनीभिः शालिगोपीभिर्गोप्तुस्तस्य गुणोदयमाकुमारकथोद्घातं यशो जगे ॥ २० ॥

कोशः—"रसाल इक्षुः" इति । "प्रबन्धकल्पना कथा" इति । "शालयः कलमाद्याश्च षष्टिकाद्याश्च" इति चामरः ॥ २० ॥

तात्पर्यार्थः—इक्षूणां छायासु समुपविष्टाः षष्टिकादिधान्यपालिकाः कृषीवलस्त्रियो रक्षितुस्तस्य रघोः शौर्यौदार्यादिगुणोद्भवं कुमारैरपि गीयमानं यशो गायन्ति स्म ॥ २० ॥

भाषाऽर्थः—ईख की छाया में बैठी हुई साठी आदि धान की रख वाली करने वाली किसानों की स्त्रियों ने रक्षा करने वाले उन रघु महाराज के शूरता उदारता आदि गुणों से प्रगट हुये बालकों तक से तारीफ किये गये यश का गान किया ॥ २० ॥

*अथ रघोः प्रतापोदयेन निजाभिभवशङ्कया शत्रूणां मनः क्षुब्धं बभूवेत्याह—*

**प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।**
**रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥**

सञ्जीविनी—प्रससादेति । महौजसः कुम्भयोनेरगस्त्यस्य । 'अगस्त्यः कुम्भसंभवः' इत्यमरः । उदयादम्भः प्रससाद प्रसन्नं बभूव । महौजसो रघोरुदयादभिभवाशङ्कि द्विषतां मनश्चुक्षुभे कालुष्यं प्राप । 'अगस्त्योदये जलानि प्रसीदन्ति' इत्यागमः ॥ २१ ॥

अन्वयः—महौजसः, कुम्भयोनेः, उदयाद्, अम्भः, प्रससाद, "महौजसः," रघोः, "उदयाद्", अभिभवाशङ्कि, द्विषताम्, मनः, चुक्षुभे ॥ २१ ॥

व्याख्या—महौजसः = बहुबलवतः, कुम्भयोनेः = अगस्त्यस्य, उदयाद् = आविर्भावाद्, नभसि नक्षत्ररूपेणोदयादिति भावः । अम्भः = जलं, प्रावृड्ऋतुना पङ्किलं सलिलमिति यावत् । प्रससाद = प्रासीदत्, निर्मलं बभूवेति यावद् । "महौजसः = अतिबलशालिनः", रघोः = दिलीपसूनोः, "उदयाद् = अभ्युदयाद्", राजसिंहासनमधिरुह्य दिग्विजयाय जैत्रधनुर्धारणोदयादिति भावः । अभिभवाशङ्कि = परिभवाशङ्कायुक्तं, द्विषतां = शत्रूणां, मनः = हृदयं, चुक्षुभे = क्षुब्धं बभूव, मालिन्यमभ्यगच्छदिति यावद् ॥ २१ ॥

समासादि—कुम्भ एव योनिरुत्पत्तिस्थानं यस्य स कुम्भयोनिः ( ब० व्री० ) तस्य कुम्भयोनेः । महदोजो यस्यासौ महौजास्तस्य महौजसः (ब० व्री०) । आ समन्ताच्छङ्कितुं शीलमस्येत्याशङ्कि (न० लिं०), अभिभवस्याशङ्कीत्यभिभवाशङ्कि (त० पु०) ॥ २१ ॥

व्याकरणं—प्रससाद = प्र + षद्लृ ( विशरणगत्यवसादनेषु-लृदित् ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रूपम् । चुक्षुभे = क्षुभ ( सञ्चलने-अकारेत् ) + लिट्, लिटस्तप्रत्ययस्यैशादेशे द्वित्वेऽभ्यासकार्ये चुत्वे रूपम् ॥ २१ ॥

वाच्यान्तरं—महौजसः कुम्भयोनेरुदयादम्भसा प्रसेदे, महौजसो रघोरुदयादभिभवा-

शङ्किना द्विषतां मनसा चुक्षुभे ॥ २१ ॥

कोशः—"ओजो दीप्तौ बले" इति । "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इति चामरः ॥ २१ ॥

तात्पर्यार्थः—एकतः शरदौ नभस्यगस्त्याख्यनक्षत्रस्योदयात् पङ्किले जलं निर्मलं बभूव, अन्यतस्तु दिग्विजयाय रघोर्जैत्रधनुर्धारणरूपोदयादरीणां निजपराभवशङ्कया मन उद्वेगेनाप्रसन्नं बभूव ॥ २१ ॥

भाषाऽर्थः—इधर महाबलवान् (कुम्भ से उत्पन्न) अगस्त्य जी का नक्षत्र रूप से उदय होने से जल निर्मल हुआ, और उधर महाबलशाली रघु महाराज का दिग्विजय के लिये सर्वत्र विजय करने वाले धनुष् का धारण करना रूप, उदय होने से अपनी हार होने की आशङ्का करनेवाले दुश्मनों का मन तो अत्यन्त ( उद्वेग से ) कालुष्य को प्राप्त हुआ ॥२१॥

*अथ रघोर्महोक्षवच्छौर्यमासीदित्याह—*

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥

सञ्जीविनी—मदोदग्रा इति । मदोदग्रा मदोद्धताः । ककुदेषामस्तीति ककुद्मन्तः । महाककुद इत्यर्थः । यवादित्वान्मकारस्य वत्वाभावः । सरितां कूलान्युद्रुजन्तीति कूलमुद्रुजाः । "उदिकूले रुजिवहोः" इति खश्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमः । महान्त उक्षाणो महोक्षाः । "अचतुर०" इत्यादिना निपातनादकारान्तः । लीलाखेलं विलाससुभगं तस्य रघोरुत्साहवतो वपुष्मतः परभञ्जकस्य विक्रमं शौर्यमनुप्रापुरनुचक्रुः ॥ २२ ॥

अन्वयः—मदोदग्राः, ककुद्मन्तः, सरितां, कूलमुद्रुजाः, महोक्षाः, लीलाखेलं, तस्य, विक्रमम्, अनुप्रापुः ॥ २२ ॥

व्याख्या—मदोदग्राः=गर्वोद्धताः, दर्पोन्मत्ता इति यावत् । ककुद्मन्तः=प्रशस्तस्कन्धाः, महाककुद इति यावद् । सरितां=नदीनां, कूलमुद्रुजा.=तीरविघातकाः, महोक्षाः=बृहद्बलीवर्दाः, लीलाखेलं=विलासकूर्दनं, विलाससुभगमिति यावत् । तस्य=पूर्वोक्तस्य, रघोर्वपुष्मतः परविमर्दनक्षमस्येति यावद् । विक्रमं=शौर्यम्, अनुप्रापुः=अनुकरणं कृतवन्त ॥२२॥

समासादि—मदेनोदग्रा मदोदग्राः ( त० पु० ) । प्रशस्ता ककुदस्त्येषामिति ककुद्मन्तः ( पुं० ) । कूलान्युद्रुजन्तीति कूलमुद्रुजाः ( पुं० ) लीलया खेला यत्र स लीलाखेलः ( व्य० प० ब० व्री० ) तं तथोक्तम् । महान्तश्च त उक्षाण इति महोक्षाः (क० धा०) ॥ २२ ॥

व्याकरणम्—अनुप्रापुः=अनु+प्र+आप्लृ ( व्याप्तौ–लृदित् )+लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् ॥ २२ ॥

वाच्यान्तरं—मदोदग्रैः ककुद्मद्भिः सरितां कूलमुद्रुजैर्महोक्षैर्लीलाखेलस्तस्य विक्रमोऽनुप्रापे ॥ २२ ॥

कोश.—"मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति विश्वः । "ककुद् स्त्री ककुदोऽप्यस्त्री वृषाङ्के राड्ध्वजे वरे" इति मेदिनी । "कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिपु" इत्यमरः । "लीला केलिविलासयोः । शृङ्गारभावचेष्टायाम्" इति मेदिनी । "खेला क्रीडा च कूर्दनम्" इत्यमरः ॥ २२ ॥

तात्पर्यार्थः—उत्साहवतो वपुष्मतो द्विषद्विदारणक्षमस्य तस्य रघोर्विलाससुभगस्य शौर्यस्य महाकाया मदोन्मत्ता वृषभाः शृङ्गैर्नदीतटानि विदारयन्तोऽनुकरणं चक्रुः ॥ २२ ॥

भाषाऽर्थः—मद से मतवाले बैल पूर्णकन्धेवाले, नदियों के किनारों को गिरानेवाले बड़े २ बैल लीला पूर्वक खेल की तरह जो उन रघु महाराज का विक्रम था, उसका अनुकरण किया॥२२॥

*अथ रघोः सैन्ये मदोन्मत्ता गजेन्द्रा आसन्नित्याह*—

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥

सञ्जीविनी—प्रसवैरिति । मदस्येव गन्धो येषां तैर्मदगन्धिभिः । "उपमानाच्च" इतीकारः समासान्तः । सप्तपर्णानां वृक्षविशेषाणाम् । 'सप्तपर्णो विशालत्वक् शारदो विषमच्छदः' इत्यमरः । प्रसवैः पुष्पैराहतास्तस्य रघोर्नागा गजाः । 'गजेऽपि नागमातङ्गौ' इत्यमरः । असूययेवाहतिनिमित्तया स्पर्धयेव सप्तधैव प्रसुस्रुवुर्मदं ववृषुः । प्रतिगजगन्धाभिमानादिति भावः । 'करात्कटाभ्यांमे ढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति पालकाप्ये। करान्नासारन्ध्राभ्यामित्यर्थः॥२२॥

अन्वयः—मदगन्धिभिः, सप्तपर्णानां, प्रसवैः, आहताः, तन्नागाः, असूयया, इव, सप्तधा, एव, प्रसुस्रुवुः ॥ २३ ॥

व्याख्या—मदगन्धिभिः=इभदानगन्धवद्भिः, सप्तपर्णानां=विषमच्छदानां, वृक्षविशेषाणामिति यावत् । प्रसवैः=पुष्पैः, आहताः=ताडिताः, तन्नागाः=रघुगजाः, असूयया=स्पर्धया, आहतिनिमित्तयेति भावः । इव=यथा, सप्तधा=सप्तविधं, सप्तस्थानेभ्य इति भावः । एव=अवधारणेऽर्थे, प्रसुस्रुवुः=मदस्रावं चक्रुः, मदं ववृषुरिति यावद् । प्रतिगजमदगन्धप्रयुक्ताभिमानादिति भावः ॥ २३ ॥

समासादि—सप्त पर्णानि येषान्ते सप्तपर्णाः ( पुं ) तेषां सप्तपर्णानाम् । मदस्येव गन्धो येषान्ते मदगन्धयः (ब० व्री० ) तैर्मदगन्धिभिः । तस्य नागास्तन्नागाः (त० पु०)। सप्तभिः प्रकारैरिति सप्तधा ( अ० ) ॥ २३ ॥

व्याकरणम्—आहताः=आङ्+हन (हिंसागत्योः-अकारेत्)+क्तः+जस् । सप्तधा=सप्तन्+भिस्+धा, "सङ्ख्याया विधाऽर्थे धा" इति धाप्रत्ययेऽव्ययत्वात्सुपो लुकि रूपम् । प्रसुस्रुवुः=प्र+स्रु ( स्रवणे )+लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् ॥ २३ ॥

वाच्यान्तरं—मदगन्धिभिः सप्तपर्णानां प्रसवैराहतैस्तन्नागैरसूययेव सप्तधैव प्रसुस्रुवे॥२३॥

कोशः—"असूया तु दोषारोपो गुणेष्वपि" इति । "असूया त्वभ्यसूया" इति चामरशब्दार्णवौ ॥ २३ ॥

तात्पर्यार्थः—रघोः सेनावर्त्तिकरिणः शरदि विकसितानां सप्तपर्णपुष्पाणां हस्तिमदतुल्यमुत्कटगन्धमाघ्राय प्रतिद्वन्द्विवन्यगजमदगन्धप्रयुक्ताभिमानात् स्पर्धयेव सप्तभ्यो हस्तकटमेढ्रनेत्रादिभ्योऽङ्गेभ्यो मदं ववृषुः ॥ २३ ॥

भाषार्थः—हाथी के मद के तुल्य गन्धवाले सप्तपर्ण के फूलें से आहत हुये उन रघु महाराज के हाथियों ने मानों स्पर्धा से सात प्रकार ( सात अङ्गों ) से मद को बरषाने लगे ॥ २३ ॥

*अथ शरदृतुर्दिग्विजयाय तं रघुं प्रथमं प्रेरयामासेत्याह*—

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥

सञ्जीविनी—सरित इति। सरितो गाधाः सुप्रतराः कुर्वती । पथो मार्गांश्चाश्यानकर्दमाञ्छुष्कपङ्कान्कुर्वती । "संयोगादेरातो धातोर्यण्वतः" इति श्यतेर्निष्ठातस्य नत्वम् । शरच्छरदृतुस्तं रघुं शक्तेरुत्साहशक्तेः प्रथमं प्राग्यात्रायै दण्डयात्रायै चोदयास । प्रेरयामास । प्रभावमन्त्रशक्तिसंपन्नस्य शरत्स्वयमुत्साहमुत्पादयामासेत्यर्थः ॥ २४॥

अन्वयः—सरितः, गाधाः, कुर्वती, पथः, च, आश्यानकर्दमान्, "कुर्वती", शरद्, तं, शक्तेः, प्रथमं, यात्रायै, चोदयामास ॥ २४ ॥

व्याख्या—सरितः=नदीः, गाधाः=तलस्पर्शवतीः, कुर्वती=विदधती, पथः=मार्गान्, च=समुच्चयेऽर्थे, आश्यानकर्दमान्=शुष्कपङ्कान्, "कुर्वती", शरद्=शरदृतुः । तं=पूर्वोक्तं, रघुमिति यावद् । शक्तेः=उत्साहशक्तेः, प्रथमं=प्राग्, यात्रायै=गमनाय, दण्डयात्रायै दिग्विजयायेति भावः । चोदयामास=प्रेरयामास ॥ २४ ॥

समासादि—करोतीति कुर्वती ( स्त्री० ), आश्याना: कर्दमा येपान्त आश्यानकर्दमाः (ब० व्री० ) तांस्तथोक्तान् ॥ २४ ॥

व्याकरण—कुर्वती=डुकृञ् ( करणे-डुञित् )+उः+लट्+शतृ+ङीप्+सु । चोदयामास=( चुद ( सञ्चोदने-अकारेत् )+णिच्) चोदि+आम्+अस ( भुवि-अकारेत् )+लिट्, लिटस्तिपो णलि रूपं, चुरादित्वाण्णिच्प्रत्ययो बोध्यः ॥ २४ ॥

वाच्यान्तरं—सरितो गाधाः कुर्वत्या पथश्चाश्यानकर्दमान् कुर्वत्या शरदा स शक्तेः प्रथमं यात्रायै चोदयाञ्चक्रे ॥ २४ ॥

कोशः—"गाधस्तललिप्सयोः" इत्यनेकार्थसङ्ग्रहः । "यात्रा तु यापनेऽपि स्याद् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी ॥ २४ ॥

तात्पर्यार्थः—शरदि तीक्ष्णैः सूर्यकिरणैः शुष्कजलतया नद्यः सुप्रतरा जाताः, मार्गाश्च शुष्कपङ्कतया सुगमा आसन्, अत एवंभूतः शरदृतुसमयः प्रभावमन्त्रशक्तिसम्पन्नस्य तस्य रघोर्दिग्विजयाय मनस्यतीव समुत्साहमुत्पादयामास ॥ २४ ॥

भाषार्थः—नदियों को सुख पूर्वक पार जाने लायक करती हुई तथा मार्गों के कीचडों को शुष्क करती हुई शरद् ऋतु प्रभाव शक्ति तथा मन्त्र शक्ति से युक्त उन रघु महाराज को उत्साह शक्ति होने के पहले ही दिग्विजय के लिये प्रेरणा करने लगी ॥ २४ ॥

*अथ रघोर्यात्रासमये शुभशकुनं सूचयन् वह्निः प्रदक्षिणार्चिर्बभूवेत्याह*—

**तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।**
**प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥**

सञ्जीविनी—तस्मा इति । वाजिनामश्वानां नीराजनाऽऽख्ये शान्तिकर्मणि सम्यग्विधिवद्धुतो होमसमिद्धो वह्निः । प्रगता दक्षिणं प्रदक्षिणम् । तिष्ठद्गुप्रभृतित्वादव्ययीभावः । प्रदक्षिणं याऽर्चिर्ज्वाला तस्या व्याजेन हस्तेनेव तस्मै जयं ददौ । उक्तमाहवयात्राम्—(इद्धः प्रदक्षिणगतो हुतभुङ्नृपस्य धात्रीं समुद्ररशनां वशगां करोति ) इति । वाजिग्रहणं गजादीनामप्युपलक्षणं तेपामपि नीराजनाविधानात् ॥ २५ ॥

अन्वयः—वाजिनीराजनाविधौ, सम्यग्, हुतः, वह्निः, प्रदक्षिणार्चिर्व्याजेन, हस्तेन, इव, तस्मै, जयं, ददौ ॥ २५ ॥

व्याख्या—वाजिनीराजनाविधौ=हयनीराजनाख्यशान्तिकर्मणि, सम्यग्=सुष्ठु, विधिवदित्यर्थः । हुतः=कृतहवनः, होमसमिद्ध इत्यर्थः । वह्निः=अग्निः, प्रदक्षिणार्चिर्व्याजेन=दक्षिणावर्त्तज्वालाछद्मना, हस्तेन=करेण, इव=यथा, तस्मै=पूर्वोक्ताय, रघव इति यावद् । जयं=विजयं, ददौ=दत्तवान् ॥ २५ ॥

समासादि—वाजिनां नीराजना वाजिनीराजना ( त० पु० ), तस्या विधिर्वाजिनीराजनाविधिः ( त० पु० ) तस्मिंस्तथोक्ते । प्रगता दक्षिणम् प्रदक्षिणम् । ( अ० भा० ), प्रदक्षिण चासावर्चिरिति प्रदक्षिणार्चिः ( क० धा० ), तस्या व्याजः प्रदक्षिणार्चिर्व्याजः (त०पु०) तेन तथोक्तेन ॥ २५ ॥

व्याकरण—हुतः=हु ( दानादानयोः )+क्तः+सु । ददौ=डुदाञ् ( दाने-डुञित् )+लिट्, लिटस्तिपो णल औत्वे द्वित्वेऽभ्यासकार्ये रूपम् ॥ २५ ॥

वाच्यान्तरं—वाजिनीराजनाविधौ सम्यग्घुतेन वह्निना प्रदक्षिणार्चिर्व्याजेन हस्तेनेव

तस्मै जयो ददे ॥ २५ ॥

कोशः—"वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्" इति । "कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे । कुसृतिर्निकृतिः शाठ्यम्" इति । "विजयो जयः" इति चामरः ॥२५॥

तात्पर्यार्थः—दिग्विजयाय जिगमिषू रघुर्यदाऽश्वानां गजानां च नीराजनाऽऽख्ये शान्तिकर्मणि वह्नौ हवनं कृतवांस्तदा प्रदक्षिणज्वालया हस्तेनेव होमसमिद्धोऽग्निस्तस्मै जयं दत्तवान् ॥ २५ ॥

भाषाऽर्थः—घोड़ों ( हाथियों ) के नीराजना नामक शान्तिकर्म में विधिपूर्वक हवन जिसमें किया गया है ऐसे अग्नि ने दक्षिण की तरफ घूमकर निकलती हुई ज्वाला के छल से मानो अपने हाथ से उन रघु महाराज के लिये विजय प्रदान किया ॥ २५ ॥

*अथ रघोर्दिग्विजिगीषया सैन्यमादाय प्रस्थानमाह—*

**स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।**
**षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥२६॥**

सञ्जीविनी—स इति । गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्गं च येन स गुप्तमूलप्रत्यन्तः । शुद्धपार्ष्णिरुद्धृतपृष्ठशत्रुः सेनया रक्षितपृष्ठदेशो वा । अयान्वितः । 'अयः शुभावहो विधिः' इत्यमरः । स रघुः षड्विधं मौलभृत्यादिरूपं बलं सैन्यम् । 'मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्' इति कोशः । आदाय दिशां जिगीषया जेतुमिच्छया प्रतस्थे चचाल ॥२६॥

अन्वयः—गुप्तमूलप्रत्यन्तः, शुद्धपार्ष्णिः, अयान्वितः, सः, षड्विधं, बलम्, आदाय, दिग्जिगीषया, प्रतस्थे ॥ २६ ॥

व्याख्या—गुप्तमूलप्रत्यन्तः = पालितस्वनिवासस्थानप्रान्तदुर्गः, शुद्धपार्ष्णिः = निर्दोषध्वजिनीकटिः, सैन्येन रक्षितनिजसैन्यपृष्ठभाग इति यावद् । अयान्वितः = शुभावहविधियुक्तः, सः = पूर्वोक्तः, दिशो जिगीषू रघुरिति यावद् । षड्विधं = षट्प्रकारकं, मौलभृत्यसुहृच्छ्रेणीप्रभृतिरूपमिति भावः । बलं = सैन्यम् , आदाय = गृहीत्वा, दिग्जिगीषया = दिशां जेतुमिच्छया, दिग्विजयं कर्त्तुमिच्छयेति यावत् । प्रतस्थे = प्रस्थानं कृतवान्, चचालेति यावद् ॥२६॥

समासादि—मूलञ्च प्रत्यन्तश्च मूलप्रत्यन्तौ (द्वन्द्वः), गुप्तौ मूलप्रत्यन्तौ येन स गुप्तमूलप्रत्यन्तः (ब०व्री०) । शुद्धः पार्ष्णिर्यस्य स शुद्धपार्ष्णिः (ब०व्री०) । अयेनान्वित इत्ययान्वितः ( त० पु० ) । षड् विधा यस्य तद् षड्विधं (ब०व्री०) तत्तथोक्तम् । जेतुमिच्छा जिगीषा, दिशां जिगीषा दिग्जिगीषा (त० पु०) तया दिग्जिगीषया ॥ २७ ॥

व्याकरणम्—आदाय = आङ् + डुदाञ् (दाने—डुञित्) + क्त्वा + ल्यप् । प्रतस्थे = प्र + ष्ठा ( गतिनिवृत्तौ ) + लिट् , "समवप्रविभ्यः स्थः" इत्यात्मनेपदे लिटस्तप्रत्यये द्वित्वेऽभ्यासकार्ये रूपम् ॥ २६ ॥

वाच्यान्तरं—गुप्तमूलप्रत्यन्तेन शुद्धपार्ष्णिनाऽयान्वितेन षड्विधं बलमादाय दिग्जिगीषया प्रतस्थे ॥ २६ ॥

कोशः—"मूलं पार्श्वाद्ययोरुडौ । निकुञ्जविफयोः स्वीये शिलायां च वशीकृतौ । प्रतिष्ठायाम्" इत्यनेकार्थसङ्ग्रहः । "पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ" इति रन्तिदेवः ॥ २६ ॥

तात्पर्यार्थः—स रघुर्यात्राकरणात् प्राक् स्वनिवासस्थानस्य प्रान्तदुर्गस्य च सम्यक्तया रक्षाप्रबन्धं कृत्वा तदनु निजसैन्यस्य पृष्ठभागस्यापि रक्षां विधाय शुभावहं यात्राकालीनं सर्वं मङ्गलाचरणमपि यथाविधि सम्पाद्य षड्विधं "मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्" इत्युक्तरूपं बलं गृहीत्वा दिशां जेतुमिच्छया प्रस्थानं कृतवान् ॥ २६ ॥

भाषाऽर्थः—जिन्होंने अपने निवास-स्थान तथा प्रान्त के दुर्गों की रक्षा का प्रबन्ध,

कर लिया है, तथा जिनके सेना का पृष्ठ भाग दोष रहित ( सुरक्षित है ) और जिन्होंने कल्याण करने वाले यात्राकालीन मङ्गलाचरणादिकों को कर लिया है, ऐसे रघु महाराज ने छ प्रकार के बल ( सैन्य ) को साथ में लेकर दिग्विजय की इच्छा से प्रस्थान किया ॥ २६ ॥

*अथ दिग्विजयाय प्रस्थितस्य तस्य रघोरुपरि पौरवृद्धाङ्गनानां लाजप्रक्षेपमाह*—

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ २७ ॥

सञ्जीविनी—अवाकिरन्निति। वयोवृद्धाः पौरयोषितस्तं रघुं प्रयान्तं लाजैराचारलाजैः। मन्दरोद्धूतैः पृषतैर्बिन्दुभिः क्षीरोर्मयः क्षीरसमुद्रोर्मयोऽच्युतं विष्णुमिव। अवाकिरन्पर्यक्षिपन् ॥ २७ ॥

अन्वयः—वयोवृद्धाः, पौरयोषितः, तं, लाजैः, मन्दरोद्धूतैः, पृषतैः, क्षीरोर्मयः, अच्युतम्, इव, अवाकिरन् ॥ २७ ॥

व्याख्या—वयोवृद्धाः = अवस्थार्जीर्णाः, अधिकवयस्का जरत्य इति यावत्। पौरयोषितः = पुरोद्भवस्त्रियः, नगरनिवासिनामङ्गना इति यावत्। तं = पूर्वोक्तं, प्रस्थितं रघुमिति यावद्। लाजैः = आचारलाजैः, मन्दरोद्धूतैः = मन्दराचलोत्क्षिप्तैः, पृषतैः = बिन्दुभिः, अम्बुकणैरिति यावद्। क्षीरोर्मयः = दुग्धतरङ्गाः, क्षीरोदधितरङ्गा इति यावद्। अच्युतं = विष्णुम्, इव = यथा, अवाकिरन् = परिचिक्षिपुः, अवर्षन्निति यावद् ॥ २७ ॥

समासादि—वयसा वृद्धा वयोवृद्धाः (त० पु०)। पुरे भवाः पौराः (पुं०), तेषां योषितः पौरयोषितः (त० पु०)। मन्दरेणोद्धूता मन्दरोद्धूताः (त०पु०) तैर्मन्दरोद्धूतैः। क्षीरस्योर्मयः क्षीरोर्मयः (त० पु०)। अविद्यमानं च्युतं स्खलनं स्वपदाद् यस्य सोऽच्युतः (व० व्री०) तमच्युतम् ॥ २७ ॥

व्याकरणम्—अवाकिरन् = अव + अट् + कॄ ( विक्षेपे ) + श + लङ्, लङो झेर्झस्यान्तादेशे धातोरित्वे रपरे रूपम्। उद्धूताः = उद् + धूञ् (विधूनने—जित्) + क्तः + जस् ॥२७॥

वाच्यान्तरं—वयोवृद्धाभिः पौरयोषिद्भिः स लाजैर्मन्दरोद्धूतैः पृषतैः क्षीरोर्मिभिरच्युत इवाकीर्यत ॥ २७ ॥

कोशः—"प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि" इति। "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" इति। "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" इति चामरः ॥ २७ ॥

तात्पर्यार्थः—यथा समुद्रमन्थनसमये क्षीरोदधितरङ्गा मन्दराचलोत्क्षिप्तैर्बिन्दुभिर्विष्णोरुपरि परिचिक्षिपुस्तथैव दिग्विजयाय प्रस्थितस्य रघोरुपर्यपि वयोवृद्धाः पौराणामङ्गना आचारलाजैः परिचिक्षिपुः ॥ २७ ॥

भाषाऽर्थः—अवस्था में वृद्धा नगरवासियों की स्त्रियों ने दिग्विजय के लिये जाते हुये उन रघु महाराज के ऊपर मङ्गलार्थक लाजों (धान के खीलों) से मन्दराचल से फेंके गये दुग्ध के बिन्दुओं से क्षीरसमुद्र की लहरों ने जैसे विष्णु भगवान् के ऊपर वर्षा की थीं उसी भाँति वर्षा की ॥ २७ ॥

*अथ युग्मेन प्रथमं रघोः प्राच्यां दिशि गमनमभूदित्याह—*

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा।
अहितानिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ २८ ॥

सञ्जीविनी—स इति। प्राचीनबर्हिर्नाम कश्चिन्महाराजइति केचित्। प्राचीनबर्हिरिन्द्रः। "पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिः स्मृतः" इतीन्द्रपर्यायेषु हलायुधाभिधानात्। तेन तुल्यः स रघुः। अनिलेनानुकूलवातेनोद्धूतैः केतुभिर्ध्वजैरहितान्रिपूंस्तर्जयन्निव भर्त्सयन्निव। तर्जिभर्त्स्योरनुदात्तत्त्वेऽपि चक्षिङो ङित्करणेनानुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति वामनः। प्रथमं प्राचीं दिशं ययौ ॥ २८ ॥

अन्वयः—प्राचीनबर्हिषा, तुल्यः, सः, अनिलोद्धूतैः, केतुभिः, अहितान्, तर्जयन्, इव, प्रथमं, प्राचीं, ययौ ॥ २८ ॥

व्याख्या—प्राचीनबर्हिषा = केन चिन्महाराजेन, इन्द्रेण वा । तुल्यः = समः, सः = पूर्वोक्तः, रघुरिति यावद् । अनिलोद्धूतैः = पवनोत्क्षिप्तैः, अनुकूलवायुनुन्नैरिति यावद् । केतुभिः = ध्वजैः, अहितान् = शत्रून्, तर्जयन् = भर्त्सयन्, इव = यथा, प्रथमं = प्राग्, प्राचीं = पूर्वां, दिशमिति यावद् । ययौ = जगाम ॥ २८ ॥

समासादि—तुलया संमितस्तुल्यः ( पुं० ) । न हिता अहिताः (न० स०)तानहितान् । अनिलेनोद्धूता अनिलोद्धूतास्तैरनिलोद्धूतैः (त० पु०) । तर्जयतीति तर्जयन् (पुं०) ॥२८॥

व्याकरणं—ययौ = या(प्रापणे) + लिट्, लिटस्तिपो णल औत्वे द्वित्वेऽभ्यासकार्ये रूपम् । तर्जयन् = (तर्ज (तर्जने—अकारेत्) + णिच् ), तर्जि + शप् + लट् + शतृ + सु ॥ २८ ॥

वाच्यान्तरं—प्राचीनबर्हिषा तुल्येन तेनानिलोद्धूतैः केतुभिरहितांस्तर्जयतेव प्रथमं प्राची यये ॥ २८ ॥

कोशः—"द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः" इत्यमरः ॥ २८ ॥

तात्पर्यार्थः—दिग्विजयाय प्रस्थितः स इन्द्रतुल्यो रघुः प्रथमं पूर्वां दिशमेव जेतुं वायुनोक्षिप्ताभिर्वैजयन्तीभिर्निजशत्रून् भर्त्सयन्निव जगाम ॥ २८ ॥

भाषार्थः—इन्द्र के तुल्य वे रघु महाराज अनुकूल वायु से फहराती हुई पताकाओं से दुश्मनों को मानों डरवाते हुये पहले पूर्व दिशा की तरफ चले ॥ २८ ॥

*अथ कवी रघोः सैन्यबाहुल्यं द्योतयन्नाह—*

**रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।**
**भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥ २९ ॥**

सञ्जीविनी—रजोभिरिति । किं कुर्वन् । स्यन्दनोद्धूतै रजोभिर्घनसंनिभैर्वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैर्गजैश्च यथाक्रमं व्योमाकाशं भुवस्तलमिव भूतलं च व्योमेव कुर्वन् । ययाविति पूर्वेण सम्बन्धः ॥ २९ ॥

अन्वयः—"किं कुर्वन्" स्यन्दनोद्धूतैः, रजोभिः, घनसन्निभैः, गजैः, च, "यथाक्रमं," व्योम, भुवस्तलम्, इव, भूतलं, व्योम, इव, कुर्वन्, ययाविति पूर्वेण सम्बन्धः ॥ २९ ॥

व्याख्या—स रघुः पुनः किं कुर्वन् ययावित्यत आह—स्यन्दनोद्धूतैः = रथोत्क्षिप्तैः, रथचक्रोद्धूतैरिति यावद् । रजोभिः = धूलिभिः, घनसन्निभैः = मेघसदृशैः, वर्णतः क्रियातः परिमाणतश्चेति भावः । गजैः = हस्तिभिः, सेनाद्विपेन्द्रैरिति यावद् । च = समुच्चयेऽर्थे, यथाक्रममिति शेषः । व्योम = आकाशं, भुवः = पृथिव्याः, तलं = पृष्ठम्, इव = यथा, भूतलं = पृथ्वीतलं, व्योम = आकाशम्, इव = यथा, कुर्वन् = विदधद्, ययाविति पूर्वश्लोकेन सम्बन्धो युग्मत्वाद् बोध्यः ॥ २९ ॥

समासादि—स्यन्दनेनोद्धूतानि स्यन्दनोद्धूतानि (त०पु०) तैः स्यन्दनोद्धूतैः । सन्निभान्तीति सन्निभाः (पुं०), घना इव सन्निभा येषान्ते घनसन्निभाः (ब० व्री०) तैर्घनसन्निभैः । व्ययतीति व्योम (न० लि) ॥ २९ ॥

व्याकरणं—संनिभाः = सम् = नि + भा (दीप्तौ) + कः + जस्, "आतश्चोपसर्गे" इति कप्रत्यये क्त्वादाकारलोपे जसि रूपम् । व्योम = व्येञ् ( संवरणे—ञित् ) + मन + अम्, "नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन्" इत्यौणादिको मनिन् प्रत्ययो धातोरन्त्यस्योत्वं गुणश्च निपात्यन्तेऽमो लुकि नलोपे रूपम् ॥ २९ ॥

वाच्यान्तरं—स्यन्दनोद्धूतै रजोभिर्घनसन्निभैर्गजैश्च व्योम भुवस्तलमिव भूतलञ्च व्योमेव कुर्वता "तेन यये" ॥ २९ ॥

कोशः—"व्योम वारिणि चाकाशे भास्करस्यार्चनाश्रये" इति मेदिनी ॥ २९ ॥

तात्पर्यार्थः—पुनः स रघुर्निजसैन्यस्थितरथचक्रोद्धूतधूलिभिराकाशं भूतलमिव कुर्वन् मेघतुल्यैः सेनागजेन्द्रैर्भूतलमाकाशमिव कुर्वंश्च प्राचीं दिशं ययौ ॥ २९ ॥

भाषार्थः—रथ से उड़ी हुई धूलि से और मेघ के तुल्य (गर्जन करने वाले तथा वर्ण और आकार वाले) हाथियों से क्रम से आकाश को पृथ्वीतल की भांति और पृथ्वीतल को आकाश की भांति करते हुये "वे रघु महाराज पूर्व दिशा को गये" ॥ २९ ॥

*अथ रघोः सैन्यगमनं वर्णयन्नाह—*

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ ३० ॥

सञ्जीविनी—प्रताप इति । अग्रे प्रतापस्तेजोविशेषः । 'स प्रभावः प्रतापश्च यत्तेजः-कोशदण्डजम्' इत्यमरः । ततः शब्दः सेनाकलकलः । तदनन्तर परागो धूलिः । 'परागः पुष्परजसि धूलिस्नानीययोरपि' इति विश्वः । पश्चाद्रथादि रथाश्वादिकं चतुरङ्गबलम् । रथानीकम्' इति पाठ इतिशब्दाध्याहारेण योज्यम् । इतीत्थं चतुःस्कन्धेव चतुर्व्यूहेव । 'स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । सा चमूर्ययौ ॥३०॥

अन्वयः—अग्रे, प्रतापः, ततः, शब्दः, तदनन्तरम्, परागः, पश्चात्, रथादि, इति, चतुःस्कन्धा, इव, सा, चमूः, ययौ ॥ ३० ॥

व्याख्या—अग्रे = पुरः, सर्वस्याग्र इति यावत् । प्रतापः = तेजोविशेषः, कोशदण्डज-इति यावद् । ततः = तदनन्तरं । शब्दः = ध्वनिः, सेनायाः कलकल इति यावद्, तदनन्तरं = तदव्यवहितोत्तरम्, परागः = धूलिः, सैन्याश्वादिपादोत्था रेणुरिति यावत् । पश्चाद् = अनन्तरं, रथादि = स्यन्दनप्रभृति, रथगजाश्वपदातिप्रभृतीति भावः । इति = इत्थम्, उक्तक्रमेणेति भावः । चतुःस्कन्धा = चतुर्व्यूहा, चतुःसंख्याकव्यूहवतीति यावद् । इव = यथा, सा = पूर्वोक्ता, चमूः = सेना, रघुसैन्यमिति यावद् । ययौ = जगाम, प्राचीं दिशमिति शेषः ॥ ३० ॥

समासादि—तस्मादनन्तरं तदनन्तरं (त० पु०) । रथ आदिर्यस्य तद्रथादि (ब०व्री०) । चत्वारः स्कन्धा यस्याः सा चतुःस्कन्धा ( ब० व्री० ), चमति शत्रूनिति चमूः (स्त्री०) ॥३०॥

व्याकरणं—ययौ = या (प्रापणे) + लिट्, लिटस्तिपो णलि रूपम् । चमूः = चमु (अदने-उदित्) + ऊः + सु, "कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः" इत्यौणादिक ऊप्रत्यये सौ रूपम्॥३०॥

वाच्यान्तरम्—अग्रे प्रतापेन ततः शब्देन तदनन्तरं परागेण पश्चाद् रथादिना "यये" इति चतुःस्कन्धयेव तया चम्वा यये ॥ ३० ॥

कोशः—"ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः" इति । "पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् । सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी" इति चामरः । "चमूः सेनाविशेषे च सेनामात्रे च योषिति" इति मेदिन्यपि ॥ ३० ॥

तात्पर्यार्थः—दिग्जिगीषया प्रस्थितस्य रघोः सर्वप्रथमं कोशदण्डजतेजोविशेषः प्रतापस्ततः सेनायाः कलकलस्तदनन्तरं रथगजाश्वपादोत्थिता धूलिस्तत्पश्चाद् रथगजाश्वादि-चतुरङ्गबलमित्युक्तक्रमेण सा रघुसेना कृतचतुर्व्यूहेव प्राचीं दिशं ययौ ॥ ३० ॥

भाषार्थः—सब से पहले रघु का प्रताप उसके बाद सेना का कलकल शब्द और उसके बाद धूलि तथा पीछे से रथ वगैरह, इस प्रकार से चार व्यूह किये हुये की भांति वह सेना चली ॥ ३० ॥

*अथ रघोः शक्त्युत्कर्षाज्जलेस्थलेऽपि च सर्वत्र सुखेन गमनमासीदित्याह—*

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३१ ॥

सञ्जीविनी—मरुपृष्ठानीति । स रघुः शक्तिमत्त्वात्समर्थत्वान्मरुपृष्ठानि निर्जलस्थानानि । 'समानौ मरुधन्वानौ' इत्यमरः । उदम्भांस्युद्भूतजलानि चकार । नाव्या नौभिस्तार्या नदीः । "नाव्यं त्रिलिङ्गं नौतार्यं' इत्यमरः । "नौवयोधर्मविषमूलमूलसीतातुलाभ्यः०" इत्यादिना यत्प्रत्ययः । सुप्रतराः सुखेन तार्याश्चकार । विपिनान्यरण्यानि । 'अटव्यरण्यं विपिनम्' इत्यमरः । प्रकाशानि निर्वृक्षाणि चकार । शक्त्युत्कर्षात्तस्यागम्य किमपि नासीदिति भावः ॥ ३१ ॥

अन्वयः—सः, शक्तिमत्वाद्, मरुपृष्ठानि, उदम्भांसि, चकार, नाव्याः, नदीः, सुप्रतराः, "चकार," विपिनानि, प्रकाशानि, "चकार" ॥ ३१ ॥

व्याख्या—सः = पूर्वोक्तः, दिग्विजयाय प्राचीं दिशं प्रस्थितो रघुरिति भावः । शक्तिमत्त्वाद् = प्रभावादिशक्तिमत्तया, मरुपृष्ठानि = धन्वभूभागान्, निर्जलप्रदेशानिति यावद् । उदम्भांसि = उद्गतजलानि, सजलानीति यावद् । चकार = कृतवान्, अस्योत्तरत्रापि सम्बन्धो-बोध्यः । नाव्याः = नौतार्याः, नदीः = सरितः, सुप्रतराः = सेतुबन्धादिना सुखेन तर्तुं शक्याः, चकार । विपिनानि = काननानि, वनवृक्षयुतानीति भावः । प्रकाशानि = निर्वृक्षाणि, मार्गावरोधकवृक्षच्छेदनेनावकाशलाभात्प्रकाशयुक्तानीति भावः । चकार ॥ ३१ ॥

समासादि—म्रियन्तेऽस्मिन् भूतानीति मरुः ( पुं० ), मरोः पृष्ठानीति मरुपृष्ठानि ( त० पु० ) तानि तथोक्तानि । उद्भूतान्यम्भांसि यत्र तान्युदम्भांसि ( ब० व्री० ) तानि तथोक्तानि । नावा तार्या नाव्याः (स्त्री०) ता नाव्याः । सुखेन प्रतर्तुं शक्याः सुप्रतराः ( स्त्री० ) ताः सुप्रतराः । प्रकाशन्त इति प्रकाशानि ( न० लि० ) तानि तथोक्तानि । शक्तिरस्त्यस्येति शक्तिमान् ( पुं ), तस्य भावः शक्तिमत्त्वं ( न० लि० ) तस्मात्तथोक्तात ॥ ३१ ॥

व्याकरणं—मरुः = मृङ् ( प्राणत्यागे—ङित् ) + उः + सु, "भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः" इत्यौणादिक उप्रत्यये रूपम् । सुप्रतराः = सु + प्र + तॄ ( प्लवनसन्तरणयोः ) + खल् + टाप् + जस् । प्रकाशानि = प्र + काशृ ( दीप्तौ—ऋदित् ) + अच् + शस्, पचादित्वादच्प्रत्यये रूपम् । चकार = डुकृञ् ( करणे—डुञित् ) + लिट्, लिटस्तिपो णलि रूपम् ॥ ३१ ॥

वाच्यान्तरं—तेन शक्तिमत्वान्मरुपृष्ठान्युदम्भांसि नाव्या नद्यः सुप्रतरा विपिनानि प्रकाशानि चक्रिरे ॥ ३१ ॥

कोशः—"शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इति । "शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्" इति चामरानेकार्थसंग्रहौ ॥ ३१ ॥

तात्पर्यार्थः—प्रभावोत्साहमन्त्रशक्तिसम्पन्नः स रघुर्निर्जलस्थानानि कूपादिनिर्माणेन सजलानि, अगम्या नदीः सेतुबन्धादिना सुखेन पद्भ्यां तर्तुं शक्याः, तथा निविडवृक्षयुतानि वनानि मार्गावरोधकवृक्षच्छेदेन प्रकाशयुक्तानि चकार, अत एव कुत्रापि तस्य नागम्यत्वमासीत् ॥ ३१ ॥

भाषार्थः—उन रघु महाराज ने प्रभाव–उत्साह–और मन्त्र शक्ति सम्पन्न होने से जल से रहित प्रदेशों को जल से युक्त और नौका से पार करने लायक नदियों को सुख से पार करने के योग्य, तथा जङ्गलों को ( वृक्ष कट जाने से ) प्रकाश युक्त कर दिया ॥ ३१ ॥

अथ पूर्वीयसिन्धुतटमुद्दिश्य गच्छन्तीं महतीं सेनां नयतो रघोः शोभां वर्णयन्नाह—

**स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।**
**बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२ ॥**

सञ्जीविनी—स इति । महतीं सेनां पूर्वसागरगामिनीं कर्षन्स रघुः । हरस्य जटाभ्यो भ्रष्टां गङ्गां कर्षन् । साऽपि पूर्वसागरगामिनी । भगीरथ इव बभौ । भगीरथो नाम कश्चित्कपिलदग्धानां सागराणां नप्ता, तत्पावनाय हरकिरीटाद्गङ्गां प्रवर्तयिता राजा, यत्संबन्धाद्गङ्गा च भागीरथीति गीयते ॥ ३२ ॥

अन्वयः—महतीं, सेनां, पूर्वसागरगामिनीं, कर्षन्, सः, हरजटाभ्रष्टां, गङ्गां, पूर्वसागरगामिनीं, "कर्षन्" भगीरथः, इव, बभौ ॥ ३२ ॥

व्याख्या—महती = बृहतीं, सेनां = सैन्यम्, पूर्वसागरगामिनीं = प्राग्भवसमुद्रयायिनीं, गङ्गापक्षेऽपि योज्यम्। कर्षन् = नयन्, गङ्गापक्षेऽपि योज्यम्। सः = पूर्वोक्तः, रघुरिति यावद्। हरजटाभ्रष्टां = शङ्करकपर्दगलितां, गङ्गां = सुरसरितं, "पूर्वसागरगामिनीं, कर्षन्" भगीरथः = कपिलमहर्षिक्रोधाग्निना दग्धानां सगरतनयानां पौत्रो भगीरथो नाम कश्चित्सूर्यवंश्यो राजा, पूर्वपुरुषाणां सद्गतिलाभार्थं हरजटाजूटाद्गंगां प्रवर्त्तयिता; यत्सम्बन्धाद्गङ्गा च भागीरथीति गीयते। इव = यथा, बभौ = शुशुभे ॥ ३२ ॥

समासादि—पूर्वस्मिन् देशे सागरः पूर्वसागरः (त० पु०), अथवा-पूर्वश्चासौ सागरः पूर्वसागरः (क० धा०), त गन्तुं शीलमस्येति पूर्वसागरगामिनी (स्त्री०) तां तथोक्ताम्। हरस्य जटा हरजटा (त० पु०) तस्या भ्रष्टा हरजटाभ्रष्टा (त० पु०) तां तथोक्ताम् ॥३२॥

व्याकरणं—कर्षन् = कृष (विलेखने-अकारेत्) + शप् + लट् + शतृ + सु। बभौ = भा (दीप्तौ) + लिट्, लिटस्तिपो णल औत्वेऽभ्यासकार्ये रूपम्। भ्रष्टा = भ्रंशु (अधःपतने—उदित्) + क्तः + टाप् + सु, "अनिदितां हल उपधायाः क्ङिति" इति नकारलोपे "यस्य विभाषा" इतीडभावे रूपम् ॥ ३२ ॥

वाच्यान्तरं—महतीं सेनां पूर्वसागरगामिनीं कर्षता तेन हरजटाभ्रष्टां गङ्गां कर्षता भगीरथेनेव बभे ॥ ३२ ॥

कोशः—"कपर्दोऽस्य जटाजूटः" इत्यमरः ॥ ३२ ॥

तात्पर्यार्थः—यथा भगीरथो नाम कश्चित् सूर्यवंश्यो राजा स्वपूर्वपुरुषाणां सगरात्मजानामश्वमेधसाधनहयान्वेषणतत्पराणां कपिलमहर्षिक्रोधाग्निना दग्धानामुद्धारणाय शङ्करजटाजूटादधःपतितां पूर्वदेशस्थसमुद्रगामिनीं गङ्गां नयन् सन् बभौ तथैव रघुरपि पूर्वसागरगामिनीमसंख्येयां सेनां नयन् शुशुभे ॥ २२ ॥

भाषाऽर्थः—बड़ी भारी सेना जो कि पूर्वसमुद्र की तरफ जाने वाली थी उसे लेजाते हुये वे रघु महाराज उस भांति सुशोभित हुये कि जिस भांति शङ्कर भगवान् की जटा से नीचे गिरी हुई पूर्व समुद्र की तरफ जाने वाली गङ्गाजी को लिये जाते हुये भगीरथ महाराज सुशोभित हुये ॥ ३२ ॥

*अथ रघोः सैन्यमार्गः प्रतिबन्धरहित आसीदित्याह—*

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥

सञ्जीविनी—त्याजितैरिति। 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः' इति केशवः। फलं लाभम्। वृक्षपक्षे प्रसवं च। त्याजितैः। त्यजेर्ण्यन्ताद्द्विकर्मकादप्रधाने कर्मणि क्तः। उत्खातैः स्वपदाच्च्यावितैः। अन्यत्रोत्पाटितैः। बहुधा भग्नै रणे जितैः। अन्यत्र छिन्नैर्नृपैः। पादपैर्दन्तिनो गजस्येव। तस्य रघोर्मार्ग उल्बणः प्रकाश आसीत्। 'प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्' इति यादवः ॥ ३३ ॥

अन्वयः—फलं, त्याजितैः, उत्खातैः, बहुधा, भग्नैः, च, नृपैः, पादपैः, दन्तिनः, इव, तस्य, मार्गः, उल्बणः, आसीत् ॥ ३३ ॥

व्याख्या—फलं = लाभं, "वृक्षपक्षे" प्रसवं च। त्याजितैः = विसर्जितैः, उत्खातैः = स्वस्थानाद् दूरीकृतैः, "वृक्षपक्षे" कृतोन्मूलनैः। बहुधा = बहुप्रकारैः, अनेकधेति यावद्। भग्नैः = युद्धे जितैः, "वृक्षपक्षे" द्विधा कृतैः। च = समुच्चयेऽर्थे, नृपैः = राजभिः, पादपैः = वृक्षैः, दन्तिनः = द्विपस्य, इव = यथा, तस्य = पूर्वोक्तस्य, रघोरिति यावद्। मार्गः = अध्वा, उल्ब-

णः = प्रकाशः, प्रतिबन्धरहित इति यावद् । आसीत् = बभूव ॥ ३३ ॥

समासादि—बहुभिः प्रकारैरिति बहुधा ( अ० ) । पादैः पिबन्तीति पादपाः ( पुं० ) तैः पादपैः । प्रशस्तौ दन्तौ स्तोऽस्येति दन्ती ( पुं० ) तस्य दन्तिनः ( पुं० ) ॥ ३३ ॥

व्याकरणं—त्याजितैः = ( त्यज ( हानौ—अकारेत् ) + णिच् ) त्याजि + इट् + क्तः + भिस्, "निष्ठायां सेटि" इति णिलोपे रूपम् । उत्खातैः = उद् + खनु ( अवदारणे-उदित् ) + क्तः + भिस्, "जनसनखनां सञ्झलोः" इत्याकारान्तादेशे रूपम् । भग्नैः = भञ्जो (आमर्दने—ओदित् ) + क्तः + भिस्, "ओदितश्च" इति निष्ठातस्य नत्वे "अनिदितां हल उपधायाः क्ङिति" इति नकारलोपे कृत्वे रूपम् । आसीत् = अस ( भुवि—अकारेत् ) + लङ्, लङस्तिपि रूपम् ॥ ३३ ॥

वाच्यान्तरं—फलं त्याजितैरुत्खातैर्बहुधा भग्नैश्च नृपैः पादपैर्दन्तिन इव तस्य मार्गे रघोरुल्वणेनाभूयत ॥ ३३ ॥

कोशः—"दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः" इत्यमरः ॥ ३३ ॥

तात्पर्यार्थः—यथा महाबलिष्ठो वन्यगजेन्द्रो मदोन्मत्तो मार्गस्थान् वृक्षान् फलरहितान् स्वस्थानादुन्मूलितान्छिन्नाँश्चप्रायशः कृत्वा निजगमनमार्गं प्रतिबन्धशून्यं करोति तथैव रघुरपि मार्गस्थान् परिपन्थिनो नृपांल्लाभरहितान् स्वस्थानाच्च्यावितान् रणे जितांश्च कृत्वा निजमार्गं प्रतिबन्धशून्यतया निष्कण्टकं कृतवान् ॥ ३३ ॥

भाषाऽर्थः—लाभ होना जिनका छिनवा लिया गया है, और जो अपने स्थानसे च्युत कर दिये गये हैं, तथा अनेक प्रकार से लड़ाई में जो जीत लिये गये हैं ऐसे शत्रु रूप राजाओं से उन रघु महाराज का मार्ग साफ (निष्कण्टक) हुआ, जैसे कि जिनके फल गिरादिये गये हैं और जो जड से उखाड़ दिये गये हैं तथा तोड़ दिये गये हैं ऐसे वृक्षों से हाथी का मार्ग स्वच्छ ( निष्कण्टक ) हो जाता है ॥ ३३ ॥

* अथ दिग्विजयं कुर्वतो रघोः पूर्वसमुद्रतटसमीपप्राप्तिमाह—*

**पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।**
**प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥**

सञ्जीविनी—पौरस्त्यानिति । जयी जयनशीलः । "जिदृक्षिविश्री०" इत्यादिनेनिप्रत्ययः । स रघुरेवम् । पुरो भवान्पौरस्त्यान्प्राच्यान् । "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्प्रत्ययः । तांस्तान् । सर्वानित्यर्थः । वीप्सायां द्विरुक्तिः । जनपदान्देशानाक्रामंस्तालीवनैः श्यामं महोदधेरुपकण्ठमन्तिकं प्राप ॥ ३४ ॥

अन्वयः—जयी, "स रघुः", एवम्, पौरस्त्यान्, ताँस्तान्, जनपदान्, आक्रामन्, तालीवनश्यामम्, महोदधेः, उपकण्ठम्, प्राप ॥ ३४ ॥

व्याख्या—जयी = विजयी, जयनशील इति यावद् । स रघुरित्यस्य प्रकरणवशादाक्षेपः कर्त्तव्यः । एवम् = पूर्वोक्तप्रकारेण, पौरस्त्यान् = प्राच्यान्, ताँस्तान् = सर्वान्, जनपदान् = देशान्, आक्रामन् = अधिकुर्वाणः, स्वायत्तीकुर्वन्निति यावत् । तालीवनश्यामं = ताल्याह्वयतृणद्रुमभेदकाननकृष्णम्, महोदधेः = बृहज्जलनिधेः, उपकण्ठं = समीपं, प्राप = प्राप्नोत् ॥ ३४ ॥

समासादि—पुरो भवाः पौरस्त्याः (पुं०) ताँस्तथोक्तान् । आक्रामतीत्याक्रामन् (पुं०)। जनाः पद्यन्ते यस्मिन्निति जनपदाः ( ब० व्री० ) ताँस्तथोक्तान् । जयनशीलो जयी ( पुं० ) । तालीनां वनं तालीवनं (त०पु०), तैः श्यामस्तालीवनश्यामः (त० पु०) तं तथोक्तम् । उपगतः कण्ठमित्युपकण्ठः ( त० पु० ) तमुपकण्ठम् । उदकानि धीयन्तेऽस्मिन्नित्युदधिः (पुं०), महांश्चासा वुदधिरिति महोदधिः ( क० धा० ) तस्य महोदधेः ॥ ३४ ॥

व्याकरणम्—पौरस्त्यान्=पुरस्+त्यक्+शस्, "किति च" इत्यादिवृद्धौ रूपम्। प्राप=प्र+आप्लृ (व्याप्तौ—लृदित्)+लिट्, लिटस्तिपि रूपम् ॥ ३४ ॥

वाच्यान्तरं—जयिना "तेन रघुणा" एवम्पौरस्त्यांस्तांस्तान् जनपदानाक्रामता तालीवनश्यामः महोदधेरुपकण्ठः प्रापे ॥ ३४ ॥

कोशः—"धृष्णोति चाधिकुरुते धर्षयत्यपि धर्षति । जयत्येवं विजयते ऋयत्यभिभवत्यपि ॥ अभ्यस्ति च प्रसहते पराभावयतीति च । विमानयत्यभिभवे क्लीनाति न्यक्करोति च ॥ लङ्घयत्याक्रमति च तरत्याक्रम्यतीति च" इत्याख्यातचन्द्रिका ॥ ३४ ॥

तात्पर्यार्थः—इत्थं सर्वत्र विजयलाभं प्राप्नुवन् सन् स रघुः पूर्वदिक्स्थान् सर्वान् देशान् स्वायत्तीकुर्वस्तालीनां वनैः श्यामतलं महासमुद्रस्य तटसमीपं प्राप ॥ ३४ ॥

भाषाऽर्थः—विजयी उन रघु महाराज इस प्रकार से पूर्वदिशा के सब देशों पर अपना अधिकार करते हुये ताली के वनों से श्यामवर्ण जो महासमुद्र का तट-प्रान्त है वहाँ पहुँचे॥३४॥

*अथ रघोः सकाशात्सुह्मदेशीयानां नृपाणां पादप्रणत्याऽऽत्मसंरक्षणमाह*—

**अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।**
**आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५ ॥**

सञ्जीविनी—अनम्राणामिति । अनम्राणाम् । कर्मणि षष्ठी। समुद्धर्तुरुन्मूलयितुस्तस्माद्रघोः सकाशात्। "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात्पञ्चमी। सिन्धुरयान्नदीवेगादिव सुह्मैः सुह्मदेशीयैः। सुह्मादयः शब्दा जनपदवचनाः क्षत्रियमाचक्षते । वैतसीं वेतसः सम्बन्धिनीं वृत्तिम्। प्रणतिमित्यर्थः। आश्रित्य। आत्मा संरक्षितः । अत्र कौटिल्यः—'बलीयसाऽभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्ममातिष्ठेत्' इति ॥ ३५ ॥

अन्वयः—अनम्राणां, समुद्धर्त्तुः, तस्मात्, सिन्धुरयाद्, इव, सुह्मैः, वैतसीं, वृत्तिम्, आश्रित्य, आत्मा, संरक्षितः ॥ ३५ ॥

व्याख्या—अनम्राणां=नम्रताशून्यानां, दर्पोन्मत्तानामिति यावत् । समुद्धर्त्तुं=उत्पाटयितुः, सम्यक्प्रकारेण मूलोच्छेदनसमर्थादिति यावद् । तस्मात्=पूर्वोक्ताद्, रघोः सकाशादिति यावद्। सिन्धुरयाद्=सरिद्वेगाद्, इव=यथा, सुह्मैः=सुह्मदेशीयैः, क्षत्रियैरिति भावः। वैतसीं=वानीरीयां, वेतससम्बन्धिनीमिति यावद् । वृत्तिं=व्यवहारं, नम्रतारूपामिति भावः। आश्रित्य=स्वीकृत्य, आत्मा=देहः, संरक्षितः=पालितः ॥ ३५ ॥

समासादि—नमनशीला नम्राः (पुं०), न नम्रेत्यनम्राः (न० त० पु०) तेषामनम्राणां । समुद्धरतीति समुद्धर्त्ता (पुं०) तस्मात्समुद्धर्तुः। सिन्धो रय इति सिन्धुरयः (त० पु०) तस्मात् सिन्धुरयाद्। वेतसस्येयं वैतसी (स्त्री०) तां वैतसीम् ॥ ३५ ॥

व्याकरणं—संरक्षित.=सम्+रक्ष (रक्षणे—अकारेत्)+इट्+क्तः+सु। आश्रित्य=आङ्+श्रिञ् (सेवायां—ञित्)+क्त्वा+ल्यप् ॥ ३५ ॥

वाच्यान्तरम्—अनम्राणां समुद्धर्तुस्तस्मात् सिन्धुरयादिव सुह्मा वैतसी वृत्तिमाश्रित्यात्मानं संरक्षितवन्तः ॥ ३५ ॥

कोशः—" अथ वेतसे । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः" इत्यमरः ॥ ३५ ॥

तात्पर्यार्थः—दर्पोन्मत्तानां नृपाणामुन्मूलनसमर्थात् तस्मादमिततेजसो रघोः सकाशात् सुह्मदेशीया राजानस्तथा पादप्रणता भूत्वाऽऽत्मानं रक्षितवन्तो यथा नदीवेगाद् वेतसा नम्राः सन्तः स्वरक्षां कुर्वन्ति ॥ ३५ ॥

भाषाऽर्थः—जो कि नम्र नहीं हैं ऐसे लोगों को उखाड़ देने वाले नदी के वेग के समान उन रघु महाराज से सुह्मदेश के राजाओं ने वेत के तुल्य ( नम्र हो जाना रूप ) वृत्ति का आश्रय लेकर अपने को ( नष्ट होने से ) बचाया ॥ ३५ ॥

*अथ रघुकर्तृकं वङ्गदेशीयानां राज्ञां पराभवमाह—*

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान्गङ्गास्रोतोऽन्तरेषु सः ॥ ३६ ॥

सञ्जीविनी—वङ्गानिति । नेता नायकः स रघुर्नौभिः साधनैरुद्यतान्संनद्धान्वङ्गान्राज्ञस्तरसा बलेन । 'तरसो बलरंहसी' इति यादवः । उत्खायोन्मूल्य गङ्गायाः स्रोतसां प्रवाहाणामन्तरेषु द्वीपेषु जयस्तम्भान्निचखान । स्थापितवानित्यर्थः ॥ ३६ ॥

अन्वयः—नेता, सः, नौसाधनोद्यतान्, वङ्गान्, तरसा, उत्खाय, गङ्गास्रोतोऽन्तरेषु, जयस्तम्भान्, निचखान ॥ ३६ ॥

व्याख्या—नेता = नायकः, महत्सैन्यानां परिचालक इति भावः । सः = पूर्वोक्तः, रघुरिति यावद् । नौसाधनोद्यतान् = तरण्युपकरणसन्नद्धान्, नौकारूपोपकरणैर्युद्धाय कृतोद्यमानिति यावद् । वङ्गान् = वङ्गदेशीयान्, राज्ञ इति भावः । तरसा = बलेन, उत्खाय = समुद्धृत्य, उन्मूलनं कृत्वेति यावद् । गङ्गास्रोतोऽन्तरेषु = भागीरथीप्रवाहमध्यद्वीपेषु, जयस्तम्भान् = विजयस्थूणाः, विजयस्मारकस्तम्भानिति यावद् । निचखान = न्यखनत् ॥३६॥

समासादि—नाव एव साधनानि नौसाधनानि ( क० धा० ), तैरुद्यता नौसाधनोद्यताः ( त० पु० ) तांस्तथोक्तान् । जयस्य स्तम्भा जयस्तम्भाः ( त० पु० ) ताञ्जयस्तम्भान् । गङ्गायाः स्रोतांसि गङ्गास्रोतांसि ( त० पु० ), तेषामन्तराणि गङ्गास्रोतोऽन्तराणि (त०पु०) तेषु तथोक्तेषु ॥ ३६ ॥

व्याकरणम्—उत्खाय = उद् + खनु ( अवदारणे—उदित् ) + क्त्वा = ल्यप्, "जनसनखनां सञ्झलोः" इत्यात्वे रूपम् । निचखान = नि + खनु ( अवदारणे—उदित् ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये, चुत्वे वृद्धौ रूपम् ॥ ३६ ॥

वाच्यान्तरं—नेत्रा तेन नौसाधनोद्यतान् वङ्गांस्तरसोत्खाय गङ्गास्रोतोऽन्तरेषु जयस्तम्भा निचख्निरे ॥ ३६ ॥

कोशः—"स्त्रियां नौस्तरणिस्तरिः" इति । "स्तम्भौ स्थूणाजडीभावौ" इति चामरः । "स्रोतः प्रवाहेन्द्रिययोः" इत्यनेकार्थसङ्ग्रहः ॥ ३६ ॥

तात्पर्यार्थः—महत्सैन्यसञ्चालकः स रघुर्नौकारूपयुद्धसाधनैर्युद्धाय बद्धपरिकरान्वङ्गदेशीयान् राज्ञो बलेन विजित्य गङ्गाप्रवाहमध्यद्वीपेषु निजविजयस्मृतिद्योतकान् स्तम्भान् स्थापितवान् ॥ ३६ ॥

भाषार्थः—बड़ी भारी सेना के नायक उन रघु महाराज ने नौका रूप साधनों से युद्ध के लिये उद्यत वङ्गदेश के राजाओंको बल से उखाड कर (जीत कर) गङ्गा के प्रवाह के बीच द्वीपों में अपने जय के स्मारक स्तम्भों को गाड़ दिया ॥ ३६ ॥

*अथ रघोः समीपे विजितवङ्गदेशीयराजकर्तृकमुपहारस्वरूपधनार्पणमाह—*

आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७ ॥

सञ्जीविनी—आपादेति । आपादपद्ममङ्घ्रिपद्मपर्यन्तं प्रणताः । अत एवोत्खाताः पूर्वमुद्धृता अपि प्रतिरोपिताः पश्चात्स्थापितास्ते वङ्गाः । कलमा इव शालिविशेषा इव । 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्यमरः । तेऽप्यापादपद्मं पादपद्ममूलपर्यन्तं प्रणताः । 'पादो बुध्ने तुरीयांशशैलप्रत्यन्तपर्वताः' इति विश्वः । उत्खातप्रतिरोपिताश्च । रघुं फलैर्धनैः । अन्यत्र सस्यैः । संवर्धयामासुः । 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः । सस्ये' इति केशवः ॥ ३७ ॥

अन्वयः—आपादपद्मप्रणताः, "अत एव", उत्खातप्रतिरोपिताः, ते, कलमाः, इव, रघुम्, फलैः, सम्बर्धयामासुः ॥ ३७ ॥

व्याख्या—आपादपद्मप्रणताः = चरणकमलपर्यन्तनम्रीभूताः, "पक्षे" पादपद्ममूलपर्यन्तनम्रीभूताः, मञ्जरीभारेण स्वमूलपर्यन्तं विनम्रा इति यावद् । अत एवेति शेषः । उत्खातप्रतिरोपिताः = आदावुन्मूलिताः पश्चात् स्थापिताः, शालिपक्षेऽप्येवम् । ते = पूर्वोक्ताः, वङ्गदेशीया राजान इति यावद् । कलमाः = शालिविशेषाः, इव = यथा, रघुं = दिलीपसूनुं, फलैः = धनैः, "पक्षे" सस्यैः, संबर्धयामासुः = समबर्धयन् ॥ ३७ ॥

समासादि—पादः पद्ममिवेति पादपद्मम्, ( उ० स० ), तन्मर्यादीकृत्येत्यापादपद्मम् ( अ० भा० ), आपादपद्मं प्रणता इत्यापादपद्मप्रणताः ( सु० सु० ) । आदावुत्खाताः पश्चात्प्रतिरोपिता इत्युत्खातप्रतिरोपिताः ( क० धा० ) ॥ ३७ ॥

व्याकरणं—संवर्धयामासुः = सम् + ( वृधु ( वृद्धौ—उदित् ) + णिच् ) बर्धि + आम् + अस ( भुवि-अकारेत् ) + लिट्, लिटो झेरुसि रूपम् ॥ ३७ ॥

वाच्यान्तरम्—आपादपद्मप्रणतैरुत्खातप्रतिरोपितैस्तैः कलमैरिव रघुः फलैः सम्वर्धयामासे ॥ ३७ ॥

कोशः—"छेदने पूरणे चापि वर्धयत्येतदर्थयोः" इत्याख्यातचन्द्रिका ॥ ३७ ॥

तात्पर्यार्थः—यथा कलमाख्याः शालिविशेषाः कृषीबलेनादौ स्वस्थानादुत्पाटिताः पश्चात् प्रतिरोपिताः सन्तः सस्यभारेण तं पूरयन्ति, तथैव वङ्गदेशीया राजानोऽपि रघुणा पूर्वं स्वपदाच्च्याविताः पश्चाद् राजासने पुनःस्थापिताः सन्तो रघोश्चरणकमलपर्यन्तं प्रणतमूर्धानो भूत्वा धनादिभिस्तं पूरयामासुः ॥ ३७ ॥

भाषाऽर्थः—"रघु महाराज के" चरण कमल तक झुके हुये "शालिपक्ष में" अपने कमल सदृश मूल भाग तक झुके हुये, अत एव पहले राज पद से हटाये गये भी पश्चात् पुनः राज पद पर स्थापित किये गये "शालिपक्ष में" पहले उखाड़े गये पश्चात् अन्यत्र फिर से बैठाये गये, उन वङ्गदेशी राजाओं ने अग्रहण मास में तइयार होने वाले "कलम" नामक शालि विशेष की भांति धनों से "शालिपक्ष में" फलों से उन रघु महाराज को पूर्ण कर दिया ॥३७॥

*अथ रघुर्वङ्गान्विजित्य कलिङ्गाभिमुखो ययावित्याह—*

स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥

सञ्जीविनी—स इति । स रघुर्बद्धा द्विरदा एव सेतवो यैस्तैः सैन्यैः कपिशां नाम नदीं तीर्त्वा । 'करभाम्' इति केचित्पठन्ति । उत्कलै राजभिरादर्शितपथः सन्दर्शितमार्गः सन् । कलिङ्गाभिमुखो ययौ ॥ ३८ ॥

अन्वयः—सः, बद्धद्विरदसेतुभिः, सैन्यैः, कपिशां, तीर्त्वा, उत्कलादर्शितपथः, "सन्", कलिङ्गाभिमुखः, ययौ ॥ ३८ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । बद्धद्विरदसेतुभिः = रचितद्विपालिभिः, हस्तिभिरेव साधनैः कृतसेतुरचनैरिति यावद् । सैन्यैः = सेनाभिः, कपिशां = तदाख्यां, नदीमिति यावद् । तीर्त्वा = उत्तीर्य, उत्कलादर्शितपथः = उत्कलदेशीयराजसन्दर्शिताध्वा, कलिङ्गाभिमुखः = कलिङ्गदेशोन्मुखः, कलिङ्गदेशमुद्दिश्य कृतगमन इति यावद् । सन्निति शेषः । ययौ = अगमत् ॥ ३८ ॥

समासादि—द्वौ रदौ येषान्ते द्विरदाः (ब० व्री०), त एव सेतवो द्विरदसेतवः (क० धा०), बद्धा द्विरदसेतवो यैस्तानि बद्धद्विरदसेतूनि ( ब० व्री० ) तैस्तथोक्तैः । उत्कलैरादर्शित उत्कलादर्शितः (त० पु०), उत्कलादर्शितः पन्था यस्य स उत्कलादर्शितपथः (ब० व्री०) ।

कलिङ्गस्याभिमुखः कलिङ्गाभिमुखः (त० पु०) ॥ ३८ ॥

व्याकरणं—तीर्त्वा = तॄ ( प्लवनसन्तरणयोः ) + क्त्वा, "ॠत इद्धातोः" इतीत्वे रपरे "हलि च" इति दीर्घे रूपम् । ययौ = या (प्रापणे) + लिट् ॥ ३८ ॥

वाच्यान्तरं—तेन बद्धद्विरदसेतुभिः सैन्यैः कपिशां तीर्त्वोत्कलादर्शितपथेन कलिङ्गाभिमुखेन यये ॥ ३८ ॥

कोशः—"सेतुरालौ स्त्रियां पुमान्" इत्यमरः ॥ ३८ ॥

तात्पर्यार्थः—स रघुर्वङ्गदेशीयान् राज्ञो विजित्य निजसैन्यैः सह सेनागजेन्द्रैरेव साधनैः सेतुं निर्माय कपिशां नाम नदीमुत्तीर्योत्कलदेशीयै राजभिः सन्दर्शितमार्गः सन् कलिङ्गदेशीयान् राज्ञो जेतुं जगाम ॥ ३८ ॥

भाषाऽर्थः—वे रघु महाराज जिसने हाथियों से ही पुल को तइयार की है, ऐसी अपनी सेना के साथ कपिशा नाम की नदी को पार कर उत्कल देश के राजाओं से बताये हुये मार्ग से कलिङ्गदेश की तरफ (मुख किये हुये) चले ॥ ३८ ॥

*अथ रघोः प्रतापो महेन्द्रपर्वतशिखरे व्याप्तो बभूवेत्याह—*

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥

सञ्जीविनी—स इति । स रघुर्महेन्द्रस्य कुलपर्वतविशेषस्य । (महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ ) इति विष्णुपुराणात् । मूर्ध्नि तीक्ष्णं दुःसहं प्रतापम् । यन्ता सारथिर्गम्भीरवेदिनो द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितमङ्कुशमिव । न्यवेशयन्निक्षिप्तवान् । (त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्याद्गम्भीरवेदिता ॥ ) इति राजपुत्रीये । ( चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः ॥ ) इति मृगचर्मीये ॥ ३९ ॥

अन्वयः—सः, महेन्द्रस्य, मूर्ध्नि, तीक्ष्णं, प्रतापं, यन्ता, गम्भीरवेदिनः, द्विरदस्य, "मूर्ध्नि, तीक्ष्णम्" अङ्कुशम्, इव, न्यवेशयत् ॥ ३९ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । महेन्द्रस्य = कुलपर्वतविशेषस्य, मूर्ध्नि = शिरसि, "पर्वतपक्षे" शिखर इति यावद् । तीक्ष्णं = तीव्रम्, असह्यमिति यावद्, "अङ्कुशपक्षे" निशातमिति यावद् । प्रतापं = कोशदण्डजं, तेजोविशेषमिति यावद् । यन्ता = हस्तिपकः, गम्भीरवेदिनः = गभीरज्ञानिनः, तदाख्यगजविशेषस्येति यावद् । द्विरदस्य = द्विपस्य, "मूर्ध्नि, तीक्ष्णम्", अङ्कुशं = सृणिम्, इव = यथा, न्यवेशयत् = निवेशयामास, निचिक्षेपेति यावद् ॥ ३९ ॥

समासादि—अङ्क्यतेऽनेनेत्यङ्कुशः (पुं०) तमङ्कुशम् । यच्छतीति यन्ता (पुं०) । गम्भीरं वेदितुं शीलमस्येति गम्भीरवेदी (पुं०) तस्य गम्भीरवेदिनः ॥ ३९ ॥

व्याकरणं—न्यवेशयत् = नि + अट् + (विश (प्रवेशने—अकारेत्) + णिच् ) वेशि + शप् + लङ्, लङस्तिपि रूपम् । अङ्कुशम् = (अकि (लक्षणे—इदित्) + नुम्) अङ्क् + उशच् + अम्, "सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः" इत्यौणादिकोऽशुच् प्रत्ययो निपात्यते ॥ ३९ ॥

वाच्यान्तरं—तेन महेन्द्रस्य मूर्ध्नि तीक्ष्णः प्रतापो यन्त्रा गम्भीरवेदिनो द्विरदस्य मूर्ध्नि तीक्ष्णोऽङ्कुश इव न्यवेश्यत ॥ ३९ ॥

कोशः—"अङ्कुशोऽस्त्री सृणिः स्त्रियाम्" इति । "यन्ता, सूतः क्षत्ता च सारथिः" इति चामरः ॥ ३९ ॥

तात्पर्यार्थः—यथा हस्तिपको गम्भीरवेदिनो गजस्य मस्तके तीक्ष्णमङ्कुशं निवेशयति

तथैव स रघुरपि महेन्द्राख्यपर्वतस्य शिखरे दुःसहं प्रतापं न्यवेशयत् ॥ ३९ ॥

भाषाऽर्थः—उन रघु महाराज ने महेन्द्र नामक पर्वत के शिखर पर दुःसह अपने प्रताप को जैसे सारथि (महावत) गम्भीरवेदी संज्ञक ( चिरकाल होने पर जो अत्यन्त परिचित शिक्षा को समझता है उसे गम्भीरवेदी ऐसा गज शास्त्र के जानने वाले पण्डित जन कहते हैं ) हाथी के मस्तक पर चोखे अङ्कुश को रखता है, उसी भांति रक्खा ॥ ३९ ॥]

*अथ कलिङ्गदेशाधिपो युद्धार्थं रघोरभिमुखो बभूवेत्याह—*

**प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।**
**पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥**

सञ्जीविनी—प्रतिजग्राहेति । गजसाधनः सन् कालिङ्गः कलिङ्गानां राजा । "द्व्यञ्मगधकलिङ्गसूरमसादण्" इत्यनेनाणप्रत्ययः । अस्त्रैरायुधैस्तं रघुम् । पक्षाणां छेद उद्यतमुद्युक्तं शक्र शिलावर्षी पर्वत इव । प्रतिजग्राह प्रत्यभियुक्तवान् ॥ ४० ॥

अन्वयः—गजसाधनः, "सन्", कालिङ्गः, अस्त्रैः, तं, पक्षच्छेदोद्यतं, शक्रं, शिलावर्षी, पर्वतः, इव, प्रतिजग्राह ॥ ४० ॥

व्याख्या—गजसाधनः = द्विरदरूपयुद्धोपायः, असङ्ख्येयगजवृन्दयुक्त इति भावः । सन्निति शेषः । कालिङ्गः = कलिङ्गदेशाधिपः, अस्त्रैः = प्रहरणैः तं = पूर्वोक्तं, रघुमिति यावत् । पक्षच्छेदोद्यतं = गरुत्कर्तनकृतोद्यमं, शक्रं = सुरपतिं, शिलावर्षी = प्रस्तरवर्षाकारी, पर्वतः = गिरिः, इव = यथा, प्रतिजग्राह = प्रतिगृहीतवान् ॥ ४० ॥

समासादि—कलिङ्गानां राजा कालिङ्गः (पुं०) । गजा एव साधनं यस्य स गजसाधनः (ब०,व्री०) । पक्षाणां छेदः पक्षच्छेदः (त० पु०), तत्रोद्यतः पक्षच्छेदोद्यतः (त० पु०) तं तथोक्तम् । शिला वर्षितुं शीलमस्येति शिलावर्षी (पुं०) ॥ ४० ॥

व्याकरणं—प्रतिजग्राह = प्रति + ग्रह (उपादाने—अकारेत्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये चुत्वे वृद्धौ रूपम् ॥ ४० ॥

वाच्यान्तरं—गजसाधनेन सता कालिङ्गेनास्त्रैः स पक्षच्छेदोद्यतः शक्रः शिलावर्षिणा पर्वतेनेव प्रतिजगृहे ॥ ४० ॥

कोशः—"गरुत्पक्षच्छदाः" इति । "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इति चामर ॥ ४० ॥

तात्पर्यार्थः—यथा पर्वतः पक्षच्छेदे समुद्यतं महेन्द्रं प्रस्तरवर्षणेन प्रतिरुरोध तथैव महता गजसैन्येन परिवृतः कलिङ्गदेशाधिपतिरपि स्वसहायखण्डनोद्यतं रघुमायुधवृष्ट्या प्रतिगृहीतवान् ॥ ४० ॥

भाषाऽर्थः—गज ही है साधन (सेना का अङ्ग) जिसका ऐसा कलिङ्गदेश का राजा आयुधों से उन रघु महाराज का जैसे पक्षों के काटने में प्रवृत्त इन्द्र का शिलाओं की वर्षा करने वाले पर्वतों ने सामना किया था, उसी भाँति किया ॥ ४० ॥

*अथ रघोर्विजयलाभो बभूवेत्याह—*

**द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।**
**सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥**

सञ्जीविनी—द्विषामिति । काकुत्स्थो रघुस्तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां बाणविशेषाणां दुर्दिनम् । लक्षणया वर्षमुच्यते । विषह्य सहित्वा सद्यथाशास्त्रं मङ्गलस्नात इव विजयमङ्गलार्थमभिषिक्त इव जयश्रियं प्रतिपेदे प्राप । 'यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम्' इति यादवः ॥ ४१ ॥

अन्वयः—काकुत्स्थः, तत्र, द्विषां, नाराचदुर्दिनं, विषह्य, सन्मङ्गलस्नातः, इव, जयश्रियं,

प्रतिपेदे ॥ ४१ ॥

व्याख्या—काकुत्स्थः = ककुत्स्थगोत्रापत्यं, रघुरिति यावत्। तत्र = तस्मिन्, पूर्वोक्ते महेन्द्रपर्वत इति यावद्। द्विषां = शत्रूणां, कलिङ्गदेशीयानां राज्ञामिति यावद्। नाराचदुर्दिनं = प्रक्ष्वेडनवर्षं, सर्वलोहमयबाणवर्षणमिति यावद्। विषह्य = क्षान्त्वा, सहित्वेति यावद्। सन्मङ्गलस्नातः = प्रशस्तसर्वौषध्यभिषिक्तः, यथाशास्त्रं विजयमङ्गलार्थं कृतसर्वौषधिस्नान- इति यावद्। इव = यथा, जयश्रियं = विजयलक्ष्मीं, प्रतिपेदे = प्राप्नोत् ॥ ४१ ॥

समासादि—ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः (पुं०)। नराणां समूहो नारः (पुं०), तमाचामन्तीति नाराचाः (पुं०), तेषां दुर्दिनं नाराचदुर्दिनं (त० पु०) तत्तथोक्तम्। सच्च तन्मङ्गलं सन्मङ्गलं (क० धा०), सन्मङ्गलार्थं स्नातः सन्मङ्गलस्नातः (त० पु०)। जयस्य श्रीर्जयश्रीः (त० पु०) तां जयश्रियम् ॥ ४१ ॥

व्याकरणं—विषह्य = वि + षह (मर्षणे—अकारेत्) + क्त्वा + ल्यप्। काकुत्स्थः = ककुत्स्थ + ङस् + अण् + सु, "तस्यापत्यम्" इत्यण्प्रत्यये रूपम्। नारः = नर + ङस् + अण् + सु, "तस्य समूहः" इत्यण्प्रत्यये रूपम्। नाराचानां = नार + अम् + आङ् + चमु (अदने—उदित्) + डः + आम्, "अन्येष्वपि दृश्यते" इत्यत्रापेः सर्वोपाधिव्यभिचारार्थकतया डप्रत्यये टिलोपे रूपम्। प्रतिपेदे = प्रति + पद (गतौ—अकारेत्) + लिट्, लिटस्तप्रत्यये द्वित्वे एत्वाभ्यासलोपे रूपम् ॥ ४१ ॥

वाच्यान्तरं—काकुत्स्थेन तत्र द्विषां नाराचदुर्दिनं विषह्य सन्मङ्गलस्नातेनेव जयश्रीः प्रतिपेदे ॥ ४१ ॥

कोशः—"प्रक्ष्वेडनास्तु नाराचाः" इत्यमरः ॥ ४१ ॥

तात्पर्यार्थः—ककुत्स्थवंशसम्भवो रघुस्तत्र महेन्द्राचले कलिङ्गदेशीयानां राज्ञां सर्वलोहमयशरवर्षणं सहित्वा यथा कश्चिद्विजयमङ्गलार्थं, सर्वौषधिस्नानं कृत्वा श्रियं प्राप्नोति तथैव विजयश्रियं प्राप, अर्थाद् यथाविधि सर्वानरीनजयत् ॥ ४१ ॥

भाषाऽर्थः—ककुत्स्थ राजा के वंशज रघु महाराज ने उस महेन्द्र नामक पर्वत के ऊपर शत्रुओं के लोहे के बने हुये नाराच संज्ञक बाणों की घोर वर्षा को सहन कर के जैसे कोई शास्त्रानुसार विजयमङ्गल के लिये सर्वौषधि से स्नान किया हुआ हो उस भांति जयलक्ष्मी को प्राप्त किया ॥ ४१ ॥

* अथ महेन्द्राद्रौ रघुसैनिका विजयमहोत्सवं चक्रुरित्याह—*

**ताम्बूलीनां दलैस्तत्र रचितापानभूमयः।**
**नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥**

सञ्जीविनी—ताम्बूलीनामिति। तत्र महेन्द्राद्रौ युध्यन्त इति योधाः। पचाद्यच्। रचिताः कल्पिता आपानभूमयः पानयोग्यप्रदेशा यैस्ते तथोक्ताः सन्तो नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पपुः। तत्र विजह्रुरित्यर्थः। शात्रवं यशश्च पपुः। जह्रुरित्यर्थः॥४२॥

अन्वयः—तत्र, योधाः, रचितापानभूमयः, "सन्तः", नारिकेलासवं, ताम्बूलीनां, दलैः, पपुः, शात्रवं, यशः, च, "पपुः" ॥ ४२ ॥

व्याख्या—तत्र = तस्मिन्, पूर्वोक्ते महेन्द्राद्राविति यावद्। योधाः = भटाः, रघुसैनिका- इति यावद्। रचितापानभूमयः = कृतपानगोष्ठिकाभुवः, कल्पितमद्यपानार्थकसभाप्रदेशा इति यावद्। सन्त इति शेषः। नारिकेलासवं = लाङ्गलीमैरेयं, ताम्बूलीनां = ताम्बूलवल्लीनां, दलैः = पर्णैः, पपुः = पीतवन्तः, शात्रवं = शत्रुसम्बन्धि, कलिङ्गदेशीयानां राज्ञामिति यावद्। यशः = कीर्तिं, च = समुच्चयेऽर्थे, पपुः ॥ ४२ ॥

समासादि—आ सम्भूय पिबन्त्यत्रेत्यापानं (न० लिं०), आपानस्य भूमय आपान-

भूमयः ( त० पु० ) रचिता आपानभूमयो यैस्ते रचितापानभूमयः ( ब० व्री० ) । आसूयत इत्यासवः ( पुं० ), नारिकेलस्यासव इति नारिकेलासवः ( त० पु० ) तं तथोक्तम्। युध्यन्त इति योधाः ( पुं० )। शत्रोरिदं शात्रवं ( न० लिं० ) तत्तथोक्तम् ॥ ४२ ॥

व्याकरणम्--आपानम्=आङ्+पा (पाने)+ल्युट्+सु, "करणाधिकरणयोश्च" इति ल्युट्प्रत्यये रूपम् । आसवः=आङ्+षुञ् (अभिषवे--ञित्)+अप्+सु, "ऋदोरप्" इत्यप्प्रत्यये रूपम्। पपुः=पा ( पाने )+लिट्, लिटो झेरुसि रूपम् ॥ ४२ ॥

वाच्यान्तरं--तत्र योधै रचितापानभूमिभिः "सद्भिः" नारिकेलासवस्ताम्बूलीनां दलैः पपे, शात्रवं यशश्च पपे ॥ ४२ ॥

कोशः--"ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि" इति। "आपानं पानगोष्ठिका" इति। "नारिकेलस्तु लाङ्गली" इति। "मैरेयमासवः सीधुः" इति । "भटा योधाश्च योद्धारः" इति चामरः ॥ ४० ॥

तात्पर्यार्थ.--कलिङ्गदेशीयान् राज्ञो विजित्य हर्षनिर्भरमानसाः सन्तो रघोः सैनिकयोद्धारस्तत्र महेन्द्राद्रौ पानयोग्यप्रदेशं विरचय्य नारिकेलस्य मद्यं ताम्बूलीनां दलै पीत्वा विजह्रुस्तथा शत्रूणां यशो जह्रुः ॥ ४२ ॥

भाषाऽर्थः--उस महेन्द्र नामक पर्वत पर महाराज रघु के योद्धा लोगों ने मद्यपान करने के योग्य प्रदेशों की रचना किये हुये नारियल का आसव बनाकर उसे पान के पत्तों से पीया, अर्थात्--विहार किया; और शत्रुओं के यश का भी पान किया, अर्थात् हरण किया ॥ ४२ ॥

*अथ रघुर्महेन्द्रनाथं कालिङ्गं विजित्य पुनरपि तं राजासने स्थापयामासेत्याह--*

**गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः।**
**श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३ ॥**

सञ्जीविनी--गृहीतेति। धर्मविजयी धर्मार्थं विजयशीलः स नृपो रघु। गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तः। तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं जहार। धर्मार्थमिति भावः। मेदिनीं तु न जहार। शरणागतवात्सल्यादिति भावः ॥ ४३ ॥

अन्वय--धर्मविजयी, सः, नृपः, गृहीतप्रतिमुक्तस्य, महेन्द्रनाथस्य, श्रियं, जहार, मेदिनीं, तु, न, "जहार ॥ ४३ ॥

व्याख्या--धर्म(१)विजयी=पुण्यजयनशीलः, धर्मार्थमेव दिशां विजेतुं प्रवृत्त इत्यर्थ. । सः=पूर्वोक्तः, नृपः=भूपतिः, रघुरिति यावद् । गृहीतप्रतिमुक्तस्य=बद्धपरित्यक्तस्य, आदौ विजित्य स्वायत्तीकृतस्य पश्चात परित्यक्तस्येति यावद्। महेन्द्रनाथस्य=महेन्द्राख्यपर्वतस्वामिनः, कलिङ्गदेशाधिपस्येति यावद् । श्रियं=लक्ष्मीं, जहार=अहरत्, मेदिनीं=पृथ्वीं, तु=किन्तु, न=नहि, जहार । शरणागतवत्सलतयेति भावः ॥ ४३ ॥

समासादि--गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तः ( क० धा० ) तस्य तथोक्तस्य। विजयशीलो विजयी (पुं०), धर्मार्थं विजयी धर्मविजयी (त०पु०)। महेन्द्रस्य नाथो-महेन्द्रनाथः ( त० पु० ) तस्य महेन्द्रनाथस्य ॥ ४३ ॥

व्याकरणं--विजयी=वि+जि ( जये )+इनिः+सु, "जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च" इतीनिप्रत्यये रूपम्। जहार=हृञ् ( हरणे-ञित् )+लिट्, लिटस्तिपो

( १ ) धर्मविजयी, लोभविजयी, असुरविजयी चेति राज्ञस्त्रैविध्यं भवति, तत्र च यो निर्जितस्य रिपो राजश्रियं केवलां हृत्वा पुनस्तस्मै राज्यं ददाति स धर्मविजयी। यश्च रिपो राजश्रियं राज्यं च गृहीत्वा-तस्मै केवलं जीवनदानमेव ददाति स लोभविजयी। तथा यः शत्रुं हत्वा तदीयां राजलक्ष्मीं मेदिनीं च गृह्णाति सोऽसुरविजयीति।

-र्णलि द्वित्वेऽभ्यासकार्ये चुत्वे वृद्धौ रूपम् ॥ ४३ ॥

वाच्यान्तरं—धर्मविजयिना तेन नृपेण गृहीतप्रतिमुक्तस्य महेन्द्रनाथस्य श्रीर्जह्रे मेदिनी तु न जह्रे ॥ ४३ ॥

कोशः—"गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही" इत्यमरः ॥ ४३ ॥

तात्पर्यार्थः—धर्मविजयी स राजा रघुः संग्रामे पराजितं महेन्द्रनाथं कलिङ्गदेशीयं राजानं वन्दीकृत्य शरणागतवत्सलतया पश्चात्तं बन्धनमुक्तं कृत्वा केवलं तद्राजश्रियमेवाहरन्न तु राज्याधिकारम् ॥ ४३ ॥

भाषाऽर्थः—धर्म के लिये विजय करने का स्वभाव जिसका है, ऐसे उन रघु महाराज ने पहले पकड़ कर फिर पीछे से छोड़ दिये गये कलिङ्ग-देशीय महेन्द्राचल के राजा की लक्ष्मी का केवल हरण किया, न कि राज्य का, क्योंकि-शरणागत वत्सल थे ॥ ४३ ॥

*अथ पूर्वदिग्गतो दक्षिणां दिशं रघुर्ययावित्याह—*

ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥

सञ्जीविनी—तत इति । ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलितक्रमुकश्रेणीमता । व्रीह्यादित्वादिनिप्रत्ययः । वेलायाः समुद्रकूलस्य तटेनोपान्तेनैवागस्त्येनाचरितामाशां दक्षिणां दिशमनाशास्यजयः । अयत्नसिद्धत्वादप्रार्थनीयजयः सन् । ययौ । ( अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः ॥ ) इति ब्रह्मपुराणे ॥ ४४ ॥

अन्वयः—ततः, फलवत्पूगमालिना, वेलातटेन, एव, अगस्त्याचरिताम्, आशाम्, अनाशास्यजयः, "सन्" ययौ ॥ ४४ ॥

व्याख्या—ततः = तदनन्तरं, पूर्वदिग्विजयानन्तरमिति यावत् । फलवत्पूगमालिना = फलयुक्तखपुरपङ्क्तिमता, फलितक्रमुकवृक्षराजिशालिनेति यावत् । वेलातटेन = अब्ध्यम्बुविकृतितीरेण, समुद्रतीरेणेति यावत् । एव = अवधारणेऽर्थे, अगस्त्याचरितां = कुम्भसम्भवाश्रितां, दक्षिणामिति भावः । आशां = दिशम्, अनाशास्यजयः = अनभिलाष्यविजयः, प्रयत्नं विनैव विजयलाभादिति भावः । सन् स रघुरिति शेषः । ययौ = जगाम ॥ ४४ ॥

समासादि—वेलायास्तटं वेलातटं ( त० पु० ) तेन वेलातटेन । फलानि सन्त्येष्विति फलवन्तः ( पुं० ), ते च ते पूगाः फलवत्पूगाः ( क० धा० ), तेषां माला फलवत्पूगमाला ( त० पु० ), साऽस्त्यस्मिन्निति फलवत्पूगमालि ( न० लिं० ) तेन तथोक्तेन । अगस्त्येनाचरिताऽगस्त्याचरिता ( त० पु० ) तां तथोक्ताम् । अनाशास्यो जयो यस्य सोऽनाशास्यजयः ( ब० व्री० ) ॥ ४४ ॥

व्याकरणं—ययौ = या ( प्रापणे ) + लिट्, लिटस्तिपो णलि रूपम् ॥ ४४ ॥

वाच्यान्तरं—ततः फलवत्पूगमालिना वेलातटेनैवागस्त्याचरिताऽऽशाऽनाशास्यजयेन "सता तेन रघुणा" यये ॥ ४४ ॥

कोशः—"अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इति । "घोण्टा तु पूगः क्रमुकः गुवाकः खपुर" इति । "अगस्त्यः कुम्भसम्भवः" इत्यमरः ॥ ४४ ॥

तात्पर्यार्थः—पूर्वदिग्विजयानन्तरं परमप्रतापशाली महाराजो रघुः फलयुक्तक्रमुकतरुपङ्क्तिसुशोभितेन समुद्रतटेनैव दक्षिणां दिशं ययौ ॥ ४४ ॥

भाषाऽर्थः—पूर्व दिशा का विजय कर चुकने के बाद फल से लदे हुये सुपारी के वृक्ष कतार के कतार जिस में लगे हुये हैं ऐसे समुद्र के किनारे किनारे २ से ही अगस्त्य भगवान् से सेवित जो दक्षिण दिशा है उसकी तरफ अनायास ही विजय लाभ करने वाले

महाराज रघु गये ॥ ४४ ॥

*अथ दक्षिणां दिशं गच्छन् रघुर्मार्गे कावेरीं प्रापेत्याह—*

**स सैन्यपरिभोगेण गजदान सुगन्धिना ।**

**कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५ ॥**

सञ्जीविनी—स इति । स रघुः । गजानां दानेन मदेन सुगन्धिना सुरभिगन्धिना । "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इत्यनेनेकारादेशः समासान्तः । यद्यपि गन्धस्येत्त्वे तदेकान्तग्राहणं कर्तव्यमिति नैसर्गिकगन्धविवक्षायामेवेकारादेशः, तथाऽपि निरङ्कुशाः कवयः । तथा माघकाव्ये—"ववुरयुक्छदगुच्छसुगन्धयः सततमास्ततगानगिरोऽलिभिः"(६।५०)नैषधे च—"अपां हि तृषाय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा"(३।९३)इति । 'न कर्मधारयान्मत्वर्थीयः' इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव । सेनायां समवेताः सैन्याः । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः । "सेनायां वा" इति ण्यप्रत्ययः । तेषां (१)परिभोगेण कावेरीं नाम सरितं सरितां पत्यु. समुद्रस्य शङ्कनीयामविश्वसनीयामिवाकरोत् । संभोगलिङ्गदर्शनाद्भर्तुरविश्वासो भवतीति भावः ॥ ४५ ॥

अन्वयः—सः, गजदानसुगन्धिना, सैन्यपरिभोगेण, कावेरीं, सरितां पत्युः, शङ्कनीयाम्, इव, अकरोत् ॥ ४५ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । गजदानसुगन्धिना = करिमदघ्राणतर्पणेन, गजमदप्रयुक्तशोभनगन्धवतेति यावद् । सैन्यपरिभोगेण = सैनिकोपभोगेन, सेनायां समवेतानां जलक्रीडाऽऽदिरूपोपभोगेनेति यावद् । कावेरीं = तदाख्यां, नदीमिति यावत्, सरितां पत्युः = नदीनां स्वामिनः, समुद्रस्येति यावद् । शङ्कनीयां = विश्वासानर्हां, परपुरुषोपभुक्तामिति भावः । इव = यथा, अकरोत् = चकार । सम्भोगलक्षणज्ञानात् पत्युरविश्वासो भवतीति भावः ॥ ४५ ॥

समासादि—सेनायां समवेताः सैन्याः, ( पुं० ), तेषां परिभोगः सैन्यपरिभोगः (त०पु०) तेन तथोक्तेन । शोभनो गन्धोऽस्यास्तीति सुगन्धिः ( ब० व्री० ), गजानां दानं गजदानं ( त० पु० ), तेन सुगन्धिर्गजदानसुगन्धिः ( त० पु० ) तेन तथोक्तेन । शङ्कितुं योग्या शङ्कनीया ( स्त्री० ) तां शङ्कनीयाम् ॥ ४५ ॥

कोशः—"सुरभिर्घ्राणतर्पणः । इष्टगन्धः सुगन्धिः स्यात्" इत्यमरः ॥ ४५ ॥

तात्पर्यार्थः—यथा काचन रमणी परपुरुषसम्भोगचिह्नैर्नखक्षतपरिमलादिभिर्युक्ता सती स्वस्वामिनो मनसि परपुरुषोपभोगशङ्कां जनयति तथैव रघोः सेनायां समवेतानां योधानां जलक्रीडाऽऽदिभिराविलसलिला तथा गजानां मदजलैः शोभनगन्धवती सती कावेरी नदी स्वपते. समुद्रस्य सम्भोगचिह्नदर्शनादविश्वसनीयाऽभवत् ॥ ४५ ॥

भाषाऽर्थः—उन रघु महाराज ने हाथियों के मद से कावेरी नाम की नदी को नदियों के स्वामी समुद्र के नजदीक नहीं विश्वास करने के योग्य बना दिया ॥ ४५ ॥

*अथ मार्गे रघुसैन्यं मलयाचलोपत्यकासु निवसति स्मेत्याह—*

**बलैरध्युषितास्तस्य विजिगीषोर्गताऽध्वनः ।**

**मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४६ ॥**

सञ्जीविनी—बलैरिति । विजिगीषोर्विजेतुमिच्छोर्गताध्वनस्तस्य रघोर्बलैः सैन्यैः । 'बलं शक्तिर्बलं सैन्यम्' इति यादवः । मारीचेषु मरीचवनेषूद्भ्रान्ताः परिभ्रान्ता हारीताः पक्षिविशेषा यासु ताः । 'तेषां विशेषा हारीतो मद्गु. कारण्डवः प्लवः' इत्यमरः । मलयाद्रेरुपत्यका आसन्नभूमयः । 'उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । "उपाधिभ्यां त्यकन्ना-

---

( १ ) परिभोगेन सम्भोगेन अवगाहनेनेति यावत् ।

सन्नारूढयोः" इत्यनेन त्यकन्प्रत्ययः। अध्युषिताः। उपत्यकासूषितमित्यर्थः। "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ ४६ ॥

अन्वयः—विजिगीषोः, गताध्वनः, तस्य, बलैः, मारीचोद्भ्रान्तहारीताः, मलयाद्रेः, उपत्यकाः, अध्युषिताः ॥ ४६ ॥

व्याख्या—विजिगीषोः = विजेतुमिच्छोः, विजयं कर्तुमभिलषत इति यावद्। गताध्वनः = लङ्घितपथस्य, कियद्दूरं गतस्येति यावद्। तस्य = पूर्वोक्तस्य, रघोरिति यावद्। बलैः = सैन्यैः, मारीचोद्भ्रान्तहारीताः = वेल्लजवनोड्डीयमानहारीताः, मरीचवनेष्वितस्ततः उड्डीयमानहारीताख्यपक्षिविशेषयुक्ता इति यावद्। मलयाद्रेः = मलयाचलस्य, चन्दनोद्भवस्थलपर्वतस्येति यावद्। उपत्यकाः = अद्रेरासन्ना भूमयः, अध्युषिताः = अध्यासिताः॥४६॥

समासादि—विजेतुमिच्छुर्विजिगीषुः (पुं०) तस्य विजिगीषोः। गतोऽध्वा यस्य स गताध्वा (ब० व्री०) तस्य गताध्वनः। मरीचानां समूहा मारीचाः (पुं०), तेषूद्भ्रान्ता मारीचोद्भ्रान्ताः (त० पु०), मारीचोद्भ्रान्ता हारीता यासु ता मारीचोद्भ्रान्तहारीताः (ब० व्री०)। मलयश्चासावद्रिर्मलयाद्रिः (क० धा०) तस्य मलयाद्रेः। उपासन्ना भूमय उपत्यकाः (स्त्री०) ॥ ४६ ॥

व्याकरणम्—अध्युषिताः = अधि+वस (निवासे-अकारेत्)+इट्+क्तः+टाप्+जस्, कर्मणि क्तप्रत्यये "वसतिक्षुधोः" इतीडागमे "वचिस्वपियजादीनां किति" इति सम्प्रसारणे ततः पूर्वरूपं "शासिवसिघसीनां च" इति षत्वे रूपम्। मारीचाः = मरीच+आम्+अण्+जस्, "तस्य समूहः" इत्यण्प्रत्यये रूपम्। उपत्यकाः = उप+त्यकन्+टाप्+जस् ॥ ४६ ॥

वाच्यान्तरं—विजिगीषोर्गताध्वनस्तस्य बलानि मारीचोद्भ्रान्ता हारीता मलयाद्रेरुपत्यका अध्युषितवन्ति ॥ ४६ ॥

कोषः—"अथ वेल्लजम्। मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम्" इत्यमरः ॥ ४६ ॥

तात्पर्यार्थः—दक्षिणस्यां दिशि कियद्दूरं गतस्य विजयैषिणो रघोः सैन्यं यत्र मरीचवनेषु हारीताख्यपक्षिविशेषा इतस्ततः उड्डीयमाना आसँस्तत्र मलयाचलस्य रम्यास्वासन्नभूमिषु निवासं चकार ॥ ४६ ॥

भाषाऽर्थः—विजय की इच्छा रखने वाले (दक्षिणदिशा का) कुछ रास्ता तय किये हुये उन रघु महाराज के सैनिकों ने जिस जगह पर मरीच के वनों में हारीत नामक चिड़ियाँ उड़ रही थीं ऐसी मलयाचल के समीप की भूमि (तराई) में डेरा डाला ॥ ४६ ॥

*अथ मलयाद्रेरुपत्यकाभूमिं वर्णयंस्तत्रैलालतानां प्राचुर्यमासीदित्याह—*

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥

सञ्जीविनी—ससञ्जुरिति। अश्वैः क्षुण्णानामेलालतानामुत्पतिष्णव उत्पतनशीलाः। "अलंकृञ्निराकृञ्०" इत्यादिनेष्णुच्प्रत्ययः। फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु। सर्वधनीतिवदिन्नन्तो बहुव्रीहिः। मत्तेभानां कटेषु ससञ्जुः सक्ताः। 'गजगण्डे कटौ कटौ' इति कोषः ॥ ४७ ॥

अन्वयः-अश्वक्षुण्णानाम्, एलानाम्, उत्पतिष्णवः, फलरेणवः, तुल्यगन्धिषु, मत्तेभकटेषु, ससञ्जुः ॥ ४७ ॥

व्याख्या—अश्वक्षुण्णानां = हयचूर्णितानां, तुरगखुरचूर्णितानामिति यावद्। एलानाम् = पृथ्वीकानाम्, उत्पतिष्णवः = उत्पतनशीलाः, फलरेणवः = एलाफलधूलयः, तुल्यगन्धिषु = समानगन्धवत्सु, मत्तेभकटेषु = प्रभिन्नद्विपगण्डेषु, जातमददन्तिगण्डस्थलेष्विति यावद्।

ससञ्जुः=सक्ता बभूवुः ॥ ४७ ॥

समासादि—अश्वैः क्षुण्णा अश्वक्षुण्णाः ( त० पु० ) तासां तथोक्तानाम्। उत्पतितुं शीलमेषान्त उत्पतिष्णव. (स्त्री०)। तुल्यो गन्धोऽस्त्येषामिति तुल्यगन्धिन. ( व० व्री० ) तेषु तुल्यगन्धिषु। मत्ताश्च त इभा मत्तेभाः (क० धा०), तेषां कटा मत्तेभकटाः ( त० पु० ) तेषु मत्तेभकटेषु। फलानां रेणवः फलरेणवः ( त०पु० ) ॥ ४७ ॥

व्याकरणं—क्षुण्णाः=क्षुद ( सञ्चूर्णने—अकारेत् )+क्तः+टाप्+जस्, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इतिदकारतकारयोर्नत्वे णत्वे रूपम्। ससञ्जुः=षञ्ज (परिष्वङ्गे—अकारेत् )+लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४७ ॥

वाच्यान्तरम्—अश्वक्षुण्णानामेलानामुत्पतिष्णुभिः फलरेणुभिस्तुल्यगन्धिषु मत्तेभ कटेषु ससञ्जे ॥ ४७ ॥

कोशः—"पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुला" इति। "प्रभिन्नो गर्जितो मत्त." इति चामरः ॥ ४७ ॥

तात्पर्यार्थः—मलयाद्रेरुपत्यकास्वेलालताभ्यो भूमौ पतितानामत एव हयखुरैः सञ्चूर्णितानां फलानां रजांसि स्वसमानगन्धवत्सु जातमदानां सेनागजानां गण्डस्थलेषु वायुवशादुत्पतनशीलतया संसक्तानि बभूवुर्यथा लोकेऽपि जनः समानेषु जातप्रेमतया संसक्तो भवति तथैवेति भावः ॥ ४७ ॥

भाषाऽर्थः—घोड़ों के खुरों से खुँदी हुई इलायची के लताओं की उड़ती हुई फलों की धूलि अपने समान सुगन्धि वाले मतवाले हाथियों के गण्डस्थल ( मद बहने के स्थानों ) में चिपक गई ॥ ४७ ॥

*अथ मलयतरुषु बद्धान् सेनागजान्वर्णयन्नाह—*

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम्।
नास्रसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ॥ ४८ ॥

सञ्जीविनी—भोगीति। चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनाद्निम्नेषु समर्पितं सज्जितं त्रिपदीछेदिनां पादशृङ्खलच्छेदकानामपि। 'त्रिपदी पादबन्धनम्'इति यादवः। करिणाम्। ग्रीवासु भवं ग्रैवं कण्ठबन्धनम्। "ग्रीवाभ्योऽण्च" इत्यण्प्रत्ययः। नास्रसन्न स्रस्तमभूत्। "द्युद्भ्यो लुङि" इति परस्मैपदे पुषादित्वादङ्। "अनिदितां हल उपधायाः क्ङिति" इति नकारलोपः ॥ ४८ ॥

अन्वयः—चन्दनानां, भोगिवेष्टनमार्गेषु, समर्पितं, त्रिपदीछेदिनाम्, अपि, करिणां, ग्रैवं, न, अस्रसत् ॥ ४८ ॥

व्याख्या—चन्दनानां=मलयजानां, चन्दनवृक्षाणामिति यावद्। भोगिवेष्टनमार्गेषु=भुजङ्गवलयनपदवीषु, सर्पकृतवेष्टनाद्निम्नस्थानेष्विति यावत्। समर्पितं=सज्जितं, दत्तमिति यावत्। त्रिपदीछेदिनां=पादबन्धनभञ्जनशीलानां, पादशृङ्खलोच्छेदकानामिति यावद्। अपि=युक्तपदार्थे, करिणां=गजानां, ग्रैवं=ग्रीवासु भवं, कण्ठबन्धनशृङ्खलेति यावद्। न=नहि, अस्रसत्=सस्रंस ॥ ४८ ॥

समासादि—भोगाः फणा. सन्त्येषामिति भोगिनः ( पुं० ), तेषां वेष्टनानि भोगिवेष्टनानि ( त० पु०), तेषां मार्गाः भोगिवेष्टनमार्गाः ( त० पु०) तेषु तथोक्तेषु। चन्दयत्यङ्गलेपनादिना जनानाह्लादयतीति चन्दनः (पुं०) तेषां चन्दनानाम्। ग्रीवासु भवं ग्रैवं (न० लिं०)। त्रिपदीं छेत्तुं शीलमेषान्ते त्रिपदीछेदिन. ( पुं० ) तेषां तथोक्तानाम् ॥ ४८ ॥

व्याकरण—चन्दनानां=( चदि(आह्लादे—इदित्)+णिच्+नुम्) चन्दि+ल्युट्+आम्। अस्रसत्=अट्+स्रसु ( अवस्रंसने—उदित् )+च्लि+अङ्+लुङ्, लुङस्तिपि रूपम्।

ग्रैवं = ग्रीवा + सुप् + अण् + सु ॥ ४८ ॥

वाच्यान्तरं—चन्दनानां भोगिवेष्टनमार्गेषु समर्पितेन त्रिपदीछेदिनामपि करिणां ग्रैवेण नास्रंसि ॥ ४८ ॥

कोशः—"वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम्" इति । "गन्धसारो मलयजो भद्रश्री-श्चन्दनोऽस्त्रियाम्" इति चामरः ॥ ४८ ॥

तात्पर्यार्थः—मलयाद्रेरुपत्यकासु चन्दनवृक्षेषु सर्पवेष्टनाद् यत्र यत्र रेखाः सञ्जातास्तत्र तत्र हस्तिपकैः सञ्जितपादबन्धनशृङ्खलोच्छेदनशीलानामपि हस्तिनां कण्ठबन्धनशृङ्खला न स्रस्ताऽभूत् ॥ ४८ ॥

भाषाऽर्थः—चन्दन के वृक्षों में सर्पों के लिपटे रहने से पड़ी हुई रेखाओं के बीच में दिये हुए, पैर के सीकड़ को भी तोड़ डालने वाले हाथियों के गले के बन्धन ( सीकड़ ) नहीं ढीले हुये ॥ ४८ ॥

*अथ रघोः प्रतापं पाण्डुदेशाधिपतयो न विषेहिर इत्याह—*

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९ ॥

सञ्जीविनी—दिशीति । दक्षिणस्यां दिशि रवेरपि तेजो मन्दायते मन्दं भवति । लोहितादित्वात्क्यप्प्रत्ययः । "वा क्यषः" इत्यात्मनेपदम् । दक्षिणायने तेजोमान्द्यादिति भावः । तस्यामेव दिशि पाण्ड्याः पाण्डूनां जनपदानां राजानः पाण्ड्याः । 'पाण्डोर्ड्यण्वक्तव्यः' । रघोः प्रतापं न विषेहिरे न सोढवन्तः । सूर्यविजयिनोऽपि विजितवानिति नायकस्य महानुत्कर्षो गम्यते ॥ ४९ ॥

अन्वयः—दक्षिणस्यां, दिशि, रवेः अपि, तेजः, मन्दायते, तस्याम् , एव, पाण्ड्याः, रघोः, प्रतापं, न, विषेहिरे ॥ ४९ ॥

व्याख्या—दक्षिणस्याम् = अवाच्यां, दिशि = आशायां, रवेः = सूर्यस्य, अपि = समुच्चयेऽर्थे, तेजः = प्रतापः, मन्दायते = मन्दं भवति, दक्षिणायने सूर्यस्य तेजसो मान्द्यादिति भावः । तस्यां = पूर्वोक्तायां, दक्षिणस्यां दिशीति भावः । एव = अवधारणेऽर्थे, पाण्ड्याः = पाण्डुदेशाधिपतयः, रघोः = दिलीपसूनोः प्रतापं = कोशदण्डजतेजोविशेषं, न = नहि, विषेहिरे = चक्षमिरे ॥ ४९ ॥

समासादि—मन्दं भवतीति मन्दायते । पाण्डूनां जनपदानां राजानः पाण्ड्याः (पुं०) ॥४९॥

व्याकरणम्—मन्दायते = ( मन्द + सु + क्यष् ) मन्दाय + लट् , "लोहितादिडाज्भ्यः क्यष्" इति क्यष्प्रत्यये "अकृत्सार्वधातुकयोः" इति दीर्घे "वा क्यषः" इतिवैकल्पिकपक्षे आत्मनेपदम् । पाण्ड्याः = पाण्डु + आम् + ड्यण् + जस् । विषेहिरे = वि + षह (मर्षणे—अकान्त ) + लिट्, लिटो झप्रत्ययस्येरेजादेशे द्वित्वे एत्वाभ्यासलोपे रूपम् ॥ ४९ ॥

वाच्यान्तरं—दक्षिणस्यां दिशि रवेरपि तेजसा मन्दाय्यते, तस्यामेव पाण्ड्यै रघोः प्रतापो न विषेहे ॥ ४९ ॥

कोशः—"प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः" इत्यमरः ॥ ४९ ॥

तात्पर्यार्थ—प्रचण्डप्रतापस्य रवेरपि तेजो दक्षिणायने मन्दं भवति परन्तु तस्यामेव दिशि तद्देशीयाः पाण्डुजनपदाधिपतयो राजान एव रघोः प्रतापं सोढुं समर्था न बभूवुरिति परमाश्चर्यकरमभूद् यतः सूर्यविजयिनोऽपि पाण्ड्यानसौ रघुर्विजितवानिति तस्य महानुत्कर्षो गम्यते ॥ ४९ ॥

भाषाऽर्थ—दक्षिण दिशा में सूर्य का भी तेज मन्द हो जाता है, पर उसी दिशा में पाण्डु देश के राजा लोग रघु महाराज के प्रताप को नहीं सह सके, सूर्य के विजय करने वालों

को भी जीता, इससे सूर्य की अपेक्षा अधिक महत्व दीख पडा ॥ ४९ ॥

*अथ रघवे पराजितानां पाण्डुदेशाधिपतीनामुपहारस्वरूपमुक्ताफलार्पणमाह—*

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव संचितम् ॥ ५० ॥

सञ्जीविनी—ताम्रेति । ते पाण्ड्यास्ताम्रपर्ण्या नद्या समेतस्य सङ्गतस्य महोदधेः सम्बन्धि संचितं मुक्तासारं मौक्तिकवरम् । "सारो बले स्थिरांशे च न्याय्ये क्लीबे वरे त्रिषु' इत्यमरः । स्वं स्वकीयं संचितं यश इव तस्मै रघवे निपत्य प्रणिपत्य ददुः । यशसः शुभ्रत्वादौपम्यम् । ताम्रपर्णीसङ्गमे मौक्तिकोत्पत्तिरिति प्रसिद्धम् ॥ ५० ॥

अन्वयः—ते, ताम्रपर्णीसमेतस्य, महोदधेः, संचितं, मुक्तासारं, स्वं, संचितं, यशः, इव, तस्मै, निपत्य, ददुः ॥ ५० ॥

व्याख्या—ते = पूर्वोक्ताः, पराजिताः पाण्डुदेशाधिपतय इति यावत् । ताम्रपर्णीसमेतस्य = ताम्रपर्ण्याख्यनदीमिलितस्य, महोदधेः = बृहज्जलनिधेः, सम्बन्धीति शेषः । सञ्चितं = पुञ्जीकृतम् , अस्यात्राप्यन्वयो योज्यः । मुक्तासारं = मौक्तिकवरं, मुक्तासु श्रेष्ठमिति यावत् । स्वं = स्वकीयं, सञ्चितं = पुञ्जीकृतं, यशः = कीर्त्तिम् , इव = यथा, तस्मै = पूर्वोक्ताय, विजेत्रे रघव इति यावद् । निपत्य = प्रणिपत्य, शरणार्थितया पादयोः पतनं कृत्वेति भावः । ददुः = समर्पयामासुः ॥ ५० ॥

समासादि—ताम्रपर्ण्या समेतस्ताम्रपर्णीसमेतस्तस्य ताम्रपर्णीसमेतस्य ( त० पु० ) । मुक्तासु सारम् मुक्तासारं (त० पु०) तद् मुक्तासारम् । महाँश्चासावुदधिर्महोदधिः (क०धा०) तस्य महोदधेः ॥ ५० ॥

व्याकरणं—निपत्य = नि + पत्लृ ( पतने—लृदित् ) + क्त्वा + ल्यप् । ददुः = डुदाञ् ( दाने—डुजित् ) + लिट् , लिटो झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् । सञ्चितं = सम् + चिञ् (चयने—ञित् ) + क्तः + अम् ॥ ५० ॥

वाच्यान्तरं—तैस्ताम्रपर्णीसमेतस्य महोदधेः "सम्बन्धि" "संचितं" मुक्तासारं स्वं सञ्चितं यश इव तस्मै निपत्य ददे ॥ ५० ॥

कोशः—"अथ मौक्तिकम् । मुक्ता" इत्यमरः ॥ ५० ॥

तात्पर्यार्थः—ते पराजिताः पाण्डुदेशाधिपास्ताम्रपर्णीनदीमिलितस्य दक्षिणसमुद्रस्य सम्बन्धि सञ्चितं सर्वश्रेष्ठं मौक्तिकं स्वकीयं सञ्चितं यश इव तस्मै रघवे तत्पादयोर्निपत्योपायनं दत्तवन्तः ॥ ५० ॥

भाषाऽर्थः—उन पाण्डुदेश के राजाओं ने ताम्रपर्णी नाम की नदी से मिले हुये दक्षिणसमुद्र सम्बन्धी इकट्ठे किये हुये उत्तमोत्तम मोतियों को अपने इकट्ठे किये हुये यश की भांति उन रघु महाराज के लिये पैरों पर गिर कर नजर किये ॥ ५० ॥

*अथ रघुर्मलयदर्दुरपर्वतयोर्यथेच्छं निवासं कृत्वा सह्याद्रिमलङ्घयदिति युग्मेनाह—*

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ ५१ ॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ ५२ ॥

सञ्जीविनी—स इति । युग्ममेतद् । असह्यविक्रमः स रघुस्तटेषु सानुष्वालीनचन्दनौ व्याप्तचन्दनद्रुमौ । "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः । स्तनपक्षे-प्रान्तेषु व्याप्तचन्दनानुलेपौ । तस्या दक्षिणस्या दिशः स्तनाविव स्थितौ मलयदर्दुरौ नाम शैलौ

यथाकामं यथेच्छं निर्विश्योपभुज्य। 'निर्वेशो भृतिभोगयोः' इत्यमरः। उदकान्यस्य सन्तीत्युदन्वानुदधिः। 'उदन्वानुदधौ च' इति निपातः। उदन्वता दूरान्मुक्तं दूरतस्त्यक्तम्। "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति समासः। "पञ्चम्याः स्तोकादिभ्यः" इत्यलुक्। स्रस्तांशुकं मेदिन्या नितम्बमिव स्थितं सह्यं सह्याद्रिमलङ्घयत्प्राप्तोऽतिक्रान्तो वा ॥६१॥६२॥

अन्वयः—असह्यविक्रमः, सः, तटेषु, आलीनचन्दनौ, तस्याः, दिशः, स्तनौ, इव, "स्थितौ" मलयदर्दुरौ, शैलौ, यथाकामं, निर्विश्य, 'उदन्वता, दूरान्मुक्तं, स्रस्तांशुकं, मेदिन्याः', नितम्बम्, इव, "स्थितं", सह्यम्, अलङ्घयत् ॥ ६१—६२ ॥

व्याख्या—असह्यविक्रमः = सहनानर्हपराक्रमः, सः = पूर्वोक्तः, रघुरिति यावद्। तटेषु = तीरेषु, "पर्वतपक्षे" सानुषु, "स्तनपक्षे" प्रान्तेषु चेति यावद्। आलीनचन्दनौ = व्याप्तमलयजवृक्षौ. "स्तनपक्षे" व्याप्तमलयजानुलेपनौ, तस्याः = पूर्वोक्तायाः, दक्षिणस्या इति यावद्। दिशः = आशायाः, स्त्रीरूपाया इति भावः। स्तनौ = कुचौ, इव = यथा, स्थिताविति शेषः। मलयदर्दुरौ = मलयदर्दुराख्यौ, शैलौ = पर्वतौ, यथाकामं = यथाऽभिलाषं, निर्विश्य = उपभुज्य, "पर्वतपक्षे" निवासं कृत्वा, "स्तनपक्षे" मर्दनादिकं कृत्वा चेति यावद्। उदन्वता = समुद्रेण, दूरात् = विप्रकृष्टाद्, मुक्तं = त्यक्तं, स्रस्तांशुकं = स्खलितवस्त्रं, मेदिन्याः = पृथिव्याः, स्त्रीरूपाया इति भावः। नितम्बं = कटिपश्चाद्भागम्, इव = यथा, "स्थितम्" इति शेषः। सह्यं = सह्यनामकं, कुलपर्वतविशेषमिति यावद्। अलङ्घयत् = लङ्घितवान्, अतिक्रान्तवानिति यावद् ॥ ६१–६२ ॥

समासादि—काममनतिक्रम्येति यथाकामम् ( अ०भा० )। आलीनाश्चन्दना ययोस्तावालीनचन्दनौ, "स्तनपक्षे" आलीनं चन्दनं ययोस्तावालीनचन्दनौ ( ब०व्री० ) तौ तथोक्तौ। मलयश्च दर्दुरश्चेति मलयदर्दुरौ ( द्वं० ) तौ तथोक्तौ। सोढुं शक्यः सह्यः ( पुं० ), न सह्य इत्यसह्यः ( न० स० ), असह्यो विक्रमो यस्य सोऽसह्यविक्रमः ( ब० व्री० )। उदकान्यस्य सन्तीत्युदन्वान् ( पुं० ) तेनोदन्वता। निभृतं तम्यते कामुकैरिति नितम्बः ( पुं० ) तं नितम्बम्। स्रस्तमंशुकं यस्मात् स स्रस्तांशुकः ( ब० व्री० ) तं तथोक्तम् ॥ ६१—६२ ॥

व्याकरणं—निर्विश्य = निर् + विश ( प्रवेशने-अकारेत् ) + क्त्वा + ल्यप्। मुक्तम् = मुच्लृ ( मोक्षणे-लृदित् ) + क्तः + अम्। उदन्वता = उदक + जस् + मतुप् + टा, "उदन्वानुदधौ च" इत्युदकस्योदन् भावे कृते मतुपो मस्य वत्वे रूपम्। नितम्बं = नि + तमु (काङ्क्षायाम्-उदित्) + बन् + अम्, "उल्वादयश्च" इत्यौणादिको बन्प्रत्ययो निपात्यते। अलङ्घयत् = अट् + ( लघि ( गतौ-इदित् ) + नुम् + णिच् ), लङ्घि + शप् + लङ्, लङस्तिपि रूपम् ॥ ६१—६२ ॥

वाच्यान्तरम्—असह्यविक्रमेण तेन तटेष्वालीनचन्दनौ तस्या दिशः स्तनाविव "स्थितौ" मलयदर्दुरौ यथाकामं निर्विश्योदन्वता दूरान्मुक्तः स्रस्तांशुको मेदिन्या नितम्ब इव "स्थितः" सह्योऽलङ्घयत ॥ ६१–६२ ॥

कोशः—"स्याद् दूरं विप्रकृष्टकम्" इति। "पश्चान्नितम्बः स्त्रीकट्याः" इति। "वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्" इति चामरः ॥ ६१–६२ ॥

तात्पर्यार्थः—यथा कश्चिद् विलासी पुरुषः कस्याश्चिद् नायिकायाः पीनोन्नतौ स्तनौ यथेच्छं सम्मर्द्य पश्चाद्वस्त्ररहितं नितम्बमपि यथेच्छमुपभुज्यैव तत्समीपादन्यत्र गच्छति तथैवासह्यविक्रमो रघुरपि तस्या दक्षिणस्या दिशः स्तनाविव स्थितौ मलयदर्दुरयोः पर्वतयोर्यथेच्छं विहारं कृत्वा मेदिन्या दूरात्समुद्रसलिलमुक्तं कामिन्याः स्रस्तांशुकं नितम्बभागमिव स्थितं सह्यनामकं पर्वतं यथेच्छमुपभुज्य ततोऽन्यत्र जगाम ॥ ६१–६२ ॥

भाषार्थः—जिनका पराक्रम दुश्मनों के लिये असह्य है ऐसे वे रघु महाराज जिसका प्रान्त भाग चन्दन के वृक्षों से भरा हुआ है, "स्तनपक्ष में" जिसके प्रान्त भाग में चन्दन

का लेप हुआ है, ऐसे उस दक्षिण-दिशारूपी स्त्री के स्तन की भांति स्थित मलय और दुर्दर नामक पर्वत इच्छापूर्वक उपभोग (विहार) कर के "स्तनपक्ष में" मर्दन कर के, समुद्र से दूर छोड़े हुये अतः जहां से वस्त्र खिसक गये हैं ऐसे पृथ्वीरूप स्त्री के कटि के पीछे भाग नितम्ब की भांति स्थित सह्य नामक पर्वत को लांघ गये, अर्थात् उस पर्वत पर भी विहार कर के आगे की ओर चले ॥५१-५२॥

*सम्प्रति प्रतीचीं दिशमभिययावित्याह—*

तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ५३ ॥

सञ्जीविनी—तस्यानीकैरिति । अपरान्तानां पाश्चात्यानां जय उद्यतैरुद्युक्तैः । 'अपरान्तास्तु पाश्चात्यास्ते च सूर्परिकादयः' इति यादवः । विसर्पद्भिर्गच्छद्भिस्तस्य रघोरनीकैः सैन्यैः । 'अनीकं तु रणे सैन्ये' इति विश्वः । अर्णवो रामस्य जामदग्न्यस्यास्त्रैरुत्सारितः परिसारितोऽपि सह्यलग्न इवासीत् । सैन्यं द्वितीयोऽर्णव इवादृश्यतेति भावः ॥ ५३ ॥

अन्वयः—अपरान्तजयोद्यतैः, विसर्पद्भिः, तस्य, अनीकैः, अर्णवः, रामास्त्रोत्सारितः, अपि, सह्यलग्नः, इव, आसीत् ॥ ५३ ॥

व्याख्या—अपरान्तजयोद्यतैः=पाश्चात्यविजयोन्मुखैः, पश्चिमदेशीयानां राज्ञां विजये कृतप्रयत्नैरिति यावद् । विसर्पद्भिः=चलद्भिः, तस्य=पूर्वोक्तस्य, रघोरिति यावद् । अनीकैः=सेनाभिः, अर्णवः=सागरः, रामास्त्रोत्सारितः=परशुरामायुधदूरीकृतः, अपि=युक्तपदार्थे, सह्यलग्नः=सह्याद्रिसंसक्तः, इव=यथा, आसीत्=अभूत् । द्वितीयसमुद्र इव सैन्यं लोकैरदृश्यत इति भावः ॥ ५३ ॥

समासादि—अपरस्या अन्ता अपरान्ताः ( त०पु० ), तेषां जयोऽपरान्तजयः ( त०पु० ), तत्रोद्यतानीत्यपरान्तजयोद्यतानि ( त० पु० ) तैस्तथोक्तैः । रामस्यास्त्राणीति रामास्त्राणि (त०पु०), तैरुत्सारितो रामास्त्रोत्सारितः (त० पु०) । सह्ये लग्नः सह्यलग्नः (त०पु०) ॥५३॥

व्याकरणम्—उत्सारितः=उद्+(सृ (गतौ)+णिच्) सारि+इट्+क्तः+सु । आसीत्=अट्+अस ( भुवि-अकारेत् )+ईट्+लङ्, लङस्तिपि रूपम् ॥ ५३ ॥

वाच्यान्तरम्—अपरान्तजयोद्यतैर्विसर्पद्भिस्तस्यानीकै रामास्त्रोत्सारितेनापि सह्यलग्नेनेवार्णवेनेवाभूयत ॥ ५३ ॥

कोशः—"सरस्वान् सागरोऽर्णवः" इत्यमरः ॥ ५३ ॥

तात्पर्यार्थ.—पश्चिमदेशीयानां राज्ञां विजयार्थं समुद्रतटाद् दूरं गतयाऽपि रघोः सेनया समुद्रो यथा पुरा परशुरामास्त्रैर्दूरीकृतोऽपि सह्यपर्वतलग्न आसीत् तथैवाधुनाऽप्यासीत् ॥५३॥

भाषाऽर्थः—पश्चिम देश के राजाओं के विजय करने में उद्यत अत एव समुद्र तट से चलती हुई रघु महाराज की सेनाओं से समुद्र परशुरामजी के अस्त्रों से दूर किया गया भी सह्य पर्वत से मिले हुए की भांति मालूम पड़ने लगा ॥ ५३ ॥

*अथ रघोर्महत् सैन्य दृष्ट्वा भीताः सत्यः केरलयोषितः पलायिता आसन्नित्याह—*

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४ ॥

सञ्जीविनी—भयोत्सृष्टेति । तेन रघुणा भयेनोत्सृष्टविभूषाणां परिहृतभूषणानां केरलयोषितां केरलाङ्गनानामलकेषु चमूरेणुः सेनारजश्चूर्णस्य कुङ्कुमादिरजसः प्रतिनिधीकृतः । एतेन योषितां पलायनं चमूनां च तदनुधावनं ध्वन्यते ॥ ५४ ॥

अन्वयः—तेन, भयोत्सृष्टविभूषाणां, केरलयोषिताम्, अलकेषु, चमूरेणुः, चूर्णप्रतिनिधीकृतः ॥ ५४ ॥

व्याख्या—तेन = पूर्वोक्तेन, रघुणेति यावद् । भयोत्सृष्टविभूषाणां = भीतिपरित्यक्तालङ्काराणां, केरलयोषितां = केरलदेशीयस्त्रीणाम्, अलकेषु = चूर्णकुन्तलेषु, चमूरेणुः = सैन्यधूलिः, चूर्णप्रतिनिधीकृतः = कुङ्कुमादिक्षोदस्थानापन्नीकृतः ॥ ५४ ॥

समासादि—भयेनोत्सृष्टा भयोत्सृष्टाः ( त० पु० ), भयोत्सृष्टा विभूषा याभिस्ता भयोत्सृष्टविभूषाः ( ब० व्री० ) तासां तथोक्तानाम् । केरलानां योषितः केरलयोषितः ( त० पु० ) तेषां तथोक्तानाम् । चम्वारेणुश्चमूरेणुः ( त० पु० ) । चूर्णस्य प्रतिनिधिश्चूर्णप्रतिनिधिः ( त० पु० ), न चूर्णप्रतिनिधिरचूर्णप्रतिनिधिः ( न० स० ), अचूर्णप्रतिनिधिश्चूर्णप्रतिनिधिः सम्पद्यमानः कृत इति चूर्णप्रतिनिधीकृतः ( पुं० ) ॥ ५४ ॥

व्याकरणं—चूर्णप्रतिनिधीकृतः = चूर्णप्रतिनिधि + च्वि + डुकृञ् ( करणे—डुञित ) + क्तः + सु ॥ ५४ ॥

वाच्यान्तरं—स भयोत्सृष्टविभूषाणां केरलयोषितामलकेषु चमूरेणुं चूर्णप्रतिनिधीकृतवान् ॥ ५४ ॥

कोशः—"अलकाश्चूर्णकुन्तलाः" इत्यमरः । "चूर्णं क्षोदे क्षारभेदे" इत्यनेकार्थसंग्रहः ॥५४॥

तात्पर्यार्थः—रघुर्भयेन भूषणादीनि परिहृत्य पलायनपराणां केरलदेशीयानां स्त्रीणां चूर्णकुन्तलेषु स्वसैन्यपादोद्धृतां धूलिं कुङ्कुमादिसुगन्धितचूर्णस्य स्थानापन्नां कृतवान् ॥ ५४ ॥

भाषार्थः—उन रघु महाराज ने, डर के कारण से जिन्होंनें आभूषणों को छोड़ दिया है ऐसी केरल देश की स्त्रियों के घुंवराले वालों में सेनाओं की धूलि को कुङ्कुम आदि सुगन्धित द्रव्यों के चूर्ण का प्रतिनिधि वना दिया ॥ ५४ ॥

*अथ रघो: सैन्यं मुरलां नदीं प्रापेत्याह—*

मुरलामारुतोद्धूतमगमत्कैतकं रजः ।
तद्योधवारबाणानामयत्नपटवासताम् ॥ ५५ ॥

सञ्जीविनी—मुरलेति । मुरला नाम केरलदेशेषु काचिन्नदी । 'मुरलीमारुतोद्धूतम्' इति केचित्पठन्ति । तस्या मारुतेनोद्धूतमुत्थापितं कैतकं केतकीसम्बन्धि रजस्तद्योधवारबाणानां रघुभटकञ्चुकानाम् । 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः । अयत्नपटवासतामयत्नसिद्धवस्त्रवासनाद्रव्यत्वमगमत् । 'पिष्टातः पटवासकः' इत्यमरः ॥ ५५ ॥

अन्वय—मुरलामारुतोद्धूतं, कैतकं, रजः, तद्योधवारबाणानाम्, अयत्नपटवासताम्, अगमत् ॥ ५५ ॥

व्याख्या—मुरलामारुतोद्धूतं = मुरलाऽऽख्यसरिद्वातोत्क्षिप्तं, कैतकं = केतकीपुष्पसम्बन्धि, रजः = धूलिः, पराग इति यावद् । तद्योधवारबाणानां = पूर्वोक्तरघुयोद्धृकञ्चुकानाम्, अयत्नपटवासताम् = अनायासपिष्टातकतां, प्रयत्नं विनैव वस्त्रवासकतामिति यावद् । अगमत = प्राप ॥ ५५ ॥

समासादि—मुरलाया मारुतो मुरलामारुतः (त० पु०), तेनोद्धूतं मुरलामारुतोद्धूतं (त० पु०) । केतक्या इदं कैतकं (न० लिं०) । तस्य योधास्तद्योधाः (त० पु०), तेषां वारबाणास्तद्वारबाणाः (त० पु०) तेषां तथोक्तानाम् । पटं वासयतीति पटवासः (पुं०), अविद्यमानो यत्नो यस्मा इत्ययत्नः (ब० व्री०), अयत्नश्चासौ पटवासोऽयत्नपटवासः (क० धा०), तस्य भावोऽयत्नपटवासता (स्त्री०) तां तथोक्ताम् ॥ ५५ ॥

व्याकरणम्—अगमत् = अट् + गम्लृ (गतौ—लृदित्) + अङ् + लुङ्, लुङस्तिपि "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" इतिच्लेरङादेशे रूपम् । कैतकं = केतकी + ङस् + अण् + सु, "तस्येदम्" इत्यण् प्रत्यय आदिवृद्धा वीकारलोपे रूपम् । पटवासः = पट + अम् + (वास (उपसेवायाम्—अकारेत्) + णिच्) वासि + अण् + सु, "कर्मण्यण्" इत्यणप्रत्यये रूपम् ॥ ५५ ॥

वाच्यान्तरं—मुरलामारुतोद्धूतेन कैतकेन रजसा तद्योधवारबाणानामयत्नपटवासताऽगामि ॥ ५५ ॥

कोश.—"भटा योधाश्च योद्धारः" इत्यमरः ॥ ५५ ॥

तात्पर्यार्थः—मुरलाऽऽख्यसरिद्वातेनोत्थापितं केतक्याः पुष्परजो रघोः सैनिकयोधानां कञ्चुकेषु निपत्यानायासेनैव वस्त्रवासनाद्रव्यकार्यमकरोत् ॥ ५५ ॥

भावाऽर्थः—मुरला नाम की नदी के वायु से उड़ाये हुए केतकी पुष्प के पराग ने उन रघु महाराज के योधाओं के कञ्चुकों ( कवचविशेषों ) का विना प्रयत्न के ही वस्त्र को सुगन्धित करने वाले चूर्ण का कार्य किया ॥ ५५ ॥

*अथ पथि गच्छतो रघोर्वाहानां राजतालीवनमध्ये प्रवेशमाह—*

**अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।**
**वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥**

सञ्जीविनी—अभ्यभूयतेति । चरतां गच्छतां वाहानां वाजिनाम् । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । गात्रशिञ्जितैर्गात्रेषु शब्दायमानैः । कर्तरि क्तः । 'गात्रसञ्जितैः' इति वा पाठः । सञ्जतेर्ण्यन्तात्कर्मणि क्तः । वर्मभिः कवचैः । 'मर्मरः' इति पाठे वाहानां गात्रशिञ्जितैर्गात्रध्वनिभिरित्यर्थः । मर्मरो मर्मरायमाण इति ध्वनेर्विशेषणम् । पवनेनोद्धूतानां कम्पितानां राजतालीवनानां ध्वनिरभ्यभूयत तिरस्कृतः ॥ ५६ ॥

अन्वयः—चरतां, वाहानां, गात्रशिञ्जितैः, वर्मभिः, पवनोद्धूतराजतालीवनध्वनिः, अभ्यभूयत ॥ ५६ ॥

व्याख्या—चरतां = चलतां, गात्रशिञ्जितैः = शरीरक्वणनयुक्तैः, शीघ्रगमनवशाद्गात्रेषु झणझणायमानैरिति यावद् । वर्मभिः = संनहनैः, पवनोद्धूतराजतालीवनध्वनिः = वायुचालिततालकाननशब्दः, वातकम्पिततालवृक्षपत्रस्वन इति यावद् । अभ्यभूयत = अभिबभूवे, तिरस्कृत इति यावद् ॥ ५६ ॥

समासादि—गात्रेषु शिञ्जितानि गात्रशिञ्जितानि ( त० पु० ) तैस्तथोक्तैः । राजतालीनां वनानि राजतालीवनानि ( त० पु० ), पवनेनोद्धूतानि पवनोद्धूतानि ( त० पु० ), तानि च तानि राजतालीवनानि पवनोद्धूतराजतालीवनानि ( क० धा० ), तेषां ध्वनिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥

व्याकरणम्—अभ्यभूयत = अभि + अट् + ( भू ( सत्तायाम् ) + यक् ) भूय + शप् + लङ्, लङस्तप्रत्यये रूपम् ॥ ५६ ॥

वाच्यान्तरं—चरतां वाहानां गात्रशिञ्जितानि वर्माणि पवनोद्धूतराजतालीवनध्वनिमभ्यभवन् ॥ ५६ ॥

कोश.—"भूषणान्तु शिञ्जितम् । निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि" इति । "अथ तनुत्रं वर्म दंशनम् । उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्" इति चामरः ॥ ५६ ॥

तात्पर्यार्थः—अतिजवेन गच्छतां रघुसैनिकाश्वानां गात्रेषु भूषणलोहमयकवचेभ्यः समुत्पन्नो महान् झणझणेति शब्दः पवनसञ्चालिततालपत्रवनध्वनिमपि तिरस्कृतवान् ॥ ५६ ॥

भावाऽर्थः—चलते हुए घोड़ों के शरीरों पर शब्द करते हुये कवचों से वायु से हिलते हुये ताल वृक्षों के वन की ध्वनि तिरस्कृत हुई ॥ ५६ ॥

*अथ खर्जूरीस्कन्धबद्धानां मदस्राविणां रघुसेनागजानां गण्डस्थले पुन्नागतरुवनात्भ्रमराणां निपतनमाह—*

**खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।**
**कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥ ५७ ॥**

सञ्जीविनी—खर्जूरीति । खर्जूरीणां तृणद्रुमविशेषाणाम् । 'खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः' इत्यमरः । स्कन्धेषु प्रकाण्डेषु । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखाऽवधेस्तरोः' इत्यमरः । नद्धानां बद्धानां करिणां मदोद्गारेण मदस्रावेण सुगन्धिषु । "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इत्यनेनेकारः । कटेषु गण्डेषु पुन्नागेभ्यो नागकेशरेभ्यः पुन्नागपुष्पाणि विहाय । ल्यब्लोपे पञ्चमी । शिलीमुखा अलयः पेतुः । 'अलिबाणौ शिलीमुखौ' इत्यमरः । ततोऽपि सौगन्ध्यातिशयादिति भावः ॥ ५७ ॥

अन्वयः—खर्जूरीस्कन्धनद्धानां, करिणां, मदोद्गारसुगन्धिषु, कटेषु, पुन्नागेभ्यः, शिलीमुखाः, पेतुः ॥ ५७ ॥

व्याख्या—खर्जूरीस्कन्धनद्धानां = खर्जूर्याख्यतृणद्रुमविशेषप्रकाण्डबद्धानां, करिणां = गजानां, मदोद्गारसुगन्धिषु = दानस्रावशोभनगन्धयुतेषु, कटेषु = गण्डेषु, पुन्नागेभ्यः = केसरेभ्यः, पुन्नागपुष्पाणि विहायेत्यर्थः । शिलीमुखाः = भ्रमराः, पेतुः = अपतन् ॥ ५७ ॥

समासादि—खर्जूरीणां स्कन्धाः खर्जूरीस्कन्धाः ( त० पु० ), तेषु नद्धाः खर्जूरीस्कन्धनद्धाः ( त० पु० ) तेषां तथोक्तानाम् । मदस्योद्गारो मदोद्गारः ( त०पु० ), तेन सुगन्धयो मदोद्गारसुगन्धयः ( त० पु० ) । शिली मुखे येषान्ते शिलीमुखाः ( व्य०प०ब०व्री ) ॥५७॥

व्याकरणं—पेतुः = पत्लृ ( पतने—लृदित् ) + लिट्, लिटो झेरुसि द्वित्वे एत्वाभ्यासलोपे रूपम् ॥ ५७ ॥

वाच्यान्तरं—खर्जूरीस्कन्धनद्धानां करिणां मदोद्गारसुगन्धिषु कटेषु पुन्नागेभ्यः शिलीमुखैः पेते ॥ ५७ ॥

कोशः—"पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः" इत्यमरः ॥ ५७ ॥

तात्पर्यार्थः—भ्रमराः खर्जूर्याख्यतृणद्रुमविशेषाणां स्कन्धेषु बद्धानां रघुसेनागजेन्द्राणां मदजलशोभनगन्धेनाकृष्टाः सन्तः पुन्नागपुष्पाणि विहाय करिगण्डस्थलेष्वपतन् ॥ ५७ ॥

भाषाऽर्थः—खजूर के तनों में बँधे हुये हाथियों के मद के झरने से सुगन्धयुक्त गण्डस्थलों पर पुन्नाग ( नागकेसर ) के पुष्पों को छोड़कर भौंरे आ बैठे ॥ ५७ ॥

*अथ पश्चिमदेशीया राजानो रघवे करं ददुरित्याह—*

अवकाशं किलोदन्वान्रामायाभ्यर्थितो ददौ ।
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥

सञ्जीविनी—अवकाशमिति । उदन्वानुदधी रामाय जामदग्न्याय । अभ्यर्थितो याचितः सन् । अवकाशं स्थानं ददौ किल । किलेति प्रसिद्धौ । रघवे त्वपरान्तमहीपालव्याजेन करं बलिं ददौ । 'बलिहस्तांशवः कराः' इत्यमरः । अपरान्तानां समुद्रमध्यदेशवर्तित्वात्तैर्दत्ते करे समुद्रदत्तत्वोपचारः । करदानं च भीत्या न तु याच्ञयेति रामाद्रघोरुत्कर्षः ॥ ५८ ॥

अन्वयः—उदन्वान्, रामाय, अभ्यर्थितः, "सन्", अवकाशं, ददौ, किल, रघवे, "तु", अपरान्तमहीपालव्याजेन, करं, "ददौ" ॥ ५८ ॥

व्याख्या—उदन्वान् = समुद्रः, रामाय = परशुरामाय, अभ्यर्थितः = प्रार्थितः, सन्निति शेषः । अवकाशं = स्थानं, ददौ = दत्तवान्, किल = प्रसिद्धौ, रघवे = दिलीपसूनवे, त्विति शेषः । अपरान्तमहीपालव्याजेन = पाश्चात्यभूपतिच्छद्मना, करं = बलिं, ददौ ॥ ५८ ॥

समासादि—उदकानि सन्त्यस्मिन्नित्युदन्वान् (पुं०), महीं पालयन्तीति महीपालाः (पुं०), अपरान्ताश्च ते महीपाला अपरान्तमहीपालाः (क० धा०), तेषां व्याजोऽपरान्तमहीपालव्याजः (त० पु०) तेन तथोक्तेन ॥ ५८ ॥

व्याकरणम्—अभ्यर्थितः = अभि + (अर्थ ( उपयाच्ञायाम्—अदन्तोऽयम् ) + णिच्) अर्थि + इट् + क्तः + सु, "निष्ठायां सेटि" इति णिलोपे रूपम् । ददौ = डुदाञ् ( दाने—डु

जित्)+लिट्, लिटस्तिपो णल औत्वे द्वित्वेऽभ्यासकार्ये रूपम् ॥ ६८ ॥

वाच्यान्तरम्—उदन्वता रामायाभ्यर्थितेन "सता" अवकाशो ददे किल रघवे त्वपरान्तमहीपालव्याजेन करो "ददे" ॥ ६८ ॥

कोशः—"कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे" इत्यमरः ॥ ६८ ॥

तात्पर्यार्थः—यं समुद्रं परशुरामोऽपि संप्रार्थ्य स्वनिवासार्थं स्थानं लेभे स समुद्रोऽप्रार्थितः सन्नपि भयेन पश्चिमदेशीयनृपतीनां छलेन रघवे करं ददाविति परशुरामाद् रघोरुत्कर्षः॥६८॥

भाषाऽर्थः—जिस समुद्र ने परशुरामजी के लिये प्रार्थना करने पर रहने के लिये अवकाश (स्थान) दिया था, ऐसी प्रसिद्धि है, किन्तु उसी समुद्र ने रघु महाराज के लिये पश्चिम देश के राजाओं के व्याज से कर दिया ॥ ६८ ॥

*अथ रघोर्जयस्तम्भस्त्रिकूटाद्रिरेवाभूदित्याह—*

मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ६९ ॥

सञ्जीविनी—मत्तेभेति । तत्र स रघुर्मत्तानामिभानां रदनोत्कीर्णानि दन्तक्षतान्येव । भावे क्तः । व्यक्तानि स्फुटानि विक्रमलक्षणानि पराक्रमचिह्नानि विजयवर्णावलिस्थानानि यस्मिंस्तं तथोक्तं त्रिकूटमेवोच्चैर्जयस्तम्भं चकार। गाढप्रकाशस्त्रिकूटोऽद्रिरेवोत्कीर्णवर्णस्तम्भ इव रघोर्जयस्तम्भोऽभूदित्यर्थः ॥ ६९ ॥

अन्वयः—तत्र, सः, मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणं, त्रिकूटम्, एव, उच्चैः, जयस्तम्भं, चकार ॥ ६९ ॥

व्याख्या—तत्र = पूर्वोक्तायां, पश्चिमस्यां दिशि केरलदेश इति यावद् । सः = पूर्वोक्तः, रघुरिति यावद् । मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् = मदोत्कटद्विरददन्तक्षतप्रकटपराक्रमचिह्नम्, मदोन्मत्तगजेन्द्राणां दन्तक्षतरूपप्रकटपराक्रमलक्षणयुक्तमिति यावद् । त्रिकूटं = त्रिककुदं, त्रिकूटाचलमिति यावद् । एव = अवधारणेऽर्थे, उच्चैः = अत्युच्चं, जयस्तम्भं = विजयस्थूणां, चकार = कृतवान् ॥ ६९ ॥

समासादि—विक्रमस्य लक्षणानि विक्रमलक्षणानि (त० पु०), मत्ताश्च त इभा मत्तेभाः (क० धा०), तेषां रदना मत्तेभरदनाः (त० पु०), तैरुत्कीर्णानि मत्तेभरदनोत्कीर्णानि (त० पु०), तान्येव व्यक्तानि विक्रमलक्षणानि यस्मिन् स मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणः (ब० व्री०) तं तथोक्तम्। त्रीणि कूटानि शिखराणि यस्य स त्रिकूटः (ब० व्री०) तं तथोक्तम् । जयस्य स्तम्भो जयस्तम्भः (त० पु०) तं जयस्तम्भम् ॥ ६९ ॥

व्याकरणं—चकार = डुकृञ् (करणे—डुञित्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये चुत्वे वृद्धौ रपरे रूपम् ॥ ६९ ॥

वाच्यान्तरं—तत्र तेन मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणस्त्रिकूट एवोच्चैर्जयस्तम्भश्चक्रे ॥ ६९ ॥

कोशः—"मत्ते शौण्डोत्कटक्षीबाः" इति । "रदना दशना दन्ता, रदाः" इति । "त्रिकूटस्त्रिककुत्समौ" इति चामरः ॥ ६९ ॥

तात्पर्यार्थः—स रघुस्तत्र केरलदेशे मदोन्मत्तसेनागजानां दन्तक्षतरूपैः पराक्रमद्योतकविजयवर्णपंक्तिस्थानैर्युक्तं त्रिकूटाचलमेवात्युच्छ्रितं विजयस्मारकस्तम्भरूपेण स्थापयामास ॥ ६९ ॥

भाषाऽर्थः—उस केरल देश में उन रघु महाराज के मतवाले हाथियों के दांतों के प्रहारों से खुदे हुये गड्ढे ही जिसमें स्पष्ट रूपसे पराक्रम के चिह्न मौजूद हैं, ऐसे त्रिकूट नामक पर्वत को ही ऊंचा विजय का स्मरण दिलाने वाला स्तम्भ कायम किया ॥ ६९ ॥

*अथ रघोः पारसीकान् जेतुं प्रस्थानमाह—*

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ६० ॥

संजीविनी—पारसीकानिति । ततः स रघुः । संयमी योगी तत्त्वज्ञानेनेन्द्रियाख्यानिन्द्रियनामकान्रिपूनिव पारसीकान्राज्ञो जेतुं स्थलवर्त्मना प्रतस्थे न तु निर्दिष्टेनापि जलपथेन । समुद्रयानस्य निषिद्धत्वादिति भावः ॥ ६० ॥

अन्वयः—ततः, "सः, रघुः", संयमी, तत्वज्ञानेन, इन्द्रियाख्यान्, रिपून्, इव, पारसीकान्, जेतुं, स्थलवर्त्मना, प्रतस्थे ॥ ६० ॥

व्याख्या—ततः = तदनन्तरं, त्रिकूटाचलरूपविजयस्मारकस्तम्भस्थापनानन्तरमिति यावद् । "स रघुः" इत्यस्याक्षेपः कर्त्तव्यः । संयमी = संयमवान्, योगीति यावत् । तत्वज्ञानेन = परमात्मावबोधेन, इन्द्रियाख्यान् = हृषीकाह्वयान्, रिपून् = अरीन्, इव = यथा, पारसीकान् = पारसदेशोद्भवान्, राज्ञ इति भावः । जेतुं = विजयं कर्तुं, स्थलवर्त्मना = स्थलमार्गेण, प्रतस्थे = प्रस्थानं कृतवान् ॥ ६० ॥

समासादि—स्थलस्य वर्त्म स्थलवर्त्म (त० पु०) तेन स्थलवर्त्मना । इन्द्रियाण्येवाख्या येषान्त इन्द्रियाख्याः (ब० व्री०) तांस्तथोक्तान् । तत्वस्य ज्ञानं तत्वज्ञानं (त० पु०) तेन तत्वज्ञानेन । संयमोऽस्यास्तीति संयमी ( पुं० ) ॥ ६० ॥

व्याकरणं—जेतुं = जि (जये) + तुमुन् । प्रतस्थे = प्र ( ष्ठा(गतिनिवृत्तौ) + स्था + लिट्, लिटस्तप्रत्यये द्वित्वेऽभ्यासकार्ये आकार लोपे रूपम्, "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् ॥ ६० ॥

वाच्यान्तरं—ततः "तेन रघुणा" संयमिना तत्त्वज्ञानेनेन्द्रियाख्यान् रिपूनिव पारसीकान् जेतुं स्थलवर्त्मना प्रतस्थे ॥ ६० ॥

कोशः—"हृषीकं विषयीन्द्रियम्" इत्यमरः । "तत्त्वं परमात्मनि । वाद्यभेदे स्वरूपे च" इत्यनेकार्थसंग्रहः । "वियामो वियमो यामो यमः संयामसंयमौ" इत्यमरः ॥ ६० ॥

तात्पर्यार्थः—यदा कश्चिद् योगी पुरुषः परमात्मनो ज्ञानेन दुर्जयानपीन्द्रियरूपानरीञ् जयति तथैवासौ रघुरपि पारसीकान् म्लेच्छभूपतीञ् जेतुं स्थलमार्गेण प्रस्थान कृतवान् ॥६०॥

भाषार्थः—उसके (त्रिकूटाचल को ही विजयस्मारकस्तम्भ कायम कर चुकने के) बाद उन रघु महाराज ने योगी की भाँति तत्वज्ञान से इन्द्रिय नामक शत्रु के समान पारसदेश के म्लेच्छ राजाओं को जीतने के लिये स्थल मार्ग से प्रस्थान किया "क्योंकि शास्त्र में समुद्र यात्रा निषिद्ध है" ॥ ६० ॥

*अथ रघुर्यवनस्त्रीमुखानां मधुना मदरागं न सेह इत्याह—*

यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ॥ ६१ ॥

सञ्जीविनी—यवनीमुखेति । स रघुर्यवनीनां यवनस्त्रीणाम् । "जातेरस्त्रीविषयादयोपधात्" इति ङीप् । मुखानि पद्मानीव मुखपद्मानि । उपमितसमासः । तेषां मधुना मद्येन यो मदो-मदरागः । कार्यकारणभावयोरभेदेन निर्देशः । तं न सेहे । कमिव । अकाले प्रावृड्व्यतिरिक्ते काले जलदोदयः। प्रायेण प्रावृषि पद्मविकासस्याप्रसक्तत्वादब्जानां सम्बन्धिनं बालातपमिव । अब्जहितत्वादब्जसंबन्धित्वं सौरातपस्य ॥ ६१ ॥

अन्वयः—सः, यवनीमुखपद्मानां, मदुमदं, न, सेहे, "कः कमिव", अकालजलदोदयः, अब्जानां, बालातपम्, इव ॥ ६१ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । यवनीमुखपद्मानां = पारसीककामिनीवदन-

कमलानां, मधुमदं = मद्यमदरागं, कार्यकारणभावयोरभेदादत्र मदपदेन मदरागो गृह्यते, मद्यपानजनितहर्षरागमिति यावद् । न = नहि, सेहे = क्षमते स्म, कः कमिवेत्यस्याक्षेपः कर्तव्योऽत्र । अकालजलदोदयः = असमयमेघाविर्भावः, प्रावृडतिरिक्तसमये मेघोदय इति यावद् । अब्जानां = कमलानां, कमलसम्बन्धिनमिति यावद् । बालातपं = शिशुद्योतं, प्रातःकालीनं कोमलातपमिति भावः । इव = यथा, कमलानां हितकारितया सूर्यसम्बन्ध्यातपस्य कमलसम्बन्धित्वं ज्ञेयम् ॥ ६१ ॥

समासादि—यवनीनां मुखानि यवनीमुखानि ( त० पु० ), तानि पद्मानीवेति यवनीमुखपद्मानि ( उ० स० ), तेषां तथोक्तानाम् । मधुना मदो मधुमदः ( त० पु० ) तं मधुमदम् । बालश्चासावातपो बालातपः (क० धा०) तम्बालातपम् । अप्सु जातान्यब्जानि (न० लि) तेषामब्जानाम् । जलानि ददतीति जलदाः (पुं०), तेषामुदयो जलदोदयः ( त० पु० ), न काल इत्यकालः ( न० स० ), तत्र जलदोदयोऽकालजलदोदयः ( त० पु० ) ॥ ६१ ॥

व्याकरणं—सेहे = (षह (मर्षणे-अकारेत्) सह + लिट्, लिड्स्तप्रत्यये द्वित्वे एत्वाभ्यासलोपे रूपम् ॥ ६१ ॥

वाच्यान्तरं—तेन यवनीमुखपद्मानां मधुमदो न सेहे "केन क इव" अकालजलदोदयेनाब्जानां बालातप इव ॥ ६१ ॥

कोशः—"मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयो." इति मेदिनी । "मधु मद्ये पुष्परसे क्षौद्रेऽपि" इति । "प्रकाशो द्योत आतपः" इति चामरः ॥ ६१ ॥

तात्पर्यार्थः—यथा प्रावृड्व्यतिरिक्ते काले मेघोदयः कमलानां तद्विकासकारिणं स्वल्पमपि सौरातपं न सहते तथैवाकस्माद् विजेतुमागतो रघुरपि पारसदेशीययवनस्त्रीमुखकमलानां मद्यपानजनितहर्षरागं न सहते स्म ॥ ६१ ॥

भाषाऽर्थ.—उन रघु महाराज ने यवन की स्त्रियों के जो कमल सदृश मुख, मद्य पीने से उत्पन्न हर्ष से रक्त वर्ण के हो गये थे उसे, जैसे—वर्षा ऋतु के अलावे और ऋतुओं में मेघों का उदय होना कमल सम्बन्धी सूर्य के कोमल किरणों को नहीं सहता है उसी भांति नहीं सहन किया ॥ ६१ ॥

*अथ पारसीकैः सह रघोस्तुमुलं युद्धं बभूवेत्याह—*

**संग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः ।**
**शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६२ ॥**

सञ्जीविनी—सङ्ग्राम इति । तस्य रघोरश्वसाधनैर्वाजिसैन्यैः । 'साधनं सिद्धिसैन्ययोः' इति हैमः । पश्चाद्भवैः पाश्चात्यैर्यवनैः सह । "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक् । सहार्थे तृतीया । शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि तेषां कूजितैः शब्दैः । 'शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः । जये च शृङ्गविहिते चापेऽप्याह विशेषतः' इति केशवः । अथवा शार्ङ्गैः शृङ्गसंबन्धिभिः कूजितैर्विज्ञेया अनुमेयाः प्रतियोधाः प्रतिभटा यस्मिंस्तस्मिन्रजसि तुमुलः संग्रामः संकुलयुद्धमभूत् । 'तुमुलं रणसंकुले' इत्यमरः ॥ ६२ ॥

अन्वयः—तस्य, अश्वसाधनैः, पश्चात्यैः, "सह", शार्ङ्गकूजितविज्ञेयप्रतियोधे, रजसि, तुमुलः, सङ्ग्रामः, अभूत ॥ ६२ ॥

व्याख्या—तस्य = पूर्वोक्तस्य, रघोरिति यावद् । अश्वसाधनैः = हयसैन्यैः, तुरङ्गप्रधानसैन्ययुक्तैरिति भावः । पाश्चात्यैः = पश्चिमदिग्भवैः, पारसीकैरिति यावद् । सहेति शेषः । शार्ङ्गकूजितविज्ञेयप्रतियोधे = धनुरव्यक्तशब्दानुमेयप्रतिभटे, अथवा—शृङ्गनिर्मितवाद्यविशेषाव्यक्तशब्दानुमेयप्रतिभटे । रजसि = रेणौ, तुमुलः = सङ्कुलः, संग्रामः = आहवः, युद्धमिति यावद् । अभूत् = बभूव ॥ ॥ ६२ ॥

समासादि—संग्रामणं संग्रामः ( पुं० ) । पश्चाद्भवाः पाश्चात्याः ( पुं० ) तैः पाश्चात्यैः ।

अश्वा एव साधनं येषान्तेऽश्वसाधनाः ( ब० व्री० ) तैरश्वसाधनैः । शृङ्गाणां विकाराः शार्ङ्गाणि ( न० लिं० ), प्रतियुध्यन्त इति प्रतियोधाः ( पुं० ), शार्ङ्गाणां कूजितानि शार्ङ्गकूजितानि ( त०पु० ) तैर्विज्ञेयाः शार्ङ्गकूजितविज्ञेयाः ( त० पु० ), ते प्रतियोधा यस्मिंस्तच्छार्ङ्गकूजितविज्ञेयप्रतियोधम् ( ब० व्री० ) तस्मिंस्तथोक्ते ॥ ६२ ॥

व्याकरणं—संग्रामः = ( संग्राम ( युद्धे—अदन्तोऽयम् ) + णिच् ) संग्रामि + अच् + सु, "एरच्" इत्यच्प्रत्यये णिलोपे रूपम् । शार्ङ्गाणि = शृङ्ग + ङस् + अण् + जस्, "तस्य विकारः" इत्यण्प्रत्यये रूपम् । अभूत् = अट् + भू ( सत्तायाम् ) + च्लि + लुङ्, लुङस्तिपि रूपम् ॥ ६२ ॥

वाच्यान्तरं—तस्याश्वसाधनैः पाश्चात्यैः सह शार्ङ्गकूजितविज्ञेयप्रतियोधे रजसि तुमुलेन संग्रामेणाभावि ॥ ६२ ॥

कोशः—"संग्रामाभ्यागमाहवाः" इति । "तुमुलं रणसंकुले" इति चामरः । "तुमुलं त्रिषु विस्पष्टवाचि, व्यासे" इति मेदिन्यपि ॥ ६२ ॥

तात्पर्यार्थः—तस्य रघोरश्वप्रधानसैन्ययुक्तैः पारसीकैः सह तुमुलं युद्धमभूद्, यत्र च स्वपरपक्षयोर्ज्ञानं केवलधनुष्टङ्कारेणैव बभूव ॥ ६२ ॥

भाषाऽर्थः—उन रघु महाराज का घोड़ों ही की सेना जिनकी है ऐसे पश्चिम दिशा के पारस देश के राजाओं के साथ धनुष के टङ्कारों से ही जिसमें अपने प्रतिद्वन्द्व योद्धाओं का परिज्ञान होता था ऐसी ( उड़ती हुई ) धूलि में घमासान युद्ध हुआ ॥ ६२ ॥

*अथ रघुः स्वबाणच्छिन्नैः पारसीकानां शिरोभिः पृथ्वीं छादयामासेत्याह—*

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥

सञ्जीविनी—भल्लेति । स रघुर्भल्लापवर्जितैर्बाणविशेषकृत्तैः । 'स्नुहीदलफलो भल्लः' इति यादवः । श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः । "सिध्मादिभ्यश्च" इति लच्प्रत्ययः । तेषां पाश्चात्यानां शिरोभिः । सरघाभिर्मधुमक्षिकाभिर्व्याप्तैः । 'सरघा मधुमक्षिका' इत्यमरः । क्षुद्राः सरघाः । 'क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका' इत्यमरः । क्षुद्राभिः कृतानि क्षौद्राणि मधूनि । 'मधु क्षौद्रं माक्षिकादि' इत्यमरः । "क्षुद्राभ्रमरवटरपादपादञ्" इति संज्ञायामञ्प्रत्ययः । तेषां पटलैः संचयैरिव । 'पटलं तिलके नेत्ररोगे छन्दसि संचये । पिटके परिवारे च' इति हैमः । महीं तस्ताराच्छादयामास ॥ ६३ ॥

अन्वयः—सः, भल्लापवर्जितैः, श्मश्रुलैः, तेषां, शिरोभिः, सरघाव्याप्तैः, क्षौद्रपटलैः, इव, महीं, तस्तार ॥ ६३ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । भल्लापवर्जितैः = स्नुहीदलफलबाणविशेषच्छिन्नैः, श्मश्रुलैः = प्रवृद्धमुखरोमयुक्तैः, तेषां = पूर्वोक्तानां, पारसीकानामिति यावद् । शिरोभिः = शीर्षैः, सरघाव्याप्तैः = मधुमक्षिकाऽऽच्छन्नैः, क्षौद्रपटलैः = मधुसञ्चयैः, मधुराशिभिरित्यर्थः । इव = यथा, महीं = पृथ्वीं, तस्तार = आच्छादितवान् ॥ ६३ ॥

समासादि—भल्लन्त इति भल्लाः (पुं०), तैरपवर्जितानि भल्लापवर्जितानि (त०पु०) तैस्तथोक्तैः । श्मश्रूणि सन्ति येषु तानि श्मश्रुलानि (न० लिं०) तैः श्मश्रुलैः । सरं गतिमन्तं घातयन्तीति सरघा (स्त्री०) ताभिर्व्याप्तानि सरघाव्याप्तानि (त० पु०) तैस्तथोक्तैः ॥ ६३ ॥

व्याकरणं—भल्लाः = भल्ल ( परिभाषणहिंसादानेषु—अकारेत् ) + अच् + जस्, पचादित्वादच्प्रत्यये रूपम् । तस्तार = स्तृञ् ( आच्छादने—ञित् ) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रपरे रूपम् । सरघाः = सर + अम् + हन ( हिंसागत्योः—अकारेत् ) + णिच् ) घाति + डः + टाप् + जस्, "अन्येष्वपि दृश्यते" इत्यत्र सर्वोपाधिव्यभिचारार्थकतया डप्रत्यये णेर्लोपे टिलोपे रूपम् ॥ ६३ ॥

वाच्यान्तरं—तेन भल्लापवर्जितैः श्मश्रुलैस्तेषां शिरोभिः सरघाव्याप्तैः क्षौद्रपटलैरिव मही तस्तरे ॥ ६३ ॥

कोशः—"उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः ॥ ६३ ॥

तात्पर्यार्थः—स रघुर्मधुमक्षिकाऽऽच्छन्नानि मधुपटलानीव प्रवृद्धमुखरोमवन्ति पारसीकानां शिरांसि स्नुहीदलवत्फलयुक्तैर्बाणविशेषैश्छित्वा तैः पृथ्वीमाच्छादयामास ॥ ६३ ॥

भाषाऽर्थः—उन रघु महाराज ने स्नुही के पत्ते के तरह जिसमें फल लगे हुए हैं ऐसे बाणों से कटे हुए, दाढ़ी और मूछों से युक्त उन पारसी राजाओं के शिरों से जैसे मधुमक्षिकाओं से ढंके हुए मधु के छत्तों से ढक जावे उस भांति पृथ्वी को ढंक दिया ॥ ६३ ॥

*अथ हतावशिष्टाः पारसीका राजानस्तं रघुं शरणं ययुरित्याह—*

**अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः।**
**प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४ ॥**

सञ्जीविनी—अपनीतेति। शेषा हतावशिष्टा अपनीतशिरस्त्राणा अपसारितशीर्षण्याः सन्तः। 'शीर्षकम्। शीर्षण्यं च शिरस्त्रे' इत्यमरः। शरणागतलक्षणमेतत्। तं रघुं शरणं ययुः। तथाहि। महात्मनां संरम्भः कोपः। 'संरम्भः संभ्रमे कोपे' इति विश्वः। प्रणिपातः प्रणतिरेव प्रतीकारो यस्य स हि। महतां परकीयमौद्धत्यमेवासह्यं न तु जीवितमिति भावः ॥ ६४ ॥

अन्वयः—शेषाः, अपनीतशिरस्त्राणाः, "सन्तः", तं, शरणं, ययुः, "तथाहि", महात्मनां, संरम्भः, प्रणिपातप्रतीकारः, हि ॥ ६४ ॥

व्याख्या—शेषाः = मरणावशिष्टाः, पारसीका इति भावः। अपनीतशिरस्त्राणाः = दूरीकृतशीर्षकाः, सन्त इति शेषः। तं = पूर्वोक्तं, रघुमिति यावद्। शरणं = रक्षितारं, ययुः = प्रापुः, केवलं रघुमेव स्वकीयरक्षितारं मत्वा तदन्तिकं प्राप्ता इति भावः। तथाहीति शेषः। महात्मनां = महाचेतसाम्, उदाराशयानामिति यावद्। संरम्भः = कोपः, प्रणिपातप्रतीकारः = प्रणत्यपनेयः, वैरनिर्यातने प्रणमनमात्रोपायशालीति यावद्। हि = अवधारणेऽर्थे, भवतीति शेषः ॥ ६४ ॥

समासादि—त्रायत एभिरिति त्राणानि (न० लि०), शिरसस्त्राणानि शिरस्त्राणानि (त० पु०), अपनीतानि शिरस्त्राणानि यैस्तेऽपनीतशिरस्त्राणाः (ब० व्री०)। प्रतिकरणं प्रतीकारः (पुं०), प्रणिपतनं प्रणिपातः (पुं०), प्रणिपात एव प्रतीकारो यस्य स प्रणिपातप्रतीकारः (ब० व्री०)। महानात्मा येषान्ते महात्मानः (पुं०) तेषां महात्मनाम् ॥ ६४ ॥

व्याकरण—ययुः = या (प्रापणे) + लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये आकारलोपे रूपम्। प्रतीकारः = डुकृञ् (करणे-डुजित्) + घञ् + सु, भावे घञ्प्रत्यये "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घे रूपम् ॥ ६४ ॥

वाच्यान्तरं—शेषैरपनीतशिरस्त्राणैः "सद्भिः" स शरणं यये, महात्मनां संरम्भेण प्रणिपातप्रतीकारेण हि "भूयते" ॥ ६४ ॥

कोश.—"शरणं गृहरक्षित्रोः" इति। "वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा" इति चामरः ॥ ६४ ॥

तात्पर्यार्थः—महात्मनां रघुसदृशानां कोपशान्त्युपायः प्रणमनमेवेति विचार्य हतावशिष्टाः पारसीकाः शीर्षरक्षणसमर्थकवचविशेषरहितशिरांसः सन्तः प्राणरक्षणार्थं रक्षितारं तं रघुं प्राप्ताः ॥ ६४ ॥

भाषाऽर्थः—युद्ध में मरने से बाकी बचे हुये अपने २ टोपों को उतारे हुए रक्षा करने वाले उन रघु महाराज के समीप प्राप्त हुये, क्योंकि निश्चय करके महात्माओं का कोप प्रणाम करने ही से दूर हो जाने वाला होता है, अर्थात् शरण में जाने ही से दूर हो जाता है ॥ ६४ ॥

*अथ रघोर्योधानां विजयश्रमनिवारणार्थं मद्यपानमाह—*

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥

सञ्जीविनी—विनयन्ते स्मेति । तस्य रघोर्योधा भटा आस्तीर्णान्यजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु । 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः । मधुभिर्द्राक्षाफलप्रकृतिकैर्मद्यैर्विजयश्रमं युद्धखेदं विनयन्ते स्मापनीतवन्तः । "कर्तृस्थे चाशरीरे कर्मणि" इत्यात्मनेपदम् । "लट् स्मे" इति भूतार्थे लट् ॥ ६५ ॥

अन्वयः—तद्योधाः, आस्तीर्णाजिनरत्नासु, द्राक्षावलयभूमिषु, मधुभिः, विजयश्रमं, विनयन्ते स्म ॥ ६५ ॥

व्याख्या—तद्योधाः = पूर्वोक्तरघुभटाः, आस्तीर्णाजिनरत्नासु = विस्तीर्णकृत्तिश्रेष्ठासु, द्राक्षावलयभूमिषु = मृद्वीकाकटकधरासु, कटकाकारद्राक्षावल्लीवेष्टितभूभागेष्विति भावः । मधुभिः = मद्यैः, द्राक्षाफलसाधितैरिति यावद् । विजयश्रमं = जयखेदं, युद्धजन्यपरिश्रममिति यावद् । विनयन्ते स्म = दूरीकृतवान् ॥ ६५ ॥

समासादि—तस्य योधास्तद्योधाः (त० पु०) । विजयस्य श्रमो विजयश्रमः ( त० पु० ) तं विजयश्रमम् । अजिनेषु रत्नान्यजिनरत्नानि ( त० पु० ), आस्तीर्णान्यजिनरत्नानि यासु ता आस्तीर्णाजिनरत्नाः ( ब० व्री० ) तासु तथोक्तासु । द्राक्षाणां वलयानि द्राक्षावलयानि ( त० पु० ), तेषां भूमयो द्राक्षावलयभूमयः ( त० पु० ) तासु तथोक्तासु ॥ ६५ ॥

व्याकरणं—विनयन्ते = वि + (णीञ् ( प्रापणे–ञित् ) नी + शप् + लट्, लटो झप्रत्यये रूपम् ॥ ६५ ॥

वाच्यान्तरं—तद्योधैरास्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु मधुभिर्विजयश्रमो विनीयन्ते स्म ॥ ६५ ॥

कोशः—"अजिनं चर्म कृत्तिः स्त्री" इत्यमरः । "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी । "वलयः कण्ठरोगे ना कटके पुंनपुंसकम्" इति मेदिनी ॥ ६५ ॥

तात्पर्यार्थः—समरपरिश्रान्ता रघोर्भटा कटकाकारद्राक्षावल्लीमण्डितभूभागेष्वजिनश्रेष्ठान्यास्तीर्य तत्र सुखोपविष्टाः सन्तः द्राक्षाफलसाधितमद्यपानेन श्रमं दूरीचक्रुः ॥ ६५ ॥

भाषाऽर्थः—उन रघु महाराज के योधाओं ने जिसमें उत्तम मृगचर्म आदिक बिछे हुये हैं, ऐसी गोलाकार द्राक्षा की लताओं से वेष्टित भूभाग मे द्राक्षा के फलों से बने हुये मद्य के द्वारा (अर्थात् मद्यपान करने से) विजय करने में जो परिश्रम हुआ है, उसे दूर किया ॥६५॥

*अथ रघोर्दिग्विजयार्थमुदीचीं दिशमुद्दिश्य प्रस्थानमभूदित्याह—*

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ॥ ६६ ॥

सञ्जीविनी—तत इति । ततो रघुर्भास्वान्सूर्य इव शरैर्बाणैरुस्रैः किरणैरिव । 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः । उदीच्यानुदग्भवान्नृपान्रसानुदकानीवोद्धरिष्यन्कौबेरीं कुबेरसंबन्धिनीं दिशमुदीचीं प्रतस्थे । अनेकेनेवशब्देनेयमुपमा । यथाऽऽह दण्डी–(एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा ) इति ॥ ६६ ॥

अन्वयः—ततः, रघुः, भास्वान्, इव, शरैः, उस्रैः, इव, उदीच्यान्, रसान्, इव, उद्धरिष्यन्, कौबेरीं, दिशं, प्रतस्थे ॥ ६६ ॥

व्याख्या—ततः = तदनन्तरं, पाश्चात्यपारसीकनृपतिविजयानन्तरमिति भावः । रघुः = दिलीपतनयः, भास्वान् = सूर्यः, इव = यथा, शरैः = बाणैः, उस्रैः = अंशुभिः, इव = यथा, उदीच्यान् = उदग्भवान्, तत्रत्यान्राज्ञ इति यावद् । रसान् = जलान्, इव = यथा, उद्धरि-

ष्यन् = उन्मूलयिष्यन्, "सूर्यपक्षे" शोषयिष्यन्, कौबेरीं = कुबेरसम्बन्धिनीं, दिशम् = आशाम्, उदीचीमिति यावद् । प्रतस्थे = प्रस्थानं कृतवान् ॥ ६६ ॥

समासादि—कुत्सितं बेरं शरीरं यस्य स कुबेरः ( पुं० ), तस्येयं कौबेरी तां कौबेरीम् । भा अस्त्यस्मिन्निति भास्वान् (पुं०) । उदग्भवा उदीच्याः ( पुं० ), तानुदीच्यान् । उद्धरिष्यतीत्युद्धरिष्यन् ( पुं० ) ॥ ६६ ॥

व्याकरणं—प्रतस्थे = प्र + ( ष्ठा ( गतिनिवृत्तौ ) स्था + लिट्, लिटस्तप्रत्यये रूपम् । उदीच्यान् = उदञ्च् + ङि + यत् + शस्, "द्युप्रागपागुदक्प्रतीचो यत्" इति यत्प्रत्यये नलोपे "उद ईत्" इतीकारादेशे रूपम् ॥ ६६ ॥

वाच्यान्तरं—ततो रघुणा भास्वतेव शरैरुस्रैरिवोदीच्यान् रसानिवोद्धरिष्यता कौबेरी दिक् प्रतस्थे ॥ ६६ ॥

कोशः—"इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्" इति । "उदीच्यः पश्चिमोत्तरः" इति चामरः । "रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये,तिक्तादौ द्रवरागयोः" इति मेदिनी ॥ ६६ ॥

तात्पर्यार्थः—पाश्चात्यप्रदेशविजयानन्तरं प्रभावशाली रघुः सूर्यो यथा तीक्ष्णकिरणैर्जलाञ् शोषयितुमुत्तरायणगो भवति तथैव तीक्ष्णबाणैः पश्चिमोत्तरप्रदेशस्थान् नृपानुन्मूलयितुमुत्तराभिमुखः सन् प्रस्थितो बभूव ॥ ६६ ॥

भाषाऽर्थः—उसके ( पश्चिम दिशा के देशों के विजय कर चुकने के ) बाद रघु महाराज ने सूर्य जैसे किरणों से जलों का शोषण करने के लिये उत्तरायण होता है उसी भांति अपने बाणों से पश्चिम और उत्तर दिशा के देशाधिपति राजाओं को उखाड़ डालने ( विजय करने ) के लिये कुबेर की जो उत्तर दिशा है उधर को प्रस्थान किया ॥ ६६ ॥

*अथोदीचीं दिशं प्रस्थितस्य रघोः सेनासम्बन्धिनोऽश्वान् वर्णयन्नाह—*

विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धांल्लग्नकुङ्कुमकेसरान् ॥ ६७ ॥

सञ्जीविनी—विनीतेति । सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः। 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । सिन्धोस्तीरे विचेष्टनैरङ्गपरिवर्त्तनैर्विनीताध्वश्रमास्तस्य रघोर्वाजिनोऽश्वा लग्नाः कुङ्कुमकेसराः कुङ्कुमकुसुमकिञ्जल्का येषां तान् । यद्वा लग्नकुङ्कुमाः केसराः सटा येषां तान् । 'अथ कुङ्कुमम् । काश्मीरजन्म' इत्यमरः । 'केसरो नागकेसरे । तुरङ्गसिंहयोः स्कन्धकेशेषु वकुलद्रुमे । पुंनागवृक्षे किञ्जल्के स्यात्' इति हैमः । स्कन्धान्कायान् । 'स्कन्धः प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । दुधुवुः कम्पयन्ति स्म ॥ ६७ ॥

अन्वयः—सिन्धुतीरविचेष्टनैः, विनीताध्वश्रमाः, तस्य, वाजिनः, लग्नकुङ्कुमकेसरान्, स्कन्धान्, दुधुवुः ॥ ६७ ॥

व्याख्या—सिन्धुतीरविचेष्टनैः = सिन्ध्वाख्यनदीतटगात्रपरिवर्त्तनैः, भूमौ निपत्याङ्गपरिवर्त्तनेन श्रममपनयन्त्यश्वा इति, तेषां जातिरित्यूह्यमत्र । विनीताध्वश्रमाः = दूरीकृतमार्गखेदाः, तस्य = पूर्वोक्तस्य, रघोरिति यावद् । वाजिनः = हयाः, लग्नकुङ्कुमकेसरान् = सक्तकश्मीरजन्मसटान्, सक्तकश्मीरजन्मकिञ्जल्कान् वा, स्कन्धान् = कायान्, दुधुवुः = कम्पयामासुः ॥ ६७ ॥

समासादि—अध्वनः श्रमोऽध्वश्रमः ( त० पु० ), विनीतोऽध्वश्रमो यैस्ते विनीताध्वश्रमाः ( ब० व्री० ) । सिन्धोस्तीरं सिन्धुतीरं ( त० पु० ), तत्र विचेष्टनानि सिन्धुतीरविचेष्टनानि ( त० पु० ) तैस्तथोक्तैः । लग्नं कुङ्कुमं येषान्ते लग्नकुङ्कुमाः । (ब० व्री०), लग्न-

कुङ्कुमाः केसरा येषान्ते लग्नकुङ्कुमकेसराः (ब० व्री०) तांस्तथोक्तान् ॥ ६७ ॥

व्याकरणं—दधुवुः = धूञ् (कम्पने-ञित्) + लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये "श्र्युकः किति" इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिडागमे उवङादेशे रूपम् । लग्नं = लगे ( सङ्गे—एदित् ) + क्तः + सु, "क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु" इति क्तस्येडभावस्तस्य नश्च निपात्यते जस्य कुत्वेन गकारे रूपम् ॥ ६७ ॥

वाच्यान्तरं—सिन्धुतीरविचेष्टनैर्विनीताध्वश्रमैस्तस्य वाजिभिर्लग्नकुङ्कुमकेसराः स्कन्धा दुधुविरे ॥ ६७ ॥

कोशः—"विनीतस्तु, निभृते निर्जितेन्द्रिये । वाणिज्ये साधुवाह्यश्वे विनयग्राहिते हृते" इति । "सिन्धुर्नद्यां गजमदेऽब्धौ देशनदभेदयोः" इति चानेकार्थसङ्ग्रहः । "लग्नं राश्युदये क्लीबं सक्तलज्जितयोस्त्रिषु" इति मेदिनी । "अथ कुङ्कुमम् । काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतनम् । रक्तसङ्कोचपिशुनं धीरलोहितचन्दनम्" इत्यमरः । ॥ ६७ ॥

तात्पर्यार्थः—कश्मीरदेशस्थितसिन्धुनामकनदस्य तीरेऽङ्गपरिवर्त्तनैरपनीतमार्गश्रमाः सन्तो रघोः सैनिकाश्वा लग्नकुङ्कुमजटायुक्तान् कायान् मुहुर्मुहुः कम्पयामासुः ॥ ६७ ॥

भाषाऽर्थः—सिन्धु नामक नद के किनारे अङ्ग परिवर्त्तन करने ( लेट कर दोनों तरफों से जमीन पर घर्षण करने ) से जिन्हों ने अपने २ मार्ग के थकावट को दूर कर दिया है, ऐसे रघु महाराज के घोडों ने जिसके स्कन्ध के वालों में केसर लगे हुये हैं, ऐसे अपने २ शरीरों को या कन्धों को हिलाये ( झाड़े ) ॥ ६७ ॥

*अथ रघुर्हूणान् युधि जितवानित्याह—*

तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥

सञ्जीविनी—तत्रेति । तत्रोदीच्यां दिशि भर्तृषु व्यक्तविक्रमम् । भर्तृवधेन स्फुटपराक्रममित्यर्थः । रघुचेष्टितं रघुव्यापारः। हूणा जनपदाख्याः क्षत्रियाः । तेषामवरोधा अन्तःपुरस्त्रियः। तासां कपोलेषु पाटलस्य पाटलिम्नस्ताडनादिकृतारुण्यस्यादेश्युपदेशकं बभूव । अथवा पाटलआदेश्यादेष्टा यस्य तद् बभूव । स्वयं लेख्यायत इत्यर्थः ॥ ६८ ॥

अन्वयः—तत्र, भर्तृषु, व्यक्तविक्रमं, रघुचेष्टितं, हूणावरोधानां, कपोलपाटलादेशि, बभूव ॥ ६८ ॥

व्याख्या—तत्र = पूर्वोक्तायाम्, उदीच्यां दिशीति यावद् । भर्तृषु = स्वामिषु, युधि रघुणा हतेष्विति भावः । व्यक्तविक्रमं = स्पष्टशक्तिसंपत्तिकं, स्वामिवधेनाभिव्यक्तपराक्रममित्यर्थः । रघुचेष्टितं = दिलीपसूनुचेष्टा, रघोर्युद्धेऽस्त्रचालनादिव्यापार इत्यर्थः । हूणावरोधानां = हूणदेशवासिराजदाराणां, कपोलपाटलादेशि = गण्डस्थलश्वेतरक्तिमोपदेशि, बभूव = अभूत् ॥ ६८ ॥

समासादि—हूणानामवरोधा हूणावरोधाः (त०पु०), तेषां तथोक्तानाम् । व्यक्तो विक्रमो यस्मिंस्तद् व्यक्तविक्रमम् (ब०व्री०) । कपोलयोः पाटलः कपोलपाटलः (त०पु०), तमादेष्टुं शीलमस्य तत् कपोलपाटलादेशि ( न० लिं० ) । रघोश्चेष्टितं रघुचेष्टितम् (त०पु०) ॥६८॥

व्याकरणं—बभूव = भू ( सत्तायाम् ) + लिट्, लिटस्तिपि रूपम् ॥ ६८ ॥

वाच्यान्तरं—तत्र भर्तृषु व्यक्तविक्रमेण रघुचेष्टितेन हूणावरोधानां कपोलपाटलादेशि बभूवे ॥ ६८ ॥

कोशः—"अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति । "भर्ता स्वामिनि पुंसि स्यात्त्रिषु धातरि पोष्टरि" इति च मेदिनी । "विक्रमः शक्तिसंपत्तिः क्रान्तिमात्रं च विक्रमः" इति ध-

रणिः । "आशुव्रीहौ पाटलो ना श्वेतरक्तेऽन्यलिङ्गवान्" इति रुद्रः ॥ ६८ ॥

तात्पर्यार्थः—रघुस्तत्रोदीच्यां दिशि हूणाख्यक्षत्रियाणामन्तःपुरस्त्रीणां स्वामिनो हत्वा निजप्रचण्डपराक्रमं प्रकटयंस्तत्कपोलांस्ताडनादिकृतारुण्ययुक्तांश्चकार, अर्थात्—हूणान् विजितवानिति भावः ॥ ६८ ॥

भाषाऽर्थः—उस उत्तर दिशा में अपने २ स्वामियों के विषय में जो पराक्रम हुये हैं वे जिसमें व्यक्त हो रहे हैं ऐसे रघु महाराज के व्यापार हूण देश के राजाओं की स्त्रियों के कपोलों पर जो ( पतियों के मारे जाने से दुःख में पीटने से ) रक्तवर्णता आ गई थी उसके उपदेश करनेवाले हुये, अर्थात् रघु ने हूणोंको जीता है इस का बतलानेवाली उनके स्त्रियों के कपोलों की रक्तवर्णता हो हुई ॥ ६८ ॥

*अथ रघुः कम्बोजदेशवासिनो राज्ञोऽपि विजितवानित्याह—*

काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ॥ ६९ ॥

सञ्जीविनी—काम्बोजा इति । काम्बोजा राजानः समरे । तस्य रघोर्वीर्यं प्रभावम् । 'वीर्यं तेजःप्रभावयोः' इति हैमः । सोढुमनीश्वरा अशक्ताः सन्तः । गजानामालानं बन्धनम् । भावे ल्युटि । "विभाषा लीयतेः" इत्यात्वम् । तेन परिक्लिष्टैः परिक्षतैरक्षोटैर्वृक्षविशेषैः सार्धमानताः ॥ ६९ ॥

अन्वयः—काम्बोजाः, समरे, तस्य, वीर्यं, सोढुम्, अनीश्वराः, "सन्तः", गजालानपरिक्लिष्टैः, अक्षोटैः, सार्धम्, आनताः, "बभूवुः" ॥ ६९ ॥

व्याख्या—काम्बोजाः=कम्बोजदेशवासिनः, राजान इति भावः । समरे=युद्धे, तस्य=पूर्वोक्तस्य, रघोरिति यावद् । वीर्यं=प्रभावं, सोढुं=मर्षितुम्, अनीश्वरा=असमर्थाः, सन्त इति शेष । गजालानपरिक्लिष्टैः=द्विपबन्धनस्तम्भपरिक्षतैः, अक्षोटैः=कर्परालैः, अखरोटेति नाम्ना प्रसिद्धैर्वृक्षैः, सार्धं=सह, आनताः=नम्रीभूताः, "राजपक्षे" शरणागता-इति यावद् । बभूवुः=अभूवन् ॥ ६९ ॥

समासादि—कम्बोजोऽभिजनो येषां ते काम्बोजाः ( पुं० ) । न ईश्वरा इत्यनीश्वराः ( न० त० पु० ) । आलीयतेऽत्रेत्यालानं ( न० लिं० ), गजानामालानं गजालानं (त० पु० ), तेन परिक्लिष्टा गजालानपरिक्लिष्टाः ( त० पु० ) तैस्तथोक्तैः ॥ ६९ ॥

व्याकरणं—सोढुं=षह ( मर्षणे-अकारेत् )+तुमुन् ॥ ६९ ॥

वाच्यान्तरं—काम्बोजैः समरे तस्य विक्रमं सोढुमनीश्वरैर्गजालानपरिक्लिष्टैरक्षोटैः सार्धमानतैर्बभूवे ॥ ६९ ॥

कोशः—"आलानं बन्धनस्तम्भे" इति । "अक्षोटकर्परालौ द्वौ" इति चामरः ॥ ६९ ॥

तात्पर्यार्थः—कम्बोजदेशनिवासिनो राजानः समरे तस्य प्रभावमसहमानाः सन्तो रघुगजबन्धनशृंखलाकर्षणवेगेन बन्धनस्तम्भीभूतैरक्षोटवृक्षैः सहैव नम्रा जाताः, अर्थात् पादयोर्निपत्य शरणागता बभूवुः ॥ ६९ ॥

भाषाऽर्थः—कम्बोज देशवासी राजा ( काबुली ) लोग युद्ध में उन रघु महाराज के प्रभाव ( पराक्रम ) को नहीं सहन करने में समर्थ होते हुये हाथियों के बान्धने के लिये स्तम्भ स्वरूप होने से झुके जाते हुये अखरोट के वृक्षों के साथ ही साथ नम्र हो गये अर्थात् शिर झुकाये ॥ ६९ ॥

*अथ रघवे काम्बोजाः पराजिताः सन्तोऽश्वधनादिकमुपायनं ददुरित्याह—*

तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।
उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम् ॥ ७० ॥

सञ्जीविनी—तेषामिति । तेषां काम्बोजानां सद्भिरश्वैर्भूयिष्ठा बहुलास्तुङ्गा द्रविणानां हिरण्यानाम् । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । राशय एवोपदा उपायनानि । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । कोसलेश्वरं कोसलदेशाधिपतिं तं रघुं शश्वदसकृद्विविशुः । 'मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः । तथाऽप्युत्सेका गर्वास्तु न विविशुः । सत्यपि गर्वकारणे न जगर्वेत्यर्थः ॥ ७० ॥

अन्वयः—तेषां, सदश्वभूयिष्ठाः, तुङ्गाः, द्रविणराशयः, उपदाः, कोसलेश्वरं, शश्वद्, विविशुः, उत्सेकाः, "तु", न, "विविशुः" ॥ ७० ॥

व्याख्या—तेषाम्=पूर्वोक्तानां, पराजितानां काम्बोजानामिति यावद् । सदश्वभूयिष्ठाः=श्रेष्ठहयबहुलाः, तुङ्गाः=उन्नताः, द्रविणराशयः=हिरण्यपुञ्जाः, एवेति शेषः । उपदाः=उपहाराः, कोसलेश्वरं=कोसलदेशाधिपतिं, तं रघुमिति यावद् । शश्वद्=मुहुर्मुहुः, विविशुः=अविशन्, रघोर्निकटे काम्बोजप्रदत्ता उपहारा आगता इति भावः । उत्सेकाः=अहङ्काराः, विजयजन्या इति भावः । त्विति शेषः । न=नहि, विविशुः ॥ ७० ॥

समासादि—अतिशयेन बहव इति भूयिष्ठाः ( पुं० ), सन्तश्च तेऽश्वाश्चेति सदश्वाः (क० धा०), तैर्भूयिष्ठा इति सदश्वभूयिष्ठा (त०पु०) । द्रविणानां राशयो द्रविणराशयः (त०पु०)। कोसलानामीश्वरः कोसलेश्वरः ( त० पु० ) तं तथोक्तम् ॥ ७० ॥

व्याकरणं—विविशुः=विश ( प्रवेशने-अकारेत् )+लिट्, लिटो झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ७० ॥

वाच्यान्तरं—तेषां सदश्वभूयिष्ठैस्तुङ्गैर्द्रविणराशिभिरुपदाभिः कोसलेश्वरः शश्वद् विविशे, उत्सेकैर्न विविशे ॥ ७० ॥

कोशः—"प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहं पुरु भूयिष्ठं स्फारं भूयश्च भूरि च" इत्यमरः ॥ ७० ॥

तात्पर्यार्थः—पराजितास्ते काम्बोजा राजानोऽपरिमितांस्तद्देशीयानश्वरत्नान् हिरण्यात्युच्चराशींश्च तस्मै रघव उपहारीकृतवन्तः किन्तु सर्वजनसुलभगर्वकारणे सत्यपि सोऽमितानपि तांल्लब्ध्वा सर्वथा गर्वरहित एवासीत् ॥ ७० ॥

भाषार्थः—उन ( हारे हुये ) कम्बोज देश के राजाओं के ( दिये हुए ) बहुत से उत्तम २ घोड़े और ऊँची २ स्वर्ण की राशि ही उपहार स्वरूप में कोसल देश के स्वामी उन रघु महाराज के पास उपस्थित हुये, किन्तु, फिर भी ( उनके हृदय में ) अहङ्कार नहीं हुआ ॥ ७० ॥

×अथ काम्बोजविजयानन्तरं रघोर्हिमालयपर्वतारोहणमाह—×

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१ ॥

सञ्जीविनी—तत इति । ततोऽनन्तरमश्वसाधनः सन्गौर्या गुरुं पितरं शैलं हिमवन्तम् । उद्धूतैरश्वखुरोद्धूतैर्धातूनां गैरिकादीनां रेणुभिस्तत्कूटांस्तस्य शृङ्गाणि । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । वर्धयन्निव । आरुरोह । उत्पतद्धूलिदर्शनाद्गिरिशिखरवृद्धिभ्रमो जात इति भावः ॥ ७१ ॥

अन्वय.—ततः, अश्वसाधनः, "सन्", गौरीगुरुं, शैलम्, उद्धूतैः, धातुरेणुभिः, तत्कूटान्, वर्धयन्, इव, आरुरोह ॥ ७१ ॥

व्याख्या—ततः=अनन्तर, काम्बोजविजयानन्तरमिति यावद् । अश्वसाधन=हयसैन्यः, हयं विना पर्वतारोहणासम्भवादिति भावः । सन् स रघुरिति शेषः । गौरीगुरुम्=उमापितरं, हिमालयमिति यावद् । शैलं=पर्वतम्, उद्धूतैः=उत्क्षिप्तैः, हयखुरैरित्य-

र्थ. । धातुरेणुभिः = मनःशिलाऽऽदिधातुधूलिभिः, तत्कूटान् = पूर्वोक्तहिमालयशैलशिखराणि, वर्धयन् = उन्नतान् कुर्वन्, इव = यथा, आरुरोह = आरोहत्, आरोहणं कृतवानिति यावद् ॥ ७१ ॥

समासादि—गौर्या गुरुर्गौरीगुरुः ( पुं० ) तं तथोक्तम् । अश्वा एव साधनं यस्याऽसावश्वसाधनः ( ब० व्री० ) । तस्य कूटास्तत्कूटाः ( त० पु० ) तांस्तथोक्तान् । धातूनां रेणवो धातुरेणवः ( त० पु० ) तैस्तथोक्तैः ॥ ७१ ॥

व्याकरणम्—आरुरोह = आङ् + रुह ( बीजजन्मनि प्रादुर्भावे च-अकारेत् ) + लिट्, लिटस्तिपा णलि द्वित्वेऽभ्यासकार्ये रूपम् । उद्धूतैः = उद् + धूञ् ( कम्पने-ञकारेत् ) + क्तः + भिस् ॥ ७१ ॥

वाच्यान्तरं—ततोऽश्वसाधनेन गौरीगुरुः शैल उद्धूतैर्धातुरेणुभिस्तत्कूटान् वर्धयतेवारुरुहे ॥ ७१ ॥

कोश.—"धातुर्मनःशिलाऽऽद्यद्रेः" इत्यमरः । "सुवर्णरूप्यताम्राणि हरितालं मनःशिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः । गन्धकोऽभ्रकमित्याद्या धातवो गिरिसंभवाः" । इति कोशान्तरम् ॥ ७१ ॥

तात्पर्यार्थः—ततः काम्बोजविजयानन्तरं हयसैन्ययुक्तः सन् स रघुर्यदा पर्वतीयान् राज्ञो जेतुं हिमालयमारुरोह, तदा तत्सेनास्थिताश्वानां खुरोत्क्षिप्तैर्मनःशिलाऽऽदिधातूनां रेणुभिः स पर्वतो वर्धमान इव लोकैरदृश्यत ॥ ७१ ॥

भाषाऽर्थः—उसके ( काबुलियों का विजय कर चुकने के ) बाद घोड़ों की सेना ( घुड़सवारो ) को साथ में लिये हुये वे रघु महाराज ( पार्वती के पिता) हिमालय नामक पर्वत पर घोड़ों के खुरों से उड़ी हुई मनःशिला आदि धातुओं की धूलियों से उसके शिखरों को बढ़ाते हुये की भाँति चढ़े ॥ ७१ ॥

*अथ हिमालयपर्वतगह्वरेषु सुप्तान् सिंहान् वर्णयन्नाह—*

शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥

सञ्जीविनी—शशंसेति । तुल्यसत्त्वानां समानबलानाम् । गुहासु शेरत इति गुहाशयास्तेषाम् । "अधिकरणे शेतेः" इत्यच्प्रत्ययः । 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा' इत्यमरः । सिंहानां हरीणाम् । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः । सम्बन्धि परिवृत्य परावृत्यावलोकितं । शयित्वैव ग्रीवाभङ्गेनावलोकनं कर्तृ । सैन्यघोषे सेनाकलकले सम्भ्रमकारणे सत्यप्यसम्भ्रममन्तःक्षोभविरहितम् । नञः प्रसज्यप्रतिषेधेऽपि समास इष्यते । शशंस कथयामास । सैन्येभ्य इत्यर्थाल्लभ्यते । बाह्यचेष्टितमेव मनोवृत्तेरनुमापकमिति भावः । असम्भ्रान्तत्वे हेतुस्तुल्यसत्त्वानामिति । नहि समबलः समबलाद्बिभ्यतीति भावः ॥७२॥

अन्वयः—तुल्यसत्त्वानां, गुहाशयानां, सिंहानां, परिवृत्य, "एव", अवलोकितं, सैन्यघोषे, अपि, असम्भ्रमं, शशंस ॥ ७२ ॥

व्याख्या—तुल्यसत्त्वानां = समबलानां, गुहाशयानां = गह्वरसुप्तानां, सिंहानां = मृगेन्द्राणां, परिवृत्य = परावृत्य, शयान एव ग्रीवापरिवर्तनं कृत्वेत्यर्थः । अवलोकितम् = अवलोकन, प्रेक्षणमिति यावद् । कर्तृपदमेतत् । सैन्यघोषे = सेनाकलकलशब्दे, अपि = समुच्चयेऽर्थे, भयहेतौ सत्यपीति भावः । असम्भ्रमं = साध्वसाभावम्, मनःक्षोभराहित्यमिति यावद् । शशंस = अकथयत्, सैन्येभ्य इति भावः । तुल्यबलशालितया तत्रत्याः सिंहा रघुसैन्यात् किञ्चिन्मात्रमपि न बिभ्युरिति भावः ॥ ७२ ॥

समासादि—तुल्यं सत्त्वं येषान्ते तुल्यसत्त्वाः ( ब० व्री० ) तेषां तथोक्तानाम् । सेना-

यां समवेताः सैन्याः ( पुं० ), तेषां घोषः सैन्यघोषः ( त० पु० ) तस्मिंस्तथोक्ते । न सम्भ्रमोऽसम्भ्रमः (न० त० पु०) तं तथोक्तम् । गुहासु शेरत इति गुहाशयाः ( पुं० ) तेषां तथोक्तानाम् ॥ ७२ ॥

व्याकरणं—परिवृत्य = परि + वृतु ( वर्तने-उकारेत् ) + क्त्वा + ल्यप् ॥ ७२ ॥

वाच्यान्तरं—तुल्यसत्त्वानां गुहाशयानां सिंहानां परिवृत्यावलोकितेन सैन्यघोषेऽप्यसम्भ्रमः शशंसे ॥ ७२ ॥

कोशः—"सम्भ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि" इति । "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु" इति मेदिनी ॥ ७२ ॥

तात्पर्यार्थः—हिमालयपर्वतस्य गुहासु सुप्ता महाबलशालिनः सिंहा भयोत्पादकं रघुसेनाकलकलं श्रुत्वाऽपि भयशून्याः सन्तः केवल शयाना एव ग्रीवां परिवृत्यावलोकयन्तो निजान्तःक्षोभशून्यतां प्रकटयामासुः ॥ ७२ ॥

भाषार्थः—समान बल वाले हिमालय पर्वत की गुफाओं में सोये हुये सिंहों का घूम कर ( सोते २ गर्दन फेर कर ) देखना जो है उसीने भय का कारण जो सेना का कलकल शब्द है, उसके होने पर भी निर्भीकता को जाहिर किया ॥ ७२ ॥

*अथ हिमालयमारोहतो रघोः पथि गङ्गाऽम्बुकणोपेतः पवनो ववावित्याह—*

**भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।**
**गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥**

सञ्जीविनी—भूर्जेष्विति । भूर्जेषु भूर्जपत्रेषु । 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक्चर्मिका मता' इति यादवः । मर्मरः शुष्कपर्णध्वनिः । 'मर्मरः शुष्कपर्णनाम्' इति यादवः । अयं च शुक्लादिशब्दवद् गुणिन्यपि वर्तते । प्रयोज्यते च । ( मर्मरैरगुरुधूपगन्धिभिः ) इति । अतोमर्मरीभूताः । मर्मरशब्दवन्तो भूता इत्यर्थः । कीचकानां वेणुविशेषाणां ध्वनिहेतवः । श्रोत्रसुखाश्चेति भावः । गङ्गाशीकरिणः । शीतला इत्यर्थः । मरुतो वाताः । मार्गे तं सिषेविरे॥७३॥

अन्वयः—भूर्जेषु, मर्मरीभूताः, कीचकध्वनिहेतवः, गङ्गाशीकरिणः, मरुतः, मार्गे तं, सिषेविरे ॥ ७३

व्याख्या—भूर्जेषु = मृदुत्वक्षु, तदाख्यतरुष्विति यावत् । कीचकध्वनिहेतवः = कीचकाख्यवेणुविशेषशब्दकारणानि, गङ्गाशीकरिणः = सुरसरिदम्बुकणवन्तः, शीतला इत्यर्थः । मरुतः = वायवः, मार्गे = पथि, हिमालयारोहणपथ इत्यर्थः । तं = पूर्वोक्तं, रघुमिति यावद् । सिषेविरे = असेवन्त, रघोर्हिमालयारोहणसमये मार्गे शीतला मनोरमा वायवो ववुरिति भावः ॥ ७३ ॥

समासादि—न मर्मरा इत्यमर्मराः ( न० त० पु० ), अमर्मरा मर्मराः सम्पद्यमाना इति मर्मरीभूताः ( पुं० ) । ध्वनेर्हेतव इति ध्वनिहेतवः ( त० पु० ), कीचकानां ध्वनिहेतवः कीचकध्वनिहेतवः । ( त० पु० ) । गङ्गायाः शीकरा गङ्गाशीकराः ( त० पु० ), ते सन्त्यस्मिन्निति गङ्गाशीकरिणः ॥ ७३ ॥

व्याकरणं—सिषेविरे = (षेवृ ( सेवने-ऋदित् ) सत् + लिट्, झस्येरेजादेशे द्वित्वेऽभ्यासकार्ये रूपम् ॥ ७३ ॥

वाच्यान्तरं—भूर्जेषु मर्मरीभूतैः कीचकध्वनिहेतुभिर्गङ्गाशीकरिभिर्मरुद्भिर्मार्गे स सिषेवे॥७३॥

कोशः—"शीकरं सरले वातसृतास्बुकणयोः पुमान्" इति मेदिनी ॥ ७३ ॥

तात्पर्यार्थः—हिमालयपर्वतारोहणं कुर्वतो रघोः पथि शुष्कभूर्जपत्रवनेषु मर्मरशब्दयुक्ताः, कीचकाख्यवंशविशेषेषु श्रोत्रसुखावह मधुरं शब्द जनयन्तो गङ्गाऽम्बुकणयुक्ततया शीतलावायवो वहन्तः श्रमापनयनं चक्रुः ॥ ७३ ॥

भाषाऽर्थः—सूखे हुए भूर्जपत्र ( भोजपत्र ) के वनों में मर्मर शब्द युक्त, कीचक नामक वंशवृक्षों के ध्वनि को पैदा करने वाला गङ्गा के जल कणों से मिला हुआ (शीतल) वायु मार्ग में उन रघु महाराज की सेवा करने लगा, अर्थात् वहते हुए शीतल वायु ने रघु के श्रमको दूर किया ॥ ७३ ॥

* अथ रघोः सैनिका मृगमदवासितशिलातलेषु मार्गश्रमापनयनार्थं चक्रुरित्याह—*

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४ ॥

सञ्जीविनी—विशश्रमुरिति । सैनिकाः सेनायां समवेताः । प्राग्वहतीयष्ठक्प्रत्ययः । नमेरूणां सुरपुंनागानां छायासु निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिभिर्वासितोत्सङ्गाः सुरभिततला दृषदः शिला अध्यास्याधिष्ठाय । "अधिशीङ्स्थाऽऽसां कर्म" इति कर्म । दृषत्स्वधिरुह्येत्यर्थः । विशश्रमुर्विश्रान्ताः ॥ ७४ ॥

अन्वयः—सैनिकाः, नमेरूणां, छायासु, निषण्णमृगनाभिभिः, वासितोत्सङ्गाः, दृषदः, अध्यास्य, विशश्रमु. ॥ ७४ ॥

व्याख्या—सैनिकाः=सैन्याः, सेनायां समवेता योद्धार इति यावद् । नमेरूणां=सुरपुन्नागानां, वृक्षविशेषाणामिति यावद् । छायासु=आतपाभावेषु, नमेरुवृक्षाधस्तलेष्विति भावः । निषण्णमृगनाभिभिः=उपविष्टकस्तूरीमृगमदैः; वासितोत्सङ्गाः=भावितलाः, सुगन्धितपृष्ठभागा इति यावद् । दृषदः=प्रस्तरान्, अध्यास्य=अधिष्ठाय, शिलासु पविश्येति यावद् । विशश्रमुः=विश्रामं कृतवन्तः ॥ ७४ ॥

समासादि—सेनायां समवेताः सैनिकाः ( पुं० ) । वासित उत्सङ्गो यासां ता वासितोत्सङ्गाः ( ब० व्री० ) तास्तथोक्ताः । निषण्णाश्च ते मृगा इति निषण्णमृगाः (क० धा०), तेषां नाभयो निषण्णमृगनाभयः ( त० पु० ) तैस्तथोक्तैः ॥ ७४ ॥

व्याकरणं—विशश्रमुः=वि+श्रमु ( तपसि खेदे च–उदित् )+लिट्, झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् । निषण्णाः=नि+(षद्लृ (विशरणगत्यवसादनेषु–लृदित् ) सद्+क्तः+जस्, "रदाभ्यामि"त्यादिना दस्य तस्य च नत्वे "सदिरप्रतेः" इति सस्य षत्वे णत्वे रूपम् ॥७४॥

वाच्यान्तरं—सैनिकैर्नमेरूणां छायासु निषण्णमृगनाभिभिर्वासितोत्सङ्गा दृषदोऽध्यास्य विशश्रमे ॥ ७४ ॥

कोशः—"तुल्ये भावित वासिते" इति । "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषद्" इत्यमरः ॥ ७४ ॥

तात्पर्यार्थः—रघोः सैनिकाः सुरपुन्नागतरूणामधस्तले छायासु मृगमदसुरभितशिलातलानि पर्वतारोहणजन्यखेदापनयनार्थमाश्रितवन्त. ॥ ७४ ॥

भाषाऽर्थ.—रघु के सैनिक लोगो ने सुरपुंनाग ( देवताओं की सुपारी ) नामक वृक्षों की छाया में बैठे हुए कस्तूरी मृगों की ( नाभि स्थित ) कस्तूरी से जिनके पृष्ठ भाग सुगन्धित हो गय है ऐसी शिलाओं पर बैठकर विश्राम किया ॥ ७४ ॥

*अथ हिमवति रघोर्दीपकार्यं रात्रौ ज्योतिर्लताविशेषा एव कुर्वन्ति स्मेत्याह—*

सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपकाः ॥ ७५ ॥

सञ्जीविनी—सरलेति । सरलेषु देवदारुविशेषेष्वासक्तानि यानि मातङ्गानां गजानां ग्रीवासु भवानि ग्रैवेयाणि कण्ठशृङ्खलानि । "ग्रीवाभ्योऽण्च" इति चकाराड्ढञ्प्रत्ययः । तेषु स्फुरितत्विषः प्रतिफलितभास ओषधयो ज्वलन्तो ज्योतिर्लताविशेषा नक्तं रात्रौ नेतुर्नायकस्य रघोरस्नेहदीपिकास्तैलनिरपेक्षाः प्रदीपा आसन् ॥ ७५ ॥

अन्वयः—सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः, ओषधयः, नक्तं, नेतुः, अस्नेहदीपि-काः, आसन् ॥ ७५ ॥

व्याख्या—सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः = पीतद्रुबद्धद्विपग्रैवशृङ्खलसंक्रान्तकान्तयः, देवदारुविशेषसेनाहस्तिकण्ठबन्धनशृङ्खलप्रतिफलितरुचय इति यावद् । ओषधयः = ज्योति-र्वल्लीविशेषाः, नक्तं = रात्रौ, नेतुः = नायकस्य, सेनासञ्चालनकर्तृ रघोरिति यावद् । अस्ने-हदीपिकाः = तैलादिरसद्रव्यानपेक्षिप्रदीपाः, आसन् = अभूवन् ॥७५॥

समासादि—ग्रीवासु भवानि ग्रैवेयाणि (न० लि०), मातङ्गानां ग्रैवेयाणि मातङ्गग्रैवेयाणि ( त० पु० ), सरलेष्वासक्तानि सरलासक्तानि ( त० पु० ), सरलासक्तानि च तानि मातङ्गग्रैवेयाणि सरलासक्तमातङ्गग्रैवेयाणि ( क० धा० ), तेषु स्फुरिताः सरलासक्तमातङ्ग-ग्रैवेयस्फुरिताः (त० पु०), तास्त्विषो येषान्ते सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ( ब० व्री०)। ओषं धीयन्तेऽत्रेत्योषधयः(पुं०)। दीपा एव दीपिकाः(स्त्री०), अविद्यमानः स्नेहो यासु ता अस्नेहाः ( ब० व्री० ), अस्नेहाश्च ता दीपिका इत्यस्नेहदीपिकाः (क० धा०) ॥ ७५ ॥

व्याकरणम्—आसन् = आट् + अस (भुवि—अकारेत्) + लङ्, लङस्तिपि शपो लुकि रूपम् ॥ ७५ ॥

वाच्यान्तरं—सरलासक्तमातङ्गग्रैवेयस्फुरितत्विड्भिरोषधिभिर्नेतुर्नक्तमस्नेहदीपिकाभि-रभूयत ॥ ७५ ॥

कोशः—"पूतिकाष्ठं पीतद्रुः सरलः" इति । "ओषध्यः फलपाकान्ताः" इति । "अथ दो-षा च नक्तं च रजनावपि" इति चामरः । "स्नेहः स्यात् पुंसि तैलादिरसद्रव्ये च सौहृदे" इति मेदिनी ॥ ७५ ॥

तात्पर्यार्थ.—हिमवच्छिखरोपरि विराजितस्य ससैन्यस्य रघो रात्रौ देदीप्यमानास्तत्र स्था ज्योतिर्लताविशेषा ओषधय एव सरलवृक्षबद्धहस्तिकण्ठबन्धनशृङ्खलेषु संक्रान्तकान्तयः सन्तस्तैलादिरसद्रव्यानपेक्षिणः प्रदीपा इवासन् ॥ ७५ ॥

भाषाऽर्थः—सरल नामक वृक्षों में बंधे हुये हाथियों के गले में बांधने की सीकड़ों में जिनकी कान्ति पड़ रही थी ऐसी ज्योतिर्लतानामक औषधियां रात होने पर सेना के सञ्चालन करने वाले रघु महाराज के लिये तैलादि की अपेक्षा नहीं रखने वाले प्रदीप की भांति हुईं ॥७५॥

*अथ रघोः सेनागजानामौन्नत्यं देवदारुस्कन्धवल्कलक्षतैः किराता जानन्ति स्मेत्याह—*

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६ ॥

सञ्जीविनी—तस्येति । तस्य रघोरुत्सृष्टेषूज्झितेषु निवासेषु सेनानिवेशेषु कण्ठरज्जु-भिर्गजग्रैवेयैः क्षता निष्पिष्टास्त्वचो येषां ते देवदारवः किरातेभ्यो वनचरेभ्यो गजानां वर्ष्म प्रमाणम् । "वर्ष्म देहप्रमाणयोः" इत्यमरः । शशंसुः कथितवन्तः । देवदारुस्कन्धत्वक्क्षतै-र्गजानामौन्नत्यमनुमीयत इत्यर्थः ॥ ७६ ॥

अन्वयः—तस्य, उत्सृष्टनिवासेषु, कण्ठरज्जुक्षतत्वचः, देवदारवः, किरातेभ्यः, गजवर्ष्म, शशंसुः ॥ ७६ ॥

व्याख्या—तस्य = पूर्वोक्तस्य, रघोरिति यावद् । उत्सृष्टनिवासेषु = परित्यक्तसेनानिवे-शेषु, कण्ठरज्जुक्षतत्वचः = ग्रीवाबन्धनगुणनिष्पिष्टवल्कलाः, कण्ठबन्धनशृङ्खलक्षतवल्कल-वन्त इति यावद् । देवदारवः = पारिभद्रकाः, वृक्षा इति भावः । किरातेभ्यः = म्लेच्छजाति-भ्यः, गजवर्ष्म = द्विपप्रमाणं, सेनागजेन्द्राणामौन्नत्यमित्यर्थः । शशंसुः = कथयामासुः ॥ ७६ ॥

समासादि—उत्सृष्टाश्च ते निवासा इत्युत्सृष्टनिवासाः (क०धा०) तेषु तथोक्तेषु । कण्ठा-नां रज्जवः कण्ठरज्जवः (त० पु०), ताभिः क्षताः कण्ठरज्जुक्षताः (त० पु०), तास्त्वचो येषां ते कण्ठरज्जुक्षतत्वचः ॥ ७६ ॥

व्याकरणं—शशंस = शंसु (स्तुतौ—उदित्) + लिट्, श्रेरुसि द्वित्वेऽभ्यासकार्ये रूपम् ॥७६॥

वाच्यान्तरं—तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वग्भिर्देवदारुभिः किरातेभ्यो गजवर्ष्म शशंसे ॥ ७६ ॥

कोशः—"शुल्वं वराटकः स्त्री तु रज्जुस्त्रिषु वटी गुणः" इति। "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इति। "शक्रपादपः पारिभद्रकः। भद्रदारु द्रुकिलिमं पीतदारु च दारु च। पूतिकाष्ठं च सप्त स्युर्देवदारुणि" इति चामरः॥ ७६ ॥

तात्पर्यार्थः—रघुणोज्झितेषु सेनानिवेशप्रदेशेषु किराता म्लेच्छजातयस्तत्रत्यानां देवदारुवृक्षाणां स्कन्धेषु बद्धानां गजेन्द्राणां कण्ठबन्धनशृङ्खलाकर्षणचिह्नैस्तद्देहौन्नत्यमजानन् ॥७६॥

भाषाऽर्थः—उन रघु महाराज के छोड़े हुए सेना के पड़ावों पर गले में बांधने के रस्सों से जिनके वक्कल उचड़ गये हैं ऐसे देवदारु के वृक्षों ने ही किरातों (वनमें रहने वाली म्लेच्छजातियों) से हाथियों कीऊचाई को कहा, अर्थात्-जितनी ऊंचाई पर देवदारु के वक्कल उचड़ गये थे उतनी ऊंचाई हाथियों की थी, ऐसा किरातों ने समझा ॥ ७६ ॥

*अथ रघोः पर्वतीयैर्म्लेच्छजातीयैः किरातादिभिः सह घोरं युद्धमभूदित्याह—*

**तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत्।**
**नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥७६॥**

सञ्जीविनी—तत्रेति। तत्र हिमाद्रौ रघोः पर्वते भवैः पर्वतीयैः। "पर्वताच्च" इति छप्रत्ययः। गणैरुत्सवसंकेताख्यैः सप्तभिः सह। (गणानुत्सवसंकेतानजयत्सप्त पाण्डवः) इति महाभारते। नाराचानां बाणविशेषाणां क्षेपणीयानां भिन्दिपालानामश्मनां च निष्पेषेण सघर्षणोत्पतिता अनला यस्मिंस्तत्तथोक्तम्। "क्षेपणीयो भिन्दिपालः खड्गो दीर्घो महाफलः" इति यादवः। घोरं भीमं जन्यं युद्धमभूत। 'युद्धमायोधनं जन्यम्' इत्यमरः॥ ७७ ॥

अन्वयः—तत्र, रघोः, पर्वतीयैः, गणैः, नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलं, घोरं, जन्यम्, अभूत् ॥ ७७ ॥

व्याख्या—तत्र = पूर्वोक्ते, हिमालयपर्वत इति यावद्। रघोः = दिलीपसूनोः, पर्वतीयैः = पर्वतभवैः, हिमालयपर्वतनिवासिभिरिति यावद्। गणैः = उत्सवसङ्केताख्यैः सप्तभिः, सहेति शेषः। नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् = प्रक्ष्वेडनाख्यसर्वलोहमयबाणभिन्दिपालप्रस्तरसंघर्षोत्पन्नाग्निमद्, घोरं = भयङ्करं, जन्यम् = आयोधनम्, अभूत् = बभूव ॥७७॥

समासादि—पर्वते भवाः पर्वतीयाः (पुं०) तैस्तथोक्ताः। नाराचाश्च क्षेपणीयाश्चाश्मानश्चेति नाराचक्षेपणीयाश्मानः (द्वं०), तेषां निष्पेषो नाराचक्षेपणीयाश्मनिष्पेषः (त०पु०), तेनोत्पतिता नाराचक्षेपणीयाश्मनिष्पेषोत्पतिताः (त० पु०), तेऽनला यस्मिंस्तद् नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् (ब० व्री०) ॥ ७७ ॥

व्याकरणं—पर्वतीयैः = पर्वत + ङि + छः + भिस्, "पर्वताच्च" इति छप्रत्यये तस्येयादेशे रूपम्। अभूत् = अट् + भू (सत्तायाम्) + च्लि + लुङ्, तिपि रूपम् ॥ ७७ ॥

वाच्यान्तरं—तत्र रघोः पर्वतीयैर्गणैर्नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलेन घोरेण जन्येनाभावि ॥ ७७ ॥

कोशः—"प्रक्ष्वेडनास्तु नाराचाः" इत्यमरः॥ ७७ ॥

तात्पर्यार्थः—तत्र हिमालयपर्वते पर्वतीयैर्म्लेच्छजातीयैरुत्सवसङ्केताख्यसप्तसङ्ख्यकैः किरातादिभिः सह भयानकं युद्धमभूत् ततो रघुनिक्षिप्तानां सर्वलोहमयबाणानां भिन्दिपालानां च तथा किरातादिनिक्षिप्तानां प्रस्तरशकलानां परस्परसङ्घर्षेणाग्नयः समुत्पन्ना आसन् ॥ ७७ ॥

भाषाऽर्थः—उस हिमालय पर्वत पर रघु का वहां के निवासी उत्सवसंकेताख्य सात म्लेच्छजाति के गणों के साथ केवल लोह के बने हुये नाराच नामक बाण और भिन्दिपाल

( नाली की भांति चौड़ा तथा लम्बा खड्ग के सदृश बाण विशेष ) तथा पत्थर के टुकड़े, इन सबों के परस्पर रगड़ से अग्नि उत्पन्न हो गया था, ऐसा जिसमें भयङ्कर युद्ध हुआ॥७७॥

*अथ पर्वतीयगणविजयिनो रघोर्यशोगानं तत्र किन्नरगणाश्चक्रुरित्याह—*

शरैरुत्सवसंकेतान्स कृत्वा विरतोत्सवान्।
जयोदाहरणं बाह्वोर्गापयामास किंनरान् ॥ ७८ ॥

सञ्जीविनी—शरैरिति । स रघुः शरैर्बाणैरुत्सवसंकेतान्नाम गणान्विरतोत्सवान्कृत्वा । जित्वेत्यर्थः । किन्नरान्बाह्वोः स्वभुजयोर्जयोदाहरणं जयख्यापकं प्रबन्धविशेषं गापयामास । "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" इत्यनेन किंनराणां कर्मत्वम्॥७८॥

अन्वयः—सः, शरैः, उत्सवसङ्केतान्, विरतोत्सवान्, कृत्वा, बाह्वोः, जयोदाहरण, किन्नरान्, गापयामास ॥ ७८ ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावद् । शरैः = बाणैः, उत्सवसङ्केतान् = सप्तसङ्ख्याकान् गणान्, पर्वतीयानिति यावद् । विरतोत्सवान् = निवृत्तोद्धर्षान्, पराजयादिति भावः । कृत्वा = विधाय, किन्नरान् = तुरङ्गवदनान्, देवयोनिविशेषानिति यावद् । बाह्वोः = भुजयोः, जयोदाहरणं = विजयख्यापकप्रबन्धविशेषं, गापयामास = गापयति स्म ॥ ७८ ॥

समासादि—विरत उत्सवो येषां ते विरतोत्सवाः ( ब०व्री० ) तांस्तथोक्तान् । उदाह्रियतेऽनेनेत्युदाहरणम् ( न० लिं० ), जयस्योदाहरणमिति जयोदाहरणम् । 'अश्वमुखत्वात्कुत्सिता नरा इति किन्नराः ( पुं० ) तान् किन्नरान् ॥ ७८ ॥

व्याकरणं—कृत्वा = डुकृञ् ( करणे—डुञित् ) + क्त्वा + ल्यप् । उदाहरणम् = उद् + आङ् + हृञ् (हरणे—ञित्) + ल्युट् + अम्, करणे ल्युट्प्रत्यये रूपम् । गापयामास = (गै-(शब्दे) + णिच् + पुक् ) + गापि + आम् + अस ( भुवि—अकारेत् ) + लिट्,"अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुगागमे लिटस्तिपो णलि रूपम् ॥ ७८ ॥

वाच्यान्तरं—तेन शरैरुत्सवसंकेतान् विरतोत्सवान् कृत्वा किन्नरा बाह्वोर्जयोदाहरणं गापयाञ्चक्रिरे ॥ ७८ ॥

कोशः—"अथ क्षण उद्धर्षो मह उद्धव उत्सवः" इति । "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः" इति चामरः ॥ ७८ ॥

तात्पर्यार्थः—स रघुर्बाणैरुत्सवसंकेताख्यपर्वतीयगणान् युधि हत्वाऽवशिष्टांश्च पराजयादुत्सवरहितांश्च कृत्वा स्वकीयं यशः किन्नरान् गापयति स्म ॥ ७८ ॥

भाषाऽर्थः—उन रघु महाराज ने बाणों से उत्सवसंकेत नामक सात पर्वत-निवासी म्लेच्छजाति के गिरोहों को (पराजय होने से) जिनके यहां उत्सव होना बन्द हो गया ऐसा करके अर्थात् जीतकर किन्नरोंसे अपने भुजाओं द्वारा जय प्राप्ति की विख्याति को करने वाले प्रबन्धविशेष (यश) को गवाया ॥ ७८ ॥

*अथ पराजितानां पर्वतीयगणानां रघवे उपहारस्वरूपमणिगणार्पणमाह—*

परस्परेण विज्ञातस्तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७९ ॥

सञ्जीविनी—परस्परेणेति । तेषु गणेषूपायनयुक्ताः पाणयो येषां तेषु सत्सु परस्परेणान्योऽन्यं राज्ञा हिमवतः सारो धनरूपो विज्ञातः । हिमाद्रिणाऽपि राज्ञः सारो बलरूपो विज्ञातः । एतेन तत्रत्यवस्तूनामनर्घ्यत्वं,गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ॥ ७९ ॥

अन्वयः—तेषु, उपायनपाणिषु, "सत्सु" परस्परेण, राज्ञा, हिमवतः, सारः, विज्ञातः, हिमाद्रिणा, "अपि", राज्ञः, सारः, "विज्ञातः", ॥ ७९ ॥

व्याख्या = तेषु = पूर्वोक्तेषु, पराजितोत्सवसंकेताख्यगणेष्विति यावत् । उपायनपाणि-

षु = उपहारयुक्तहस्तेषु, सत्स्विति शेषः । परस्परेण = अन्योऽन्यं, राज्ञा = नृपेण, रघुणेति यावद् । हिमवतः = तुषाराद्रेः, सारः = बलं, धनरूप इति यावद् । विज्ञातः = बुद्धः, राज्ञः = नृपस्य, रघोरिति यावद् । सारः = बलं, पराक्रमरूप इति यावद् । विज्ञात इत्यस्यात्राप्यन्वयो योज्यः ॥ ७९ ॥

समासादि—उपायनानि पाणिषु येषां त उपायनपाणयः ( व्य० ब० व्री० ) तेषु तथोक्तेषु ॥ ७९ ॥

व्याकरणं—विज्ञातः = वि + ज्ञा ( अवबोधने ) + क्तः + सु ॥ ७९ ॥

वाच्यान्तरं—तेषूपायनपाणिषु परस्परेण राजा हिमवतः सारं विज्ञातवान् हिमाद्रिरपि राज्ञः सारं विज्ञातवान् ॥ ७९ ॥

कोशः—"उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः । "सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले धने । न्याय्ये क्लीबं त्रिषु वरे" इति मेदिनी ॥ ७९ ॥

तात्पर्यार्थः—यदा पराजिताः पर्वतीया उत्सवसंकेताख्या नाम गणास्तत्रत्यानर्घ्यमणिगणादीनादाय पादयोः प्रणिपत्योपायनीकृतवन्तस्तदा परस्परेण राजा रघुर्हिमालयस्य धनरूपं सारं विज्ञातवान्, हिमालयोऽप्यभूतपूर्वपर्वतीयगणविजयकारिणो रघोः पराक्रमरूपं सारं विज्ञातवान् ॥ ७९ ॥

भाषाऽर्थः—उन पर्वतीय उत्सवसंकेत नामक म्लेच्छजाति के सात गिरोहों के, हाथ में नजर करने के लिये रत्नादिकों को लेकर उपस्थित होने पर परस्पर एक दूसरे को अर्थात् महाराज रघु ने हिमालय के धनरूप सार को और हिमालय ने उनके पराक्रमरूप सार को जाना ॥ ७९ ॥

*अथ रघुरग्रे कैलासपर्वतमगत्वैव हिमालयशिखरादवततारेत्याह—*

**तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।**
**पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ८० ॥**

सञ्जीविनी—तत्रेति । स रघुस्तत्र हिमाद्रावक्षोभ्यमधृष्यं यशोराशिं निवेश्य निधाय । पौलस्त्येन रावणेन तुलितस्य चालितस्याद्रेः कैलासस्य ह्रियमादधानो जनयन्निव । अवरुरोहावततार । कैलासमगत्वैव प्रतिनिवृत्त इत्यर्थः । नहि शूराः परेण पराजितमभियुज्यन्त इति भावः ॥ ८० ॥

अन्वयः—सः, तत्र, अक्षोभ्यं, यशोराशिं, निवेश्य, पौलस्त्यतुलितस्य, अद्रेः, ह्रियम्, आदधानः, इव, अवरुरोह ॥ ८० ॥

व्याख्या—सः = पूर्वोक्तः, रघुरिति यावत् । तत्र = पूर्वोक्ते, हिमालयपर्वत इति यावद् । अक्षोभ्यम् = अधृष्यम्, परैरचाल्यं स्थिरमिति यावद् । यशोराशिं = कीर्त्तिपुञ्जं, निवेश्य = संस्थाप्य, पौलस्त्यतुलितस्य = रावणोत्थापितस्य, अद्रेः = पर्वतस्य, कैलासस्येति यावद् । ह्रियं = लज्जाम्, आदधानः = उत्पादयन्, इव = यथा, अवरुरोह = अवातरत्, कैलासमगत्वैव प्रतिन्यवर्ततेत्यर्थः । शूराः परैः पराजितं ज्ञात्वा पुनर्न तं जेतुं प्रवृत्ता भवन्तीति भावः ॥ ८० ॥

समासादि—यशसां राशिर्यशोराशिः ( त० पु० ) तं तथोक्तम् । पुलस्तेर्गोत्रापत्यं पुमान् पौलस्त्यः ( पुं० ), तेन तुलितः पौलस्त्यतुलितः ( त० पु० ) तस्य पौलस्त्यतुलितस्य ॥ ८० ॥

व्याकरणं—निवेश्य = नि + ( विश ( प्रवेशने-अकारेत् ) + णिच् )-वेशि + क्त्वा + ल्यप्, णेर्लोपे रूपम् । अवरुरोह = अव + रुह ( बीजजन्मनि प्रादुर्भावे च—अकारेत् ) + लिट्, लिटस्तिपो णलि रूपम् । पौलस्त्यः = पुलस्ति + ङस् + यञ् + सु, "गर्गादिभ्यो यञ्" इति यञ्प्रत्यये रूपम् ॥ ७० ॥

वाच्यान्तरं—तेन तत्राक्षोभ्यं यशोराशिं निवेश्य पौलस्त्यतुलितस्याद्रेर्ह्रियमादधानेनावरुरुहे ॥ ८० ॥

कोशः—"राशिर्मेषादिपुञ्जयोः" इति मेदिनी। "पौलस्त्यो रावणे श्रीदे" इति मेदिनी॥८०॥

तात्पर्यार्थः—स रघुरित्थं तत्र हिमालयपर्वते स्वं स्थिरं यशोराशिं संस्थाप्य पुरा रावणेनोत्थापितोऽयमतः परेण पराजित इति विचार्य कैलासमगत्वा तस्य लज्जामुत्पादयँस्तस्मादवततार॥ ८०॥

भापाऽर्थः—वे रघु महाराज उस हिमालय पर्वत पर अचल यशोराशि को रख कर रावण से हिलाये ( भुजाओं से उठाये ) गये कैलास पर्वत को ( न जाने से ) लज्जित करते हुये की भांति ( वहां से ) उतरे, अर्थात्-आगे कैलास पर्वत की तरफ न जाकर वहां ही से लौट पड़े॥ ८०॥

*अथ कामरूपाधिपती रघोर्भयेन कम्पितवानित्याह—*

चकम्पे तीर्णलौहित्ये तस्मिन्प्राग्ज्योतिषेश्वरः।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः॥ ८१॥

सञ्जीविनी—चकम्प इति। तस्मिन्रघौ। तीर्णा लौहित्या नाम नदी येन तस्मिंस्तीर्णलौहित्ये सति। प्राग्ज्यौतिषाणां जनपदानामीश्वरस्तस्य रघोर्गजानामालानतां प्राप्तैः कालागुरुद्रुमैः कृष्णागुरुवृक्षैः सह चकम्पे कम्पितवान्॥ ८१॥

अन्वयः—तस्मिन्, तीर्णलौहित्ये, "सति", प्राग्ज्यौतिषेश्वरः, तद्गजालानतां, प्राप्तैः, कालागुरुद्रुमैः, सह, चकम्पे॥ ८१॥

व्याख्या—तस्मिन्=पूर्वोक्ते, रघाविति यावद्। तीर्णलौहित्ये=उत्तीर्णब्रह्मपुत्र नामकनदविशेपे, सतीति शेषः। प्राग्ज्यौतिपेश्वरः=कामरूपदेशाधिपतिः, तद्गजालानतां=पूर्वोक्तरघुद्विपवन्धस्तम्भतां, प्राप्तैः=अधिगतैः, कालागुरुद्रुमैः=अगुरुवृक्षैः, सह=सार्कं, चकम्पे=कम्पितवान्॥ ८१॥

समासादि—तीर्णो लौहित्यो येन स तीर्णलौहित्यः ( ब० ब्री० ) तस्मिंस्तथोक्ते। प्राग्ज्यौतिपाणामीश्वर इति प्राग्ज्यौतिपेश्वरः (त०पु०)। आलानस्य भाव आलानता (स्त्री०), तस्य गजा इति तद्गजाः ( त० पु० ), तद्गजानामालानता तद्गजालानता ( त० पुं० ) तां तथोक्ताम्। कालागुरूणां द्रुमा इति कालागुरुद्रुमाः ( त० पु० ) तैस्तथोक्तैः॥ ८१॥

व्याकरणं—चकम्पे=( कपि (चलने-इदित्)+नुम्) कम्प्+लिट्, तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम्॥ ८१॥

वाच्यान्तरं—तस्मिंस्तीर्णलौहित्ये प्राग्ज्यौतिपेश्वरेण तद्गजालानतां प्राप्तैः कालागुरुद्रुमैः सह चकम्पे॥ ८१॥

कोश.—"लौहित्यं लोहितत्वे च क्लीवं पुंसि नदान्तरे" इति मेदिनी। "आलानं वन्धस्तम्भे" इति। "कालागुर्वगुरु" इति चामरः॥ ८१॥

तात्पर्यार्थः—यदा रघुर्हिमालयशिखरादवतीर्य ब्रह्मपुत्रनामकं नदविशेपमुत्तीर्णः सन् कामरूपदेशं प्राप्तस्तदा तत्रत्यकालागुरुतरुवद्धानां तदीयसेनागजेन्द्राणां वन्धनशृङ्खलाकर्षणेन वृक्षा यथा कम्पितवन्तस्तथैव तद्देशाधिपतिरपि कम्पितवान्॥ ८१॥

भापाऽर्थ—उन रघु महाराज के लौहित्य अर्थात् ब्रह्मपुत्र नामक नद के पार कर चुकने पर प्राग्ज्यौतिप देश का राजा उनके हाथियों के बांधने में स्तम्भ का काम जो दे रहे थे, ऐसे कालागुरु वृक्षों के साथ ही साथ कांप गया॥ ८१॥

*अथ कामरूपाधिपो रघो रथमार्गधूलिं दृष्ट्वैव भीतः संस्तेन सह युद्धं न कृतवानित्याह—*

न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम्।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम्॥ ८२॥

सञ्जीविनी—नेति। स प्राग्ज्यौतिपेश्वरो रुद्धार्कमावृतसूर्यम्। अधारावर्षं च तद् दुर्दिनं

च धारावृष्टिं विना दुर्दिनीभूतम् । अस्य रघो रथवर्त्मरजोऽपि न प्रसेहे । पताकिनीं सेनां तु कुत एव प्रसेहे । न कुतोऽपीत्यर्थः ॥ ८२ ॥

अन्वयः—सः, रुद्धार्कम्, अधारावर्षदुर्दिनम्, अस्य, रथवर्त्मरजः, अपि, न, प्रसेहे, पताकिनीं, "तु", कुतः, एव, "प्रसेहे" ॥ ८२ ॥

व्याख्या—सः=पूर्वोक्तः, प्राग्ज्योतिपेश्वर इति यावद् । रुद्धार्कम्=आच्छन्नदिवाकरं, सूर्यावरोधीति यावद् । अधारावर्षदुर्दिनं=निरन्तरवृष्टिरहितमेघच्छन्नाहोपमम्, अस्य=एतस्य, रघोरिति यावद् । सम्बन्धीति शेषः । रथवर्त्मरजः=स्यन्दनमार्गधूलिम्, अपि=समुच्चयेऽर्थे, न=नहि, प्रसेहे=प्रसहते स्म, पताकिनीं=सैन्यं, त्विति शेषः । कुतः=कस्माद्, एव=अवधारणेऽर्थे, प्रसेहे, न कुतोऽपि सहते स्मेति भावः ॥ ८२ ॥

समासादि—रुद्धोऽर्को येन तद् रुद्धार्कम् (ब० व्री०) तत्तथोक्तम् । धाराणां वर्षो धारावर्षः (त० पु०), अविद्यमानो धारावर्षो यस्मिंस्तदधारावर्षम् (ब० व्री०), अधारावर्षं च तद् दुर्दिनमधारावर्षदुर्दिनम् (क० धा०) तत्तथोक्तम् । रथस्य वर्त्म रथवर्त्म (त० पु०), तस्य रजो रथवर्त्मरजः (त० पु०) तत्तथोक्तम् । पताका विद्यन्तेऽस्यां सा पताकिनी (ब० व्री०) तां तथोक्ताम् ॥ ८२ ॥

व्याकरणं—प्रसेहे=प्र+(पह (मर्षणे-अकारेत्) सह्+लिट्, लिटस्तप्रत्यये रूपम् ॥८२॥

वाच्यान्तरं—तेन रुद्धार्कमधारावर्षदुर्दिनमस्य रथवर्त्मरजोऽपि न प्रसेहे, पताकिनी कुत एव प्रसेहे ॥ ८२ ॥

कोशः—"धारो जलधरासारवर्षणे स्यादृणेऽपि च । धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ । जलादिपाते सन्तत्याम्" इत्यनेकार्थसङ्ग्रहः । "मेघच्छन्नेऽह्नि दुर्दिनम्" इति । "अयनं वर्त्म मार्गाध्वपन्थानः" इति । "रेणुर्द्वयोः स्त्रियां धूलिः" इति चामरः ॥८२॥

तात्पर्यार्थः—स कामरूपाधिपतिः सूर्यमण्डलावरणकर्त्रीं निरन्तरजलवृष्टिं विनैव मेघच्छन्नमिव दिवसं विदधतीं रघुसैन्यरथचक्रोद्धूतां धूलिमपि सोढुं शक्तो न बभूव, किं पुनश्चतुरङ्गिणीं सेनाम्, अर्थात्-सैन्यपदोत्थां धूलिमेव दृष्ट्वा भीतः सन् रघुणा सह योद्धुं नोत्सेहे ॥ ८२ ॥

भाषाऽर्थः—प्राग्ज्यौतिष देश का राजा सूर्य को ढँक देने वाली निरन्तर जलवृष्टि के विना मेघ से घिरे हुये दिन के समान मालूम पड़ने वाली इन रघु महाराज के रथ के मार्ग की धूलि को भी नहीं सह सका, फिर सेना को तो कैसे सहता ॥ ८२ ॥

*अथ कामरूपाधिपो गजरत्नमुपायनीकृत्य रघोः शरणागतो बभूवेत्याह—*

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३ ॥

सञ्जीविनी—तमिति । कामरूपाणां नाम देशानामीशोऽत्याखण्डलविक्रममतीन्द्रपराक्रमं तं रघुम् । भिन्नाः स्रवन्मदाः कटा गण्डा येषां तैर्नागैर्गजैः साधनैर्भेजे । नागान्दत्वा शरणं गत इत्यर्थः । कीदृशैर्नागैः । यैरन्यान्रघुव्यतिरिक्तान्नृपानुपरुरोध । शूराणामपि शूरो रघुरिति भावः ॥ ८३ ॥

अन्वयः—कामरूपाणाम्, ईशः, अत्याखण्डलविक्रमं, तं, भिन्नकटैः, नागैः, भेजे, "कीदृशैर्नागैः" यैः, अन्यान्, उपरुरोध ॥ ८३ ॥

व्याख्या—कामरूपाणां=कामरूपाख्यदेशानाम्, ईशः=प्रभुः, प्राग्ज्यौतिपेश्वर इति यावद् । अत्याखण्डलविक्रमम्=अतिक्रान्तसहस्राक्षपराक्रमं, तम्=पूर्वोक्तं, रघुमिति यावद् । भिन्नकटैः=प्रक्षरन्मदगण्डैः, नागैः=द्विपैः, उपायनरूपैरिति भावः । गजानुपायनीकृत्य शरणं प्राप्त इत्यर्थः । कीदृशैर्नागैरिति शेषः । यैः=पूर्वोक्तैः, नागैरिति यावद् । अन्यान्=इतरान्, रघुव्यतिरिक्तानाक्रमणकारिणो नृपानिति यावद् । उपरुरोध=निराकरोत् ।

सर्वोपरि शूरो रघुरिति भावः ॥ ८३ ॥

समासादि—आखण्डलस्य विक्रम आखण्डलविक्रमः (त० पु०), आखण्डलविक्रममतिक्रान्त इत्याखण्डलविक्रमः (त० पु०) तं तथोक्तम् । भिन्नाः कटा येषान्ते भिन्नकटाः (ब० व्री०) तैस्तथोक्तैः ॥ ८३ ॥

व्याकरणं—भेजे = भज (सेवायाम्—अकारेत्) + लिट्, लिटस्तप्रत्यये रूपम्। उपरुरोध = उप + रुधिर् (आवरणे—इरित्) + लिट्, लिटस्तिपि रूपम् ॥ ८३ ॥

वाच्यान्तरं—कामरूपाणामीशेनात्याखण्डलविक्रमः स भिन्नकटैर्नागैर्भेजे, यैरन्य उपरुरुधिरे ॥ ८३ ॥

कोशः—"आखण्डलः सहस्राक्षः ऋभुक्षाः"इत्यमरः। "गजेऽपि नागमातङ्गौ"इत्यपि॥८३॥

तात्पर्यार्थः—प्राग्ज्यौतिषेश्वरो यैर्मदस्राविभिर्गजेन्द्रैरन्यानाक्रमणकारिणो नृपान् निराकरोत्, तानेव गजानुपायनीकृत्य स इन्द्रतुल्यपराक्रमशालिनं रघुं शरणमागतः ॥ ८३ ॥

भाषाऽर्थः—कामरूपदेश के राजा ने पराक्रम में इन्द्रका भी अतिक्रमण करने वाले उन रघु महाराज की जिनके गण्ड स्थलों से मद झर रहा था, ऐसे हाथियों से सेवा की, अर्थात् हाथियों को भेट में देकर शरणागत हुआ, कैसे वे हाथी हैं, कि जिन हाथियों से रघु के अलावे और आक्रमणकारी राजाओं को दूर कर दिया था, अर्थात् मार भगाया था। अतः रघु शूरों के भी शूर थे ॥ ८३ ॥

अथ कामरूपेश्वरो रघोः पादयोर्निपत्य रत्नान्युपायनीकृतवानित्याह—

कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८४ ॥

सञ्जीविनी—कामरूपेति । कामरूपेश्वरो हेमपीठस्याधिदेवतां तस्य रघोः पादयोश्छायां कनकमयपादपीठव्यापिनीं कान्तिं रत्नान्येव पुष्पाणि तेषामुपहारेण समर्पणेनानर्चार्चयामास॥८४॥

अन्वयः—कामरूपेश्वरः, हेमपीठाधिदेवतां, तस्य, पादयोः, छायां, रत्नपुष्पोपहारेण, आनर्च ॥ ८४ ॥

व्याख्या—कामरूपेश्वरः = कामरूपाख्यदेशाधिपतिः, प्राग्ज्यौतिषेश्वर इति यावद् । हेमपीठाधिदेवतां = स्वर्णासनाधिष्ठातृदेवतां, तस्य = पूर्वोक्तस्य, रघोरिति यावद् । पादयोः = चरणयोः, छायां = कान्तिं, स्वर्णमयचरणासनप्रतिफलितामिति भावः । रत्नपुष्पोपहारेण = मणिकुसुमोपायनेन, उपायनीभूतपुष्पतुल्यरत्नार्पणेनेति यावद् । आनर्च = पूजयामास ॥८४॥

समासादि—कामरूपाणामीश्वरः कामरूपेश्वरः (त० पु०)। अधिष्ठिता देवताऽधिदेवता (त० पु०), हेम्नः पीठं हेमपीठं (त० पु०), हेमपीठस्याधिदेवता हेमपीठाधिदेवता (त० पु०) तां तथोक्ताम् । रत्नान्येव पुष्पाणि रत्नपुष्पाणि (त० पु०), तेषामुपहारो रत्नपुष्पोपहारः (त० पु०) तेन रत्नपुष्पोपहारेण ॥ ८४ ॥

व्याकरणम्—आनर्च = अर्च (पूजायाम्—अकारेत्) + लिट्, लिटस्तिपो णलि रूपम्॥८४॥

वाच्यान्तरं—कामरूपेश्वरेण हेमपीठाधिदेवता तस्य पादयोश्छाया रत्नपुष्पोपहारेणानर्चे ॥ ८४ ॥

कोशः—"स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः। "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी। "छाया सूर्यप्रिया कान्तिः" इत्यमरः ॥ ८४ ॥

तात्पर्यार्थः—यथा कश्चिद् भक्तजनः कामपि स्वकीयाराध्यां देवतां प्रसादयितुकामः कुसुमोपहारेण पूजयति तथैव कामरूपाधिपतिरपि मणिमण्डितसुवर्णमयपादपीठे प्रतिफलितां तदधिष्ठात्रीं देवतामिव रघोः पादपद्मच्छायां रत्नपुष्पोपहारेणापूजयत् ॥ ८४ ॥

भाषाऽर्थः—कामरूप देश के राजा ने पैर रखने के लिये सोने के बने हुये आसन की अधिदेवता स्वरूप उन रघु महाराज के पैरों की सोने के बने हुये पैर रखने के आसन में

फैली हुई कान्ति की रत्नरूपी फूलों को समर्पण कर के पूजा की ॥ ८४ ॥

*अथ रघुः सर्वा दिशो जित्वा दिग्विजयान्निवृत्तोऽभूदित्याह—*

इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम् ।
रजो विश्रामयन्राज्ञां छत्रशून्येषु मौलिषु ॥ ८५ ॥

सञ्जीविनी—इतीति । जिष्णुर्जयशीलः । "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुप्रत्ययः । स रघुरितीत्थं दिशो जित्वा रथैरुद्धतं रजश्छत्रशून्येषु । रघोरेकच्छत्रकत्वादिति भावः । राज्ञां मौलिषु किरीटेषु । 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्धजे' इति हैमः । विश्रामयन् । संक्रामयन्नित्यर्थः । न्यवर्तत निवृत्तः ॥ ८५ ॥

अन्वयः—जिष्णुः, "स रघुः", इति, दिशः, जित्वा, रथोद्धतं, रजः, छत्रशून्येषु, राज्ञां, मौलिषु, विश्रामयन्, न्यवर्तत ॥ ८५ ॥

व्याख्या—जिष्णुः = जयनशीलः, सर्वत्र विजयीत्यर्थः । स रघुरिति शेषः । इति = इत्थं, पूर्वोक्तप्रकारेणेति यावद् । दिशः = आशाः, जित्वा = विजित्य, रथोद्धतं = स्यन्दनोत्थितं, रजः = धूलिं, छत्रशून्येषु = आतपत्ररहितेषु, रघोरेकातपत्रकत्वादिति भावः । राज्ञां = नृपाणां, विजितानामिति भावः । मौलिषु = किरीटेषु, शिरोभूषणेष्विति यावद् । विश्रामयन् = संक्रामयन्, स्थापयन्निति यावद् । न्यवर्तत = निववृते, निवृत्तोऽभूदिति यावद् ॥ ८५ ॥

समासादि—रथैरुद्धतमिति रथोद्धतम् (त० पु०) तत्तथोक्तम् । छत्रैः शून्याश्छत्रशून्याः (त० पु०) तेषु छत्रशून्येषु ॥ ८५ ॥

व्याकरणं—जित्वा = जि (जये) + क्त्वा + ल्यप् । न्यवर्तत = नि + अट् + वृतु (वर्तने—उदित्) + शप् + लङ्, लङस्तप्रत्यये रूपम् ॥ ८५ ॥

वाच्यान्तरं—जिष्णुना तेनेति दिशो जित्वा रथोद्धतं रजश्छत्रशून्येषु राज्ञां मौलिषु विश्रामयता न्यवृत्यत ॥ ८५ ॥

कोशः—"रजः क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रे च दृश्यते" इति मेदिनी । "छत्रं त्वातपत्रम्" इत्यमरः ॥ ८५ ॥

तात्पर्यार्थः—इत्थं सर्वा दिशो जित्वा विजयी महाराजो रघुर्जगत एकच्छत्रमाधिपत्यं प्राप्य पराजिततया राजच्छत्रशून्यानां तत्तद्देशाधिपतीनां राज्ञां किरीटेषु निजस्यन्दनोद्धतां धूलिं सङ्क्रामयन् दिग्विजयान्निवृत्त्य निजराजधानीमयोध्यामागतः ॥ ८५ ॥

भाषाऽर्थः—विजयी उन रघु महाराज के इस प्रकार से दिशाओं का विजय कर के रथों से उडी हुई धूलि को छत्र रहित (हारे हुये) राजाओं के मुकुटों में जमाते हुये दिग्विजय करने से निवृत्त हुये, अर्थात् लौटकर अपनी राजधानी अयोध्या में पहुँचे ॥ ८५ ॥

*अथरघुर्विश्वजितं नाम यज्ञं कृतवानित्याह—*

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६ ॥

सञ्जीविनी—स इति । स रघुः सर्वस्वं दक्षिणा यस्य तं सर्वस्वदक्षिणम् । [विश्वजित्सर्वस्वदक्षिणः] इति श्रुतेः । विश्वजितं नाम यज्ञमाजह्रे । कृतवानित्यर्थः । युक्तं चैतदित्याह—सतां साधूनाम् । वारिमुचां मेघानामिव । आदानमर्जनं विसर्गाय त्यागाय हि । पात्रविनियोगायेत्यर्थः ॥८६॥

अन्वयः—सः, सर्वस्वदक्षिणं, विश्वजितं, यज्ञम्, आजह्रे, सतां, वारिमुचाम्, इव, आदानं, विसर्गाय, हि ॥ ८६ ॥

व्याख्या—सः = पूर्वोक्तः, कृतचतुर्दिग्विजयो रघुरिति यावद् । सर्वस्वदक्षिणं = सकलविस्तदक्षिणं, विश्वजितं = विश्वजिन्नामक, यज्ञं = यागम्, आजह्रे = आहृतवान्, चकारे-

त्यर्थः ।।सतां=सज्जनानां, रघुसदृशानामिति यावद् । वारिमुचाम्=अम्बुदानाम् , इव=यथा, आदानं=ग्रहणं, धनादीनामिति भावः । विसर्गाय=त्यागाय, दानायेति यावद् । पात्रे दानायेत्यर्थः । भवतीति शेषः । हि=अवधारणेऽर्थं ॥ अत्र सर्वत्र सर्गारम्भादेतावच्छ्लोकपर्यन्तमनुष्टुब्जातीयं श्लोकनामकं वृत्तं ज्ञेयं, तल्लक्षणं यथा श्रुतबोधे—"श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः" इति ॥ ८६ ॥

समासादि—विश्वं जयतीति विश्वजित् (पुं०) तं विश्वजितम् । सर्वस्वं दक्षिणा यस्य स सर्वस्वदक्षिणः ( ब० व्री० ) तं सर्वस्वदक्षिणम् । वारीणि मुञ्चन्तीति वारिमुचः ( पुं० ) तेषां वारिमुचाम् ॥ ८६ ॥

व्याकरणम्—आजह्रे=आङ्+हृञ् ( हरणे+ञिदित )+लिट्, लिटस्तप्रत्यये द्वित्वेऽभ्यासकार्ये रूपम् ॥ ८६ ॥

वाच्यान्तरं—तेन सर्वस्वदक्षिणो विश्वजिद् यज्ञ आजह्रे ।सतां वारिमुचामिवादानेन विसर्गाय "भूयते" हि ॥ ८६ ॥

कोशः—"यज्ञः सवोऽध्वरो यागः" इत्यमरः । "आदानं ग्रहणेऽपि स्यादलङ्कारे च वाजिनाम्" इति मेदिनी ॥ ८६ ॥

तात्पर्यार्थः—यथाऽम्बुदानां जलनिधिसकाशाज्जलग्रहणं परोपकारस्वरूपायै वृष्ट्या एव भवति, तथैव सज्जनानामपि वित्तार्जनं परोपकाररूपाय सत्पात्रे दानायैव भवतीति विचार्य रघुरपि कृतदिग्विजयः सन् विश्वजिन्नामकं महायज्ञं कृत्वा स्वभुजोपार्जितं सव धनमृत्विग्भ्यो दक्षिणारूपेण दत्तवान् ॥ ८६ ॥

भाषाऽर्थः—उन रघु महाराज ने जिसकी दक्षिणा में अपना सारा धन दे दिया जाता है ऐसा विश्वजित नाम का यज्ञ किया, क्योंकि यह उचित ही है कि–सज्जनों का मेघों की भांति लेना दूसरे के देने ही के लिये होता है, अर्थात्–जैसे मेघ समुद्र से जो जल लेता है वह वृष्टि के ही लिये, उसी भांति सज्जन भी द्रव्योपार्जन करता है सत्पात्र में देने ही के लिये ॥ ८६ ॥

*अथ यज्ञान्ते स्वनिदेशायत्तीकृतेभ्यो राजभ्यो निजनिजगृहगमनाय रघुराज्ञां ददावित्याह—*

**सत्रान्ते सचिवसखः पुरस्क्रियाभिर्गुर्वीभिः शमितपराजयव्यलीकान् ।**
**काकुत्स्थश्चिरविरहोत्सुकावरोधान्राजन्यान्स्वपुरनिवृत्तयेऽनुमेने ॥ ८७ ॥**

सञ्जीविनी—सत्रान्त इति । काकुत्स्थो रघुः सत्रान्ते यज्ञान्ते । 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः । सचिवानाममात्यानां सखेति सचिवसखः सन् । 'सचिवो-भृतकेऽमात्ये' इति हैमः । तेषामत्यन्तानुसरणद्योतनार्थं राज्ञः सखित्वव्यपदेशः । "राजाहः-सखिभ्यष्टच्" ।गुर्वीभिर्महतीभिः । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके' इति हैमः । पुरस्क्रियाभिः पूजाभिः शमितं पराजयेन व्यलीक दुखं वैलक्ष्यं वा येषां तान् । 'दुखं वैलक्ष्ये व्यलीकम्' इति यादवः । चिरविरहेणोत्सुका उत्कण्ठिता अवरोधा अन्तःपुराङ्गना येषां तान् । राज्ञोऽपत्यानि राजन्याः क्षत्त्रियास्तान् । "राजश्वशुराद्यत्" इत्यपत्यार्थे यत्प्रत्ययः । 'मूर्धाभिषिक्तो-राजन्यो बाहुजः क्षत्त्रियो विराट्' इत्यमरः । स्वपुरं प्रति निवृत्तये प्रतिगमनायानुमेनेऽनुज्ञातवान् । प्रहर्षिणीवृत्तमेतत् । तदुक्तम्—( म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ) इति ॥ ८७ ॥

अन्वयः—काकुत्स्थः, सत्रान्ते, सचिवसखः, "सन्" गुर्वीभिः, पुरस्क्रियाभिः, शमितपराजयव्यलीकान्, चिरविरहोत्सुकावरोधान्, राजन्यान्, स्वपुरनिवृत्तये, अनुमेने ॥ ८७ ॥

व्याख्या=काकुत्स्थः=ककुत्स्थवंश्यः, रघुरिति यावद् । सत्रान्ते=यज्ञावसाने, सचिवसखः=अमात्यसहायः, अमात्यमतानुसरणशील इति यावद् । सन्निति शेषः । गु-

र्वीभिः = महतीभिः, अलघ्वीभिरिति यावत् । पुरस्क्रियाभिः = अर्चाभिः, पूजाभिरिति यावद् । शमितपराजयव्यलीकान् = शान्तपराभवदुःखान्, दूरीकृतपराभवजन्यदुःखानिति यावद् । चिरविरहोत्सुकावरोधान् = दीर्घकालीनवियोगोत्कण्ठितान्तःपुरान् , राजन्यान् = क्षत्रियान्, राज्ञ इति यावद् । स्वपुरनिवृत्तये = निजनगरपरावृत्तये, स्वस्वनगरं प्रति गमनायेति यावद् । अनुमेने = अन्वमन्यत, आज्ञां ददाविति यावद् ॥ अत्र प्रहर्षिणी नाम वृत्तम् ॥ ८७ ॥

समासादि—सत्रस्यान्त इति सत्रान्तः ( त० पु० ) तस्मिन् सत्रान्ते । सचिवानां सखेति सचिवसखः ( त० पु० ) । पराजयेन व्यलीकमिति पराजयव्यलीकं ( त० पु० ), शमितं पराजयव्यलीकं येषां ते शमितपराजयव्यलीकाः ( ब० व्री० ) तांस्तथोक्तान् । चिरं विरहश्चिरविरहः ( सु० सु० ), तेनोत्सुकाश्चिरविरहोत्सुकाः ( त० पु० ), तेऽवरोधा येषां ते चिरविरहोत्सुकावरोधाः ( ब० व्री० ) तांस्तथोक्तान् । राज्ञोऽपत्यानि पुमांसो राजन्याः ( पुं० ) तान् राजन्यान् । स्वस्य पुरं स्वपुरं ( त० पु० ), तं प्रति निवृत्तिः स्वपुरनिवृत्तिः ( त० पु० ) तस्यै स्वपुरनिवृत्तये ॥ ८७ ॥

व्याकरणम्—अनुमेने = अनु + मनु ( अवबोधने-उदित् ) + लिट्, लिट्स्तप्रत्यये द्वित्वेऽभ्यासकार्ये रूपम् ॥ ८७ ॥

वाच्यान्तरं—काकुत्स्थेन सत्रान्ते सचिवसखेन गुर्वीभिः पुरस्क्रियाभिः शमितपराजयव्यलीकाश्चिरविरहोत्सुकावरोधा राजन्याः स्वपुरनिवृत्तयेऽनुमेनिरे ॥ ८७ ॥

कोशः—"शान्तं शमितम्" इति । "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च" इति चामरः ॥ ८७ ॥

तात्पर्यार्थः—विश्वजिन्नामकयज्ञसमाप्तौ सत्याममात्यमतानुयायी रघुर्निर्जितानां यज्ञे निमन्त्रितानां राज्ञां पराजयजन्यं दुःखं विशेषसन्मानादिना निवार्य दीर्घकालव्यापिवियोगेनोत्कण्ठितान्तःपुरांश्च तान् राज्ञो निजनिजनगरं प्रति गमनायानुज्ञातवान् ॥८७॥

भावार्थः—ककुत्स्थ के वंश में पैदा हुये रघु महाराज ने विश्वजिद् नामक यज्ञ की समाप्ति होने पर मन्त्रियों के मित्र अर्थात् मन्त्रियों के मत के अनुसरण करनेवाले होते हुये, अत्यन्त आदर सत्कार द्वारा जिन्हों के पराजय से उत्पन्न दुःख शान्त हो गये हैं, और बहुत दिनों से विछोह होने के कारण जिनके अन्तःपुर की स्त्रियां देखने के लिये उत्कण्ठित हो रहा हैं, ऐसे क्षत्रिय राजाओं को अपने २ नगर की ओर जाने के लिये आज्ञा दी ॥ ८७ ॥

*अथ स्वपुरं प्रति गमनाय प्राप्ताज्ञानां राज्ञां प्रयाणकाले रघोः पादयोः प्रणिपतनमाह—*

ते रेखाध्वजकुलिशातपत्रचिह्नं सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुर्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥८८॥

सञ्जीविनी—त इति । ते राजानः । रेखा एव ध्वजाश्च कुलिशानि चातपत्राणि च । ध्वजाद्याकाररेखा इत्यर्थः । तानि चिह्नानि यस्य तत्तथोक्तम् । प्रसादेनैव लभ्यं प्रसादलभ्यं सम्राजः सार्वभौमस्य रघोश्चरणयुगं प्रस्थाने प्रयाणसमये याः प्रणतयो नमस्कारास्ताभिः करणैः। अङ्गुलीषु मौलिषु केशबन्धनेषु याः स्रजो माल्यानि ताभ्यश्च्युतैर्मकरन्दैः पुष्परसैः । 'मकरन्दः पुष्परसः' इत्यमरः। रेणुभिः परागैश्च। 'परागः सुमनोरजः' इत्यमरः । गौरं गौरवर्णं चक्रुः ॥८८॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकाव्ये रघुदिग्विजयो नाम चतुर्थः सर्गः समाप्तः ॥ ४ ॥

अन्वयः—ते, रेखाध्वजकुलिशातपत्रचिह्नं, प्रसादलभ्यं, सम्राजः, चरणयुगं, प्रस्थानप्रणतिभिः, अङ्गुलीषु, मौलिस्रक्च्युतमकरन्दरेणुगौरं, चक्रुः ॥ ८८ ॥

व्याख्या—ते = पूर्वोक्ताः, राजान इति यावद् । रेखाध्वजकुलिशातपत्रचिह्नं = लेखापताकावज्रच्छत्रलक्ष्म, पताकावज्रच्छत्राकाररेखाचिह्नयुक्तमित्यर्थः । प्रसादलभ्यं = प्रसन्न

ताऽवाप्यम्, सम्राजः = चक्रवर्त्तिनः, रघोरिति भावः। चरणयुगं = पादयुगलम्, प्रस्थानप्रणतिभिः = प्रयाणप्रणामैः, प्रयाणसमये नमस्करणैरित्यर्थः। करणेऽर्थे तृतीया। अङ्गुलीषु = करशाखासु, पादाङ्गुलीष्विति भावः। मौलिस्रक्च्युतमकरन्दरेणुगौरं = किरीटमालापतितपुष्परसपरागगौरवर्णं, चक्रुः = कृतवन्तः॥ अत्र प्रहर्षिणी नाम वृत्तं तल्लक्षणं यथा वृत्तरत्नाकरे—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति। तदुदाहरणं यथाऽत्रैव—

म न ज र गु०

SSS ।।। ।S। S।S S

तैरेखा ध्वजकु लिशात पत्रचि ह्नम्॥ इति॥ अतिजगतीभेदेषु १४०१ तमोऽयं भेदः॥ ८८॥

समासादि—आतपात्त्रायत इत्यातपत्रं (न० लिं), ध्वजश्च कुलिशश्चातपत्त्रञ्चेति ध्वजकुलिशातपत्त्राणि (द्वं०), रेखा एव ध्वजकुलिशातपत्राणि रेखाध्वजकुलिशातपत्राणि (क० धा०), तानि चिह्नानि यस्मिंस्तद् रेखाध्वजकुलिशातपत्रचिह्नं (ब० व्री०) तत्तथोक्तम्। चरणयोर्युगं चरणयुगं (त० पु०) तत्तथोक्तम्। सम्यग् राजतेऽसौ सम्राट् (पुं०) तस्य तथोक्तस्य। लब्धुं योग्यं लभ्यं (न० लि०), प्रसादेन लभ्यमिति प्रसादलभ्यम् (त० पु०) तत्तथोक्तम्। प्रस्थाने प्रणतयः प्रस्थानप्रणतयः (त० पु०) ताभिः प्रस्थानप्रणतिभिः। मकरन्दश्च रेणवश्चेति मकरन्दरेणवः (द्वं०), मौलिषु स्रजो मौलिस्रजः (त०पु०), ताभ्यश्च्युता इति मौलिस्रक्च्युताः (त० पु०), ते च ते मकरन्दरेणव इति मौलिस्रक्च्युतमकरन्दरेणवः (क० धा०), तैर्गौरं मौलिस्रक्च्युतमकरन्दरेणुगौरं (त० पु०) तत्तथोक्तम्॥ ८८॥

व्याकरणं—चक्रुः = डुकृञ् (करणे-डुञित्) + लिट्, द्वित्वेऽभ्यासकार्ये झेरुसि रूपम्॥८८॥

वाच्यान्तरं—तै रेखाध्वजकुलिशातपत्रचिह्नं प्रसादलभ्यं सम्राजश्चरणयुगं प्रस्थानप्रणतिभिरङ्गुलीषु मौलिस्रक्च्युतमकरन्दरेणुगौरं चक्रे॥ ८८॥

कोशः—"येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः। "प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिषु" इति मेदिनी॥ ८८॥

तात्पर्यार्थः—विश्वजिति यज्ञे रघुणाऽऽहूता ये समाहूतास्तदधीना राजानस्ते यज्ञसमाप्तौ स्वगृहगमनाय प्राप्तानुज्ञाः सन्तः प्रस्थानसमये रघोश्चरणयुगलं शिरसा प्रणेमुः, तदा तेषां किरीटस्थमालाभ्यो निपतितपुष्परसपरागै रघुपादाङ्गुलयो गौरवर्णा बभूवुः॥ ८८॥

भाषार्थः—उन राजाओं ने पताका-वज्र-और छत्र के चिह्न रेखा-रूप से जिनमें मौजूद हैं और जो कि अनुग्रह से पाने योग्य हैं, ऐसे चक्रवर्त्ती महाराज रघु के दोनों चरणों की घर जाने समय किये गये प्रणामों से अङ्गुलियों को अपने २ किरीटों में जो मालायें लगा रक्खीं थीं, उनसे झरे हुये फूलों के रस तथा परागों से गौर वर्ण कर दिया॥ ८८॥

इत्थं श्रीव्रजमोहनात्मजनुषा गोस्वामिविद्वद्वर-
श्रीदामोदरशास्त्रिशिष्यपदवीभाजाऽच्युतानुग्रहाद्।
श्रीब्रह्मान्वितशङ्करेण विहिता व्याख्या सुधाऽऽख्या नवा
पूर्त्तिं श्रीरघुवंशकाव्यसुभगे सर्गे चतुर्थेऽभ्यगात्॥ ४॥

इति श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिणामन्तेवासिना मिश्रोपाह्वसरयूपारीणपङ्क्तिपावनान्ववायावतंसविविधकलाकोविदश्रौतस्मार्त्तकर्मनिष्ठगौतमगोत्रोद्भवश्रीव्रजमोहनशर्मतनुजनुषा श्रीब्रह्मशङ्करशर्मणा कृतया सुधाऽऽख्यया व्याख्ययाऽन्वितः श्रीरघुवंशमहाकाव्ये रघुदिग्विजयो नाम चतुर्थः सर्गः समाप्तः।

# पञ्चमः सर्गः।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम्।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम्॥

*अथ गुरुदक्षिणाऽर्थी वरतन्तुशिष्यः कौत्स ऋषी रघुम्प्रापेत्याह—*

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम्।
उपात्तविद्यो गुरुदक्षिणाऽर्थी कौत्सः प्रपेदे वरतन्तुशिष्यः॥ १॥

सञ्जीविनी—तमिति। विश्वजिति विश्वजिन्नाम्न्यध्वरे यज्ञे। 'यज्ञः सवोऽध्वरो यागः' इत्यमरः। निःशेषं विश्राणितं दत्तम्। 'श्रणु दाने' चुरादिः। कोषानामर्थराशीनां जातं समूहो येन तं तथोक्तम्। 'कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः। 'जातं जनिसमूहयोः' इति शाश्वतः। एतेन कौत्सस्यानवसरप्राप्तिं सूचयति। तं क्षितीशं रघुमुपात्तविद्यो-लब्धविद्यो वरतन्तोः शिष्यः कौत्सः। "ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यण्। इञोऽपवादः। गुरुदक्षिणाऽर्थी। "पुष्करादिभ्यो देशे" इत्यत्रार्थाच्चासंनिहिते तदन्ताच्चेतीनिः। अप्रत्याख्येय इति भावः। प्रपेदे प्राप। अस्मिन्सर्गे वृत्तमुपजातिः। तल्लक्षणं तु—( स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीया वुपजातयस्ताः )॥ इति॥ १॥

अन्वयः—विश्वजिति, अध्वरे, निःशेषविश्राणितकोषजातं, तं, क्षितीशम्, उपात्तविद्यः, वरतन्तुशिष्यः, कौत्सः, गुरुदक्षिणाऽर्थी, "सन्", प्रपेदे॥ १॥

व्याख्या—विश्वजिति = विश्वजिदाख्ये, अध्वरे = यागे, निःशेषविश्राणितकोषजातं = निखिलवितीर्णार्थौघसमूहं, सकलदिग्विजयं कृत्वा विश्वजिन्नाम्नि यज्ञे ऋत्विग्भ्यो याचकेभ्यश्च कृतसर्वस्वदानमिति भावः। तं = पूर्वोक्तं, क्षितीशं = पृथ्वीपतिं, रघुमिति यावद्। उपात्तविद्यः = प्राप्तचतुर्दशविद्यः, वरतन्तुशिष्यः = वरतन्तुनामकमहर्षिच्छात्रः, कौत्सः = कौत्सनामकः, कश्चित्कुत्सनामकऋषिवंश्य इति यावद्। गुरुदक्षिणाऽर्थी = उपाध्यायचतुर्दशकोटिरूपदक्षिणायाचकः, उपाध्यायसम्बन्धिदक्षिणाऽर्थं चतुर्दशकोटिरूपद्रव्याभिलाषीत्यर्थः। सन्निति शेषः। प्रपेदे = प्रापत्॥ १॥

समासादि—क्षितेरीश इति क्षितीशः ( त० पु० ) तं क्षितीशम्। कोषाणां जातमिति कोषजातं ( त० पु० ), निःशेषं विश्राणितं कोषजातं येन स निःशेषविश्राणितकोषजातः ( ब० व्री० ) तं तथोक्तम्। उपात्ताः प्राप्ता विद्या येन स उपात्तविद्यः ( ब० व्री० )। गुरोर्दक्षिणा गुरुदक्षिणा ( त० पु० ), अर्थमस्यास्तीत्यर्थी ( पुं० ), गुरुदक्षिणाया अर्थी गुरुदक्षिणाऽर्थी ( त० पु० )। शासितुं योग्यः शिष्यः ( पुं० ) वरतन्तोः शिष्यो वरतन्तुशिष्यः ( त० पु० )॥ १॥

व्याकरणं—प्रपेदे—प्र + पद (गतौ—अकारेत्) + लिट्, तप्रत्यये द्वित्वे एत्वाभ्यासलोपे रूपम्॥ १॥

वाच्यान्तरं—विश्वजित्यध्वरे निःशेषविश्राणितकोषजातः स क्षितीश उपात्तविद्येन वरतन्तुशिष्येण कौत्सेन गुरुदक्षिणाऽर्थिना प्रपेदे॥ १॥

कोशः—"त्यागो विहापितं दानमुत्सर्जनविसर्जने। विश्राणनं वितरणं स्पर्शनं प्रतिपादनं। प्रादेशनं निर्वपणमपवर्जनम्" इत्यमरः॥ १॥

तात्पर्यार्थः—सर्वा दिशो जित्वा तत्र प्राणिवधजन्यदुरितापनुत्त्यै सर्वस्वदक्षिणे विश्वजिन्नाम्नि यज्ञे सर्वस्वमृत्विग्भ्यो याचकेभ्यश्च दत्त्वा स्थितं परमदानिशिरोमणिं राजानं रघुम् "अङ्गा-

-नि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणञ्च विद्यास्त्वेताश्चतुर्दश" पठित्वा गुरुदक्षिणाऽर्थं चतुर्दशकोटिमितं धनं याचितुं कौत्सनामा वरतन्तुनामकमहर्षिशिष्यः प्राप ॥१॥

भाषाऽर्थः—विश्वजित् नामक यज्ञ में सारे अर्थ राशियों के समूह ( खजानों ) का दान किये हुये उन महाराज रघु के पास १४ विद्या ( छन्द-कल्प-ज्यौतिष-निरुक्त-शिक्षा-व्याकरण-इन छ अङ्गों के सहित ऋग्वेद-यजुर्वेद-सामवेद-अथर्ववेद-ये ४ वेद, मीमांसा-न्याय-धर्मशास्त्र-पुराण ) को प्राप्त किये हुये वरतन्तु नामक महर्षि के शिष्य कौत्स ऋषि गुरु की दक्षिणा स्वरूप १४ करोड़ धन को चाहने वाले होते हुये पहुँचे ॥ १ ॥

*अथ रघुः कौत्सस्य स्वागतार्थमर्घ्यं गृहीत्वा सम्मुखं ययावित्याह—*

**स मृण्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः।**
**श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥**

सञ्जीविनी—स इति। अनर्घशीलोऽमूल्यस्वभावः। असाधारणस्वभाव इत्यर्थः। 'मूल्ये पूजाविधावर्घः' इति। 'शीलं स्वभावे सद्वृत्ते' इति चामरशाश्वतौ। यशसा कीर्त्या। प्रकाशत इति प्रकाशः। पचाद्यच्। अतिथिषु साधुरातिथेयः। "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ्। स रघुः। हिरण्यस्य विकारो हिरण्मयम्। "दाण्डिनायन०" इत्यादिना सूत्रेण निपातः। वीतहिरण्मयत्वादपगतसुवर्णपात्रत्वात्। यज्ञस्य सर्वस्वदक्षिणाकत्वादिति भावः। मृण्मये मृद्विकारे पात्रे। अर्घार्थमिदमर्घ्यम्। "पादार्घाभ्यां च" इति यत्। पूजाऽर्थं द्रव्यं निधाय श्रुतेन शास्त्रेण प्रकाशं प्रसिद्धम्। श्रूयत इति श्रुतं वेदशास्त्रम्। 'श्रुतं शास्त्रावधृतयोः' इत्यमरः। अतिथिमभ्यागतं कौत्सम्। 'अतिथिर्ना गृहागते' इत्यमरः। प्रत्युज्जगाम ॥२॥

अन्वयः—अनर्घशीलः, यशसा, प्रकाशः, आतिथेयः, सः, वीतहिरण्मयत्वाद्, मृण्मये, पात्रे, अर्घ्यं, निधाय, श्रुतप्रकाशम्, अतिथिम्, प्रत्युज्जगाम ॥ २ ॥

व्याख्या—अनर्घशीलः=अमूल्यस्वभावः, अनुपमस्वभाव इत्यर्थः। यशसा=कीर्त्या, प्रकाशः=अतिप्रसिद्धः, विख्यात इत्यर्थः। आतिथेयः=अभ्यागतसाधुः, अतिथिसत्कारकर्त्तेत्यर्थः। सः=पूर्वोक्तः, रघुरिति यावद्। वीतहिरण्मयत्वाद्=अविद्यमानस्वर्णपात्रत्वाद्, यज्ञे सर्वस्वदक्षिणादानादिति भावः। मृण्मये=मृद्विकारे, मृत्तिकानिर्मित इत्यर्थः। पात्रे=भाजने, अर्घ्यम्=अर्घार्थं, पूजानिमित्तकं द्रव्यमित्यर्थः। निधाय=स्थापयित्वा, श्रुतप्रकाशं=शास्त्रातिप्रसिद्धं, वेदशास्त्रादिषु निष्णाततया लोके विख्यातमित्यर्थः। अतिथिम्=आगन्तुकं, कौत्समिति यावद्। प्रत्युज्जगाम=प्रत्युद्ययौ, स्वागतार्थं सिंहासनादुत्थाय तदन्तिकं ययावित्यर्थः ॥ २ ॥

समासादि—मृदो विकारो मृण्मयं ( न० लिं० ) तस्मिंस्तथोक्ते। हिरण्यस्य विकारो हिरण्मयं ( न० लिं० ), वीतं हिरण्मयं यस्मात् स वीतहिरण्मयः ( व० व्री० ), तस्य भावो वीतहिरण्मयत्वं ( न० लिं० ) तस्माद् वीतहिरण्मयत्वात्। अविद्यमानोऽर्घो यस्य तदनर्घम् ( व० व्री० ), अनर्घं शीलं यस्य सोऽनर्घशीलः ( व० व्री० )। श्रूयत इति श्रुतं (न० लिं०), श्रुतेन प्रकाशः श्रुतप्रकाशः ( त० पु० ) तं तथोक्तम्। प्रकाशत इति प्रकाशः ( पुं० )। अतिथिषु साधुरातिथेयः ॥ २ ॥

व्याकरणं—निधाय=नि+डुधाञ् ( धारणपोषणयोः—डुञित् )+क्त्वा+ल्यप्। प्रत्युज्जगाम=प्रति+उद्+गम्लृ ( गतौ-लृदित् )+लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ २ ॥

वाच्यान्तरम्—अनर्घशीलेन यशसा प्रकाशेनातिथेयेन तेन वीतहिरण्मयत्वाद् मृण्मये पात्रेऽर्घ्यं निधाय श्रुतप्रकाशोऽतिथिः प्रत्युज्जग्मे ॥ २ ॥

कोशः—"योग्यभाजनयोः पात्रम्" इत्यमरः। "प्रकाशः स्फुटहासयोः। उद्योतेऽतिप्रसिद्धे च" इत्यनेकार्थसङ्ग्रहः। "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि च" इति विश्व-मेदिन्यौ ॥ २ ॥

तात्पर्यार्थः—रघुः कौत्सस्यागमनं श्रुत्वा स्वागतार्थं सिंहासनादुत्थाय विश्वजिन्नाम्नि यज्ञे सर्वस्वदक्षिणादानात् स्वर्णपात्राभावेन मृत्तिकानिर्मितपात्र एव पूजाऽर्थं द्रव्यं संस्थाप्या-गन्तुकं प्रति ययौ ॥ २ ॥

भाषाऽर्थः—असाधारण शीलवान्, कीर्त्ति से परम-प्रसिद्ध, अतिथियों के सत्कार करने वाले, वे रघु महाराज, सोने के बने हुये पात्रों के न रहने से मिट्टी के बने हुए पात्र में अर्घ निमित्तक द्रव्य रख कर शास्त्र से परम प्रसिद्ध अतिथि कौत्स के पास उठ कर गये ॥ २ ॥

*अथ कौत्समर्घ्यादिदानेन पूजयित्वाऽऽसने समुपवेश्य कृताञ्जलिः सन् रघुर्वक्तुमारेभ इ-त्याह—*

**तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।**
**विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥**

सञ्जीविनी—तमिति । विधिज्ञः शास्त्रज्ञः । अकरणे प्रत्यवायभीरुरित्यर्थः । मानधनानाम-ग्रयाय्यग्रेसरः । अपयशोभीरुरित्यर्थः । कृत्यवित्कार्यज्ञः । आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित् । विशांपतिर्मनुजेश्वरः । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । विष्टरभाजमासनगतम्। उपविष्टमित्यर्थः । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इत्यमरः । "वृक्षासनयोर्विष्टरः" इति निपातः। तं तपोधनं विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । "तदर्हम्" इति वतिप्रत्ययः । अर्चयित्वाऽऽरात्समीपे । 'आराद् दूरसमीपयोः' इत्यमरः । कृताञ्जलिः सन्निति वक्ष्यमाणप्र-कारेणोवाच ॥ ३ ॥

अन्वयः—विधिज्ञः, मानधनाग्रयायी, कृत्यवित्, विशाम्पतिः, विष्टरभाजं, तं, तपोधनं, विधिवद्, अर्चयित्वा, आरात्, कृताञ्जलिः, "सन्", इति, उवाच ॥ ३ ॥

व्याख्या—विधिज्ञः=शास्त्रवेत्ता, धर्मशास्त्रमर्मज्ञ इत्यर्थः । मानधनाग्रयायी=चित्तोन्नति-रूपद्रव्यवतामग्रणीः, कृत्यवित्=कार्यवेत्ता, समयानुकूलकार्यकारीत्यर्थः । विशांपतिः=मनुज-प्रभुः, राजा रघुरित्यर्थः । विष्टरभाजम्=आसनाश्रितं, रघुप्रदत्तासनोपरि स्थितमित्यर्थः । तं=पूर्वोक्तं, तपोधनं=तपोरूपधनशालिनं, कौत्समिति यावद् । विधिवद्=यथाशास्त्रम्, अर्चयित्वा=पूजयित्वा, आरात्=समीपे, कृताञ्जलिः=विहितहस्तसंपुटः, हस्तद्वयं पर-स्परं संयोज्य विनीतवत् स्थित इत्यर्थः । सन्निति शेषः । इति=वक्ष्यमाणप्रकारेण, उवाच=अवोचत् ॥ ३ ॥

समासादि—विध्यर्हं विधिवत् (अ०) । विधिं शास्त्रं जानातीति विधिज्ञः (पुं०) । तप एव धनं यस्य स तपोधनः ( ब० व्री० ) तं तपोधनम् । अग्रे यातुं शीलमस्येत्यग्रयायी (पुं०) मान एव धनं येषान्ते मानधनाः (ब० व्री०), तेषामग्रयायी मानधनाग्रयायी (त० पु०) । विष्टरं भजतीति विष्टरभाक् (पुं०) तं विष्टरभाजम् । कृतोऽञ्जलिर्येन स कृताञ्जलिः (ब०व्री०)। कृत्यं वेत्तीति कृत्यविद् (पुं०) ॥ ३ ॥

व्याकरणम्—अर्चयित्वा—( अर्च ( पूजायाम्—अकारेत् )+णिच् )+अर्चि+इट्+क्त्वा । उवाच=ब्रूञ् (व्यक्तायां वाच—ञित्)+लिट्, ब्रुवो वच्यादेशे द्वित्वेऽभ्यासकार्ये सम्प्रसारणे रूपम् ॥ ३ ॥

वाच्यान्तरं—विधिज्ञेन मानधनाग्रयायिना कृत्यविदा विशांपत्या विष्टरभाजं तं तपोधनं विधिवदर्चयित्वाऽऽरात् कृताञ्जलिना (सता) इत्यूचे ॥ ३ ॥

कोशः—"विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति । "मानश्चित्तोन्नतौ ग्रहे । गर्वे प्रमाणे प्रस्थादौ" इति । "अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च" इति च मेदिनी ॥ ३ ॥

तात्पर्यार्थः—मानिनां सर्वप्रथमो रघुरतिथिपूजनं परमावश्यकमिति बुद्ध्वा यथाविधि

पूजनं कृत्वा पश्चादासने समुपवेश्यागमनप्रयोजनस्यात्यावश्यकप्रष्टव्यविषयत्वात् बद्धकरयुगलः सन् वक्ष्यमाणप्रकारेण कौत्सं प्रत्यवोचत् ॥ ३ ॥

भाषाऽर्थः—शास्त्र के जानने वाले, मान ही को धन मानने वालों में सर्व प्रथम, "आगमन का प्रयोजन अवश्य पूंछना चाहिये" इस कार्य के जानने वाले राजा रघु आसन पर बैठे हुये उन तपोधन कौत्स ऋषि का विधिवत् पूजन करके समीप में हाथ जोड़े हुये इस प्रकार उन से बोले ॥ ३ ॥

*अथ कौत्सं प्रति ब्रुवता रघुणा तद्गुरोः सर्वप्रथमं कुशलं पृष्टमित्याह—*

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे ! कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥

सञ्जीविनी—अप्यग्रणीरिति । हे कुशाग्रबुद्धे! सूक्ष्मबुद्धे !।"कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्' इति हलायुधः । मन्त्रकृतां मंत्रस्रष्टॄणाम् । "सुकर्मपापमन्त्र०" इत्यादिना क्विप्। ऋषीणामग्रणीः श्रेष्ठस्ते तव गुरुः कुशल्यपि क्षेमवान्किम् । अपिः प्रश्ने । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः । यतो यस्माद् गुरोः सकाशात्त्वयाऽशेषं ज्ञानम् । लोकेनोष्णरश्मेः सूर्याच्चैतन्यं प्रबोध इव । आप्तं स्वीकृतम् ॥ ४ ॥

अन्वयः—कुशाग्रबुद्धे !, मन्त्रकृताम्, ऋषीणाम्, अग्रणीः, ते गुरुः, कुशली, अपि, यतः, त्वया, अशेष, ज्ञानं, लोकेन, उष्णरश्मेः, चैतन्यम्, इव, आप्तम् ॥ ४ ॥

व्याख्या—कुशाग्रबुद्धे != हे दर्भाग्रीयमते !, हे सूक्ष्मदर्शिन्निति यावद् । मन्त्र(१)कृतां = मन्त्रस्मर्तॄणाम्, ऋषीणां = सत्यवचसाम्, अग्रणीः = अग्रगण्यः, ते = तव, गुरुः = उपाध्यायः, वरतन्तुरिति यावद् । कुशली = कल्याणयुक्तः, अपि = प्रश्नेऽर्थे, किमित्यर्थः । यतः = यस्माद्, गुरोः सकाशादित्यर्थः । त्वया = भवता, अशेषं = निखिलं, ज्ञानम् = मोक्षोपयोगिबुद्धिम्, वेदादिज्ञानमिति वा । लोकेन = जनेन, उष्णरश्मेः = रवेः, सकाशादिति भावः । चैतन्यं = प्रबोधः, इव = यथा, आप्तं = लब्धम् ॥ ४ ॥

समासादि—मन्त्रं कुर्वन्तीति मन्त्रकृतः ( पुं० ) तेषां मन्त्रकृताम् । कुशस्याग्रमिति कुशाग्रं (त० पु०) तद्वत्तीक्ष्णा बुद्धिर्यस्य स कुशाग्रबुद्धिः (ब० व्री०) तत्सम्बुद्धौ हे कुशाग्रबुद्धे ! । कुशलमस्यास्तीति कुशली (पुं०) । उष्णा रश्मयो यस्य स उष्णरश्मिः (ब० व्री०) तस्योष्णरश्मेः ॥ ४ ॥

व्याकरणम्-आप्तम् = आप्लृ (व्याप्तौ—लृदित्) + क्तः + सु, कर्मणि क्तप्रत्यये रूपम् ॥४॥

वाच्यान्तरं—हे कुशाग्रबुद्धे ! मन्त्रकृतामृषीणामग्रण्या ते गुरुणा कुशलिनाऽपि "भूयते" यतस्त्वमशेषं ज्ञानं लोक उष्णरश्मेश्चैतन्यमिवाप्तवान् ॥ ४ ॥

कोशः—"कुशलः शिक्षिते त्रिषु" इति । "क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्" । इति च विश्वमेदिन्यौ । "मोक्षे धीर्ज्ञानम्" इत्यमरः । "चेतना संविदि स्त्रियाम् । वाच्यवत् प्राणयुक्ते" इति मेदिनी ॥ ४ ॥

तात्पर्यार्थः—हे सूक्ष्मदर्शिन् ! सूर्यो यथाऽन्धकारे प्रसुप्तं जनं स्वप्रकाशेन प्रबोधयति तथैवाज्ञानान्धकारे प्रसुप्तं त्वामपि यो महर्षिरध्यापितवेदशास्त्रादिजन्यज्ञानप्रकाशेन प्रबोधितवान् स मूर्तिधारिवेदसदृशस्ते गुरुः कुशलयुक्तः किम् ? ॥ ४ ॥

भाषाऽर्थः—हे तीक्ष्णबुद्धि वाले ! ऋषे कौत्स ! मन्त्रों के स्मरण करनेवाले ऋषियों में श्रेष्ठ वे आप के गुरुजी महाराज कुशल से तो हैं ? जिनसे कि आपने सम्पूर्ण ज्ञान उस भांति से प्राप्त किया कि जिस भांति से लोग सूर्य से प्रबोध प्राप्त करते हैं ॥ ४ ॥

(१) मन्त्रकृतामित्यस्य मन्त्रस्रष्टॄणामित्यर्थस्वीकारे वेदस्यापौरुषेयत्वहानिः स्यादतो मन्त्राणां सर्वत्र स्मरणकर्तृत्वात्प्रकाशकत्वाच्चौपचारिकप्रयोगो मन्त्रकृतामिति बोध्यः ।

*अथ सम्प्रति रघुकर्तृकं पुनर्महर्षेस्तपोविषयककुशलप्रश्नमाह—*

**कायेन वाचा मनसाऽपि शश्वद्यत्संभृतं वासवधैर्यलोपि।**
**आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥ ५ ॥**

सञ्जीविनी—कायेनेति। कायेनोपवासादिकृच्छ्रचान्द्रायणादिना वाचा वेदपाठेन मनसा गायत्रीजपादिना कायेन वाचा मनसाऽपि करणेन वासवस्येन्द्रस्य धैर्यं लुम्पतीति वासवधैर्यलोपि। स्वपदापहारशङ्काजनकमित्यर्थः। यत्तपः शश्वदसकृत्। 'मुहुःपुनःपुनःशश्वदभीक्ष्णमसकृत्समाः' इत्यमरः। सम्भृतं संचितं महर्षेर्वरतन्तोस्त्रिविधं वाङ्मनःकायजं तत्तपोऽन्तरायैर्विघ्नैरिन्द्रप्रेरिताप्सरःशापैर्व्ययं नाशं नापाद्यते कच्चिद् न नीयते किम्। 'कच्चित्कामप्रवेदने' इत्यमरः ॥ ५ ॥

अन्वयः—कायेन, वाचा, मनसा, अपि, वासवधैर्यलोपि, यत्, शश्वत्, सम्भृतं, महर्षेः, त्रिविध, तत्, तपः, अन्तरायैः, व्यय, न, आपाद्यते, कच्चित् ॥ ५ ॥

व्याख्या—कायेन = देहेन, निराहारादिकृच्छ्रचान्द्रायणादिव्रतेनेत्यर्थः। वाचा = वाण्या, वेदपाठेनेत्यर्थः। मनसा = हृदयेन, गायत्रीजपादिनेत्यर्थः। अपि = समुच्चयेऽर्थे, वासवधैर्यलोपि = इन्द्रधीरताऽपहारि, स्वकीयस्थानापहरणशङ्कोत्पादकमित्यर्थः। यद् = अनिर्दिष्टं, तप इति यावद्। शश्वद् = अभीक्ष्णं, सम्भृतं = निचितं, सम्पादितमित्यर्थः। महर्षेः = अतिसत्यवचसः, वरतन्तोरित्यर्थः। तत = पूर्वोक्तं, त्रिविधं = त्रिप्रकारकं, मनोवाक्कायजमित्यर्थः। तपः = कृच्छ्रचान्द्रायणवेदपाठगायत्रीजपाद्यात्मकं कर्म, अन्तरायैः = प्रत्यूहैः, स्वपदच्युतिभयादिन्द्रप्रेषितस्वर्वेश्याशापरूपैरित्यर्थः। व्ययं = हानिं, न = नहि, आपाद्यते = प्राप्यते, कच्चित् = किम् ॥ ५ ॥

समासादि—वासवस्य धैर्य्यमिति वासवधैर्य्यं (त० पु०), तद् लोप्तुं शीलमस्येति वासवधैर्यलोपि (न० लि०)। महांश्चासा वृषिश्च महर्षिः ( क०धा० ) तस्य महर्षेः। तिस्रो विधा यस्य तत् त्रिविधं (ब० व्री०) ॥ ५ ॥

व्याकरणम्—आपाद्यते = आङ् + (पद (गतौ—अकारेत्) + णिच्) पादि + यक् + लट्, लटस्तप्रत्यये णेर्लोपे रूपम् ॥ ५ ॥

वाच्यान्तरं—कायेन वाचा मनसाऽपि वासवधैर्यलोपिना येन (तपसा) शश्वत् सम्भृतेन (भूयते) महर्षेस्त्रिविधं तत्तपोऽन्तराया व्ययं नापादयन्ति कच्चित् ॥ ५ ॥

कोशः—"कायो देहः क्लीबपुंसोः स्त्रियां मूर्त्तिस्तनूस्तनुः" इत्यमरः। "कायः कडेवते मूर्तौ संघे लक्ष्यस्वभावयोः। मनुष्यतीर्थे कायं स्यात्" इति च मेदिनी। "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः ॥ ५ ॥

तात्पर्यार्थः—इन्द्रस्यापि स्वपदापहरणशङ्कया धैर्यविनाशि कायिकं वाचिकं मानसञ्चेति त्रिविधं यत्तपोऽस्ति तन्महर्षेर्वरतन्तोस्तप इन्द्रप्रेपिताप्सरोगणैरसुरैः शापैर्वा कदा चिद् न विनाश्यते किम् ॥ ५ ॥

भाषाऽर्थः—शरीर से (कृच्छ्रचान्द्रायणादि द्वारा) वाणी से (वेदपाठ द्वारा) और मन से (गायत्रीजपादि द्वारा) इन्द्र के धैर्य का नाश करने वाला (इन्द्र के पदके अपहरण की शङ्का को उत्पन्न करने वाला) जो (तप) बारम्बार सञ्चय किया हुआ महर्षि वरतन्तु का तीन प्रकार का (शरीर-वाणी-और मन से हुआ) तप है वह विघ्नों से (इन्द्र की भेजी हुई अप्सरावों से या शापों से) कभी नष्ट तो नहीं कराया जाता है ? ॥ ५ ॥

*अथ रघुकर्तृक महर्षेस्तपोवनवर्त्तिवृक्षविषयककुशलप्रश्नमाह—*

**आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम्।**
**कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६ ॥**

सञ्जीविनी—आधारेति। आधारबन्धप्रमुखैरालवालनिर्माणादिभिः प्रयत्नैरुपायैः। 'आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च' इति विश्वः। सुतेभ्यो निर्गतो विशेषोऽतिशयो यस्मिन्कर्मणि तत्तथा संवर्धितानां श्रमच्छिदां व आश्रमपादपानां वाय्वादिः। आदिशब्दाद्दावानलादिः। उपप्लवो बाधको न कच्चिन्नास्ति किम्॥ ६॥

अन्वयः—आधारबन्धप्रमुखैः, प्रयत्नैः, सुतनिर्विशेषं, संवर्धितानां, श्रमच्छिदां, वः, आश्रमपादपानां, वाय्वादिः, उपप्लवः, न, कच्चित्॥ ६॥

व्याख्या—आधारबन्धप्रमुखैः=आलवालबन्धनप्रभृतिभिः, प्रयत्नैः=उपायैः, सुतनिर्विशेषं=पुत्रसमानं, क्रियाविशेषणमिदम्। सम्वर्धितानां=समेधितानां, पयोदानादिना पुत्रवत् पालितानामित्यर्थः। श्रमच्छिदां=परिश्रमहारिणां, वः=युष्माकम्, आश्रमपादपानां=व्रतिजनमठवृक्षाणां, तपोवनवर्त्तितरूणामित्यर्थः। वाय्वादिः=मारुतप्रभृतिः, झञ्झावातदावानलप्रभृतिरित्यर्थः। उपप्लवः=उत्पातः, नाशक इत्यर्थः। न=नहि, नास्तीत्यर्थः। कच्चित्=किम्॥ ६॥

समासादि—आधारस्य बन्ध आधारबन्धः (त० पु०), स एव प्रमुखं येषान्त आधारबन्धप्रमुखाः (ब० व्री०) तैस्तथोक्तैः। निर्नास्ति विशेषो यस्मिंस्तद् निर्विशेषं (ब०व्री०), सुतेन निर्विशेषं सुतनिर्विशेषं (त० पु०)। वायुरादिर्यस्य स वाय्वादिः (ब० व्री०)। श्रमं छिन्दन्तीति श्रमच्छिदः (पुं०) तेषां श्रमच्छिदाम्। आश्रमस्य पादपा आश्रमपादपाः (त० पु०) तेषामाश्रमपादपानाम्॥ ६॥

व्याकरण—संवर्धितानां=सम्+(वृधु (वृद्धौ—उदित्)+णिच्) वर्धि+इट्+क्तः+आम्, "सेटि निष्ठायाम्" इति णेर्लोपे रूपम्॥ ६॥

वाच्यान्तरम्—आधारबन्धप्रमुखैः प्रयत्नैः सुतनिर्विशेषं संवर्धितानां वः श्रमच्छिदामाश्रमपादपानां वाय्वादिनोपप्लवेन न कच्चित् (भूयते)॥ ६॥

कोशः—"प्रमुखं प्रथमे मुख्ये" इति हैमः। "उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि" इति मेदिनी॥ ६॥

तात्पर्यार्थः—आलवालनिर्माणजलदानादिभिरुपायैः पुत्रवत् पालिता ये युष्माकं तपोवनवर्त्तिनो वृक्षाः कुसुमफलच्छायाप्रदानादिना मार्गपरिक्लान्तानां जनानां श्रमापहारिणः सन्ति तेषां झञ्झावातदावानलादिभिरुत्पातैर्बाधा तु न भवति किम्?॥ ६॥

भाषाऽर्थ—क्यारी बांधना जल देना आदि उपायों से पुत्र के समान बढ़ाये गये हुये जो (पथिकों के) थकावट को दूर करनेवाले आपलोगों के तपोवन के वृक्ष हैं, उन सबों को झञ्झावात-दावानल आदिक उपद्रवों से क्या बाधा तो नहीं पहुंचती है?॥ ६॥

*अथाश्रमस्थमृगीणां सद्योजातशिशुविषयककुशलप्रश्नमाह—*

क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु।
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः॥ ७॥

सञ्जीविनी—क्रियानिमित्तेष्विति। क्रियानिमित्तेष्वप्यनुष्ठानसाधनेष्वपि कुशेषु मुनिभिर्वत्सलत्वान्मृगस्नेहादभग्नकामाऽप्रतिहतेच्छा। तेषां मुनीनामङ्का एव शय्यास्तासु च्युतानि नाभिनालानि यस्याः सा तथोक्ता मृगीणां प्रसूतिः संततिरनघाऽव्यसना कच्चित्। अनपायिनी किमित्यर्थः। 'दुःखैनोव्यसनेष्वघम्' इति यादवः। ते हि व्यालभयाद्दशरात्रमङ्क एव धारयन्ति॥ ७॥

अन्वयः—क्रियानिमित्तेषु, अपि, कुशेषु, मुनिभिः, वत्सलत्वाद्, अभग्नकामा, तदङ्कशय्याच्युतनाभिनाला, मृगीणाम्, प्रसूतिः, अनघा, कच्चित्॥ ७॥

व्याख्या—क्रियानिमित्तेषु=अनुष्ठानोपायेषु, श्रौतानुष्ठानसाधनसामग्रीष्वित्यर्थः।

अपि = समुच्चयेऽर्थे, कुशेषु = दर्भेषु, मुनिभिः = वाचंयमैः, ऋषिभिरित्यर्थः । वत्सलत्वाद् = स्निग्धत्वाद्, मृगविषयकस्नेहादित्यर्थः । अभग्नकामा = अप्रतिरुद्धमनोरथा, तदङ्कशय्या च्युतनाभिनाला = पूर्वोक्तमुन्युत्सङ्गतल्पपतिततुन्दिकानाला, मृगीणां = हरिणीनां, प्रसूतिः = अपत्यम्, अनघा = व्यसनशून्या, विपद्रहितेत्यर्थः । कच्चित् = किम् ॥ ७ ॥

समासादि—क्रियैव निमित्तं तेषां ते क्रियानिमित्ताः (ब० व्री०) तेषु क्रियानिमित्तेषु । वत्सलस्य भावो वत्सलत्वं (न० लि०) तस्मात् वत्सलत्वात् । न भग्न इत्यभग्नः (त० पु०), स कामो यस्याः साऽभग्नकामा (ब० व्री०) । तेषामङ्कास्तदङ्काः (त० पु०), तदङ्का एव शय्यास्तदङ्कशय्याः (क०धा०), तासु च्युतानि तदङ्कशय्याच्युतानि (त० पु०), तानि नाभिनालानि यस्याः सा तदङ्कशय्याच्युतनाभिनाला (ब० व्री०) । अविद्यमानोऽघो यस्याः साऽनघा (ब० व्री०) । प्रसूयत इति प्रसूतिः (स्त्री०) ॥ ७ ॥

व्याकरणं—प्रसूतिः = प्र + (पूङ् (प्राणिगर्भविविमोचने—ङित्) सू + क्तिन् + सु ॥७॥

वाच्यान्तरं—क्रियानिमित्तेष्वपि कुशेषु मुनिभिर्वत्सलत्वादभग्नकामया तदङ्कशय्याच्युतनाभिनालया मृगीणां प्रसूत्याऽनघया कच्चिद् (भूयते) ॥ ७ ॥

कोशः—"अस्त्री कुशं कुथो दर्भः, पवित्रम्" इत्यमरः । "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशंजले" इति मेदिनी । "नाला नालम्" इत्यमरः । "अनघोऽपापहृद्ययोः" इति हैमः । "प्रसुतिः प्रसवे" इत्यमरः ॥ ७ ॥

तात्पर्यार्थः—यान् सद्योजातान् हरिणपोतान् मुनयो व्याघ्रादिभयेन निजाङ्के संस्थाप्य परिरक्षन्ति, येषाञ्च नाभिनालानि तदङ्केष्वेव पतितानि सन्ति, श्रौतानुष्ठाननिमित्तककुशान् भक्षयितु प्रवृत्तानपि यान् मुनयस्तत्स्नेहवशयाः सन्तो निवारयितुं न प्रभवन्ति, एवम्भूतास्ते तपोवनवर्त्तिनो मृगशिशवः किं कुशलिनः सन्ति ? ॥ ७ ॥

भाषाऽर्थः—और अनुष्ठान के निमित्त रक्खे हुये भी कुशों में जिन मुनियों ने स्नेह वश हो जिन्हों के खाने की इच्छा को नहीं रोक सके हैं ( खाने दिये हैं ) ऐसे उन मुनियों की गोदीरूप बिछौनों पर जिन्हों के नाभिनाल गिर पड़े हैं, ऐसे हरिणियों के हाल के उत्पन्न हुये वे बच्चे विपत्ति से रहित ( कुशल से ) तो हैं ? ॥ ७ ॥

*अथ रघुर्ऋषिसेवितजलानां निरुपद्रवं पृच्छन्नाह—*

निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥ ८ ॥

सञ्जीविनी—निर्वर्त्यत इति । यैस्तीर्थजलैर्नियमाभिषेको नित्यस्नानादिर्निर्वर्त्यते निष्पाद्यते । येभ्यो जलेभ्यः । उद्धृत्येति शेषः । पितॄणामग्निष्वात्तादीनां निवापाञ्जलयस्तर्पणाञ्जलयः । 'पितृदानं निवापः स्यात्' इत्यमरः । निर्वर्त्यन्ते । उञ्छानां प्रकीर्णोद्धृतधान्यानां षष्ठैः षष्ठभागैः पालकत्वाद्राजग्राह्यैरङ्कितानि सैकतानि पुलिनानि येषां तानि तथोक्तानि वो युष्माकं तानि तीर्थजलानि शिवानि भद्राणि कच्चित् । अनुपप्लवानि किमित्यर्थः । 'उञ्छो धान्यांशकादानं कणिशाद्यर्जनं शिलम्' इति यादवः । "षष्ठाष्टमाभ्यां ञ च" इति षष्ठशब्दाद्भागार्थेऽन्प्रत्ययः । अत एवापूरणार्थत्वात् "पूरणगुण०" इत्यादिना न षष्ठीसमासप्रतिषेधः । सिकता येषु सन्ति सैकतानि । "सिकताशर्कराभ्यां च" इत्यण्प्रत्ययः ॥ ८ ॥

अन्वयः—यैः, नियमाभिषेकः, निर्वर्त्यते, येभ्यः, पितॄणां, निवापाञ्जलयः, (निर्वर्त्यन्ते), उञ्छषष्ठाङ्कितसैकतानि, वः, तानि, तीर्थजलानि, शिवानि, कच्चित् ॥ ८ ॥

व्याख्या—यैः = अनिर्दिष्टैः, कैश्चित्तीर्थजलैरित्यर्थः । नियमाभिषेकः = व्रतस्नानादिः, निर्वर्त्यते = निष्पन्नः क्रियते, येभ्यः = अनिर्दिष्टेभ्यः, केभ्यश्चित्तीर्थजलेभ्य इत्यर्थः । पितॄणाम् = अग्निष्वात्तादीनां, निवापाञ्जलयः = तर्पणाञ्जलयः, "निर्वर्त्यन्ते" विभक्तिविपरिणामेनान्व-

यो बोध्यः। उञ्छषष्ठाङ्कितसैकतानि = कणशो गृहीतधान्यषष्ठभागचिह्नितसिकतामयतटानि वः = युष्माकं, तीर्थजलानि = ऋषिसेवितसलिलानि, शिवानि = कल्याणानि, कच्चित् = किं, सन्तीति शेषः ॥ ८ ॥

समासादि—नियमस्याभिषेको नियमाभिषेकः ( त० पु० )। निवापस्याञ्जलय इति निवापाञ्जलयः (त०पु०)। उञ्छानां षष्ठ उञ्छषष्ठः (त० पु०), तैरङ्कितानीत्युञ्छषष्ठाङ्कितानि ( त० पु० ), तानि सैकतानि येषां तान्युञ्छषष्ठाङ्कितसैकतानि ( व० व्री० ) ॥ ८ ॥

व्याकरणं—निर्वर्त्यते = निर् + ( वृतु (वर्तने—उदित्) + णिच्) वर्ति + यक् + लट्, लटस्तप्रत्यये णेर्लोप रूपम् ॥ ८ ॥

वाच्यान्तरं—यानि नियमाभिषेकं निर्वर्तयन्ति येभ्यः पितॄणां निवापाञ्जलीन् निवर्तयन्त्युञ्छषष्ठाङ्कितसैकतैर्वस्तैस्तीर्थजलैः शिवैः कच्चित् ( भूयते ) ॥ ८ ॥

कोशः—"सैकतं सिकतामयम्", इति। "श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्। भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम। शस्तं च" इति चामरः ॥ ८ ॥

तात्पर्यार्थः—येषां जलानि भवदीया व्रतसम्बन्धिस्नानादिकाः क्रिया निष्पादयन्ति, येषां जलेभ्यश्च भवन्तः पितॄणां तर्पणाञ्जलीन् निष्पादयन्ति, येषां सिकतामयतटानि नृपार्थं मुनिभिरुज्झितैः कणशः सङ्गृहीतधान्यानां षष्ठभागैरङ्कितानि सन्ति, तेषां वस्तीर्थाणां जलानि निरुपद्रवाणि किं सन्ति ॥ ८ ॥

भाषाऽर्थः—जिन तीर्थों ( जिनके जलों से ऋषि लोग नित्य स्नान तर्पणादि क्रिया करते हैं, उसे तीर्थ कहते हैं ) के जलों से व्रतसम्बन्धी स्नानादि क्रिया निष्पन्न होती है, और जिन तीर्थजलों से पितृगण का तर्पण किया जाता है, और जिनके वालुकामय किनारे ( बचे हुए कृषकों द्वारा धान्य की राशि उठा ले जाने पर एक एक कणों को उठाकर इकट्ठा किये गये, राजा के लिये दिये गये) उञ्छ संज्ञक धान्यों के छठें भागों से सुशोभित हो रहे हैं ऐसे आप लोगों के तीर्थों के जल उपद्रव से रहित तो हैं ? ॥ ८ ॥

*अथ रघुर्मुनिजनभक्ष्याणां नीवारादिधान्यानां निरुपद्रवं पृच्छन्नाह—*

नीवारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित्।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥९॥

सञ्जीविनी—नीवारेति। कालेषु योग्यकालेषूपपन्नानामागतानामतिथीनां कल्प्या भागा यस्य तत्तथोक्तम्। वने भवं वन्यम्। शरीरस्थितेर्जीवितस्य साधनं वो युष्माकम्। पच्यत इति पाकः फलम्। धान्यमिति यावत्। नीवारपाकादि। आदिशब्दाच्छ्यामाकादिधान्यसंग्रहः। जनपदेभ्य आगतैर्जानपदैः। "तत आगतः" इत्यण्। कडङ्गरीयैः। कडङ्गरं बुसमर्हन्तीति कडङ्गरीयाः। 'कडङ्गरो बुसं क्लीबे धान्यत्वचि तुषः पुमान्' इत्यमरः। "कडङ्गरदक्षिणाच्छ च" इति छप्रत्ययः। तैर्गोमहिषादिभिर्नामृश्यते कच्चित्। न भक्ष्यते किमित्यर्थः ॥ ९ ॥

अन्वयः—कालोपपन्नातिथिकल्प्यभागं, वन्यं, शरीरस्थितिसाधनं, वः, नीवारपाकादि, जानपदैः, कडङ्गरीयैः, न, आमृश्यते, कच्चित् ॥ ९ ॥

व्याख्या—कालोपपन्नातिथिकल्प्यभागं = योग्यसमयप्राप्तागन्तुककल्पनीयांशं, बलिवैश्वदेवान्ते समागतागन्तुकजनानामपि शरीरयात्रानिर्वर्तनोपायमित्यर्थः। वन्यम् = अरण्योत्पन्नं, शरीरस्थितिसाधनं = देहधारणोपायं, वः = युष्माकं, नीवारपाकादि = तृणधान्यश्यामाकप्रभृति, श्यामाकादिधान्यफलमित्यर्थः। जानपदैः = ग्रामागतैः, कडङ्गरीयैः = बुसभक्ष्यैः, गोमहिषादिभिरित्यर्थः। न = नहि, आमृश्यते = खाद्यते, कच्चित् = किम् ॥ ९ ॥

समासादि—पच्यत इति पाकः ( पुं० ), नीवाराणां पाको नीवारपाकः ( त० पु० ), स आदिर्यस्य तद् नीवारपाकादि ( ब०व्री० )। कडङ्गरमर्हन्तीति कडङ्गरीयाः ( पुं० ) तैस्त-

थोक्तैः। जनाः पद्यन्ते गच्छन्ति येषु ते जनपदाः ( पुं० ), तेभ्य आगता जानपदाः ( पुं० ) तैःतथोक्तैः। कालेपूपपन्ना इति कालोपपन्नाः ( त० पु० ), कालोपपन्नाश्च तेऽतिथयश्च इति कालोपपन्नातिथयः ( क० धा० ), तेषां कल्प्याः कालोपपन्नातिथिकल्प्याः ( त० पु० ), ते भागा यस्य तत् कालोपपन्नातिथिकल्प्यभागं ( ब० व्री० )। वने भवं वन्यं ( न० लिं० )। शीर्यत इति शरीरं ( न० लि० ), तस्य स्थितिरिति शरीरस्थितिः ( त०पु० ), तस्याः साधनमिति शरीरस्थितिसाधन ( त० पु० ) ॥ ९ ॥

व्याकरणम्—आमृश्यते = आङ् + मृश ( आमर्शने—अकारेत् ) + यक् + लट्, लटस्तप्रत्यये रूपम् ॥ ९ ॥

वाच्यान्तरं—कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वो नीवारपाकादि जानपदाः कडङ्गरीया नामृशन्ति कच्चित् ॥ ९ ॥

कोशः—"तृणधान्यानि नीवाराः" इत्यमरः। "भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी ॥ ९ ॥

तात्पर्यार्थः—बलिवैश्वदेवान्ते समागतागन्तुकानामपि शरीरधारणोपाये भवतां च भक्ष्यं वनोद्भवं नीवारश्यामाकादिधान्यं ग्रामादागत्य गोमहिषादयो न भक्षयन्ति किम् ॥ ९ ॥

भाषाऽर्थः—उचित समय पर ( बलि वैश्वदेव कर चुकने पर ) आये हुये अतिथियों के भागों की भी जिनमें कल्पना की जाती है, ऐसे जङ्गलों में उत्पन्न हुये, शरीर की स्थिति बनाये रखने के कारण, रूप ( भक्ष्य पदार्थ ) जो आप लोगों के नीवार-सांवा-आदिक धान्य हैं उन्हें ग्राम से आये हुये भूसा खाने वाले गाय-भैंस, तो नहीं खा जाते हैं ॥ ९ ॥

*अथ किं गुरुणा प्रसन्नतया गृहस्थाश्रमं प्रवेष्टुं समाप्तविद्यस्त्वमाज्ञप्तः ? इति पृच्छन् रघुराह—*

**अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय।**
**कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ १० ॥**

सञ्जीविनी—अपीति। किञ्च त्वं प्रसन्नेन सता महर्षिणा सम्यग्विनीय शिक्षयित्वा। विद्यामुपदिश्येत्यर्थः। गृहाय गृहस्थाश्रमं प्रवेष्टुम्। "क्रियाऽर्थोपपद०" इत्यादिना चतुर्थी। अनुमतोऽप्यनुज्ञातः किम्। हि यस्मात्ते तव सर्वेषामाश्रमाणां ब्रह्मचर्यवानप्रस्थयतीनामुपकारे क्षमं शक्तम्। 'क्षमं शक्ते हिते त्रिषु' इत्यमरः। द्वितीयमाश्रमं गार्हस्थ्यं संक्रमितुं प्राप्तुमयं कालः। विद्याग्रहणानन्तर्यात्तस्येति भावः। "कालसमयवेलासु तुमुन्" इति तुमुन्। सर्वोपकारक्षममित्यत्र मनुः—( यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः ) इति ॥ १० ॥

अन्वयः—त्वं, प्रसन्नेन, "सता", महर्षिणा, सम्यग्, विनीय, गृहाय, अनुमतः, अपि, हि, ते, सर्वोपकारक्षमं, द्वितीयम्, आश्रमं, संक्रमितुम्, अयं, कालः, "अस्ति" ॥ १० ॥

व्याख्या—किंचेत्यस्याक्षेपः कर्त्तव्यः। त्वं = भवान्, कौत्स इत्यर्थः। प्रसन्नेन = सन्तुष्टेन, प्रेमपूर्णेनेत्यर्थः। सतेति शेषः। महर्षिणा = अतिमत्यवचसा, त्वद्गुरुणा वरतन्तुनेत्यर्थः। सम्यक् = साधु, विनीय = शिक्षां दत्वा, विद्या अध्याप्येत्यर्थः। गृहाय = गृहस्थाश्रमं प्रवेष्टुम्, अनुमतः = आज्ञप्तः, अपि = प्रश्नेऽर्थे, किमित्यर्थः। हि = यतः, ते = तव, सर्वोपकारक्षमं = निखिलाश्रमोपकृतिसमर्थं, ब्रह्मचर्यवानप्रस्थसन्यासाश्रमाणां परमोपकारकमित्यर्थः। द्वितीयं = प्रथमादपरम्, आश्रमं = गार्हस्थ्यं, सङ्क्रमितुं = गन्तुं, स्वीकर्तुमिति भावः। अयम् = एषः, कालः = समयः, ब्रह्मचर्याश्रमे स्थित्वा विद्याग्रहणानन्तरं क्रमप्राप्तस्य गार्हस्थ्याश्रमस्यैवौचित्यादिति भावः ॥ १० ॥

समासादि—महांश्चासा वृषिश्च महर्षिः ( क० धा० ) तेन महर्षिणा। सर्वेषामुपका-

र इति सर्वोपकारः ( त० पु० ), तत्र क्षमः सर्वोपकारक्षमः ( त०पु० ) तं तथोक्तम् ॥ १० ॥

व्याकरणं—संक्रमितुं = सम् + क्रमु ( पादविक्षेपे-उदित् ) + इट् + तुमुन् ॥ १० ॥

वाच्यान्तरं—त्वां प्रसन्नः "सन्" महर्षिः सम्यग् विनीय गृहायानुमतवानपि हि ते सर्वोपकारक्षमं द्वितीयमाश्रमं संक्रमितुमनेन कालेन "भूयते" ॥ १० ॥

कोशः—"प्रसन्ना स्त्री सुरायां स्यादच्छसन्तुष्टयोस्त्रिषु" इति । "आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे वने मठे । अस्त्रियाम् । इति मेदिनी ॥ १० ॥

तात्पर्यार्थः—भवतो गुरुः प्रसन्नः सन् वेदशास्त्राणि सम्यगध्याप्य गृहस्थाश्रमं प्रवेष्टुं त्वामादिष्टवान् किम् ? यतोऽधुना सर्वेषाम् ब्रह्मचर्याद्याश्रमाणां परमोपकारकं गार्हस्थ्यमाश्रमं प्रवेष्टुमयमेव समुचितसमयोऽस्ति, अर्थात्—गार्हस्थ्यावलम्बनं भवता स्वीक्रियेत चेत्तर्हि-समुचितमेव स्यात् ॥ १० ॥

भाषाऽर्थः—और तुमसे प्रसन्न होते हुये महर्षि वरतन्तु जी ने भली भांति शिक्षा दे कर गृहस्थाश्रम में प्रवेश करने के लिये क्या तुम्हे आज्ञा दी है ? क्योंकि सभी ( ब्रह्म चर्य-वानप्रस्थ-सन्न्यास ) आश्रमों के उपकार करने में समर्थ जो दूसरा गार्हस्थ्य आश्रम है, उसमें प्रविष्ट होने का यह समय है ॥ १० ॥

कुशल प्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह—

**तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे ।**
**अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि संभावयितुं वनान्माम् ॥११॥**

सञ्जीविनी—तवार्हत इति । अर्हतः पूज्यस्य प्रशस्तस्य । "अर्हः प्रशंसायाम्" इति शतृप्रत्ययः । तवाभिगमेनागमनमात्रेण मे मनो न तृप्तं न तुष्टम् । किन्तु नियोगक्रिययाऽऽज्ञाकरणेनोत्सुकं सोत्कण्ठम् । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः' । 'प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया । शासितुर्गुरोराज्ञयाऽऽत्मना स्वतो वा । 'प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया । मां सम्भावयितुं वनात्प्राप्तोऽसि । गुर्वर्थं स्वार्थं वाऽऽगमनमित्यर्थः ॥ ११ ॥

अन्वयः—अर्हतः, तव, अभिगमेन, मे, मनः, न, तृप्तं, "किन्तु", नियोगक्रियया, उत्सुकं, शासितुः, आज्ञया, अपि, आत्मना, वा, मां, सम्भावयितुं, वनात्, प्राप्तः, असि ॥११॥

व्याख्या—अर्हतः = पूज्यस्य, तव = भवतः, अभिगमेन = आगमनेन, अत्रागमनमात्रेणेत्यर्थः । मे = मम, मनः = हृदयं, न = नहि, तृप्तं = प्रीतम्, किन्त्विति शेषः । नियोगक्रियया = आदेशकरणेन, उत्सुकं = सोत्कण्ठं, शासितुः = विनेतुः, गुरोरित्यर्थः । आज्ञया = निदेशेन, अपि = प्रश्नेऽर्थे, आत्मना = स्वतः, वा = विकल्पेऽर्थे, मां = रघुं, सम्भावयितुं = सत्कर्तुं, गौरवास्पदं कर्तुमित्यर्थः । वनाद् = विपिनात्, तपोवनादित्यर्थः । प्राप्तः = आगतः, असि = वर्तसे ॥ ११ ॥

समासादि—अर्हतीत्यर्हन् (पुं०) तस्यार्हतः । नियोगस्य क्रिया नियोगक्रिया (त०पु०) तया नियोगक्रियया ॥ ११ ॥

व्याकरणं—तृप्तं = तृप ( तृप्रौ = अकारेत् ) + क्तः + सु, भावे क्तप्रत्यये रूपम् । सम्भावयितुं = सम् + ( भू ( सत्तायां ) + णिच् ) भावि + इट् + तुमुन् ॥ ११ ॥

वाच्यान्तरम्—अर्हतस्तवाभिगमेन मे मनसा न तृप्तेन ( भूयते ) नियोगक्रिययोत्सुकेनापि शासितुराज्ञयाऽप्यात्मना वा मां सम्भावयितुं वनात् प्राप्तेन "त्वया" भूयते ॥११॥

कोशः—"अथार्हन् स्यात् पूज्ये तीर्थकरेऽपि च" इत्यनेकार्थसंग्रहः । "इष्टार्थोद्युक्त उत्सुक" इति । "स्वयमात्मना" इति चामरः ॥ ११ ॥

तात्पर्यार्थः—हे कौत्स ! सम्प्रति तवागमनमात्रेणैव मे मनो न तथाविधां सन्तुष्टिमावहति यथा त्वदाज्ञापालनेन, अत इत्यहं ज्ञातुं समुत्सुकोऽस्मि, यत्त्वं वनान्मां कृतकृत्यं कर्तु

किं गुर्वर्थमागतोऽथवा स्वकीयार्थम् ? अर्थात्–स्वागमनप्रयोजनं वदेति भावः ॥ ११ ॥

भाषार्थः—पूजनीय जो आप हैं, सो आप के ( आप सरीखे पूजनीय के ) आने मात्र से ही मेरा मन सन्तुष्ट नहीं हुआ, किन्तु आप आज्ञा करें इस विषय में अत्यन्त उत्कण्ठित है अस्तु–आप क्या गुरु की आज्ञा से अथवा अपनी इच्छा से मुझे कृतार्थ करने के लिये जङ्गल से आये हैं ? अर्थात् आप कैसे आये ? इसे कहें ॥ ११ ॥

*अथ पूर्वोक्तं रघुवचः श्रुत्वा तदुत्तरं दातुकामतया कौत्सो वक्ष्यमाणप्रकारेण तमुवाचेत्याह—

**इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य ।**
**स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२ ॥**

सञ्जीविनी—इतीति । अर्घ्यपात्रेण मृण्मयेनानुमितो व्ययः सर्वत्यागो यस्य तस्य रघोरित्युक्तप्रकारामुदारामौदार्ययुक्तामपि गां वाचम् । 'मनो नियोगक्रिययोत्सुकं मे' इत्येवरूपाम् । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः' इत्यमरः । निशम्य श्रुत्वा वरतन्तुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्यसिद्धिं प्रति दुर्बलाशः सन्मृण्मयपात्रदर्शनाच्छिथिलमनोरथः सन्स्तं रघुमिति वक्ष्यमाणप्रकारेणावोचत् ॥ १२ ॥

अन्वयः—अर्घ्यपात्रानुमितव्ययस्य, रघोः, इति, उदाराम्, अपि, गां, निशम्य, वरतन्तुशिष्यः, स्वार्थोपपत्तिं, प्रति, दुर्बलाशः, "सन्", तम्, इति, अवोचत् ॥ १२ ॥

व्याख्या—अर्घ्यपात्रानुमितव्ययस्य = अर्घ्यसम्बन्धिभाजननिश्चितार्थापगमस्य, मृण्मयार्घ्यभाजनावलोकनेनैव ज्ञातविश्वजिद्यज्ञसर्वस्वत्यागस्येत्यर्थः । रघोः = दिलीपसूनोः, विश्वजिद् यज्ञे सर्वस्वत्यागकारिणो राज्ञ इत्यर्थः । इति = उक्तप्रकाराम्, उदाराम् = औदार्यार्पिताम्, अपि = युक्तपदार्थे, गां = वाचं, "मनो नियोगक्रिययोत्सुकं मे" इत्येवंरूपामिति भावः । निशम्य = श्रुत्वा, वरतन्तुशिष्य = तन्नामकमहर्षिच्छात्रः, कौत्स इत्यर्थः । स्वार्थोपपत्तिं = निजप्रयोजनपूर्तिं, निजेष्टसिद्धिमित्यर्थः । प्रति = अर्थार्थे, दुर्बलाशः = शिथिलतृष्णः, मृत्तिकानिर्मितार्घ्यभाजनावलोकनाच्छिथिलाभिलाष इत्यर्थः । सन्निति शेषः । तं = पूर्वोक्तं, रघुमित्यर्थः । इति = वक्ष्यमाणप्रकारेण, अवोचत् = उवाच ॥ १२ ॥

समासादि—अर्घार्थं द्रव्यमर्घ्यं ( न० लिं० ), तस्य पात्रमर्घ्यपात्रम् ( त० पु० ) अर्घ्यपात्रेणानुमितोऽर्घ्यपात्रानुमितः ( त०पु० ), स व्ययो यस्य सोऽर्घ्यपात्रानुमितव्ययः ( ब० व्री० ) तस्यार्घ्यपात्रानुमितव्ययस्य । स्वस्यार्थः स्वार्थः (त० पु०), स्वार्थस्योपपत्तिः स्वार्थोपपत्तिः (त० पु०) तां स्वार्थोपपत्तिम् । दुर्बला आशा यस्य स दुर्बलाशः ( ब० व्री० ) । वरतन्तोः शिष्यो वरतन्तुशिष्यः (त० पु०) ॥ १२ ॥

व्याकरणं—निशम्य = शम ( आलोचने–अकारेत् ) + क्त्वा + ल्यप् । अवोचत् = अट् + वच (परिभाषणे–अकारेत्) + च्लि + अङ् + लुङ्, तिपि "अस्यतिवक्तिख्यातिभ्योऽङ्"इत्यङादेशे "वच उम्" इत्युमागमे रूपम् ॥ १२ ॥

वाच्यान्तरम्—अर्घ्यपात्रानुमितव्ययस्य रघोरित्युदारां गां निशम्य वरतन्तुशिष्येण स्वार्थोपपत्तिं प्रति दुर्बलाशेन "सता" इत्योच्यत ॥ १२ ॥

कोशः—"अर्थस्यापगमे व्ययः" इत्यमरः । "आशा तृष्णादिशोः स्त्रियाम्" इति मेदिनी । "आशातृष्णाऽपि चायता" इति चामरः । "प्रति प्रतिनिधावित्थंभूताख्यानाभिमुख्ययोः । मात्रार्थभागवीप्सासु लक्षणप्रतिदानयोः" इति मेदिनी ॥ १२ ॥

तात्पर्यार्थः—वरतन्तुशिष्यः कौत्सो मृण्मयपात्रदर्शनादेव तस्य धनाभावं ज्ञात्वा केवलं "मनो नियोगक्रिययोत्सुकं मे" इत्येवंरूपामौदार्ययुक्तां वाणीं श्रुत्वा च स्वगुरुदक्षिणानिमित्तकधनप्राप्तौ भृशं नैराश्यमवलम्बमानः सन् रघुं प्रति वक्ष्यमाणप्रकारेणोवाच ॥१२॥

भावार्थः—अर्घ्य सम्बन्धी ( मृण्मय ) पात्र से ही जिसके सम्पूर्ण धन के खर्च हो जाने का पता लग गया है ऐसे उन रघु महाराज की "हमारा मन आपकी आज्ञा पालन करने के लिये उत्कण्ठित है" इस तरह की उदारता से भरी हुई वाणी सुनकर भी वरतन्तु महर्षि के शिष्य कौत्स ऋषि अपने कार्य की सिद्धि की तरफ से निराश होते हुये, उनसे आगे कहे जाने वाले प्रकार से बोले ॥ १२ ॥

*अथ कौत्सो रघोः प्रश्नोत्तरं दातुकामतया तं प्रति भाषमाण आदौ "नः सर्वप्रकारेण सर्वत्र कुशलमस्ति" इत्याह—*

**सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानाम् ।**
**सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥**

सञ्जीविनी—सर्वत्रेति । हे राजन् ! त्वं सर्वत्र नोऽस्माकं वार्तं स्वास्थ्यमवेहि जानीहि । 'वार्तं फल्गुन्यरोगे च' इत्यमरः । 'वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' इति यादवः । न चैतदाश्चर्यमित्याह—नाथ इति । त्वयि नाथ ईश्वरे सति प्रजानामशुभं दुःखं कुतः । तथाहि । अर्थान्तरं न्यस्यति—सूर्य इत्यादिना । सूर्ये तपति प्रकाशमाने सति तमिस्रा तमस्ततिः । 'तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततिः । कृष्णपक्षनिशायां च' इति विश्वः । 'तमिस्रम्' इति पाठे तमिस्रं तिमिरम् । 'तमिस्रं तिमिरं तमः' इत्यमरः । लोकस्य जनस्य । 'लोकस्तु भुवने जने' इत्यमरः । दृष्टेरावरणाय कथं कल्पेत । दृष्टिमावरितुं नालमित्यर्थः । कृपेरलमर्थत्वात्तद्योगे "नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" इत्यनेन चतुर्थी । 'अलमिति पर्याप्त्यर्थग्रहणम्' इति भगवान्भाष्यकारः । कल्पेत संपद्येतेत्यर्थः । क्लृपि संपद्यमाने चतुर्थीति वक्तव्यात् ॥ १३ ॥

अन्वयः—राजन् !, "त्वं", सर्वत्र, नः, वार्तम्, अवेहि, त्वयि, नाथे, "सति", प्रजानाम्, अशुभं, कुतः, "तथाहि", सूर्ये, तपति, "सति", तमिस्रा, लोकस्य, दृष्टेः, आवरणाय, कथं, कल्पेत ॥ १३ ॥

व्याख्या—राजन् ! = हे नरेन्द्र !, हे रघो ! इत्यर्थः । त्वमित्यस्य कर्तृपदस्य क्रिययाऽऽक्षेपः कर्त्तव्यः । सर्वत्र = सर्वस्मिन्, यद्यद्विषये त्वया कुशलं पृष्टं तत्तद्विषय इत्यर्थः । नः = अस्माकं, वार्त्तम् = अनामयं, कुशलमित्यर्थः । अवेहि = जानीहि, सर्वत्रत्यं कुशलमेतन्न चित्रमिति प्रदर्शयन्नाह—त्वयि नाथ इति । त्वयि = भवति, रघावित्यर्थः । नाथे = प्रभौ, सतीति शेषः । प्रजानां = जनानाम्, अशुभं = दुखं, कुतः = कस्मात्, न कुतोऽपीत्यर्थः । तथाहीति शेषः । सूर्ये = भानौ, तपति = देदीप्यमाने ,प्रकाशमान इत्यर्थः । सतीति शेषः । तमिस्रा = तमस्ततिः, अन्धकारसमूह इत्यर्थः । कर्तृपदमेतद् । लोकस्य = जनस्य, दृष्टेः = लोचनस्य, आवरणाय = रोधाय, कथं = केन प्रकारेण, कल्पेत = सम्पद्येत, लोचनमावरितुं न पर्याप्तमित्यर्थः ॥ १३ ॥

समासादि—राजते शोभतेऽसौ राजा ( पुं० ) तत्सम्बुद्धौ हे राजन् ! । न शुभमित्यशुभम् ( न० त० पु० ) । तमोबहुलमस्त्यस्यामिति तमिस्रा ( स्त्री० ) ॥ १३ ॥

व्याकरणम्—अवेहि = अव + आङ् + इण् (गतौ—णित्) + लोट्, सिपो ह्यादेशे रूपम् । कल्पेत = क्लृप् ( सामर्थ्ये—ऋदित् ) + शप् + सीयुट् + वि० लिङ्, तप्रत्यये "कृपो रो लः" इति रेफस्य लत्वे रूपम् ॥ १३ ॥

वाच्यान्तरं—हे राजन् ! "त्वया" सर्वत्र नो वार्त्तमवेयतां त्वयि नाथे "सति" प्रजानामशुभेन कुतः "भूयते" "हि" सूर्ये तपति "सति" लोकस्य दृष्टेरावरणाय तमिस्रया कथं कल्प्येत ॥ १३ ॥

कोशः—"प्रजा स्यात्संततौ जने" इति । "लोकस्तु भुवने जने" ।इति चामरः । "तमिस्रं-

तिमिरे कोपे पुंसि स्त्री तु तमस्तनौ। कृष्णपक्षनिशायां च" इति मेदिनी ॥ १३ ॥

तात्पर्यार्थः—हे राजन्! सूर्ये प्रकाशमाने सति यथाऽन्धकारसमूहो नश्यत्येव, तथैव त्वयि प्रजानां रक्षितरि सति तेषाममङ्गलं सर्वं नष्टम्, अतः सर्वत्रास्माकं कुशलमस्ति ॥१३॥

भाषाऽर्थः—हे राजन्! सब विषयों में हमलोगों का कुशल है यह जानो, तुम्हारे ऐसे राजा के रहने पर प्रजाओं को दुःख कहां से है, अर्थात् कहीं से भी नहीं है, क्योंकि-सूर्य के प्रकाशमान होने पर अन्धकार-समूह लोगों की दृष्टि को ढंकने के लिये किसी प्रकार से भी नहीं समर्थ होता है ॥ १३ ॥

"तवार्हतः" (५।१२) इत्यादिनोक्तं यत्तन्न चित्रमित्याह—

**भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग! तयाऽतिशेषे।**
**व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ १४ ॥**

सञ्जीविनी—भक्तिरिति। प्रतीक्ष्येषु पूज्येषु। 'पूज्यः प्रतीक्ष्यः' इत्यमरः। भक्तिरनुरागविशेषस्ते तव कुलोचिता कुलाभ्यस्ता। 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः। हे महाभाग! सार्वभौम! तया भक्त्या पूर्वानतिशेषेऽतिवर्तसे। किंतु सर्वत्र वार्तं चेत्तर्हि कथं खेदखिन्न इव दृश्यसेऽत आह—व्यतीतेति। अहं व्यतीतकालोऽतिक्रान्तकालः सन्नर्थिभावात्त्वामभ्युपेत इति मे मम विषादः ॥ १४ ॥

अन्वयः—प्रतीक्ष्येषु, भक्तिः, ते, कुलोचिता, महाभाग!, तया, पूर्वान्, अतिशेषे, तु, अहं, व्यतीतकालः, "सन्", अर्थिभावात्, त्वाम्, अभ्युपेतः, इति, मे, विषादः, "अस्ति"॥१४॥

व्याख्या-प्रतीक्ष्येषु = पूज्येषु, भक्तिः = श्रद्धा, ते = तव, कुलोचिता = वंशाभ्यस्ता, सर्व एव ते पूर्वजा राजानः पूज्यजनेषु श्रद्धावन्तोऽभूवन्निति भावः। महाभाग! = हे अतिभाग्यशालिन्, हे चक्रवर्तिन्! रघो! इत्यर्थः। तया = पूर्वोक्तया, भक्त्येत्यर्थः। पूर्वजान् = प्रागुत्पन्नान्, त्वदपेक्षया प्राचीनान् सूर्यवंश्यान् राज्ञ इत्यर्थः। अतिशेषे = अतिक्राम्यसि, तु = किन्तु, सर्वत्रत्ये कुशले सत्यपि यन्मे विषादस्तत्त्वित्यर्थः। अहं = कौत्सः, व्यतीतकालः = अतिक्रान्तसमयः, सन्निति शेषः। अर्थिभावात् = याचकतया, त्वाम् = भवन्तं, रघुमित्यर्थः। अभ्युपेतः = प्राप्तः, अस्मीति शेषः। इति = हेत्वर्थे, मे = मम, विषादः = शोकः, अस्तीति शेषः ॥ १४ ॥

समासादि—प्रतीक्ष्यत इति प्रतीक्ष्यः (पुं०) तेषु प्रतीक्ष्येषु। कुल उचितेति कुलोचिता (त० पु०)। महान् भागो यस्य तत्सम्बुद्धौ हे महाभाग! (ब०व्री०)। व्यतीतः कालो यस्यासौ व्यतीतकालः (ब० व्री०)। अर्थिनो भावोऽर्थिभावः (त० पु०) तस्मादर्थिभावात् ॥ १४ ॥

व्याकरणम्—अतिशेषे = अति + शीङ् (स्वप्ने-ङित्) + लट्, थासः से रूपम्। अभ्युपेतः = अभि + उप + इण् (गतौ-णित्) + क्तः + सु ॥१४॥

वाच्यान्तरं—प्रतीक्ष्येषु भक्त्या ते कुलोचितया "भूयते" हे महाभाग! तया पूर्वे त्वयाऽतिशय्यन्ते, मया व्यतीतकालेन "सता" अर्थिभावात्त्वामभ्युपेतेन "भूयते", इति मे विषादेन "भूयते" ॥ १४ ॥

कोशः—"भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयोः" इत्यनेकार्थसङ्ग्रहः। "भागो रूपार्धके भाग्यैकदेशयोः" इत्यपि। "विषीदति। शोचतीति च। शोके द्वे", इत्याख्यातचन्द्रिका ॥ १४ ॥

तात्पर्यार्थः—हे परमसौभाग्यशालिन् रघो! ते कुले सर्वे पूर्वजा राजानः पूज्येषु श्रद्धावन्तोऽभूवन्, परन्तु त्वं तानपि स्वकीयपूज्यविषयकश्रद्धयाऽतिक्राम्यसि, यच्चाहं सर्वस्वदानानन्तरं त्वां प्राप्तोऽस्मीति मे महान् विषादोऽस्ति ॥ १४ ॥

भापाऽर्थः—"पूज्य जनों में भक्ति रखना" यह तुम्हारे कुल में चला आया है, अतः हे परमभाग्यशाली रघु महाराज ! आप उस ( पूज्य-विपयक भक्ति ) से अपने पूर्वजों को भी लांघ गये हैं,-अर्थात् पूज्यजनों में भक्ति रखने में आप अपने पूर्वजों से भी बढ़कर हैं, किन्तु सब जगह कुशल यदि है, तो आप उदास क्यों हैं ऐसा यदि आप कहैं तो—मैं समय बीत जाने पर याचक रूप से आपके पास आया, इसीसे मुझे उदासी है ॥ १४ ॥

*अथ धनप्राप्तौ निराशः सन्नपि कौत्सो रघुं प्रशंसन्नाह—*

**शरीरमात्रेण नरेन्द्र ! तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।**

**आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥**

सञ्जीविनी—शरीरमात्रेणेति । हे नरेन्द्र ! तीर्थे सत्पात्रे प्रतिपादिता दत्तर्द्धिर्येन स तथोक्तः । 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि' ॥ इति हलायुधः । शरीरमात्रेण तिष्ठन् । आरण्यका अरण्ये भवा मनुष्या मनुप्रमुखाः । "अरण्यान्मनुष्ये" इति वुञ्प्रत्ययः । तैरुपात्ता फलमेव प्रसूतिर्यस्य स स्तम्बेन काण्डेनावशिष्टः ( प्रकृत्यादित्वात्तृतीया ) । नीवार इव । आभासि शोभसे ॥ १५ ॥

अन्वयः—नरेन्द्र !, तीर्थप्रतिपादितर्द्धिः, "त्वं" शरीरमात्रेण, तिष्ठन्, आरण्यकोपात्तफलप्रसूतिः, स्तम्बेन, अवशिष्टः, नीवारः, इव, "त्वम्" आभासि ॥ १५ ॥

व्याख्या—नरेन्द्र ! = मनुष्येश्वर !, हे रघो ! इत्यर्थः । तीर्थप्रतिपादितर्द्धिः = सत्पात्रदत्तसमृद्धिः, त्वमिति शेषः । शरीरमात्रेण = केवलदेहेन, तिष्ठन् = वर्तमानः, आरण्यकोपात्तफलप्रसूतिः = वन्यजनगृहीतफलप्रसवः । मुनिजनप्रभृतिगृहीतसस्य इत्यर्थः । स्तम्बेन = काण्डेन, अवशिष्टः = उर्वरितः, स्तम्बमात्रावशेष इत्यर्थः । नीवारः = मुनिधान्यविशेषः, इव = यथा, अभासि = विराजसे ॥ १५ ॥

समासादि—शीर्यत इति शरीरं ( न० लिं० ), शरीरमेव शरीरमात्रम् ( न० लिं० ) तेन शरीरमात्रेण । नरेष्विन्द्रो नरेन्द्रः (त०पु०) तत्सम्बुद्धौ हे नरेन्द्र ! । तिष्ठतीति तिष्ठन् (पुं०) । तीर्थे प्रतिपादिता तीर्थप्रतिपादिता (त०पु०), सा ऋद्धिर्यस्य स तीर्थप्रतिपादितर्द्धिः (ब०व्री०) । अरण्ये भवा आरण्यकाः ( पुं० ), आरण्यकैरुपात्ता आरण्यकोपात्ता ( त० पु० ), फलमेव प्रसूतिः फलप्रसूति. ( क०धा० ), आरण्यकोपात्ता फलप्रसूतिर्यस्य स आरण्यकोपात्तफलप्रसूतिः ( ब० व्री० ) ॥ १५ ॥

व्याकरणम्—आभासि = आङ्+भा ( दीप्तौ )+लट्, सिपि रूपम् । अवशिष्टः = अव+शिष्लृ ( विशेषणे-लृदित् )+क्तः+सु ॥ १५ ॥

वाच्यान्तरं—'हे' नरेन्द्र ! तीर्थप्रतिपादितर्द्धिना शरीरमात्रेण तिष्ठताऽऽरण्यकोपात्तफलप्रसूतिना स्तम्बेनावशिष्टेन नीवारेणेवाभायते ॥ १५ ॥

कोशः—"तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी । "स्तम्बो गुल्मे तृणादीनामकाण्डद्रुमगुच्छयोः" इति हैमः ॥ १५॥

तात्पर्यार्थः—हे राजन् ! सत्पात्रे सर्वस्वदानेन सम्प्रति केवलेन शरीरेणापि तिष्ठंस्त्वं तथा शोभसे, यथा वनवासिभिर्मुनिप्रमुखैर्गृहीतो नीवारो गुल्ममात्रावशिष्टः शोभते ॥ १५ ॥

भापाऽर्थ —हे राजन् ! सत्पात्रों को अपनी सारी सम्पत्ति दे देने से केवल बचे हुये शरीर से स्थित आप वन के रहने वाले मुनि जन आदिकों से फल तोड़ लिये गये डंठ मात्र से बचे हुये नीवार नामक मुनिधान्य के समान सुशोभित होरहे हैं ॥ ११५ ॥

*कौत्सो रघोर्मखजस्य निर्धनत्वस्य समीचीनत्वं पुनर्दृष्टान्तान्तरेण प्रदर्शयन्नाह—*

**स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति ।**

**पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥**

सञ्जीविनी–स्थान इति। भवानेकनराधिपः सार्वभौमः सन्। मखजं मखजन्यम्। न विद्यते किंचन यस्येत्यकिंचनः। (मयूरव्यंसकादित्वात्तत्पुरुषः)। तस्य भावस्तत्त्वं निर्धनत्वं व्यनक्ति प्रकटयति। स्थाने युक्तम्। 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः। तथाहि सुरैर्देवैः पर्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयो वृद्धेरुपचयाच्छ्लाघ्यतरो हि वरः खलु। (मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः। कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः॥) इति भावः। अत्र कामन्दकः–(धर्मार्थक्षीणकोषस्य क्षीणत्वमपि शोभते। सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव॥) इति॥ १६॥

अन्वयः—भवान्, एकनराधिपः, सन्, मखजम्, अकिञ्चनत्वं, व्यनक्ति, स्थाने, "तथाहि", सुरैः, पर्यायपीतस्य, हिमांशोः, कलाक्षयः, वृद्धेः, श्लाघ्यतरः, हि, "अस्ति"॥ १६॥

व्याख्या—भवान्=त्वं, रघुरिति यावद्। एकनराधिपः=मुख्यमनुजेश्वरः, चक्रवर्तीत्यर्थः। सन्=वर्तमानः, मखजं=क्रतुजन्यम्, अकिञ्चनत्वं=निर्धनतां, धनराहित्यमित्यर्थः। व्यनक्ति=आविष्करोति, दर्शयतीत्यर्थः। इति यत्तदिति शेषः। स्थाने=युक्तं, तथाहीति शेषः। सुरैः=अमरैः, पर्यायपीत(१)स्य=क्रमाचमितस्य, हिमांशोः=चन्द्रस्य, कलाक्षयः=षोडशांशनाशः। वृद्धेः=वर्धनाद्, वृद्ध्यपेक्षयेत्यर्थः। श्लाघ्यतरः=श्रेयान्, अत्युत्तम इत्यर्थः। हि=खलु, अवधारणेऽर्थेऽव्ययमेतद्। अस्तीति शेषः॥ १६॥

समासादि—नराणामधिपो नराधिपः (त० पु०), एकश्चासौ नराधिप इत्येकनराधिपः (क० धा०)। न विद्यते किञ्चन यस्य सोऽकिञ्चनः (ब० व्री०) तस्य भावोऽकिञ्चनत्वं (न० लि०) तत्तथोक्तम्। मखाज्जातमिति मखजं (त० पु०) तत्तथोक्तम्। पर्यायेण पीतः पर्यायपीतः (त० पु०) तस्य पर्यायपीतस्य। कलानां क्षयः कलाक्षयः (त० पु०)। अतिशयेन श्लाघ्यः श्लाघ्यतरः (पुं०)॥ १६॥

व्याकरणं—व्यनक्ति=वि+अन्जु (व्यक्तिम्रक्षणकान्तिगतिषु-उदित्)+श्नम्+लट्, तिपि "श्नान्नलोपः" इति नकारलोपे रूपम्॥ १६॥

वाच्यान्तरं—भवतैकनराधिपेन सता मखजमकिञ्चनत्वं व्यज्यते, सुरैः पर्यायपीतस्य हिमांशोः कलाक्षयेण वृद्धेः श्लाघ्यतरेण "भूयते" हि॥ १६॥

कोशः—"यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः। "पिबत्याचामति धयत्यपि चूषति पीयते। पाने" इत्याख्यातचन्द्रिका। "कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयोः" इति मेदिनी॥ १६॥

तात्पर्यार्थः—यथा देवैः क्रमेण पीतस्य चन्द्रस्य कलाह्रासो गौरवमेव वर्धयति तथैव विश्वजिद्यज्ञे सर्वस्वदानजन्यं निर्धनत्वमपि भवतां गौरवमेव वर्धयति॥ १६॥

भाषार्थ—आप अद्वितीय महाराज (चक्रवर्ती) होते हुये भी जो विश्वजिद् यज्ञ में सर्वस्व दान करने से उत्पन्न निर्धनता को प्रगट कर रहे हैं, वह उचित है, (बहुत भला मालूम पड़ता है), क्योंकि–देवताओं से क्रम से पीये गये चन्द्रमा की कलाओं का क्षय होना बढनेकी अपेक्षा निश्चय करके अधिकतर प्रशंसनीय होता है॥ १६॥

---

(१) देवानां क्रमेण चन्द्रकलानां पानमुक्तं, तद्–यथा—'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः। विश्वेदेवास्तृतीयान्तु चतुर्थीं सलिलाधिपः॥ पञ्चमीन्तु वषट्कारः षष्ठीं पिबति वासवः। सप्तमीमृषयो दिव्या अष्टमीमज एकपात्॥ नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम्। दशमीं पिबते वायुः पिबन्त्येकादशीमुमा॥ द्वादशीं पितरः सर्वे सम प्राश्नन्ति भागशः। त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम्॥ चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः" इति।

*कौत्सो रघोर्मखजं निर्धनत्वं स्तुत्वाऽन्यतो गुरुधनमाहर्तुं स्वकीयमन्यत्रगमनं तम्प्रति विज्ञापयन्नाह—*

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

सञ्जीविनी–तदिति । तत्तस्मात्तावदनन्यकार्यः। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति विश्वः । प्रयोजनान्तररहितोऽहमन्यतो वदान्यान्तराद् गुर्वर्थं गुरुधनमाहर्तुमर्जयितुं यतिष्य उद्योक्ष्ये। ते तुभ्यं स्वस्ति शुभमस्तु । "नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" इत्यनेन चतुर्थी । तथाहि । चातकोऽपि । (धरणीपतितं तोयं चातकानां रुजाकरम्) इति हेतोरनन्यगतिकोऽपीत्यर्थः । निर्गलितोऽम्ब्वेव गर्भो यस्य तं शरद्घनं नार्दति न याचते । 'अर्द-गतौ याचने च' इति धातुः । 'याचनाऽर्थं रणेऽर्दनम्' इति यादवः ॥ १७ ॥

अन्वयः—तत्, तावद्, अनन्यकार्यः, अहम्, अन्यतः, गुर्वर्थम्, आहर्तुं, यतिष्ये, ते, स्वस्ति, अस्तु, "तथाहि" चातकः, अपि, निर्गलिताम्बुगर्भं, शरद्घनं, न, अर्दति ॥ १७ ॥

व्याख्या—तत् = तस्माद्, निर्धनतया त्वत्तो द्रव्याप्त्यसम्भवादित्यर्थः । तावद् = अवध्यर्थं, यावदभीष्टद्रव्याप्तिर्न स्यात्तावदित्यर्थः । अनन्यकार्यः = कार्यान्तररहितः, अहं = कौत्सः, अन्यतः = अन्यस्माद्, वदान्यान्तरादित्यर्थः । गुर्वर्थम् = उपाध्यायवित्तं, चतुर्दशकोटिमितमित्यर्थः । आहर्तुम् = उपार्जयितुं, यतिष्ये = उद्योक्ष्ये, प्रयत्नं करिष्यामीत्यर्थः । ते = तुभ्यं, रघव इत्यर्थः । स्वस्ति = कल्याणम्, अस्तु = भवतात्, तथाहीति शेषः । चातकः = स्तोककः, पपीहेतिनाम्ना लोके ख्यातः पक्षिविशेष इति भावः । अपि = समुच्चयेऽर्थे, निर्गलिताम्बुगर्भं = प्रस्रुतजलशालिमध्यं, जलरहितमध्यभागमित्यर्थः । शरद्घनं = शरदृतुसम्बन्धिमेघं, न = नहि, अर्दति = याचते ॥ १७ ॥

समासादि—अन्यच्च तत्कार्यमन्यकार्यं (क० धा०), अविद्यमानमन्यकार्यं यस्य सोऽनन्यकार्यः (ब० व्री०) । गुरोरर्थो गुर्वर्थः (त० पु०) तं गुर्वर्थम् । निर्गलितमम्बु यस्मात्स निर्गलिताम्बुः (ब० व्री०) निर्गलिताम्बुर्गर्भो यस्य स निर्गलिताम्बुगर्भः (ब० व्री०) तं निर्गलिताम्बुगर्भम् । शरदो घनः शरद्घनः (त० पु०) तं शरद्घनम् ॥ १७ ॥

व्याकरणम्—आहर्तुम् = आङ् + हृञ् (हरणे-ञित्) + तुमुन् । यतिष्ये = यती (प्रयत्ने-ईदित्) + इट् + स्य + लृट्, इट्प्रत्यये रूपम् । अर्दति = अर्द (गतौ याचने च-अकारेत्) + लट्, लटस्तिप्प्रत्यये रूपम् ॥ १७ ॥

वाच्यान्तरं—तत् तावदनन्यकार्येण मयाऽन्यतो गुर्वर्थमाहर्तुं यतिष्यते ते स्वस्त्यस्तु चातकेनापि निर्गलिताम्बुगर्भः शरद्घनो नार्द्यते ॥ १७ ॥

कोशः—"गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके । मध्ये" इति विश्वमेदिन्यौ । "शरत् स्त्री वत्सरेऽप्यृतौ" इति मेदिनी । "अथ शारङ्गः स्तोककश्चातकः समाः" इत्यमरः ॥ १७ ॥

तात्पर्यार्थः—तव निर्धनतयाऽहं, यावदभीष्टद्रव्यप्राप्तिर्न भवेत् तावद् वदान्यान्तराद् गुरोर्दक्षिणास्वरूपं चतुर्दशकोटिमितं द्रव्यमर्जयितुं प्रयत्नशीलो भवेयं, तथाहि—यदा चातकः पक्षिविशेषोऽनन्यगतिकः सन्नपि जलरहितं शरन्मेघं न याचते, तदाऽस्मादृशो मनुष्यः कथं याचेत ? ॥ १७ ॥

भाषार्थः—इस (आपकी निर्धनता के) कारण से (जब तक अभीष्ट द्रव्य की प्राप्ति न होवे) तब तक गुरु दक्षिणा देने के अलावा दूसरा कोई प्रयोजन नहीं रखने वाला मैं (कौत्स ऋषि) दूसरे किसी दाता के पास से गुरु वरतन्तु महर्षि के लिये धन उपार्जन करने के लिये कोशिस करूंगा, तुम्हारा कल्याण होवै, और (पृथ्वी पर गिरा हुआ जल रोग कारक होने से केवल मेघ का ही जल पीने वाला) चातक (पपीहा) पक्षी भी जब

जलरहित ( जिसके मध्यभाग से जल निकल गया है ) शरत् काल के मेघ से जल को याचना नहीं करता है, तब मनुष्य हो कर हमारा मांगना आप से उचित नहीं ॥ १७ ॥

*पूर्वोक्तवाक्यमुक्त्वा गन्तुकामं कौत्सं निषिध्य, गुरवे प्रदेयं वस्तु किमात्मकं किम्परिमाणं वाऽस्तीति तं रघुः पृच्छन्नाह—*

**एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य ।**
**किं वस्तु विद्वन् ! गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ॥ १८ ॥**

सञ्जीविनी—एतावदिति । एतावद्वाक्यमुक्त्वा प्रतियातुं कामो यस्य तं प्रतियातुकामं गन्तुकामम् । 'तुंकाममनसोरपि" इति मकारलोपः । महर्षेर्वरतन्तोः शिष्यं कौत्स नृपती रघुर्निषिध्य निवार्य । हे विद्वन् ! त्वया गुरवे प्रदेयं वस्तु किं किमात्मकं कियत्किंपरिमाणं वा । इत्येवं तं कौत्समन्वयुङ्क्तापृच्छत् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥ १८ ॥

अन्वयः—एतावद्, उक्त्वा, प्रतियातुकामं, महर्षेः, शिष्यं, नृपतिः, निषिध्य, विद्वन् !, त्वया, गुरवे, प्रदेयं, वस्तु, किं, कियत्, वा, इति, तम्, अन्वयुङ्क्त ॥ १८ ॥

व्याख्या—एतावद् = इयत्, पूर्वोक्तं वाक्यमित्यर्थः । उक्त्वा = कथयित्वा, प्रतियातुकामं = गन्तुमनसम्, अन्यत्र जिगमिषुमित्यर्थः । महर्षेः = अतिसत्यवचसः, वरतन्तोरित्यर्थः । शिष्यं = छात्रं, कौत्समित्यर्थः । नृपतिः = मनुजेश्वरः, रघुरित्यर्थः । निषिध्य = निवार्य, हे विद्वन् ! = हे प्राज्ञ !, त्वया = भवता, गुरवे = उपाध्यायाय, वरतन्तुमहर्षय इत्यर्थः । प्रदेयं = प्रदानार्हं, वस्तु = पदार्थः, किं = किंरूपं, कियत् = किम्परिमाणं, वा = समुच्चयेऽर्थे, अस्तीति शेषः । इति = एवं, तं = पूर्वोक्तं, कौत्समित्यर्थ. । अन्वयुङ्क्त = पृष्टवान् ॥ १८ ॥

समासादि—प्रतियातुं कामो यस्य स प्रतियातुकामः ( ब० व्री० ) तं प्रतियातुकामम् । महाँश्चासावृषिर्महर्षिः ( क० धा० ) । तस्य महर्षेः । नृषु पतिर्नृपतिः ( त० पु० ) । प्रदातुं योग्यं प्रदेयम् ( न० लिं० ) ॥ १८ ॥

व्याकरणम्—उक्त्वा = वच (परिभाषणे-अकारेत्) + क्त्वा, "वचिस्वपी"त्यादिना सम्प्रसारणे पूर्वरूपे रूपम् । निषिध्य = नि + ( षिधु ( संराद्धौ-उदित् ) सिध् + क्त्वा + ल्यप्, "उपसर्गात् सुनोती"त्यादिना सस्य षत्वे रूपम् । अन्वयुङ्क्त = अनु + अट् + युजिर् ( योगे-इरित् ) + श्नम् + लङ्, तप्रत्यये "श्नसोरल्लोपः"इत्यकारलोपे कुत्वे चर्त्वे परसवर्णे रूपम् ॥१८॥

वाच्यान्तरम्—एतावदुक्त्वा प्रतियातुकामो महर्षेः 'शिष्यो नृपतिना निषिध्य हे विद्वन् ! त्वया गुरवे प्रदेयेन वस्तुना केन कियता वा "भूयते" इति सोऽन्वयुज्यत ॥ १८ ॥

कोशः—"कामं बाढेऽनुमतिरेतसोः । काम्यः स्वेच्छाकाम्येषु" इति हैमः । "छात्रान्तेवासिनौ शिष्ये" इत्यमरः ॥ १८ ॥

तात्पर्यार्थः—एवं पूर्वोक्तप्रकारेणोक्त्वाऽन्यत्र जिगमिषुं कौत्सं रघुर्निवार्य हे विद्वन् ! भवता गुरवे दक्षिणास्वरूपं यद् वस्तु दित्स्यते तस्य किंस्वरूपं किंमानं वाऽस्तीति तं पप्रच्छ ॥१८॥

भाषाऽर्थः—इतनी बात कह कर जाने की इच्छा करने वाले महर्षि वरतन्तु के शिष्य कौत्स ऋषि को महाराज रघु ने रोक कर-हे विद्वन् ? आप को जो गुरुजी के लिये देना है, वह वस्तु कौन सी और कितनी है, यह उनसे पूछा ॥ १८ ॥

*अथ कौत्सो रघोः प्रश्नोत्तरं दित्सुराह—*

**ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ।**
**वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥**

सञ्जीविनी—तत इति । ततो यथावद्यथाऽर्हम् । अर्हार्थे वतिः । विहिताध्वराय विधिवदनुष्ठितयज्ञाय । सदाचारायेत्यर्थः । स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय । अनुद्धतायेत्यर्थः । वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च गुरवे नियामकाय । 'वर्णाः स्युर्ब्राह्मणा-

दयः' इति । 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री' इति चामरः । सर्वकार्यनिर्वाहकायेत्यर्थः । तस्मै रघवे विचक्षणो विद्वान्वर्णी ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिण.' इत्यमरः । "वर्णाद् ब्रह्मचारिणि" इतीनिप्रत्ययः । स कौत्सः प्रस्तुतं प्रकृतमाचचक्षे ॥ १९ ॥

अन्वयः—ततः, यथावद्, विहिताध्वराय, स्मयावेशविवर्जिताय, वर्णाश्रमाणां, गुरवे, तस्मै, विचक्षणः, वर्णी, सः, प्रस्तुतम्, आचचक्षे ॥ १९ ॥

व्याख्या—ततः = तदनन्तरं, यथावद् = यथाविधि, शास्त्रानुरूपमित्यर्थः । विहिताध्वराय = सम्पादितयागाय, श्रुतिस्मृत्यनुमोदितकार्यकर्त्रे सदाचारसम्पन्नायेत्यर्थः । स्मयावेशविवर्जिताय = गर्वप्रवेशरहिताय, निरभिमानायेत्यर्थः । वर्णाश्रमाणां = ब्राह्मणादिब्रह्मचर्यादीनां, गुरवे = धर्मोपदेशकाय, नियन्त्र इत्यर्थः । तस्मै = पूर्वोक्ताय, रघव इत्यर्थः । विचक्षणः = पण्डितः, वर्णी = ब्रह्मचारी, सः = पूर्वोक्तः, कौत्स इत्यर्थः । प्रस्तुतम् = उपक्रान्तं, गुरुदक्षिणाया वस्तुनः स्वरूपं मानं चेति भावः । आचचक्षे = आख्यातवान् ॥ १९ ॥

समासादि—यथाऽर्हमिति यथावद् ( अ० ) । विहितोऽध्वरो येन स विहिताध्वरः ( ब० ब्री० ) तस्मै विहिताध्वराय । स्मयस्यावेगः स्मयावेशः ( त० पु० ), स्मयावेशेन विवर्जितः स्मयावेशविवर्जितः ( त० पु० ) तस्मै स्मयावेशविवर्जिताय । वर्णाश्चाश्रमाश्चेति वर्णाश्रमाः ( द्व० ) तेषां वर्णाश्रमाणाम् । वर्णः प्रशस्तिरस्यास्तीति वर्णी ( पुं० ) । विचष्ट इति विचक्षणः ( पुं० ) ॥ १९ ॥

व्याकरणम्—आचचक्षे = आङ् + चक्षिङ् ( व्यक्तायां वाचि-इडित् ) + लिट्, द्वित्वेऽभ्यासकार्ये तप्रत्यये रूपम् ॥ १९ ॥

वाच्यान्तरं—ततो यथावद् विहिताध्वराय स्मयावेशविवर्जिताय वर्णाश्रमाणां गुरवे तस्मै विचक्षणेन वर्णिना तेन प्रस्तुत आचचक्षे ॥ १९ ॥

कोशः—"प्रक्रमते प्रारभते प्रस्तौत्युद्घातयत्यपि । प्रस्तुते चोपक्रमते दशोपक्रमतेऽप्यमी । अभ्यादत्ते प्रक्रमत उपजानात्युपक्रमे" इत्याख्यातचन्द्रिका ॥ १९ ॥

तात्पर्यार्थः—तदनन्तरं ब्रह्मचारी कौत्स ऋषिः शास्त्रोक्तरीत्या यज्ञादिकारिणं निरभिमानं सकलवर्णाश्रमनियामकं तं रघुं प्रति प्रकृतविषयमुवाच ॥ १९ ॥

भाषाऽर्थः—उसके बाद शास्त्रानुकूल यज्ञ को जिसने किया है, और जो गर्व के आवेश से शून्य है अर्थात् अहङ्कार शून्य हैं, ऐसे चारो (ब्राह्मण-क्षत्रिय-वैश्य-शूद्र) वर्णों और चारो (ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-सन्यास) आश्रमों को अपने २ मार्ग पर चलाने वाले उन रघु महाराज से पण्डित और ब्रह्मचारी वे कौत्स ऋषि प्रकृत विषय को कहने लगे ॥ १९ ॥

*अथ प्रकृतविषयमाचक्षाणः कौत्स आदौ गुरुदक्षिणायै साग्रहं कृतं गुरौ निवेदनमेव रघुं प्रत्याह—*

**समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद् गुरुदक्षिणायै ।**
**स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥**

सञ्जीविनी—समाप्तेति । समाप्तविद्येन मया महर्षिर्गुरुर्दक्षिणायै गुरुदक्षिणास्वीकारार्थं विज्ञापितोऽभूत् । स च गुरुश्चिरायास्खलितोपचारां तां दुष्करां मे भक्तिमेव पुरस्तात्प्रथममगणयत्संख्यातवान् । भक्त्यैव संतुष्टः किं दक्षिणयेत्युक्तवानित्यर्थः । अथवा भक्तिमेव तां दक्षिणामगणयदिति योज्यम् ॥ २० ॥

अन्वय.—समाप्तविद्येन, मया, महर्षिः, गुरुदक्षिणायै, विज्ञापितः, अभूत्, सः, "च" चिराय, अस्खलितोपचारां, तां, मे, भक्तिम्, एव, पुरस्ताद्, अगणयत् ॥ २० ॥

व्याख्या—समाप्तविद्येन = लब्धचतुर्दशविद्येन, मया = कौत्सेन, महर्षि = अतिसत्यवचाः, वरतन्तुरित्यर्थः । गुरुदक्षिणायै = गुरुदक्षिणाऽङ्गीकारार्थं, विज्ञापितः = निवेदितः, अभूत् =

आसीत्, सः = पूर्वोक्तः, मद्गुरुरित्यर्थः । चेति शेषः । चिराय = चिरेण, बहुसमयमित्यर्थः । अस्खलितोपचारां = निरन्तरकृतपादसम्वाहनप्रभृतिरूपोपचर्या, तां = पूर्वोक्तां, दुःसाध्यामित्यर्थः । मे = मम, भक्ति = सेवाम्, एव = अवधारणेऽर्थे, पुरस्ताद् = अग्रतः, अगणयत् = परिगणयति स्म, तव निर्व्याजभक्त्यैव प्रसन्नोऽस्मि किं दक्षिणयेत्यवोचदित्यर्थः ॥ २० ॥

समासादि—समाप्ता विद्या येन स समाप्तविद्यः (ब० व्री०) तेन समाप्तविद्येन । गुरोर्दक्षिणा गुरुदक्षिणा (त०पु०) तस्यै गुरुदक्षिणायै । न स्खलित इत्यस्खलितः (न० त० पु०), अस्खलित उपचारो यस्याः साऽस्खलितोपचारा (त०पु०) तामस्खलितोपचाराम् ॥ २० ॥

व्याकरणम्—अभूत् = अट् + भू (सत्तायाम्) + च्लि + लुङ् + लुङस्तिपि रूपम् । अगणयत् = अट् + (गण (सङ्ख्याने—अदन्तोऽयम्) + णिच्) गणि, + शप्, + लङ्, लङस्तिपि रूपम् ॥ २० ॥

वाच्यान्तरं—समाप्तविद्योऽहं महर्षि गुरुदक्षिणायै विज्ञापितवानभूवम् (समाप्तविद्येन मया गुरुदक्षिणायै विज्ञापितेन महर्षिणाऽभावि) तेन "च" अस्खलितोपचारा सा मे भक्तिरेवागण्यत ॥ २० ॥

कोशः—"दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्" इति मेदिनी । "स्खलितं छलिते भ्रेषे" इति हैमः । "भक्तिः सेवागौणवृत्त्योः" इत्यनेकार्थसङ्ग्रहः । "पुरस्तात्प्रथमेऽग्रतः" इत्यपि ॥ २० ॥

तात्पर्यार्थः—गुरोः सकाशाच्चतुरो वेदान् षडङ्गानि मीमांसां न्यायं, पुराणं, धर्मशास्त्रं च सम्यगधीत्य यदा गुरुदक्षिणाऽर्थं मया स प्रार्थितस्तदा तेन निरन्तरं मत्कृता पादसंवाहनादिरूपा दुष्करा सेवैव दक्षिणाऽमानि ॥ २० ॥

भाषाऽर्थः—१४ विद्याओं को प्राप्त किये हुये हम ने गुरुदक्षिणा के लिये महर्षि वरतन्तु जी से जब प्रार्थना की, तब उन्हों ने बहुत दिन तक नियम-पूर्वक मुझ से की हुई पैर दवाना आदि सेवा ही को मुख्य दक्षिणा समझा अर्थात् यह कहा कि—मैं तेरी सेवा से ही प्रसन्न हूं मुझेदक्षिणा से क्या काम है ? ॥ २० ॥

*अथ दक्षिणाऽर्थं पुनः पुनः प्रार्थनया रुष्टो गुरुश्चतुर्दशकोटिसितं धनं दक्षिणारूपमानेतुं मामादिष्टवानिति कथयन् कौत्स आह—*

निर्वन्धसंजातरुषाऽर्थकार्श्यमचिन्तयित्वा गुरुणाऽहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥

सञ्जीविनी—निर्वन्धेति । निर्बन्धेन प्रार्थनाऽतिशयेन संजातरुषा संजातक्रोधेन गुरुणा । अर्थकार्श्यं दारिद्र्यमचिन्तयित्वाऽविचार्याहम् । वित्तस्य धनस्य चतस्रो दश च कोटीश्चतुर्दशकोटीर्मे मह्यमाहरानयेति विद्यापरिसंख्या विद्यापरिसंख्याऽनुसारेणैवोक्तः । अत्र मनुः-(अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ इति ॥ २१ ॥

अन्वयः—निर्बन्धसञ्जातरुषा, गुरुणा, अर्थकार्श्यम्, अचिन्तयित्वा, अहं, वित्तस्य, चतस्रः, दश, च, कोटीः, मे, आहर, इति, विद्यापरिसङ्ख्यया, उक्तः ॥ २१ ॥

व्याख्या—निर्बन्धसञ्जातरुषा = अतिप्रार्थनाजन्यकोपशालिना, गुरुणा = उपाध्यायेन, वरतन्तुमहर्षिणेत्यर्थः । अर्थकार्श्यं = धनतनिमानं, निर्धनत्वमित्यर्थः । अचिन्तयित्वा = अनालोच्य, अहं = कौत्सः, वित्तस्य = द्रव्यस्य, चतस्रः = चतुष्टयं, दश = दशकं, च = समुच्चयेऽर्थे, चतुर्दशेत्यर्थः । कोटीः = लक्षशतकानि, मे = मह्यम्, आहर = आनय, इति = एवं, विद्यापरिसङ्ख्यया = चतुर्दशविद्यापरिगणनानुसारेण, एवेति शेषः । उक्तः = कथितः, आदिष्टइत्यर्थः ॥ २१ ॥

समासादि—निर्बन्धेन सञ्जाता निर्बन्धसञ्जाता (त० पु०), सा रुड् यस्य स निर्बन्ध-

सञ्जातरुट् ( ब० व्री० ) तेन निर्बन्धसञ्जातरुषा । कृशस्य भावः कार्श्यम् (न०लिं०) अर्थस्य कार्श्यमित्यर्थकार्श्यम् ( त० पु० ) तत्तथोक्तम् । विद्यानां परिसंख्या विद्यापरिसंख्या ( त० पु० ) तया विद्यापरिसंख्यया ॥ २१ ॥

व्याकरणम्—अचिन्तयित्वा = नञ् + (चिति( स्मृत्याम्—इदित् ) + नुम् + णिच्) चिन्ति + इट् + क्त्वा । उक्तः = वच (परिभाषणे—अकारेत्) + क्तः + सु, "वचिस्वपी"त्यादिना संप्रसारणे रूपम् । आहर = आङ् + हृञ् ( हरणे—ञित् ) + शप् + लोट्, सिपो ह्यादेशे रूपम् ॥ २१ ॥

वाच्यान्तरं—निर्बन्धसंजातरुड् गुरुरर्थकार्श्यमचिन्तयित्वा मां वित्तस्य चत्वारो दश च कोट्यो म आह्रियन्तामिति विद्यापरिसंख्ययैवोक्तवान् ॥ २१ ॥

कोशः—"स्तोकाल्पक्षुल्लकाः श्लक्ष्णं दभ्रं कृशं तनु । स्त्रियां मात्रा त्रुटी पुंसि लवलेशकणाणवः" इत्यमरः । "वित्तं क्लीबन्धने वाच्यलिङ्गं ख्याते विचारिते" इति मेदिनी ॥ २१ ॥

तात्पर्यार्थः—मुहुर्मुहुर्दक्षिणाग्रहणार्थं मया प्रार्थ्यमानो गुरुः सञ्जातरोषतया मदीयां निर्धनतामनपेक्ष्यैव यावत्यो विद्याः पठितास्तावत्सङ्ख्याऽनुसारतश्चतुर्दशकोटिमितं सुवर्णमानयेति मामादिष्टवान् ॥ २१ ॥

भाषाऽर्थः—वारम्वार दक्षिणा ग्रहण करने के लिये प्रार्थना करने से जिसे क्रोध उत्पन्न हो गया था ऐसे गुरुजी ने मेरी दरिद्रता की तरफ ख्याल न करके "१४ करोड द्रव्य मेरे लिये लाओ" ऐसा जितनी विद्या पढ़ी थी उतनी विद्या की संख्या के अनुसार से ही मुझ से कहा ॥ २१ ॥

*संप्रति भवन्तं निःस्वं मत्वा निजाभीप्सितद्रव्याप्तिमसम्भाव्य चान्यत्र जिगमिषुरस्मीति बोधयन् कौत्सो रघुम्प्रत्याह—*

सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे संप्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

सञ्जीविनी—सोऽहमिति । सोऽहं सपर्याविधिभाजनेनार्घ्यपात्रेण भवन्तं प्रभुशब्द एव शेषो यस्य तं मत्वा । निःस्वं निश्चित्येत्यर्थः । श्रुतनिष्क्रयस्य विद्यामूल्यस्याल्पेतरत्वादतिमहत्त्वात्संप्रत्युपरोद्धुं नाभ्युत्सहे ॥ २२ ॥

अन्वयः—सः, अहं, सपर्याविधिभाजनेन, भवन्तं, प्रभुशब्दशेषं, मत्वा, श्रुतनिष्क्रयस्य, अल्पेतरत्वात्, सम्प्रति, उपरोद्धुं, न, अभ्युत्सहे ॥ २२ ॥

व्याख्या—सः = पूर्वोक्तः, दक्षिणाऽऽनयनार्थं गुरुणाऽऽदिष्ट इत्यर्थः । अहं = कौत्सः, सपर्याविधिभाजनेन = परिचर्याविधानपात्रेण, मृण्मयार्घ्यपात्रेणेत्यर्थः । भवन्तं = त्वां, रघुमित्यर्थः । प्रभुशब्दशेषम् = ईश्वरेत्यक्षरमात्रावशिष्टं, निःस्वमित्यर्थः । मत्वा = ज्ञात्वा, निश्चित्येर्थः । श्रुतनिष्क्रयस्य = शास्त्रमूल्यस्य, गुरुदक्षिणाया इति भावः । अल्पेतरत्वाद् = स्तोकान्यत्वाद्, महीयस्त्वादित्यर्थः । सम्प्रति = इदानीम्, उपरोद्धुम् = अनुरोद्धुं, बाध्यं कर्त्तुमित्यर्थः । न = नहि, अभ्युत्सहे = उत्साहं करोमि ॥ २२ ॥

समासादि—सपर्याया विधिरिति सपर्याविधिः ( त० पु० ), सपर्याविधेर्भाजनमिति सपर्याविधिभाजनं ( त० पु० ) तेन तथोक्तेन । प्रभुरिति शब्दः प्रभुशब्दः ( क० धा० ), स एव शेषो यस्य स प्रभुशब्दशेषः ( ब० व्री० ) तं प्रभुशब्दशेषम् । अल्पादितरोऽल्पेतरः ( त० पु० ), तस्य भावोऽल्पेतरत्वम् (न०लिं०) तस्मादल्पेतरत्वाद् । श्रुतस्य निष्क्रयः श्रुतनिष्क्रयः ( त० पु० ) तस्य श्रुतनिष्क्रयस्य ॥ २२ ॥

व्याकरणं—मत्वा = मनु ( अवबोधने—उदित् ) + क्त्वा + ल्यप् । उपरोद्धुम् = उप + रुधिर् ( आवरणे-इरित् ) + तुमुन् । अभ्युत्सहे = अभि + उद् + ( षह ( मर्षणे—अकारेत् )

सह+लट्, इट्प्रत्यये रूपम् ॥ २२ ॥

वाच्यान्तरं—तेन मया सपर्याविधिभाजनेन भवान् प्रभुशब्दशेषो मत्वा श्रुतनिष्क्रयस्याऽपेतरत्वात् सम्प्रत्युपरोद्धुं नाभ्युत्सह्यते ॥ २२ ॥

कोशः—"भाण्डं पात्रामत्रं च भाजनम्" इत्यमरः । विधिर्ब्रह्मविधानयोः । विधिर्वाक्ये च दैवे च प्रकारे कालकल्पयोः" इत्यनेकार्थसङ्ग्रहः । "श्रुतं शास्त्रावधृतयोः" इत्यमरः ॥ २२ ॥

तात्पर्यार्थ.—सोऽहमिदानीं मृण्मयार्घ्यपात्रदर्शनादेव राजशब्दमात्रावशिष्टं भवन्तं निःस्वं मत्वा स्वकीयगुरुदक्षिणाऽर्थकं द्रव्यञ्चातिबहुलमालोच्य नाहमतः परं किमपि वक्तुं समुत्सहे, ततो गमनमेव वरम् ॥ २२ ॥

भाषाऽर्थः—"गुरुकी आज्ञा से मांगने के लिये जो आया हुआ हूँ" वह मैं पूजन करने का पात्र अर्थात् मृण्मय अर्घ्यपात्र द्वारा आपको केवल "प्रभु" यह शब्द जिसके पास बच गया है, ऐसा समझकर अर्थात्-बिलकुल धन से रहित जानकर विद्या का मूल्य ( गुरु-दक्षिणा ) बहुत अधिक ( १४ करोड़ ) होने से इस समय आप देवें इस के लिये बाध्य करने में मुझे उत्साह नहीं होता है । अर्थात् आपकी हालत देख कर मुझे कुछ कहने का साहस नहीं होता, अतः मेरा जाना ही उचित है ॥ २२ ॥

*पूर्वोक्तं कौत्सवचः श्रुत्वा रघुः पुनस्तमुवाचेत्याह—*

**इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ।**
**एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३ ॥**

सञ्जीविनी—इत्थमिति । द्विजराजकान्तिश्चन्द्रकान्तिः । 'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः' इत्यमरः । [ तस्मात्सोमो राजा नो ब्राह्मणानाम् ] इति श्रुतेः । द्विजराजकान्तित्वेनार्थावाप्तिवैराग्यं वारयति । एनसः पापान्निवृत्तेन्द्रियवृत्तिर्यस्य स जगदेकनाथो रघुर्वेदविदां वरेण श्रेष्ठेन द्विजेन कौत्सेनेत्थमावेदितो निवेदितः सन् । एनं कौत्सं भूयः पुनर्जगाद॥२३॥

अन्वयः—द्विजराजकान्तिः, एनोनिवृत्तेन्द्रियवृत्तिः, जगदेकनाथः, वेदविदां, वरेण, द्विजेन, इत्थम्, आवेदितः, "सन्", एनं, भूयः, जगाद ॥ २३ ॥

व्याख्या—द्विजराजकान्तिः=शशधरदीप्तिः, चन्द्रप्रभ-इत्यर्थः । एनोनिवृत्तेन्द्रियवृत्तिः=पापपराङ्मुखहृषीकव्यापारः, जगदेकनाथः=भुवनमुख्येश्वरः, सार्वभौमः स रघुरित्यर्थः । वेदविदां=श्रुतिवेदिनां, ब्राह्मणानामित्यर्थः । वरेण=श्रेष्ठेन, द्विजेन=द्विजन्मना, कौत्सेनेत्यर्थः । इत्थम्=अमुना प्रकारेण, आवेदितः=विज्ञापितः, सन्निति शेषः । एनं=पूर्वोक्तं, कौत्समित्यर्थः । भूयः=पुनः, जगाद=उक्तवान् ॥ २३ ॥

समासादि—द्वाभ्यां जन्मसंस्काराभ्यां जायत इति द्विज. ( पुं० ) तेन द्विजेन । द्विजानां राजेति द्विजराजः ( त० पु० ), तस्य कान्तिरिव कान्तिर्यस्य स द्विजराजकान्तिः ( ब० ब्री० ) । विदन्ति धर्ममेभिरिति वेदाः ( पुं० ), तान् विदन्तीति वेदविदः ( पुं० ) तेषां वेदविदाम् । इन्द्रियाणां वृत्तिरितीन्द्रियवृत्तिः ( त० पु० ), एनसो निवृत्तेत्येनोनिवृत्ता ( त० पु० ), सा इन्द्रियवृत्तिर्यस्य स एनोनिवृत्तेन्द्रियवृत्तिः ( ब० ब्री० ) । एकश्चासौ नाथ एकनाथः ( क० धा० ), जगतामेकनाथो जगदेकनाथः ( त० पु० ) ॥२३॥

व्याकरणम्—आवेदितः=आङ्+( विद ( ज्ञाने—अकारेत् )+णिच् )वेदि+इट्+क्तः, णेर्लोपे सौ रूपम् । जगाद=गद ( व्यक्तायां वाचि—अकारेत् )+लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ २३ ॥

वाच्यान्तरं—द्विजराजकान्तिनैनोनिवृत्तेन्द्रियवृत्तिना जगदेकनाथेन वेदविदां वरेण द्विजेनेत्थमावेदितेन "सता" एष भूयो जगदे ॥ २३ ॥

कोशः—"द्विजः स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना । द्विजा भार्यां हरेणौ च" इति ।

"वेदः श्रुतौ च वित्तौ च" इति च मेदिनी। "देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये" इत्यमरः। "एनः पापापराधयोः" इति हैमः ॥ २३ ॥

तात्पर्यार्थः—इत्थं पूर्वोक्तप्रकारेण वेदविदां प्रधानेन कौत्सेन विज्ञापितो जगदीश्वरो-रघुः पुनस्तमुवाच ॥ २३ ॥

भाषाऽर्थः—चन्द्रमा की तरह कान्ति वाले, पापों से निवृत्त इन्द्रिय वृत्ति वाले ( जितेन्द्रिय ) वे जगत् के एकमात्र प्रभु चक्रवर्त्ती रघु महाराज, वेद के जानने वालों में श्रेष्ठ ब्राह्मण ( कौत्स ऋषि ) के द्वारा पूर्वोक्त प्रकार से निवेदन किये जाने पर उन कौत्स ऋषि से फिर बोले ॥ २३ ॥

*अथ रघुः कौत्समन्यत्रगमनात्परावर्त्तयन्नाह—*

**गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।**
**गतो वदान्यान्तरमित्ययं मे माभूत्परीवादनवावतारः ॥ २४ ॥**

सञ्जीविनी—गुर्वर्थमिति। श्रुतस्य पारं दृष्टवाञ्छ्रुतपारदृश्वा। "दृशेः क्वनिप्" इति क्वनिप्। गुर्वर्थं गुरुदक्षिणाऽर्थं यथा तथाऽर्थी याचकः। विशेषणद्वयेनाप्यस्याप्रत्याख्येयत्वमाह। रघोः सकाशात्कामं मनोरथमनवाप्याप्राप्य वदान्यान्तरं दात्रन्तरं गतः। 'स्यद्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः। इत्येवंरूपोऽयं परीवादस्य नवो नूतनः प्रथमोऽवतार आविर्भावो-मे मा भून्माऽस्तु। रघोरिति स्वनामग्रहणं संभावितत्वद्योतनार्थम्। तथा च—(संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ) इति भावः ॥ २४ ॥

अन्वयः—श्रुतपारदृश्वा, गुर्वर्थम्, अर्थी, रघोः, सकाशात्, कामम्, अनवाप्य, वदान्यान्तरं, गतः, इति, अयं, परीवादनवावतारः, मे, माभूत् ॥ २४ ॥

व्याख्या—श्रुतपारदृश्वा = शास्त्रपारगामी, गुर्वर्थम् = उपाध्यायार्थं, गुरुदक्षिणार्थमित्यर्थः। क्रियाविशेषणमिदम्। अर्थी = याचकः, रघोः = दिलीपसूनोः सकाशात् = समीपात्, कामम् = अभिलाषं, मनोऽभिलषितमित्यर्थः। अनवाप्य = अनधिगम्य, वदान्यान्तरं = बहुप्रदान्तरं, गतः = यातः, इति = एवंरूपः, अयम् = एषः, परीवादनवावतारः = निन्दानवीनप्रादुर्भावः, माभूत् = न भवतु ॥ २४ ॥

समासादि—गुरव इति गुर्वर्थं ( नि० स० )। अर्थोऽस्यास्तीत्यर्थी (पुं०)। श्रुतस्य पारः श्रुतपारः ( त० पु० ), तं दृष्टवानिति श्रुतपारदृश्वा ( पुं० )। अन्यो वदान्यो वदान्यान्तरः ( नि० स० ) तं वदान्यान्तरम्। नवश्चासाववतारो नवावतारः ( क० धा० ), परीवादस्य नवावतारः परीवादनवावतारः ( त० पु० ) ॥ २४ ॥

व्याकरणम्—माभूत् = माङ् + भू ( सत्तायाम् ) + च्लि + लुङ्, तिपि "न माङ्योगे" इत्यडागमनिषेधे रूपम् ॥ २४ ॥

वाच्यान्तरं—श्रुतपारदृश्वना गुर्वर्थमर्थिना रघोः सकाशात् काममनवाप्य वदान्यान्तरो गतमित्यनेन मे परीवादनवावतारेण माभावि ॥ २४ ॥

कोशः—"वाञ्छा लिप्सा मनोरथः। कामोऽभिलाषो तर्षश्च" इति। "अवर्णाक्षेपनिर्वाद-परीवादापवादवत्। उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इति। "नवीनो नूतनो नवः" इति चामरः ॥ २४ ॥

तात्पर्यार्थः—सकलशास्त्रपारगामी कौत्सो गुरुदक्षिणार्थं याचकत्वेन रघुसमीपमागतोऽपि धनाभावतया विफलमनोरथो भूत्वा वदान्यान्तरं गत इति मे निन्दायाः प्रथमावतारो मा-भूत्, अतो भवद्गमनं नोचितमन्यत्र ॥ २४ ॥

भाषाऽर्थः—शास्त्र के पारगामी, गुरु के लिये याचना करने वाले कौत्स जी रघु के पास से मनोरथ पूर्ण न होने से दूसरे दाता के यहां गये, इस तरह का यह निन्दा का पहले पहल

नया ( अवतार ) सोहरा न होवै ॥ २४ ॥

*अथ रघुः "दिनत्रयाभ्यन्तरमेव भवद्गुरुदक्षिणाऽर्थमपेक्षितं धनं दास्यामि" इत्युक्त्वा कौत्सं निवासयामासेत्याह*—

**स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।**
**द्वित्राण्यहान्यर्हसि सोढुमर्हन् यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥**

सञ्जीविनी—स इति । स त्वं महिते पूजिते प्रशस्ते प्रसिद्धे मदीयेऽग्न्यगारे त्रेताग्निशालायां चतुर्थोऽग्निरिव वसन्द्वित्राणि द्वे त्रीणि वाऽहानि दिनानि । "संख्ययाऽव्ययाऽसन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहिः । "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच्प्रत्ययः । समासान्तः । सोढुमर्हसि । हे अर्हन् ! मान्य ! । त्वदर्थं तव प्रयोजनं साधयितुं यावद्यते यतिष्ये । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ॥ २५ ॥

अन्वयः—सः, त्वं, महिते, प्रशस्ते, मदीये, अग्न्यगारे, चतुर्थः, अग्निः, इव, वसन्, द्वित्राणि, अहानि, सोढुम्, अर्हसि, अर्हन् !, त्वदर्थं, साधयितुं, यावद्, यते ॥ २५ ॥

व्याख्या—सः = पूर्वोक्तः, त्वं = भवान्, कौत्स इत्यर्थः । महिते = पूजिते, प्रशस्ते = प्रख्याते, मदीये = मामके, अग्न्यगारे = त्रेतावह्निसदने, अग्निहोत्रशालायामित्यर्थः । चतुर्थः = चतुःसंख्यापूरकः, अग्निः = वह्निः, इव = यथा, वसन् = तिष्ठन् , निवासं कुर्वन्नित्यर्थः । द्वित्राणि = द्वे त्रीणि वा, अहानि = वासराणि, सोढुं = क्षन्तुं, यापयितुमित्यर्थः । अर्हसि = योग्यो भवसि, अर्हन् ! = हे सम्मान्य !, त्वदर्थं = भवत्प्रयोजनं, त्वन्मनोऽभीष्टमित्यर्थः । साधयितुं = पूरयितुं, यावद् = अवधारणेऽर्थे, यते = प्रयत्नं करोमि, तत्परो भविष्यामीत्यर्थः ॥ २५ ॥

समासादि—ममेदं मदीयम् ( न० लिं० ) तस्मिन् मदीये । वसतीति वसन् ( पुं० ) । अग्नेरगारोऽग्न्यगारः ( त० पु० ) तस्मिन्नग्न्यगारे । द्वे त्रीणि वा द्वित्राणि ( ब० व्री० ) तानि द्वित्राणि । अर्हतीत्यर्हन् (पुं०) तत्सम्बुद्धौ हे अर्हन् ! । तवार्थस्त्वदर्थः ( त० पु० ) तं त्वदर्थम् ॥ २५ ॥

व्याकरणम्—अर्हसि = अर्ह (पूजायाम्-अकारेत् ) + शप् + लट्, सिपि रूपम् । सोढुम् = षह ( मर्षणे-अकारेत् ) + तुमुन्, "सहिवहोरोदवर्णस्य" इत्योत्वे रूपम् । यते = यती ( प्रयत्ने-ईदित् ) + शप् + लट्, इटि रूपम्, भविष्यदर्थेऽत्र लट् प्रत्ययः ॥ २५ ॥

वाच्यान्तरं—तेन त्वया महिते प्रशस्ते मदीयेऽग्न्यगारे चतुर्थेनाग्निनेव वसन् द्वित्राण्यहानि सोढुमर्ह्यते यावत् त्वदर्थं साधयितुं "मया" यत्यते ॥ २५ ॥

कोशः—"गृहं गेहोदवसितं वेश्म सद्म निकेतनम् । निशान्तपस्त्यसदनं भवनागारमन्दिरम् । गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः" इत्यमरः । "अर्हतौ जिनसम्मान्यौ" इति यादवः ॥ २५ ॥

तात्पर्यार्थः—अतस्त्वमितोऽन्यत्र कुत्रचिन्न गत्वाऽग्नित्रयशोभितायां मदीयाग्निहोत्रशालायां चतुर्थोऽग्निरिव निवसन् दिनद्वयं दिनत्रयं वा तावत्प्रतीक्षस्व, यावदहं त्वद्गुरुदक्षिणाऽर्थं द्रव्यानयनाय कमप्युपायं करोमि ॥ २५ ॥

भाषाऽर्थः—अन्यत्र कहीं न जाकर मेरे कहने से रुके हुये जो आप हैं सो सवों से पूजित अत एव प्रसिद्ध मेरी अग्निशाला में ( दक्षिणाग्नि-गार्हपत्य-आहवनीय-इन तीन अग्निके साथ) चौथे अग्नि की भाँति रहते हुए तब तक २-३ दिन तक (और ठहरने से विलम्ब होने को ) क्षमा करने में समर्थ हों । जब तक कि हे माननीय ! आप का प्रयोजन पूरा करने के लिये मैं यत्न करूं ॥ २५ ॥

*अथ रघुः कौत्सं निवास्य कुबेरात् तदभीष्टधनमाहर्तुमियेपेत्याह—*

**तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्सङ्गरमग्रजन्मा ।**

गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

सञ्जीविनी–तथेतीति । अग्रजन्मा ब्राह्मणः प्रतीतः प्रीतः संस्तस्य रघोरवितथममोघं सङ्गरं प्रतिज्ञाम् । 'अथ प्रतिज्ञाऽऽजिसंविदापत्सु सङ्गरः' इत्यमरः । 'तां गिरम्' इति केचित्पठन्ति । तथेति प्रत्यग्रहीत् । रघुरपि गां भूमिमात्तसारां गृहीतधनामवेक्ष्य कुबेरादर्थं निष्क्रष्टमाहर्तुं चकम इयेष ॥ २६ ॥

अन्वयः––अग्रजन्मा, प्रतीतः, "सन्", तस्य, अवितथं, सङ्गरं, तथा, इति, प्रत्यग्रहीत्, रघुः, अपि, गाम्, आत्तसाराम्, अवेक्ष्य, कुबेराद्, अर्थं, निष्क्रष्टुं, चकमे ॥ २६ ॥

व्याख्या––अग्रजन्मा = द्विजश्रेष्ठः, ब्राह्मणः कौत्स इत्यर्थः । प्रतीतः = हृष्टः, प्रसन्न इत्यर्थः । सन्निति शेषः । तस्य = पूर्वोक्तस्य, रघोरित्यर्थः अवितथम् = अनिष्फलं, सत्यमित्यर्थः । सङ्गरं = प्रतिज्ञां, तथा = तेन प्रकारेण, यथा भवतोक्तमत्र द्वित्र्याण्यहानि वस्तुमिति, तत्तथैवास्तु, अर्थाद् भवदाज्ञया स्थास्यामीत्यर्थः । इति = एवम्, उक्त्वेति शेषः । प्रत्यग्रहीत् = प्रतिगृहीतवान्, रघोराज्ञाऽनुसारेण निवासं कृतवानित्यर्थः । रघुः = दिलीपसूनुः, अपि = समुच्चयेऽर्थे, गां = पृथ्वीम्, आत्तसाराम् = आहृतधनाम्, अवेक्ष्य = दृष्ट्वा, कुबेराद् = त्र्यम्बकसखाद्, धनाधिपसकाशादित्यर्थः । अर्थ = धनं, चतुर्दशकोटिमितमित्यर्थः । निष्क्रष्टुं = ग्रहीतुम्, आनेतुमित्यर्थः । चकमे = ऐच्छत् ॥ २६ ॥

समासादि––अविद्यमानं वितथं यत्र सोऽवितथः (ब० व्री०) तमवितथम् । अग्रे जन्म यस्य सोऽग्रजन्मा (ब०व्री०)। आत्तः सारो यस्याः साऽऽत्तसारा (ब०व्री०) तामात्तसाराम् ॥२६॥

व्याकरण––प्रत्यग्रहीत् = प्रति + अट् + ग्रह ( उपादाने-अकारेत् ) + च्लि + लुङ्, तिपि च्लेः सिचीडागमे "अस्तिसिचोऽपृक्ते" इतीडागमे "इट ईटि" इति सिचो लोपे "ह्म्यन्तक्षण" इत्यादिना वृद्धिनिषेधे रूपम् । चकमे = कमु ( कान्तौ-उदित् ) + लिट्, द्वित्वेऽभ्यासकार्ये चुत्वे तप्रत्यये रूपम् ॥ २६॥

वाच्यान्तरम्––अग्रजन्मना प्रतीतेन "सता" तस्यावितथः सगरस्तथेति प्रत्यग्राहि रघुणाऽपि गामात्तसारामवेक्ष्य कुबेरादर्थो निष्क्रष्टुं चकमे ॥ २६ ॥

कोशः––"अग्रजन्मा द्विजश्रेष्ठे मातरि ब्रह्मणि स्मृतः" इति विश्वः । "प्रज्ञातज्ञातहृष्टेषु प्रतीतः सादरे त्रिषु" इति रभसः ॥ २६ ॥

तात्पर्यार्थः––प्रसन्नमनाः कौत्सो रघोश्चतुर्दशकोटिमितधनप्रदानसम्बन्धिनीं सत्यप्रतिज्ञां श्रुत्वा तथाऽस्त्वित्युक्त्वा द्वित्राण्यहानि स्थातुं तत्प्रार्थनां स्वीकृतवान्, रघुरपि गृहीतराजग्राह्यकरतया पृथ्वीं धनप्राप्त्ययोग्यां दृष्ट्वा कुबेराद्धनमाहर्तुमियेष ॥ २६ ॥

भाषाऽर्थः––द्विजों में श्रेष्ठ कौत्स ऋषि प्रसन्न होते हुये उन रघु महाराज की सत्य प्रतिज्ञा को जैसा आप कहते हैं वैसा ही होगा अर्थात् मैं २–३ दिन तक ठहरूंगा ऐसा कह कर स्वीकार किया अर्थात् प्रतिज्ञा सच मानकर ठहर गये, और रघु महाराज ने भी पृथ्वी को "जिसका धन कर रूपसे लेलिया गया है" ऐसा समझ कर कुबेर से धन लेने की इच्छा की॥२६॥

*ननु कुबेरो लोकपालोऽलकापुरीवासी, अतस्तत्र रघोर्गमनमशक्यमित्यत आह––*

वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव वलाहकस्य गतिर्विजघ्ने नहि तद्रथस्य ॥ २७ ॥

सञ्जीविनी–वसिष्ठमन्त्रेति । वसिष्ठस्य यन्मन्त्रेणोक्षणमभिमन्त्र्य प्रोक्षणं तज्जात्प्रभावात्सामर्थ्याद्धेतोः। उदन्वदाकाशमहीधरेषूदन्वत्युदधावाकाशे महीधरेषु वा। मरुत्सखस्य मरुतः सखेति तत्पुरुषो बहुव्रीहौ समासान्ताभावात । ततो वायुसहायस्येति लभ्यते। वारीणां वाहको वलाहकः (पृषोदरादित्वात्साधुः) तस्येव मेघस्येव । तद्रथस्य गतिः संचारो न विजघ्ने न विहता हि ॥ २७ ॥

अन्वयः—वसिष्ठमन्त्रोक्षणजात्, प्रभावाद्, उदन्वदाकाशमहीधरेषु, मरुत्सखस्य, बलाहकस्य, इव, तद्रथस्य, गतिः, न, विजघ्ने, हि ॥ २७ ॥

व्याख्या—वसिष्ठमन्त्रोक्षणजाद् = वसिष्ठमहर्षिमन्त्रप्रोक्षणोत्पन्नात्, प्रभावात् = तेजसः, सामर्थ्यादित्यर्थः । उदन्वदाकाशमहीधरेषु = समुद्रगगनपर्वतेषु, मरुत्सखस्य = पवनसहायस्य, बलाहकस्य = जलदस्य, इव = यथा, तद्रथस्य = पूर्वोक्तरघुस्यन्दनस्य, गतिः = गमनं, सञ्चरणमित्यर्थः । न = नहि, विजघ्ने = निरुध्ये, यथा मेघस्य सर्वत्राप्रतिहता गतिरस्ति तथैवास्य रघोः स्यन्दनस्यापि गतिरासीदिति भावः ॥ २७ ॥

समासादि—वसिष्ठस्य मन्त्रो वसिष्ठमन्त्रः ( त० पु० ), तेनोक्षणं वसिष्ठमन्त्रोक्षणं ( त० पु० ), तस्माज्जातो वसिष्ठमन्त्रोक्षणजः ( पुं० ) तस्माद् वसिष्ठमन्त्रोक्षणजात् । उदकानि सन्त्यत्रेत्युदन्वान् ( पुं० ) । आसमन्तात् काशन्ते सूर्यादयो यत्रेत्याकाशः ( पुं० ), धरन्तीति धराः (पुं०), मह्या धरा महीधराः ( त०पु० ), उदन्वाँश्चाकाशश्च महीधराश्चेत्युदन्वदाकाशमहीधराः ( द्वं० ) तेषु तथोक्तेषु । मरुतः सखा मरुत्सखः ( त० पु० ) तस्य मरुत्सखस्य । वारीणां वाहको बलाहकः ( त०पु० ) तस्य बलाहकस्य । तस्य रथस्तद्रथः ( त०पु० ) तस्य तद्रथस्य ॥ २७ ॥

व्याकरणं—विजघ्ने + वि + हन ( हिंसागत्योः-अकारेत् ) + लिट्, कर्मणि, तप्रत्यये द्वित्वेऽभ्यासकार्येऽकारलोपे कुत्वे रूपम् ॥ २७ ॥

वाच्यान्तरं—वसिष्ठमन्त्रोक्षणजात् प्रभावादुदन्वदाकाशमहीधरेषु मरुत्सखस्य बलाहकस्येव तद्रथस्य गतिं नहि "केऽपि" विजघ्नुः ॥ २७ ॥

कोशः—"मन्त्रो वेदविशेषे स्याद् देवादीनां च साधने । गुह्यवादेऽपि च पुमान्" इति मेदिनी । "समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । उदन्वानुदधिः सिन्धुः" इति । "वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी" इति चामरः । "रथः पुमानवयवे स्यन्दने वेतसेऽपि च" इति मेदिनी ॥ २७ ॥

तात्पर्यार्थः—यथा मेघस्य वायुसाहाय्यात् सर्वत्रैवाप्रतिहता गतिर्भवति, तथैव वसिष्ठमहर्षेर्मन्त्रप्रोक्षणजन्यसामर्थ्याद्रघोरपि रथस्य समुद्रे-गगने-पर्वतेष्वपि सर्वत्र स्वेच्छापूर्वकमप्रतिहतः सञ्चार आसीदतः कुबेरं प्रत्यभियानस्य तस्माद्धनाहरणस्य चाभिलापः समुचित एव ॥ २७ ॥

भाषाऽर्थः—वसिष्ठ महर्षि के मन्त्र से अभिमन्त्रित जल छिडकने से उत्पन्न सामर्थ्य से समुद्र-आकाश-और पर्वतों में वायु की सहायता से जैसे मेघ की गति नहीं रुकती है उसी भाँति उन रघु महाराज के रथ की गति कहीं नहीं रुकती थी, अर्थात् सब जगह वे जा आ सकते थे, अतः कुबेर के पास जाकर धन ले आने की इच्छा करना ठीक ही है ॥ २७ ॥

*अथ कुबेरं जिगीषू रघुः प्रातर्गमनार्थं रात्रौ रथमधिशयितवानित्याह—*

**अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।**
**सामन्तसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥**

सञ्जीविनी—अथेति । अथ प्रदोषे रजनीमुखे । तत्काले यानाधिरोहणविधानात् । प्रयतो धीरो रघुः । समन्ताद्भवः सामन्तः । राजमात्रमिति सम्भावनयैव कैलासनाथं कुबेरं तरसा बलेन जिगीषुर्जेतुमिच्छुः सन् । कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथमधिशिश्ये । रथे शयितवानित्यर्थः । "अधिशीङ्स्थाऽऽसां कर्म" इति कर्मत्वम् ॥ २८ ॥

अन्वयः—अथ, प्रदोषे, प्रयतः, रघुः, सामन्तसम्भावनया, एव, कैलासनाथं, तरसा, जिगीषुः, "सन्", कल्पितशस्त्रगर्भं, रथम्, अधिशिश्ये ॥ २८ ॥

व्याख्या—अथ = अनन्तरं, कुबेराद्धनाहरणेच्छाकरणानन्तरमित्यर्थः । प्रदोषे = रजनी-

सुखे, तत्समये शुभमुहूर्त्तसत्त्वादिति भावः। प्रयतः=धीरः, रघु=दिलीपसूनुः, सामन्तसम्भावनया=स्वदेशसमीपवर्त्तिराजकल्पनया, न तु लोकपाल इति कल्पनयेति भावः। एव=अवधारणेऽर्थे, कैलासनाथं=रजताद्रिपतिं, कुबेरमित्यर्थः। तरसा=बलेन, पराक्रमेणेत्यर्थः। जिगीषुः=विजयेच्छुकः, सन्निति शेषः। कल्पितशस्त्रगर्भं=सज्जितायुधमध्यं, युद्धोपयोगिविविधायुधपूर्णमित्यर्थः। रथं=स्यन्दनं, स्यन्दनमध्य इत्यर्थः। अधिशिश्ये=सुष्वाप ॥ २८ ॥

समासादि—कल्पितं च तच्छस्त्रं कल्पितशस्त्रं ( क० धा० ), तद् गर्भे यस्य स कल्पितशस्त्रगर्भः (व्य० प० ब० व्री०) तं कल्पितशस्त्रगर्भम्। समन्ताद् भवः सामन्तः ( पुं० ), तस्य सम्भावना सामन्तसम्भावना ( त० पु० ) तया सामन्तसम्भावनया। के जले लासो लसनमस्येति केलासः ( त० पु० ), तस्यायं कैलासः ( पुं० ), कैलासस्य नाथः कैलासनाथः ( त० पु० ) तस्य कैलासनाथस्य। जेतुमिच्छुर्जिगीषुः ( पुं० ) ॥ २८ ॥

व्याकरणम्—अधिशिश्ये=अधि+शीङ् ( स्वप्ने-ङित् )+लिट्, तप्रत्यये रूपम्। जिगीषुः=( जि ( जये )+सन् ) जिगीष, "सनाशंसभिक्ष उः" इति उप्रत्यये रूपम् ॥ २८ ॥

वाच्यान्तरम्—अथ प्रदोषे प्रयतेन रघुणा सामन्तसम्भावनयैव कैलासनाथं तरसा जिगीषुणा "सता" कल्पितशस्त्रगर्भं रथमधिशिश्ये ॥ २८ ॥

कोशः—"पवित्रः प्रयतः पूतः" इति। "प्रदोषो रजनीमुखम्" इति। "आयुधन्तु प्रहरणं शस्त्रमस्त्रम्" इति चामरः ॥ २८ ॥

तात्पर्यार्थः—कुबेराद्धनाहरणेच्छाकरणानन्तरं रघुस्तं सामन्तं राजानमिव मत्वा जिगीषुः सायङ्काले शुभमुहूर्त्तसत्त्वाद् युद्धोपयोगिविविधायुधपूर्णे रथे शयनं कृतवान् ॥ २८ ॥

भाषार्थः—इसके ( कुबेर से धन प्राप्त करने की इच्छा होने के ) बाद सायङ्काल में ( उस समय रथ पर चढ़ने का मुहूर्त्त होने से ) धैर्यशाली ( किसी से नहीं डरने वाले ) रघु महाराज ने केवल यक्षों के राजा हैं न कि लोकपाल, इस सम्भावना से ही कैलास पर्वत के स्वामी कुबेर को बल से जीतने की इच्छा करते हुये जिसके मध्यभाग में सब शस्त्र रक्खे हुये हैं ऐसे रथ में शयन किया ॥ २८ ॥

*अथ रघुं युद्धार्थमाजिगमिषुं वीक्ष्य कुबेरो रात्रावेव तदीयकोषागारे सुवर्णवृष्टिं कृतवानित्याह—*

**प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः।**
**हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥**

सञ्जीविनी—प्रातरिति। प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ता अधिकृता भाण्डागारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तो नभसः। ( पञ्चम्यास्तसिल्प्रत्ययः )। पतितां हिरण्मयीं सुवर्णमयीम्। "दाण्डिनायन०" इत्यादिना निपातनात्साधुः। वृष्टिं शशंसुः कथयामासुः ॥ २९ ॥

अन्वयः—प्रातः, प्रयाणाभिमुखाय, तस्मै, कोषगृहे, नियुक्ताः, सविस्मयाः, "सन्तः", कोषगृहस्य, मध्ये, नभस्तः, पतितां, हिरण्मयीं, वृष्टिं, शशंसुः ॥ २९ ॥

व्याख्या—प्रातः=प्रभाते, प्रयाणाभिमुखाय=गमनोद्यताय, तस्मै=पूर्वोक्ताय, रघव इत्यर्थः। कोशगृहे=अर्थौघभवने, भाण्डागार इत्यर्थः। नियुक्ताः=स्थापिताः, रक्षकत्वेन रघुणा निर्दिष्टाः पुरुषा इत्यर्थः। सविस्मयाः=साश्चर्याः, सन्त इति शेषः। कोषगृहस्य=अर्थौघभवनस्य, मध्ये=गर्भे, नभस्तः=आकाशतः, पतितां=निर्गलितां, हिरण्मयीं=स्वर्णमयीं, वृष्टिं=वर्षणं, शशंसुः=आख्यातवन्तः ॥ २९ ॥

समासादि—प्रयाणस्याभिमुखः प्रयाणाभिमुख. ( त० पु० ) तस्मै प्रयाणाभिमुखाय । विस्मयेन सहिताः सविस्मयाः ( ब० व्री० ) । कोपस्य गृहमिति कोपगृह ( त० पु० ) तस्मिन् कोषगृहे । हिरण्यस्य विकारभूता हिरण्मयी ( स्त्री० ) तां हिरण्मयीम् । नभस इति नभस्तः ( अ० ), ॥ २९ ॥

व्याकरणं—शशंसुः = शसु(प्रकथने-उदित् ) + लिट्, द्वित्वेऽभ्यासकार्यं झेरुसि रूपम्॥२९॥

वाच्यान्तरं—प्रातः प्रयाणाभिमुखाय तस्मै कोपगृहे नियुक्तैः "जनैः" सविस्मयैः "सद्भिः" कोपगृहस्य मध्ये नभस्तः पतिता हिरण्मयी वृष्टिः शशंसे ॥ २९ ॥

कोशः—"प्रगे प्रातः प्रभाते" इत्यमरः। "कोपोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यपि ॥ २९ ॥

तात्पर्यार्थः—प्रातः काले गमनोद्यताय रघवे भाण्डागारमध्ये रात्रौ नभसः पतितां सुवर्णमयीं वृष्टिं विलोक्यातिसाश्चर्याः सन्तस्तत्र नियुक्ताः पुरुषा आगत्य तां निवेदयामासुः॥२९॥

भाषाऽर्थः—प्रातः काल यात्रा करने के लिये उद्यत उन रघु महाराज से खजाने पर नियुक्त किये हुये लोगों ने आश्चर्य-युक्त होते हुये खजाने के गृह के अन्दर आकाश से गिरी हुई सुवर्ण की वृष्टि को कहा ॥ २९ ॥

*अथ यावती सुवर्णवृष्टिरभूत्तावतीं सर्वामेव रघुः कौत्साय ददावित्याह—*

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥

सञ्जीविनी—तमिति । भूपती रघुः । अभियास्यमानादभिगमिष्यमाणात्कुबेराल्लब्धम् । वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतमिव स्थितम् । 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । 'शृङ्गम्' इति क्वचित्पाठः । तं भासुरं भास्वरम् । "भञ्जभासमिदो घुरच्" इति घुरच् । हेमराशिं समस्त कृत्स्नमेव कौत्साय दिदेश ददौ । न तु चतुर्दशकोटिमात्रमित्येवकारार्थः ॥ ३० ॥

अन्वय —भूपतिः, अभियास्यमानात्, कुबेराद्, लब्धं, वज्रभिन्नं, सुमेरोः, पादम्, इव, "स्थितम्" त, भासुरहेमराशिं, समस्तम्, एव, कौत्साय, दिदेश ॥ ३० ॥

व्याख्या—भूपतिः = महीश्वरः, रघुरित्यर्थः । अभियास्यमानाद् = अभ्येष्यमाणात्, कुबेरात् = गुह्यकेश्वराद्, धनाधिपसकाशादित्यर्थः । लब्ध = प्राप्तं, वज्रभिन्नं = पविविदारितं, वज्रेण छिन्नमित्यर्थः । सुमेरोः = हेमाद्रेः, पादं = प्रत्यन्तपर्वतम्, इव = यथा, स्थितमिति शेषः । तं = पूर्वोक्तं, भासुरहेमराशिं = प्रकाशशालिस्वर्णपुञ्जं, समस्तं = निखिलम्, एव = अवधारणेऽर्थे, कौत्साय = वरतन्तुशिष्याय, दिदेश = दत्तवान् ॥ ३० ॥

समासादि—भासुराणि च तानि हेमानि भासुरहेमानि ( क० धा० ), तेषां राशिर्भासुरहेमराशिः ( त० पु० ) तं भासुरहेमराशिम् । अभियास्यत इत्यभियास्यमानः ( पुं० ) तस्मादभियास्यमानात् । वज्रेण भिन्नो वज्रभिन्नः ( त० पु० ) तं वज्रभिन्नम् ॥ ३० ॥

व्याकरणम्—अभियास्यमानात् = अभि + या ( प्रापणे ) + स्य + लृट् + मुक् + शानच् ङस् । दिदेश = दिश ( अतिसर्जने-अकारेत् ) + लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ ३० ॥

वाच्यान्तरं—भूपतिनाऽभियास्यमानात् कुबेराल्लब्धो वज्रभिन्नः सुमेरोः पाद इव स भासुरहेमराशिः समस्त एव कौत्साय दिदिशे ॥ ३० ॥

कोशः—"द्वौ राशी पुञ्जमेघाचौ" इति । "अथ समं सर्वम् । विश्वमशेषं कृत्स्नं समस्त निखिलाखिलानि निःशेषम्" इति । "मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः" इति चामरः । "वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः" इत्यपि ॥ ३० ॥

तात्पर्यार्थः—कुबेरो युद्धार्थमाजिगमिषुं रघुं ज्ञात्वा तद्भयाद् यावन्तं सुवर्णराशिं वृष्टिद्वारा ददौ, तावन्तं समस्तमेव दानशौण्डो रघुर्वज्रभिन्नं सुमेरोर्देदीप्यमानं खण्डमिव स्थितं

कौत्साय दत्तवान् ॥ ३० ॥

भाषार्थः—महाराज रघु ने युद्ध के लिये चढाई किये जाने वाले कुबेर से पाये हुये वज्र से कट कर, अलग हुये सुमेरु पर्वत के बिलकुल पास की छोटी पहाड़ी की भांति स्थित, उस चमकते हुए, सम्पूर्ण स्वर्ण-राशि को कौत्स के लिये दे दिया ॥ ३० ॥

*अथ कौत्सः सर्वं स्वर्णराशिं दित्सो रघोः सकाशाच्चतुर्दशकोटितो नाधिकं ग्रहीतुमियेषेत्याह—*

**जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।**
**गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥**

सञ्जीविनी—जनस्येति । तावर्थिदातारौ द्वावपि साकेतनिवासिनोऽयोध्यावासिनः । 'साकेतः स्यादयोध्यायां कोसला नन्दिनी च सा' इति यादवः । जनस्याभिनन्द्यसत्त्वौ स्तुत्यव्यवसायावभूताम् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । कौ द्वौ । गुरुप्रदेयादधिकेऽतिरिक्तद्रव्ये निःस्पृहोऽर्थी । अर्थिकामादर्थिमनोरथादधिकं प्रददातीति तथोक्तः । "प्रे-दाज्ञः" इति कप्रत्ययः । नृपश्च ॥ ३१ ॥

अन्वयः—तौ, द्वौ, अपि, साकेतनिवासिनः, जनस्य, अभिनन्द्यसत्त्वौ, अभूताम् , "कौ, द्वौ", गुरुप्रदेयाधिकनिःस्पृहः, अर्थी, अर्थिकामाद् , अधिकप्रदः, नृपः, च ॥ ३१ ॥

व्याख्या—तौ = पूर्वोक्तौ, अर्थिदातारावित्यर्थः । द्वौ = द्वित्वसङ्ख्याविशिष्टौ, अपि = समुच्चयेऽर्थे, साकेतनिवासिनः = अयोध्यास्थायिनः, जनस्य = लोकस्य, अभिनन्द्यसत्त्वौ = प्रशंसनीयव्यवसायौ, अभूताम् = बभूवतुः, कौ द्वाविति शेषः । गुरुप्रदेयाधिकनिःस्पृहः = उपाध्यायदातव्यातिरिक्तनिरभिलाषः, गुरवे दातव्यद्रव्याद् विशेषग्रहणे स्पृहारहित-इत्यर्थः । अर्थी = याचकः, कौत्स इत्यर्थः । अर्थिकामाद् = याचकाभिलाषाद् । अधिकप्रदः = विशेषदायकः, नृपः = भूपतिः, रघुरित्यर्थः । च = समुच्चयेऽर्थे ॥ ३१ ॥

समासादि—निवस्तुं शीलमस्येति निवासी ( पुं० ), साकेतस्य निवासी साकेतनिवासी (त० पु०) तस्य साकेतनिवासिनः । अभिनन्द्यं सत्त्वं ययोस्तावभिनन्द्यसत्त्वौ (ब० व्री०) । गुरवे प्रदेयमिति गुरुप्रदेयम् ( त० पु० ), तस्मादधिकं गुरुप्रदेयाधिकं ( त० पु० ), तस्मिन्निःस्पृहो गुरुप्रदेयाधिकनिःस्पृहः ( त० पु० ) । अर्थः प्रयोजनमस्यास्तीत्यर्थी ( पुं० ) । अर्थिनः कामोऽर्थिकामः ( त० पु० ) तस्मादर्थिकामात् । प्रकर्षेण ददातीति प्रदः ( पुं० ), अधिकस्य प्रद इत्यधिकप्रदः ( त० पु० ) ॥ ३१ ॥

व्याकरणम् = अभूताम् = अट् + भू ( सत्तायाम् ) + च्लि + सिच् + लुङ् + तस्, "गातिस्थे" त्यादिना सिचो लुकि रूपम् ॥ ३१ ॥

वाच्यान्तरं—ताभ्यां द्वाभ्यां साकेतनिवासिनो जनस्याभिनन्द्यसत्त्वाभ्यामभावि, गुरुप्रदेयाधिकनिःस्पृहेनार्थिनाऽर्थिकामादधिकप्रदेन नृपेण चाभावि ॥ ३१ ॥

कोश —"वनीयको याचनको मार्गणो याचकार्थिनौ" इत्यमरः ॥ ३१ ॥

तात्पर्यार्थः—गुरुप्रदेयचतुर्दशकोटिरूपदक्षिणातोऽतिरिक्ते द्रव्ये निःस्पृह कौत्सोऽर्थिनोऽभिलाषापेक्षयाऽधिकप्रदो रघुश्च, एतौ द्वावपि स्वं स्वं यावदर्थपरिग्रहकारित्वं प्रार्थनातोऽधिकदानशालित्वं च प्रदर्शयन्तौ, अयोध्यावासिनो जनस्य प्रशंसनीयतां प्राप्नुवन्तौ ॥३१॥

भाषार्थः—वे ( अर्थी और दाता ) दोनों, अयोध्या के निवासी लोगों के निकट प्रशंसनीय व्यवसाय ( व्यवहार ) वाले हुये, एक तो गुरु के देने ( १४ करोड ) से अधिक लेने में निःस्पृह याचक कौत्स ऋषि और दूसरे—याचक की कामना से अधिक देने वाले महाराज रघु ॥ ३१ ॥

*अथ सफलमनोरथः सन् गन्तुकामः कौत्सः प्रणतं रघुमुवाचेत्याह—*

अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः।
स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः॥ ३२॥

सञ्जीविनी—अथेति। अथ प्रीतमना महर्षिः कौत्सः संप्रस्थितः प्रस्थास्यमानः सन्। "आशंसायां भूतवच्च" इति भविष्यदर्थे क्तः। उष्ट्राणां क्रमेलकानां वामीनां वडवानां च शतैर्वाहितार्थं प्रापितधनमानतपूर्वकायम्। विनयनम्रमित्यर्थः। प्रजेश्वरं रघुं करेण स्पृशन्वाचमुवाच॥ ३२॥

अन्वयः—अथ, प्रीतमनाः, महर्षिः, कौत्सः, संप्रस्थितः, "सन्", उष्ट्रवामीशतवाहितार्थम्, आनतपूर्वकायं, प्रजेश्वरं, करेण, स्पृशन्, वाचम्, उवाच॥ ३२॥

व्याख्या—अथ = अनन्तरं, कामनातोऽधिकार्थप्राप्त्यनन्तरमित्यर्थः। प्रीतमनाः = प्रसन्नमानसः, महर्षिः = अतिसत्यवचाः, कौत्सः = वरतन्तुशिष्यः, संप्रस्थितः = संप्रस्थास्यमान., गन्तुकाम इत्यर्थ.। सन्निति शेषः। उष्ट्रवामीशतवाहितार्थं = महाङ्गवडवाशतकप्रापितद्रव्यं, शतशः क्रमेलकैरश्वाभिश्च वरतन्तुसविधे धनप्रापणव्यवस्थाकर्तारमित्यर्थः। आनतपूर्वकायं = अवनतशरीरपूर्वार्धं, विनयेनातिनम्रमित्यर्थः। प्रजेश्वरं = जनाधिपं, रघुमित्यर्थः। करेण = हस्तेन, दक्षिणपाणिनेत्यर्थः। स्पृशन् = आमृशन्, स्पर्शं कुर्वन्नित्यर्थः। वाचं = वचः, अग्रे कथ्यमानामिति भावः। उवाच = अवोचत्॥ ३२॥

समासादि—उष्ट्राश्च वाम्यश्चोष्ट्रवाम्यः (द्वं०), तासां शतान्युष्ट्रवामीशतानि (त०पु०), तैर्वाहित उष्ट्रवामीशतवाहितः (त० पु०), सोऽर्थो येन स उष्ट्रवामीशतवाहितार्थः (ब० व्री०) तं तथोक्तम्। प्रीतं मनो यस्य स प्रीतमनाः (ब० व्री०)। पूर्वं कायस्य पूर्वकायः (त० पु०), आनतः पूर्वकायो यस्य स आनतपूर्वकायः (ब० व्री०) तं तथोक्तम्॥ ३२॥

व्याकरणम्—उवाच = ब्रूञ् (व्यक्तायां वाचि—ञित्) + लिट्, तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम्॥ ३२॥

वाच्यान्तरम्— अथ प्रीतमनसा महर्षिणा कौत्सेन संप्रस्थितेन "सता" उष्ट्रवामीशतवाहितार्थमानतपूर्वकायं प्रजेश्वरं करेण स्पृशता वागूचे॥ ३२॥

कोशः—"उष्ट्रे क्रमेलकमयमहाङ्गाः" इत्यमरः। "वाम्यश्वा वडवा" इत्यमरः। "वामी शृगालीवडवारासभीकरभीषु च" इति मेदिनी॥ ३२॥

तात्पर्यार्थः—वाञ्छितार्थप्राप्त्यनन्तरं महर्षिः कौत्सोऽतिप्रसन्नमानसः सन् जिगमिषुः शतशः क्रमेलकैरश्वाभिश्च वरतन्तुमहर्षेराश्रमं स्वर्णराशिं प्रापयितुं कृतसमुचितप्रबन्धं प्रणतं रघुं करेण स्पृशन् वक्ष्यमाणप्रकारेणोवाच॥ ३२॥

भाषाऽर्थः—इसके बाद प्रसन्न मन हो महर्षि कौत्स जी प्रस्थान करते हुये, सैकड़ों ऊंटों और घोडियों से धन को (पहुंचवा देने वाले) पहुंचा देने का प्रबन्ध कर देने वाले, शरीर के आगे के भाग को झुकाये हुये अर्थात्-विनय से नम्र प्रजाओं के प्रभु रघु महाराज को हाथ से स्पर्श करते हुये अर्थात् उनके ऊपर हाथ फेरते हुये बोले॥ ३२॥

*अथ कौत्सः स्वर्णवृष्टिमवलोक्य तदीयमत्यद्भुतं प्रभावं प्रशंसन्नाह—*

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा॥ ३३॥

सञ्जीविनी—किमिति। वृत्ते स्थितस्य। (न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥) इति कामन्दकः। तस्मिन्वृत्ते स्थितस्य प्रजानामधिपतेर्नृपस्य भूः कामान्सूत इति कामसूर्यदि। "सत्सूद्विषद्रुहयुजविदभिदच्छिदजिनीरा-

राजानुपसर्गेऽपि क्विप्' इत्यनेन क्विप्। अत्र कामप्रसवने किं चित्रम्। न चित्रमित्यर्थः। किंतु तव प्रभावो महिमा त्वचिन्तनीयः। येन त्वया द्यौरपि मनीषितमभिलषितं दुग्धा। दुहेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः। (प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः॥) इति स्मरणात्॥ ३३॥

अन्वयः—वृत्ते, स्थितस्य, प्रजानाम्, अधिपतेः, भूः, कामसूः, यदि, अत्र, किं, चित्रं, "किन्तु" तव, प्रभावः, तु, अचिन्तनीयः, येन, द्यौः, अपि, मनीषितं, दुग्धा॥ ३३॥

व्याख्या—वृत्ते = वृत्तौ, कामन्दकोक्तचतुर्विधराजवृत्त इत्यर्थः। स्थितस्य = वर्त्तमानस्य, प्रजानां = जनानाम्, अधिपतेः = अधीश्वरस्य, राज्ञ इत्यर्थः। भूः = पृथ्वी, कामसूः = अभिलषितप्रसूः, यदि = चेद्, अस्तु तर्हीति शेषः। अत्र = अस्मिन्, पृथिव्या अभिलषितवस्तुप्रसवनविषय इत्यर्थः। किं = प्रकारार्थे, चित्रम् = आश्चर्यं, न किमप्याश्चर्यमित्यर्थः। किन्त्विति शेषः। तव = भवतः, रघोरित्यर्थः। प्रभावः = शक्तिः, सामर्थ्यमित्यर्थः। तु = अवधारणेऽर्थे, अचिन्तनीयः = अतर्क्यः, चिन्तयितुमशक्य इत्यर्थः। येन = पूर्वोक्तेन, प्रभावेणेत्यर्थः। त्वयेति शेषः। द्यौः = स्वर्गः, अपि = समुच्चयेऽर्थे, मनीषितम् = अभीप्सितं, दुग्धा = अदुह्यत॥३३॥

समासादि—कामान् सूत इति कामसूः (स्त्री०)। अधिपातीत्यधिपतिः (पुं०) तस्याधिपतेः। चिन्तयितुं शक्य इति चिन्तनीयः (पुं०), न चिन्तनीय इत्यचिन्तनीयः (न० त० पु०)॥ ३३॥

व्याकरणं—दुग्धा = दुह (प्रपूरणे—अकारेत) + क्त. + टाप् + सु॥ ३३॥

वाच्यान्तरं-वृत्ते स्थितस्य प्रजानामधिपतेर्भुवा कामसुवा यदि "भूयते" अत्र केन चित्रेण "भूयते" तव प्रभावेण त्वचिन्तनीयेन "भूयते" येन "त्वं" द्यामपि मनीषितं दुग्धवान्॥३३॥

कोशः—"आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः। "किं वितर्के परिप्रश्ने क्षेपे निन्दाप्रकारयोः" इति विश्वः। "स्युरेवन्तु पुन र्वैत्यवधारणवाचकाः" इत्यमरः। "प्रभावस्तेजसि शक्तौ" इत्यनेकार्थसङ्ग्रहः॥ ३३॥

तात्पर्यार्थः—"न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्" इति कामन्दोक्तचतुर्विधराजवृत्तानुसारी राजा पृथ्वीसकाशान्निजाभीष्टं वस्तु यत्प्राप्नोति तन्नाश्चर्यकरं भवति, किन्तु भवान् यत्स्वर्गादपि स्वर्णवृष्ट्या स्वाभिलषितं लब्धवाँस्तदेव परमाश्चर्यजनकमस्ति॥ ३३॥

भाषाऽर्थः—"न्याय से धनका उपार्जन करना, बढाना, रक्षा करना, सत्पात्र को देना" इस तरह के चार प्रकार के राजाओं के व्यवहार में स्थित रहने वाले राजा की भूमि अभिलषित वस्तुओं की पैदा करने वाली यदि होवै तो इस विषय में कोई आश्चर्य नहीं है, किन्तु आपका प्रभाव वस्तुतः निश्चय करके अचिन्तनीय (आश्चर्यजनक) है, कि जिस प्रभाव से स्वर्ग से भी अपने अभिलषित वस्तु को दुहा अर्थात् प्राप्त किया॥ ३३॥

*सम्प्रति कौत्सो रघवे "पुत्रं स्वानुरूपं लभस्व" इत्याशीर्वादं ददावित्याह—*

आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव॥ ३४॥

सञ्जीविनी—आशास्यमिति। सर्वाणि श्रेयांसि शुभान्यधिजग्मुषः प्राप्तवतस्ते तवान्यत्पुत्रातिरिक्तमाशास्यमाशीःसाध्यमाशंसनीयं वा पुनरुक्तभूतम्। सर्वं सिद्धमित्यर्थः। किं त्वीड्यं स्तुत्यं भवन्तं भवतः पितेवात्मगुणानुरूपम्। त्वया तुल्यगुणमित्यर्थः। पुत्रं लभस्व प्राप्नुहि॥ ३४॥

अन्वयः—सर्वाणि, श्रेयांसि, अधिजग्मुषः, ते, अन्यद्, आशास्यम्, पुनरुक्तभूतम्, "अस्ति, किन्तु", ईड्यं, भवन्तं, भवतः, पिता, इव, "त्वमपि" गुणानुरूपम्, पुत्रं, लभस्व॥३४॥

व्याख्या—सर्वाणि = अखिलानि, श्रेयांसि = शुभानि, अधिजग्मुषः = लब्धवतः, ते = तव, रघोरित्यर्थः । अन्यद् = अपरम्, पुत्रापेक्षयेतरदित्यर्थः । आशास्यम् = आशंसनीयम्, आशीर्वादविषयमिति भावः । पुनरुक्तभूतं = द्विरुक्तभूतम्, अखिलं सिद्धमित्यर्थः । किन्त्विति शेषः । ईड्यं = प्रशंसाऽर्हम्, भवन्त = त्वां, रघुमित्यर्थ. । भवतः = तव, पिता = जनकः, दिलीप इत्यर्थः । इव = यथा, त्वमपीति शेषः । आत्मगुणानुरूपं = स्वसदृशगुणोपेतं, स्वसदृशमित्यर्थः । पुत्रं = तनयं, लभस्व = अधिगच्छ ॥ ३४ ॥

समासादि—आशासितुं योग्यमाशास्यं ( न० लिं० ) । आत्मनो गुणा आत्मगुणाः ( त० पु० ), तेषामनुरूप आत्मगुणानुरूपः ( त० पु० ) तं तथोक्तम् । ईडितु योग्य ईड्यः ( पुं० ) तमीड्यम् ॥ ३४ ॥

व्याकरणम्—अधिजग्मुषः = अधि + गम्लृ ( गतौ—लृदित् ) + लिट् + क्वसु + ङस् । लभस्व = डुलभष् (प्राप्तौ—डुकाराकारषकारेत् ) + शप् + लोट्, थासः से "सवाभ्यां वामौ" इत्येकारस्य वादेशे रूपम् ॥ ३४ ॥

वाच्यान्तरं—सर्वाणि श्रेयांस्यधिजग्मुषस्तेऽन्येनाशास्येन पुनरुक्तभूतेन (भूयते) "किन्तु" ईड्यो भवान् भवतः पित्रेव "त्वयाऽपि" आत्मगुणानुरूपः पुत्रो लभ्यताम् ॥ ३४ ॥

कोशः—"श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्" इति मेदिनी। "आत्मजस्तनयः सूनुः सुतः पुत्रः" इत्यमरः ॥ ३४ ॥

तात्पर्यार्थः—महाप्रभावशालिनश्चक्रवर्त्तिनस्ते स्वर्गीयमपि सर्वं सौख्यमस्ति, किन्तु पुत्रसुखं नास्त्यतो मदाशिषा स्वसदृशं पुत्रं तथैव प्राप्नुहि, यथा ते पिता त्वामाप्तवान्॥३४॥

भाषाऽर्थः—सभी कल्याणों को प्राप्त किये हुये, आप के लिये पुत्र के अलावा आशीर्वाद देना व्यर्थ है, अर्थात्—सभी मौजूद है, किन्तु फिर भी ( पुत्र सुख न होने से मेरे आशीर्वाद से ) प्रशंसा के योग्य आप सरीखे पुत्र को आपके पिता दिलीप महराज ने जैसे पाया, वैसे ही आप भी अपने समान गुण से युक्त अर्थात् अपने तुल्य ही पुत्र को प्राप्त करें ॥ ३४ ॥

*अथ कौत्स इत्थं रघव आशीर्वादं दत्त्वा गुरोः सकाशं गतः, सोऽपि शीघ्रमृषेराशिषा पुत्रं प्राप्तवानित्याह—*

इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजाऽपि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः ॥ ३५ ॥

सञ्जीविनी—इत्थमिति । अग्रजन्मा ब्राह्मणः । "अग्रजन्मा द्विजे श्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः" इति विश्वः । इत्थं राज्ञ आशिषं प्रयुज्य दत्त्वा गुरोः सकाशं समीपं प्रतीयाय प्राप । राजाऽपि । जीवलोको जीवसमूहः । 'जीवः प्राणिनि गीष्पतौ' इति विश्वः । अर्कादालोकं प्रकाशमिव । शीघ्रम् । 'चैतन्यम्' इति पाठे ज्ञानम् । तस्मादृषेराशु सुतं लेभे प्राप ॥ ३५ ॥

अन्वयः—अग्रजन्मा, इत्थं, राज्ञे, आशिषं, प्रयुज्य, गुरोः, सकाशं, प्रतीयाय, राजा, अपि, जीवलोकः, अर्काद्, आलोकम्, इव, तस्माद्, आशु, सुतं, लेभे ॥ ३५ ॥

व्याख्या—अग्रजन्मा = द्विजश्रेष्ठः, ब्राह्मणः कौत्स इत्यर्थः । इत्थम् = अमुना प्रकारेण, पूर्वोक्तरीत्येत्यर्थः । राज्ञे = नृपाय, रघव इत्यर्थः । आशिषं = हिताशंसाम्, आत्मगुणानुरूपं पुत्रं लभस्वेतिरूपामिति भावः । प्रयुज्य = दत्त्वा, गुरोः = उपाध्यायस्य, वरतन्तुमहर्षेरित्यर्थः । सकाशम् = अन्तिकं, प्रतीयाय = प्रतिययौ, प्राप्तवानित्यर्थः । राजा = नृपः, रघुरित्यर्थः । अपि = समुच्चयेऽर्थे, जीवलोकः = प्राणिजनः, प्राणिसमूह इत्यर्थः । अर्कात् = सूर्याद्, आलोकं = प्रकाशम्, इव = यथा, तस्मात् = पूर्वोक्ताद्, महर्षिकौत्सादित्यर्थः । आशु = शीघ्रं, सुतं = पुत्रं, लेभे = लब्धवान् ॥ ३५ ॥

समासादि—अग्रे जन्म यस्य सोऽग्रजन्मा ( ब० व्री० )। जीवस्य लोक इति जीवलोकः ( त० पु० ) ॥ ३५ ॥

व्याकरणं—प्रतीयाय = प्रति + इण् ( गतौ—णित् ) + लिट्, तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धावायादेशे, "अभ्यासस्यासवर्णे" इतीयङादेशे रूपम् । लेभे-डुलभष् ( प्राप्तौ—डुकाराकारषकारेत् ) + लिट्, तप्रत्यये द्वित्वे एत्वाभ्यासलोपे रूपम् ॥ ३५ ॥

वाच्यान्तरम्—अग्रजन्मनेत्थं राज्ञ आशिषं प्रयुज्य गुरोः सकाशः प्रतीये; राज्ञाऽपि जीवलोकेनार्कादालोक इव तस्मादाशु सुतो लेभे ॥ ३५ ॥

कोशः—"स्त्री त्वाशीर्हिताशंसाऽहिदंष्ट्रयोः" इत्यमरः । "आशुस्तु व्रीहिशीघ्रयोः" इति मेदिनी ॥ ३५ ॥

तात्पर्यार्थः—पूर्वोक्तप्रकारेण महर्षिः कौत्सो रघव आशिषं दत्वा स्वगुरोर्महर्षिवरतन्तोः समीपं ययौ, स महाराजो रघुरपि सत्यवचसः कौत्सस्याशीर्वादप्रभावाच्छीघ्रं पुत्रं तथैव प्रासवान् यथैव प्राणिसमूहः सूर्याच्छीघ्रमेव प्रकाशं प्राप्नोति, अर्थात् तन्महिषी शीघ्रमेव गर्भमाधत्त ॥ ३५ ॥

भाषाऽर्थः—ब्राह्मण कौत्स महर्षि इस प्रकार से राजा को आशीर्वाद देकर अपने गुरु वरतन्तु महर्षि के पास चले गये और राजा ने भी जैसे जीव-समूह सूर्य से प्रकाश को शीघ्र प्राप्त करता है, उसी तरह से उन पूर्वोक्त महर्षि कौत्स से अर्थात् उनके आशीर्वाद से शीघ्र ही पुत्र को प्राप्त किया, अर्थात् उनकी महिषी ने गर्भ धारण किया ॥ ३५ ॥

अथ कौत्समहर्षेराशीर्वादेन ब्राह्मे मुहूर्त्ते रघोर्महिषी पुत्ररत्नं प्रासूत, अत एव तस्य "अजः" इति नामकरणं बभूवेत्याह—*

**ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।**
**अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ३६ ॥**

सञ्जीविनी—ब्राह्म इति । तस्य रघोर्देवी महिषी ब्राह्मे । "तस्येदम्" इत्यण् । ब्रह्मदेवताकेऽभिजिन्नामके मूहूर्ते किलेपदसमाप्तं कुमारं कुमारकल्पं स्कन्दसदृशम् । "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इत्यनेन कल्पप्प्रत्यय । कुमारं पुत्रं सुषुवे । 'कुमारो बालके स्कन्दे' इति विश्वः । अतो ब्राह्ममुहूर्तोत्पन्नत्वात्पिता रघुर्ब्रह्मणो विधेरेव नाम्ना तमात्मजन्मानं पुत्रमजमजनामकं चकार । 'अजो हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्वः ॥ ३६ ॥

अन्वयः—तस्य, देवी, ब्राह्मे, मुहूर्त्ते, किल, कुमारकल्पं, कुमारं, सुषुवे, अतः, पिता, ब्रह्मणः, एव, नाम्ना, तम्, आत्मजन्मानम्, अजं, चकार ॥ ३६ ॥

व्याख्या—तस्य = पूर्वोक्तस्य, रघोरित्यर्थः । देवी = कृताभिषेका पत्नी, महिषीत्यर्थः । ब्राह्मे = ब्रह्मदेवताके, अभिजिदाख्य इत्यर्थ. । मुहूर्त्ते = घटिकाद्वितयभोग्यकाले, किल = प्रसिद्धौ, कुमारकल्पं = स्कन्दतुल्यं, कुमारं = बालकं, सुषुवे = असूत, अतः = एतस्मात्, हेतौ पंचमी बोध्या । ब्राह्ममुहूर्त्तजातत्वादित्यर्थः । पिता = जनकः, रघुरित्यर्थः । ब्रह्मणः = विश्वसृजः, एव = अवधारणेऽर्थे, नाम्ना = संज्ञया, तम् = पूर्वोक्तं, ब्राह्ममुहूर्त्तोत्पन्नमित्यर्थः । आत्मजन्मानं = तनयम्, अजम् = अजाह्वयं, चकार = कृतवान् ॥ ३६ ॥

समासादि—ब्रह्मा देवताऽस्येति ब्राह्मः ( पुं० ) तस्मिन् ब्राह्मे । ईषदूनः कुमारः कुमारकल्पः ( पुं० ) तं कुमारकल्पम् । आत्मनः सकाशाज्जन्म यस्य स आत्मजन्मा (व्य० प० ब० व्री०) तमात्मजन्मानम् । न जायत इत्यजः ( पुं० ) तमजम् ॥ ३६ ॥

व्याकरणं—सुषुवे = षूङ् ( प्राणिगर्भविमोचने-ङित् ) + लिट्, द्वित्वेऽभ्यासह्रस्व उवङादेशे रूपम् । चकार = डुकृञ् ( करणे-डुञित् ) + लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ ३६ ॥

वाच्यान्तरं—तस्य देव्या ब्राह्मे मुहूर्ते किल कुमारकल्पः कुमारः सुषुवे, अतः पित्रा ब्रह्मण-एव नाम्ना स आत्मजन्माऽजश्चक्रे ॥ ३६ ॥

कोशः—"देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि" इति मेदिनी ॥ ३६ ॥

तात्पर्यार्थः—रघोर्महिषी अभिजिन्नामके ब्रह्मदेवताके मुहूर्त्ते कार्त्तिकेयतुल्यं बालकमसूत, अतो ब्राह्ममुहूर्त्तोत्पन्नत्वात् तस्य पिता रघुर्ब्रह्मणः "अज" इत्याकारकनाम्नैव तन्नाम "अज" इत्याकारकं कृतवान् ॥ ३६ ॥

भाषाऽर्थः—उन रघु महाराज की पटरानी ने ब्रह्मा जिसके अधिष्ठात्री देवता हैं ऐसे अ-भिजिन्नामक मुहूर्त में कार्त्तिकेय के समान बालक पैदा की, इससे अर्थात् ब्राह्ममुहूर्त्त में उत्पन्न होने से पिता रघु महाराज ने ब्रह्मा के ही "अज" इस नाम से उस पुत्र का "अज" नाम रक्खा ॥ ३६ ॥

*अथ बालको निजपितृतुल्य एवाभूदित्याह—*

**रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम्।**
**न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ ३७ ॥**

सञ्जीविनी—रूपमिति। ओजस्वि तेजस्वि बलिष्ठं वा। 'ओजस्तेजसि धातूनामवष्टम्भप्र-काशयोः। ओजो बले च दीप्तौ च' इति विश्वः। रूपं वपुः।'अथ रूपं नपुंसकम्। स्वभावाकृति-सौन्दर्यवपुषि श्लोकशब्दयोः'॥ इति विश्वः। तदेव पैतृकमेव वीर्यं शौर्यं तदेव। नैसर्गिकं स्वा-भाविकमुन्नतत्वं तदेव। तादृगमेवेत्यर्थः। कुमारो बालकः। प्रवर्तित उत्पादितो दीपः प्रदीपा-त्स्वोत्पादकद्दीपादिव। स्वात्स्वकीयात्। "पूर्वादिभ्यो नवभ्यो वा" इति स्माद्भावो वैकल्पि-कः। कारणाज्जनकान्न विभिदे भिन्नो नाभूत्। सर्वात्मना तादृश एवाभूदित्यर्थः ॥ ३७ ॥

अन्वयः—ओजस्वि, रूपं, तद्, "एव", वीर्यं, तद्, एव, नैसर्गिकम्, उन्नतत्वं, तद्, एव, "अभूत्", कुमारः, प्रवर्त्तितः, दीपः, प्रदीपाद्, इव, स्वात्, कारणाद्, न, बिभिदे ॥३७॥

व्याख्या—ओजस्वि = तेजस्वि, रूपं = वपुः, शरीरमित्यर्थः। तत् = पैतृकम्, एव = अवधारणेऽर्थे, वीर्यं = पराक्रमं, तदेव = पैतृकमेव, नैसर्गिकं = प्राकृतम्, अकृत्रिममित्यर्थः। उन्नतत्वम् = औन्नत्यं, चित्तौन्नत्यमित्यर्थः। तदेव = पैतृकमेव, यथा रघो रूपादिकमासीत्तद्व-द्बालकस्याजस्याप्यासीन्न तु किञ्चिन्न्यूनमित्यर्थः। कुमारः = बालकः, अज इत्यर्थः। प्रवर्त्ति-तः = उत्पादितः, दीपः = प्रदीपः, प्रदीपाद् = दीपात्, स्वोत्पादकदीपादित्यर्थः। इव = यथा, स्वात् = स्वकीयात्, आत्मीयादित्यर्थः। कारणाद् = निमित्ताद्, जनकादित्यर्थः। न = नहि, विभिदे = अभिनद्, भिन्नो न बभूव, अर्थात् सर्वथा तत्तुल्य एवाभूत् ॥ ३७ ॥

समासादि—ओजोऽस्त्यस्मिन्नित्योजस्वि (न० लि०)। निसर्गतो जातं नैसर्गिकम् (न० लि०)। उन्नतस्य भाव उन्नतत्वम् (न० लि०) ॥ ३७ ॥

व्याकरणं—विभिदे = भिदिर् (विदारणे-इरित्) + लिट्, तप्रत्यये द्वित्वेऽभ्यासकार्यं-रूपम् ॥ ३७ ॥

वाच्यान्तरम्—ओजस्विना रूपेण तेनैव वीर्येण तेनैव नैसर्गिकेणोन्नतत्वेन "च" तेनैव "अभूयत" कुमारेण प्रवर्त्तितेन दीपेन प्रदीपादिव स्वात् कारणाद् न विभिदे ॥ ३७ ॥

कोशः—"निसर्गः सृष्टौ स्वभावे" इत्यनेकार्थसंग्रहः। "वन्धुरं तून्नतानतम्" इति। "दीपः प्रदीपः" इति चामरः ॥ ३७ ॥

तात्पर्यार्थः—यथैकस्मात्प्रदीपात्प्रज्वालितोऽपरः प्रदीपः स्वोत्पत्तिकारणात्पूर्वप्रदीपात् किञ्चिन्मात्रमपि प्रकाशादिकरणे न्यूनो न भवति किन्तु तत्सदृश एव भवति, तथैव कुमारो-ऽजोऽपि रूपपराक्रमादिभिः सर्वथा स्वजनकेन रघुणा तुल्य एवाभूत् ॥ ३७ ॥

भाषाऽर्थः—पिता के तुल्य तेज से युक्त शरीर वही, पराक्रम वही, स्वाभाविक चित्त का

उन्नत होना भी वही, अर्थात्–पिता हीके तुल्य होने से बालक अज, जैसे–जलाया गया दीपक ( जिस दीपक से जलाया गया है ) उस (दीपक) से भिन्न नहीं होता, अर्थात्–उसी तरह से प्रकाशक होता है, उसी भांति अपने उत्पन्न करने वाले पिता रघु से भिन्न नहीं हुये, अर्थात् शरीर–पराक्रम आदि में पिता के समान ही हुये ॥ ३७ ॥

*अथ बालकोऽजः क्रमशः सर्वा विद्या अधीत्य युवावस्थां प्राप्तः सन् यौवराज्यार्होऽभूदित्याह—*

उपात्तविद्यं विधिवद् गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषाऽपि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥ ३८ ॥

सञ्जीविनी—उपात्तविद्यमिति । गुरुभ्यो विधिवद्यथाशास्त्रमुपात्तविद्यं लब्धविद्यम् । यौवनस्योद्भेदादाविर्भावाद्धेतोर्विशेषेण कान्तं सौम्यं तमजं प्रति साभिलाषाऽपि श्रीः । धीरा स्थिरोन्नतचित्ता। 'स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति संज्ञितम्' इति भूपालः । कन्या पितुरिव। गुरोरनुज्ञामाचकाङ्क्षेयेप । यौवराज्यार्होऽभूदित्यर्थः । अनुज्ञाशब्दात्पितृपारतन्त्र्यमुपमानगम्यर्थात्पाणिग्रहणयोग्यता च ध्वन्यते ॥ ३८ ॥

अन्वयः—गुरुभ्यः, विधिवद्, उपात्तविद्यं, यौवनोद्भेदविशेषकान्तं, तम्, "प्रति", साभिलाषा, अपि, श्रीः, धीरा, कन्या, पितुः, इव, गुरोः, अनुज्ञाम्, आचकाङ्क्ष ॥ ३८ ॥

व्याख्या—गुरुभ्यः = उपाध्यायेभ्यः, विधिवद् = यथाविधि, शास्त्रोक्तरीत्येत्यर्थः । उपात्तविद्यं = प्राप्तचतुर्दशविद्यं, यौनवोद्भेदविशेषकान्तं = तारुण्यप्रादुर्भावातिशयसुन्दरं, तं = पूर्वोक्तम्, अजमित्यर्थः । प्रतीति शेषः । साभिलाषा = स्पृहावती, अनुरागिणीत्यर्थः । अपि = समुच्चयेऽर्थे, श्रीः = लक्ष्मीः, राजलक्ष्मीरित्यर्थः । धीरा = धैर्ययुक्ता, उन्नतचित्तेत्यर्थः । कन्या = कुमारी, अनूढेत्यर्थः । पितुः = जनकस्य, इव = यथा, गुरोः = श्रेष्ठस्य, रघोरित्यर्थः । अनुज्ञाम् = अनुमतिम्, आचकाङ्क्ष = चकमे, ऐच्छदित्यर्थः । युवराजपदे स्थापनार्होऽजोऽभूदिति भावः ॥ ३८ ॥

समासादि—उपात्ता विद्या येन स उपात्तविद्यः (ब०व्री०) तं तथोक्तम् । यूनो भावो यौवनं (न०लिं०), तस्योद्भेदो यौवनोद्भेदः (त०पु०), विशेषेण कान्तो विशेषकान्तः (त०पु०), यौवनोद्भेदाद् विशेषकान्तो यौवनोद्भेदविशेषकान्तः ( त० पु० ) तं यौवनोद्भेदविशेषकान्तम् । अभिलाषेण सह वर्तमाना साभिलाषा ( ब० व्री० ) ॥ ३८ ॥

व्याकरणम्—आचकाङ्क्ष = आङ् + (काक्षि ( काङ्क्षायाम्–इदित् ) + नुम् ) काङ्क्ष् + लिट्, द्वित्वेऽभ्यासकार्ये तिपो णलि रूपम् ॥ ३८ ॥

वाच्यान्तरं—गुरुभ्यो विधिवदुपात्तविद्यं योवनोद्भेदविशेषकान्तं तं प्रति साभिलाषयाऽपि श्रिया धीरया कन्यया पितुरिव गुरोरनुज्ञाऽऽचकाङ्क्षे ॥ ३८ ॥

कोशः—"तारुण्यं यौवनं समे" इति । अथ दोहदम् । इच्छा काङ्क्षा स्पृहेहातृड्वाञ्छा लिप्सा मनोरथः । कामोऽभिलाषस्तर्षश्च" इति चामरः । "कन्या कुमारिकानार्योरोषधिराशिभेदयोः" इति मेदिनी ॥ ३८ ॥

तात्पर्यार्थ.—यथोन्नतचित्ता काऽपि कन्या योग्यं स्वाभीप्सितं वरं वरीतुं सोत्कण्ठा सत्यपि पितुरनुमतिमेव प्रतीक्षते, तथैव राजलक्ष्मीरपि तारुण्याविर्भावादतिसुन्दरं सर्वराजोचितगुणसम्पन्नमजं वरीतुमुत्कण्ठिताऽपि गुरुजनस्य रघोरनुमतिं प्रतीक्षाञ्चक्रे ॥ ३८ ॥

भाषाऽर्थः—गुरुओं से विधिवद् ( शास्त्रोक्त–रीति से ब्रह्मचर्यादि रहकर तथा गुरुओं की सेवा करके ) सम्पूर्ण १४ विद्याओं को प्राप्त किये हुए, जवानी आने से अत्यन्त सुन्दर उन राजकुमार अज के प्रति अनुरागिणी होती हुई भी राजलक्ष्मी धीरा ( स्थिर उन्नत चित्त वाली ) कन्या जैसे पिता की आज्ञा ( मनो वाञ्छित पति वरण करने के लिये ) चाहती है,

वैसे ही श्रेष्ठ रघु महाराज की अनुमति चाहने लगी, अर्थात्—राजकुमार अज युवराज बनाने के योग्य हो गये ॥ ३८ ॥

*अथ रघुसमीपं विदर्भराजप्रेषितो दूत इन्दुमतीस्वयंवरार्थं राजकुमारस्याजस्यानयनार्थमाजगामेत्याह—*

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥

सञ्जीविनी—अथेश्वरेणेति । अथ स्वसुर्भगिन्या इन्दुमत्याः स्वयंवरार्थं कुमारस्याजस्यानयन उत्सुकेन क्रथकैशिकानां विदर्भदेशानामीश्वरेण स्वामिना भोजेन राज्ञाऽऽप्तो हितो दूतो रघवे विसृष्ट प्रेषितः । ( क्रियामात्रयोगेऽपि चतुर्थी ॥ ३९ ॥

अन्वयः—अथ, स्वसुः, इन्दुमत्याः, स्वयवरार्थं, कुमारानयनोत्सुकेन, क्रथकैशिकानाम्, ईश्वरेण, भोजेन, आप्तः, दूतः, रघवे, विसृष्टः ॥ ३९ ॥

व्याख्या—अथ = अनन्तरं, स्वसुः = सोदर्य्यायाः, भगिन्या इत्यर्थः । इन्दुमत्याः = तदाख्यायाः, स्वयंवरार्थं = स्वयंवराय, स्वेच्छया राजसभायां पतिवरणार्थमित्यर्थः । कुमारानयनोत्सुकेन = युवराजानयनोत्कण्ठितेन, अजस्यानयनविषये सोत्कण्ठेनेत्यर्थः । क्रथकैशिकानां = विदर्भदेशानाम्, ईश्वरेण = प्रभुणा, विदर्भाधिपतिनेत्यर्थः । भोजेन = तदाह्वयेन, केनचिद्राज्ञेत्यर्थः । आप्तः = प्रत्ययितः, विश्वस्त इत्यर्थः । दूतः = सन्देशहरः, रघवे = दिलीपसूनवे, रघु प्रतीत्यर्थः। विसृष्टः = विससृजे, अजानयनार्थं भोजराजप्रेपितो दूतो रघुमाजगाम ॥३९॥

समासादि—स्वयमात्मना सदसि पत्युर्वरणमिति स्वयंवरः ( पुं० ) तस्मा इति स्वयंवरार्थं ( नि० स० ) । कुमारस्यानयनं कुमारानयनं ( त० पु० ), तत्रोत्सुकः कुमारानयनोत्सुकः ( त० पु० ) तेन कुमारानयनोत्सुकेन ॥ ३९ ॥

व्याकरणं—विसृष्ट. = वि + सृज ( विसर्गे-अकारेत् ) + क्तः + सु ॥ ३९ ॥

वाच्यान्तरम्—अथ स्वसुरिन्दुमत्याः स्वयंवरार्थं कुमारानयनोत्सुकः क्रथकैशिकानामीश्वरो भोज आप्तं दूतं रघवे विसृष्टवान् ॥ ३९ ॥

कोशः—"ईश्वरो मन्मथे शंभौ नाऽऽढ्ये स्वामिनि वाच्यवत्" इति विश्वः । "भगिनी-स्वसा" इत्यमरः । "आप्तः प्रत्ययितौ समौ" इति । "आप्तो लब्धे स्वसत्ययोः" इति चामरमेदिन्यौ । "कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके" इति मेदिनी । "स्यात्संदेशहरो-दूतः" इति चामरः ॥ ३९ ॥

तात्पर्यार्थः—अथ विदर्भदेशाधिपतिर्भोजो भगिन्या इन्दुमत्याः स्वयंवरार्थं युवराजस्यानयनार्थं रघुसमीपे कश्चिदात्मीयो विश्वस्तो दूतः प्रेपितवान् ॥ ३९ ॥

भाषाऽर्थः—इस के बाद अपनी बहिन इन्दुमती के स्वयंवर के लिये युवराज "अज" के बुलवाने में उत्कण्ठित विदर्भदेश के महाराज भोज ने अपना विश्वासपात्र दूत रघु महाराज के पास भेजा ॥ ३९ ॥

*अथ रघुर्विदर्भाधिपराजधानीम् प्रत्यजं सैन्यैः सह प्रस्थापयामासेत्याह—*

तं श्लाघ्यसम्बन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ ४० ॥

सञ्जीविनी—तमिति । असौ रघुस्तं भोजं श्लाघ्यसम्बन्धमनूचानत्वादिगुणयोगात्स्पृहणीयसम्बन्धं विचिन्त्य विचार्य पुत्रं च दारक्रियायोग्यदशं विवाहयोग्यवयस्कं विचिन्त्य ससैन्यमेनं पुत्रमृद्धां समृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रति प्रस्थापयामास । धीयतेऽस्यामिति धानी । "करणाधिकरणयोश्च" इत्यधिकरणे ल्युट्प्रत्ययः । राज्ञां धानीति विग्रहः ॥ ४० ॥

अन्वयः--असौ, तं, श्लाघ्यसम्बन्धं, विचिन्त्य, पुत्रं, च, दारक्रियोग्यदशं, "विचिन्त्य", ससैन्यम्, एनम्, ऋद्धां, विदर्भाधिपराजधानीं, "प्रति", प्रस्थापयामास ॥ ४० ॥

व्याख्या--असौ = एषः, रघुरित्यर्थः । तं = पूर्वोक्तं भोजमित्यर्थः । श्लाघ्यसम्बन्धं = कमनीयसम्बन्धं, साङ्गवेदविचक्षणत्वविनयादिसद्गुणयोगादिति भावः । विचिन्त्य = समीक्ष्य, पुत्रं = तनयम्, अजमित्यर्थः । च = समुच्चयेऽर्थे, दारक्रियायोग्यदशम् = उद्वाहार्हावस्थं, विवाहयोग्यवयस्कमित्यर्थः । विचिन्त्येत्यस्यात्राप्यन्वयः कार्यः । ससैन्यं = बलसंयुतं, सेनासहितमित्यर्थः । एनं = युवराजम्, अजमित्यर्थः । ऋद्धां = समृद्धां, सर्वैश्वर्यसम्पन्नामित्यर्थः । विदर्भाधिपराजधानीं = क्रथकैशिकेश्वरपुरीम्, भोजनगरीमित्यर्थः । प्रतीति शेषः । प्रस्थापयामास = प्रस्थापयति स्म, प्रेषयामासेत्यर्थः ॥ ४० ॥

समासादि--श्लाघ्यः सम्बन्धो यस्य स श्लाघ्यसम्बन्धः (ब० व्री०) तं श्लाघ्यसम्बन्धम् । दाराणां क्रिया दारक्रिया ( त० पु० ), तस्या योग्या दारक्रियायोग्या ( त० पु० ), तादृशी दशा यस्य स दारक्रियायोग्यदशः ( ब० व्री० ) त तथोक्तम् । सैन्यैः सहितो यः स ससैन्यः ( ब० व्री० ) तं ससैन्यम् । धीयतेऽस्यामिति धानी ( स्त्री० ) राज्ञां धानी राजधानी ( त० पु० ), विदर्भाणामधिपो विदर्भाधिपः ( त० पु० ), तस्य राजधानी विदर्भाधिपराजधानी ( त० पु० ) तां तथोक्ताम् ॥ ४० ॥

व्याकरणं--विचिन्त्य = वि + चिति ( स्मृत्याम्-इदित् ) + नुम् + णिच् ) चिन्ति + क्त्वा + ल्यप् । प्रस्थापयामास = प्र + (ष्ठा ( गतिनिवृत्तौ ) पुक् + णिच् ) स्थापि + आम् + अस + (भुवाद-अकारेत्) + लिट्, तिपो णलि रूपम् ॥ ४० ॥

वाच्यान्तरम्--अनेन तं श्लाघ्यसम्बन्धं विचिन्त्य, पुत्रं च दारक्रियायोग्यदशं "विचिन्त्य" ससैन्य एष ऋद्धां विदर्भाधिपराजधानीं "प्रति" प्रस्थापयाञ्चक्रे ॥ ४० ॥

कोशः--"योग्यः प्रवीणयोगार्होपायशक्तेषु वाच्यवत्" इति मेदिनी । "दशा वर्त्यामवस्थायां वस्त्रान्ते भूम्नि पुंस्त्रियोः" इति रभसः । "सैन्यं क्लीबं बले सेनासमवेते तु वाच्यवत्" इति मेदिनी ॥ ४० ॥

तात्पर्यार्थः--महाराजो रघुर्विदर्भाधिपतिना सह सम्बन्धं प्रशंसनीयं मत्वा पुत्रं च विवाहयोग्यवयस्कञ्च मत्वा सैन्येन सहितं युवराजमजं भोजराजधानीम्प्रति प्रेषयामास ॥ ४० ॥

भाषाऽर्थः--इन रघु महाराज ने उन भोज महाराज के साथ सम्बन्ध प्रशंसनीय होगा, यह सोच कर तथा पुत्र की विवाह के योग्य अवस्था विचार कर सेना के सहित इन युवराज अज को समृद्धि-युक्त विदर्भ देश के महाराज की राजधानी को भेजा ॥ ४० ॥

> अथ विदर्भराजधानीं प्रति गच्छतो रघुसूनोर्मार्गे रचितानि निवासस्थानानि नगरीविहारस्थानतुल्यान्यासन्नित्याह--<

**तस्यापकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।**
**मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥**

सञ्जीविनी--तस्येति । उपकार्यासु राजयोग्येषु पटभवनादिषु । 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरवचनव्याख्याने क्षीरस्वामी । उपक्रियत उपकरोति वा पटमण्डपादि राजसदनमिति । रचिता उपचाराः शयनादयो येषु ते तथोक्ताः । जानपदानां जनपदेभ्य आगतानामुपदाभिरुपायनैः । वन्या वने भवा इतरे येषां ते वन्येतराः । अवन्या इत्यर्थः । "न बहुव्रीहौ" इति सर्वनामसंज्ञाप्रतिषेधः । तत्पुरुषे सर्वनामसंज्ञा दुर्वारैव । तस्य मनुजेन्द्रसूनोरजस्य मार्गे निवासा वासनिका उद्यानान्याक्रीडाः । 'पुमानाक्रीड उद्यानम्, इत्यमरः । तान्येव विहारा विहारस्थानानि तत्कल्पाः । तत्सदृशा इत्यर्थः । "ईषदसमाप्तौ०" इति कल्पप्प्रत्ययः । बभूवुः ॥ ४१ ॥

अन्वयः—उपकार्यारचितोपचाराः, जानपदोपदाभिः, वन्येतराः, तस्य, मनुजेन्द्रसूनोः, मार्गे, निवासाः, उद्यानविहारकल्पाः, बभूवुः ॥ ४१ ॥

व्याख्या—उपकार्यारचितोपचाराः = उपकारिकानिष्पादितशयनाद्युपचाराः, पटनिर्मितराजसद्मनेषु विरचितशयनादिशालिन इत्यर्थः। जानपदोपदाभिः = जनपदागतोपहारैः, वन्येतराः = वनोद्भवान्याः, वनोद्भवभिन्ना इत्यर्थः, तस्य = पूर्वोक्तस्य, मनुजेन्द्रसूनोः = नरेश्वरतनयस्य, अजस्येत्यर्थः। मार्गे = अध्वनि, निवासाः = निवासगृहाः, उद्यानविहारकल्पाः = आक्रीडविहारस्थानतुल्याः, राजकीयसर्वोपभोग्यवनविहारस्थानसदृशा इत्यर्थः। बभूवुः = अभूवन्, यथाऽयोध्यायां राजकीयसर्वोपभोग्यवनानि विहारस्थानान्यासन्, तद्वदत्रापि प्रत्येकनिवासस्थानानि तत्प्रभावाद् विहारस्थानतुल्यान्यासन्निति भावः ॥४१॥

समासादि—उपक्रियत इत्युपकार्या (स्त्री०), उपकार्यासु रचिता उपकार्यारचिताः (त० पु०), त उपचारा येषु त उपकार्यारचितोपचाराः (ब० व्री०)। वन्या इतरे येषान्ते वन्येतराः (ब० व्री०)। जनपदेभ्य आगता इति जानपदाः (पुं०), तेषामुपदा जानपदोपदाः (त० पु०) ताभिर्जानपदोपदाभिः। मनुजेष्विन्द्रो मनुजेन्द्रः (त० पु०), तस्य सूनुर्मनुजेन्द्रसूनुः (त० पु०) तस्य तथोक्तस्य। उद्यानान्येव विहारा इत्युद्यानविहाराः (क० धा०), ईषदूना उद्यानविहारा इत्युद्यानविहारकल्पाः (पुं०) ॥ ४१ ॥

व्याकरणम्—उपकार्याः = उप + डुकृञ् (करणे—डुञित्) + ण्यत् + टाप् + जस्, कर्मणि प्रत्ययः। बभूवुः = भू (सत्तायाम्) + लिट्, झेरुसि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४१ ॥

वाच्यान्तरम्—उपकार्यारचितोपचारैर्जानपदोपदाभिर्वन्येतरैस्तस्य मनुजेन्द्रसूनोर्मार्गे निवासैरुद्यानविहारकल्पैर्बभूवे ॥ ४१ ॥

कोशः—"उपकार्योपकारिका" इत्यमरः। "उपकार्या राजसद्मन्युपकारोचितेऽन्यवत्" इति च मेदिनी। "पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्" इत्यमरः ॥ ४१ ॥

तात्पर्यार्थः—विदर्भाधिपराजधानीं प्रति सैन्येन सह गच्छतस्तस्याजस्य मार्गे राजयोग्यपटमण्डपेषु रचितशयनादिभिर्जनपदनिवासिभिरुपायनीकृताभिर्विविधाभिः सुखसाधनसामग्रीभिर्निवासस्थानानि राजधानीस्थितोद्यानविहारस्थानतुल्यानि बभूवुः ॥ ४१ ॥

भाषाऽर्थः—राजाओं के योग्य तम्बुओं में शय्या आदिक जहां पर बिछी हुई हैं तथा नगरों से आये हुये उपहार स्वरूप सुखसाधन सामग्रियों से जो जंगल में बने हुये की भांति नहीं मालूम पड़ रहा है ऐसे उन महाराज रघु के युवराज अज के मार्ग के निवास-स्थान अपनी राजधानी के बगीचों में बने हुये विहार स्थानों के समान ही हुये ॥ ४१ ॥

*अथ रघुसूनुरजो नर्मदातटं प्राप्य तत्र सैन्येन सह निवासं कृतवानित्याह—*

**स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले।**
**निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२ ॥**

सञ्जीविनी—स इति। विलङ्घिताध्वाऽतिक्रान्तमार्गः सोऽजः सीकरार्द्रैः। शीतलैरित्यर्थः। मरुद्भिर्वातैरानर्तिताः कम्पिता नक्तमालाश्चिरविल्वाख्यवृक्षभेदाः। 'चिरविल्वे नक्तमालः करजश्च करञ्जके' इत्यमरः। यस्मिंस्तस्मिन्। निवेशार्ह इत्यर्थः। नर्मदाया रोधसि रेवायास्तीरे क्लान्तं श्रान्तं रजोभिर्धूसराः केतवो ध्वजा यस्य तत्सैन्यं निवेशयामास ॥ ४२ ॥

अन्वयः—विलङ्घिताध्वा, सः, सीकरार्द्रैः, मरुद्भिः, आनर्तितनक्तमाले, नर्मदारोधसि, क्लान्तं, रजोधूसरकेतु, सैन्यं, निवेशयामास ॥ ४२ ॥

व्याख्या—विलङ्घिताध्वा = अतिवाहितवर्त्मा, सः = पूर्वोक्तः, अज इत्यर्थः। सीकरार्द्रैः = अम्बुकणक्लिन्नैः, शिशिरैरित्यर्थः। मरुद्भिः = पवनैः, आनर्तितनक्तमाले = सञ्चालितकरञ्जके, नर्मदारोधसि = रेवाऽऽख्यसरित्तटे, क्लान्तं = परिश्रान्तं, रजोधूसरकेतु = धूल्युपत्पाण्डुकेतनं,

सैन्यं = सेनां, निवेशयामास = न्यवेशयत्, निवासं कारयामासेत्यर्थः ॥ ४२ ॥

समासादि—नर्मदाया रोधो नर्मदारोधः (त० पु०) तस्मिन् नर्मदारोधसि । सीकरैरार्द्राः सीकरार्द्राः ( त० पु० ) तैः सीकरार्द्रैः । आनर्तिता नक्तमाला यस्मिंस्तदानर्तितनक्तमालं ( ब० ब्री० ) तस्मिन्नानर्तितनक्तमाले । विलङ्घितोऽध्वा येन स विलङ्घिताध्वा ( ब० ब्री० ) । रजोभिर्धूसरा रजोधूसराः ( त० पु० ), ते केतवो यस्य तद् रजोधूसरकेतु ( ब० ब्री० ) तच्चथोक्तम् ॥ ४२ ॥

व्याकरणं—निवेशयामास = नि + ( विश ( प्रवेशने-अकारेत् ) + णिच् + ) वेशि + आम् + अस ( भुवि-अकारेत् ) + लिट्, तिपो णलि रूपम् ॥ ४२ ॥

वाच्यान्तरं—विलङ्घिताध्वना तेन सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले नर्मदारोधसि क्लान्तं रजोधूसरकेतु सैन्यं निवेशयाञ्चक्रे ॥ ४२ ॥

कोशः—"रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका" इति । "कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु" इति । "शीकरोऽम्बुकणाः स्मृताः" इति । "ईषत् पाण्डुस्तु धूसरः" इति चामरः ॥ ४२ ॥

तात्पर्यार्थः—सोऽज इत्थं सुखेन मार्गमतिक्रामन् धूलिधूसरं सैन्यं परिक्लान्तं दृष्ट्वा नर्मदातटे शीतलैः पवनैरध्वखेदमपनिनीषुर्निवासं चकार ॥ ४२ ॥

भाषाऽर्थः—मार्ग ( मंजिल ) को चल करके पूरा किये हुये उन युवराज अज ने जल के कणों से आर्द्र अर्थात् शीतल वायु से जहां पर चिरविल्वनामक वृक्ष हिल रहे हैं, ऐसे नर्मदा नदी के किनारे पर थकी हुई, धूलि से धूसर जिनकी पताकाएं हो रही हैं, ऐसी अपनी सेना को ठहराया ॥ ४२ ॥

अथ सेनानिवासकरणानन्तरं नर्मदातः कश्चिद्वन्यो गज उत्थित इत्याह—

**अथोपरिष्टाद् भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।**
**निर्धौतदानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥**

सञ्जीविनी—अथेति । अथोपरिष्टादूर्ध्वम् । "उपर्युपरिष्टात्" इति निपातः । भ्रमद्भिः । मदलोभादिति भावः । भ्रमरैः प्रागुन्मज्जनात्पूर्वं सूचितो ज्ञापितोऽन्तःसलिले प्रवेशो यस्य स तथोक्तः । निर्धौतदाने क्षालितमदे अत एवामले गण्डभित्ती यस्य स तथोक्तः । 'दानं गजमदे त्यागे' इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । "प्रशंसावचनैश्च" इति समासः । भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ—'मतल्लिकोद्धसिश्राः स्युः प्रकाण्डस्थलभित्तयः' इति । भित्तिः प्रदेशो वा । 'भित्तिः प्रदेशे कुड्येऽपि' इति विश्वः । निर्धौतदानेनामला गण्डभित्तिर्यस्येति वा । वन्यो गजः सरित्तो नर्मदायाः सकाशात् । ( पञ्चम्यास्तसिल्प्रत्ययः ) । उन्ममज्जोत्थितः ॥ ४३ ॥

अन्वयः—अथ, उपरिष्टाद्, भ्रमद्भिः, भ्रमरैः, प्राक्सूचितान्तःसलिलप्रवेशः, निर्धौतदानामलगण्डभित्तिः, वन्यः, गजः, सरित्तः, उन्ममज्ज ॥ ४३ ॥

व्याख्या—अथ = अनन्तरं, सेनानिवासकरणानन्तरमित्यर्थः । उपरिष्टाद् = ऊर्ध्वं, गण्डस्थलोपरीत्यर्थः । भ्रमद्भिः = उड्डीयमानैः, मदगन्धं जिघृक्षुभिरिति भावः । भ्रमरैः = अलिभिः, प्राक्सूचितान्तःसलिलप्रवेशः = प्रथमविज्ञापितजलाभ्यन्तरमज्जनः, उन्मज्जनात् पूर्वं जलाभ्यन्तरे यस्य निमज्जनं, संसूचितमित्यर्थः । अत एवेति शेषः । निर्धौतदानामलगण्डभित्तिः = प्रक्षालितमदनिर्मलकटप्रदेशः, जलाभ्यन्तरे निमज्जनेन प्रक्षालितमदतया यस्योभौ कपोलदेशौ स्वच्छावास्तामित्यर्थः । वन्यः = अरण्योद्भवः, गजः = करी, सरित्तः = नदीतः, नर्मदायाः सकाशादित्यर्थः । उन्ममज्ज = उत्तस्थौ, जलाभ्यन्तरादुपरि निर्गत इत्यर्थः ॥ ४३ ॥

समासादि—सलिलस्यान्तरन्तःसलिलं ( त० पु० ), तस्मिन् प्रवेशोऽन्तःसलिलप्रवेशः ( त० पु० ), प्राक्सूचितोऽन्तःसलिलप्रवेशो यस्य स प्राक्सूचितान्तःसलिलप्रवेशः ( ब० व्री० )। निर्धौतं दानं ययोस्ते निर्धौतदाने ( ब० व्री० ), निर्धौतदानेऽत एवामले गण्डभित्ती यस्य स निर्धौतदानामलगण्डभित्तिः ( ब० व्री० ) ॥ ४३ ॥

व्याकरणम्—उन्ममज्ज = उद् + टुमस्जो ( शुद्धौ–टुवोदित् ) + लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४३ ॥

वाच्यान्तरम्—अथोपरिष्टाद् भ्रमद्भिर्भ्रमरैः प्राक्सूचितान्तःसलिलप्रवेशेन निर्धौतदानामलगण्डभित्तिना वन्येन गजेन सरित्त उन्ममज्जे ॥ ४३ ॥

कोश—"भ्रमरः कामुके भृगे" इति । "अमलं त्वभ्रके क्लीवं लक्ष्म्यां स्त्री निर्मले त्रिषु" इति च मेदिनी । "गण्डः कटो" इति । "गण्डः कपोलौ" इति चामरः ॥ ४३ ॥

तात्पर्यार्थः—सेनानिवासकरणानन्तरं जलाभ्यन्तरे निमज्जनेन प्रक्षालितमदतया यस्य कपोलप्रदेशौ निर्मलावास्तां, तथा यस्योपरि मदलोभाद् भ्रमन्तो भ्रमरास्तस्य मदसत्त्वं पूर्णतया सूचयन्त आसन्, एवं भूतः कश्चिद्वन्यो गजो नर्मदासलिलमध्यादुत्थितः ॥ ४३ ॥

भाषाऽर्थः—सेना ठहरा चुकने के बाद मद के लोभ से ऊपर उड़ते हुये भौंरों से पहले जल में डूब कर जिसका नहाना सूचित हो रहा था, अत एव ( जल में डूब कर नहाने से ) जिसके मद धुल गए हैं, ऐसे दोनों गण्डस्थल जिसके निर्मल हो रहे हैं ऐसा कोई जङ्गली हाथी नर्मदा नदी से निकला ॥ ४३ ॥

*अथ नर्मदासलिलादुत्थितस्य गजस्य शोभां युग्मेन वर्णयितुकामः कविरादौ तस्य वप्रक्रियासूचकं दन्तद्वयमेव वर्णयन्नाह—*

**निःशेषविक्षालितधातुनाऽपि वप्रक्रियामृक्षवतस्तटेषु ।**
**नीलोर्ध्वरेखाशबलेन शंसन्दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥**

सञ्जीविनी—निःशेषेति । कथंभूतो गजः । निःशेषविक्षालितधातुनाऽपि धौतगैरिकादिनाऽपि । नीलाभिरूर्ध्वाभी रेखाभिस्तटाभिघातजनिताभिः शबलेन कर्बुरेण ।'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । अश्मभिः पाषाणैर्विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन । ऋक्षवान्नाम कश्चित्तत्रत्यः पर्वतः । तस्य तटेषु वप्रक्रियां वप्रक्रीडाम् । उत्खातकेलिमित्यर्थः 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इति शब्दार्णवः । शंसन्कथयन् । सूचयन्नित्यर्थः । युग्मम् ॥ ४४ ॥

अन्वयः—"निःशेषविक्षालितधातुना, अपि, नीलोर्ध्वरेखाशबलेन, अश्मविकुण्ठितेन, दन्तद्वयेन, ऋक्षवतः, तटेषु, वप्रक्रियां, शंसन्, "स बभौ" ॥ ४४ ॥

व्याख्या—निःशेषविक्षालितधातुना = सम्पूर्णनिर्धौतगैरिकादिधातुना, निमज्जनेन यस्मिन् संसक्ता गैरिकादिधातवः प्रक्षालिता आसन्नित्यर्थः । अपि = युक्तपदार्थे, नीलोर्ध्वरेखाशबलेन = श्यामलोपरितनलेखाचित्रेण, शैलतटप्रहारजनिताभिः श्यामाभिरुपरितनीभिर्लेखाभिश्चित्रवर्णेनेत्यर्थः । अश्मविकुण्ठितेन = प्रस्तरकुण्ठीकृतेन, प्रस्तरेषु सन्ततावातेन प्राप्तकुण्ठीभावेनेत्यर्थः । दन्तद्वयेन = दशनद्वितयेन, ऋक्षवतः = तदाख्यपर्वतस्य, तटेषु = भृगुषु, पर्वतप्रान्तभागेष्वित्यर्थः । वप्रक्रियाम् = उत्खातकेलिं, शंसन् = व्यक्तीकुर्वन्, "सः = पूर्वोक्तः, नर्मदात उत्थितो गज इत्यर्थः । बभौ = शुशुभे," "स बभौ" इति पदद्वयस्य युग्मत्वादग्रिमश्लोकादन्वयोऽत्र कार्यः ॥ ४४ ॥

समासादि—निश्शेषं यथा तथा विक्षालितो निश्शेषविक्षालितः ( त०पु० ), स धातुर्येन तद् निश्शेषविक्षालितधातु ( ब० व्री० ) तेन निश्शेषविक्षालितधातुना । ऊर्ध्वाश्च ता रेखा इत्यूर्ध्वरेखाः ( क० धा० ), नीलाश्च ता ऊर्ध्वरेखा इति नीलोर्ध्वरेखाः ( क०धा० ) ताभिः शबलं नीलोर्ध्वरेखाशबलं ( त० पु० ) तेन तथोक्तेन । दन्तयोर्द्वयं दन्तद्वय ( त० पु० )

तेन दन्तद्वयेन । अश्मभिर्विकुण्ठितमश्मविकुण्ठितं (त० पु०) तेनाश्मविकुण्ठितेन ॥ ४४ ॥

व्याकरणं—शंसन् = शंसु (स्तुतौ—उदित्) + शप् + लट् + शतृ + सु ॥ ४४ ॥

वाच्यान्तरं—निःशेषविक्षालितधातुनाऽपि नीलोर्ध्वरेखाशबलेनाश्मविकुण्ठितेन दन्तद्वयेन ऋक्षवतस्तटेषु वप्रक्रियां शंसता "तेन बभे" ॥ ४४ ॥

कोशः—"पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः ॥ ४४ ॥

तात्पर्यार्थः—स नर्मदात उत्थितो गजे ऋक्षवत्पर्वततटेषु कृतवप्रक्रियासूचिकाभिर्नीलोर्ध्वरेखाभिः संयुतं प्रस्तरेषु सन्तताभिघातेन कुण्ठितं च दन्तद्वयं वहन् शुशुभे ॥ ४४ ॥

भाषाऽर्थः—जल में डूबकर स्नान करने से जिसमें लगे हुये गैरिकादि धातु अच्छी तरह से धुल कर साफ हो गये हैं, और पर्वत के तट प्रान्त पर प्रहार करने से ऊपर की तरफ काली रेखायें पड़ने से जो चितकावर रंग के हो रहे हैं, तथा पत्थरों से जिनके नोक घिस गये हैं ऐसे अपने दोनों दाँतों से "ऋक्षवान्" नामक नर्मदा के पास के पर्वत के तट प्रान्तों में किये हुये उत्खात-केलि अर्थात् पत्थरों को दाँतों से उखाड़ने के खेल को सूचित करता हुआ वह नर्मदा से निकला हुआ हाथी सुशोभित होने लगा ॥ ४४ ॥

*तीरमभिलक्ष्याजिगमिषया बृहत्तरङ्गान् करेण विदारयतो गजस्य शोभामुत्प्रेक्षमाणः कविराह—*

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।
बभौ स भिन्दन्बृहतस्तरङ्गान् वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥

सञ्जीविनी—संहारेति । संहारविक्षेपयोः संकोचनप्रसारणयोर्लघुक्रियेण क्षिप्रव्यापारेण । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । हस्तेन शुण्डादण्डेन । 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इति विश्वः । सशब्दं सघोषं बृहतस्तरङ्गान्भिन्दन्विदारयँस्तीराभिमुखः स गजः । वारी गजबन्धनस्थानम् । 'वारी तु गजबन्धनी' इति यादवः । वार्या अर्गलाया विष्कम्भस्य भङ्गे भञ्जने प्रवृत्त इव बभौ ॥ ४५ ॥

अन्वयः—संहारविक्षेपलघुक्रियेण, हस्तेन, सशब्दं, बृहतः, तरङ्गान्, भिन्दन्, तीराभिमुखः, सः, वार्यर्गलाभङ्गे, प्रवृत्तः, इव, बभौ ॥ ४५ ॥

व्याख्या—संहारविक्षेपलघुक्रियेण = आकुञ्चनप्रसारणद्रुतव्यापारेण, शीघ्रतया संकोचनप्रसारणक्रियाशीलेनेत्यर्थः । हस्तेन = शुण्डादण्डेन, सशब्दं = ध्वनिसहितं, बृहतः = महतः, तरङ्गान् = ऊर्मीन्, भिन्दन् = विदारयन्, भिन्नान् कुर्वन्नित्यर्थः । तीराभिमुखः = तटाभिमुखः, तीरमभिलक्ष्याजिगमिषयेति भावः । सः = पूर्वोक्तः, नर्मदात उत्थितो गज इत्यर्थः । वार्यर्गलाभङ्गे, = गजबन्धनीविष्कम्भखण्डने, प्रवृत्तः = उद्यतः, इव = यथा, बभौ = शुशुभे ॥ ४५ ॥

समासादि—संहारश्च विक्षेपश्च संहारविक्षेपौ (द्व०), लघ्वी क्रिया यस्य स लघुक्रियः (ब० व्री०), संहारविक्षेपयोर्लघुक्रियः संहारविक्षेपलघुक्रियः (त० पु०) तेन संहारविक्षेपलघुक्रियेण । तीरस्याभिमुखस्तीराभिमुखः (त० पु०) । शब्देन सहितं सशब्दं (ब० व्री०) । वार्या अर्गला वार्यर्गला (त० पु०), तस्या भङ्गो वार्यर्गलाभङ्गः (त० पु०) तस्मिन् वार्यर्गलाभङ्गे ॥ ४५ ॥

व्याकरणं—बभौ = भा (दीप्तौ) + लिट्, लिटस्तिपो णल औत्वेऽभ्यासकार्यं रूपम् ॥ ४५ ॥

वाच्यान्तरं—संहारविक्षेपलघुक्रियेण हस्तेन सशब्दं बृहतस्तरङ्गान् भिन्दता तीराभिमुखेन तेन वार्यर्गलाभङ्गे प्रवृत्तेनेव बभे ॥ ४५ ॥

कोशः—"कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु" इति । "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि." इति चामरः । "अर्गला त्रिषु कल्लोलेऽन्तर्दण्डवारयोर्न ना" इति मेदिनी ॥ ४५ ॥

तात्पर्यार्थः—तीरम् प्रत्याजिगमिषया तदभिमुखः स्थितः स गजः शुण्डादण्डस्य संकोचनप्रसारणाभ्यां सशब्दं यथा स्यात्तथा नर्मदाया महतस्तरङ्गान् विदारयन् गजबन्धनस्थानसम्बन्ध्यर्गलाया भञ्जने यथा प्रवृत्तः स्यात्तथैवादृश्यत ॥ ४५ ॥

भाषार्थः—बटोरने और फैलाने में जिसके व्यापार जल्दी २ हो रहे हैं, ऐसे अपने सूंड से शब्द के साथ जैसे हो वैसे बड़े २ तरङ्गों को चीरता हुआ नर्मदा के तीर की तरफ मुख किये हुये उस हाथी ने जैसे हाथी बांधने के स्थान की अर्गला के तोड़ने में प्रवृत्त होने से शोभा होती है, वैसी शोभा पाई ॥ ४५ ॥

*इत्थं तरङ्गान् स गजो यत्र तटेऽजसैन्यं स्थितं तत्तटं प्रापदिति वर्णयन् कविराह—*

शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

सञ्जीविनी—शैलोपम इति । शैलोपमः स गजः शैवलमञ्जरीणां जालानि वृन्दान्युरसा कर्षन्पश्चात्तटमुत्ससर्प । पूर्वं तेन गजेनोत्पीडितो नुन्नो वारिराशिर्यस्य स सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

अन्वयः—शैलोपमः, सः, शैवलमञ्जरीणां, जालानि, उरसा, कर्षन्, पश्चात्, तटम्, उत्ससर्प, पूर्वं, तदुत्पीडितवारिराशिः, सरित्प्रवाहः, "तटम्, उत्ससर्प" ॥ ४६ ॥

व्याख्या—शैलोपमः = पर्वतसदृशः, महाविशालकाय इत्यर्थः । सः = पूर्वोक्तः, गज इत्यर्थः । शैवलमञ्जरीणां = शेवालवल्लरीणां, जालानि = समूहान्, उरसा = वक्षसा, कर्षन् = आकर्षन्, उन्मूल्य निजाग्रे नयन्निति भावः । पश्चात् = अनन्तरं, सरित्प्रवाहप्राप्त्यनन्तरमित्यर्थः । तटं = तीरं, यत्र रघुसैन्यं स्थितं तत्तटमित्यर्थः । उत्ससर्प = प्रापत्, पूर्वं = प्राक्, तत्प्राप्तेः प्रथममित्यर्थः । तदुत्पीडितवारिराशिः = पूर्वोक्तगजप्रेरितजलसमूहः, सरित्प्रवाहः = नदीनिरवच्छिन्नजलप्रवृत्तिः, "तटमुत्ससर्प" इति पदद्वयस्यात्राप्यन्वयः कार्यः ॥ ४६ ॥

समासादि—शैल उपमा यस्य स शैलोपमः (ब०ब्री०) । शैवलानां मञ्जर्यः शैवलमञ्जर्यः (त०पु०) तासां शैवलमञ्जरीणाम् । तेनोत्पीडितस्तदुत्पीडितः (त०पु०), वारीणां राशिर्वारिराशिः (त०पु०), तदुत्पीडितो वारिराशिर्यस्य स तदुत्पीडितवारिराशिः (ब० ब्री०) । सरितः प्रवाहः सरित्प्रवाहः (त० पु०) ॥ ४६ ॥

व्याकरणम्—उत्ससर्प = उद् + सृप (गतौ-अकारेत्) + लिट्, लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४६ ॥

वाच्यान्तरं—शैलोपमेन तेन शैवलमञ्जरीणां जालान्युरसा कर्षता पश्चात् तट उत्ससृपे, पूर्वं तदुत्पीडितवारिराशिना सरित्प्रवाहेण "तट उत्ससृपे" ॥ ४६ ॥

कोश—"वल्लरिर्मञ्जरिः स्त्रियौ" इति । "जालं समूह आनायो गवाक्षक्षारकावपि" इति । "जलनीली तु शेवालं शैवलः" इति चामरः ॥ ४६ ॥

तात्पर्यार्थः—पर्वताकारः स गजः शैवलवल्लरीणां समूहान् वक्षःस्थलेनाकर्षन् नदीतीरमाजगाम, तेन क्षुभितो नर्मदाजलप्रवाहस्तु तत्प्रागेव तटं प्राप्य तत् प्लावयामास ॥४६॥

भाषार्थ—पर्वत के समान आकार वाला वह हाथी शेवार के मञ्जरियों के समूहों को छाती से खैंचता हुआ पीछे से तीर पर पहुँचा, और उसके पहिले उस गज से हिलाया गया है जल की राशि जिसका ऐसा नदी का प्रवाह तट पर पहुँच गया ॥ ४६ ॥

*अथ तटं प्राप्य ततस्तत्र स्थितसैन्यगजदर्शनेन तस्य वन्यगजेन्द्रस्य कपोलप्रदेशाभ्यां मदस्रावोऽभूदित्याह—*

तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

सञ्जीविनी—तस्येति । तस्यैकनागस्यैकाकिनो गजस्य कपोलभित्त्योर्जलावगाहेन क्षणमात्रे शान्ता निवृत्ता मददुर्दिनश्रीर्मदवर्षलक्ष्मीर्वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन पुनर्दिदीपे ववृधे ॥ ४७ ॥

अन्वयः—तस्य, एकनागस्य, कपोलभित्त्योः, जलावगाहक्षणमात्रशान्ता, मददुर्दिनश्रीः, वन्येतरानेकपदर्शनेन, पुनः, दिदीपे ॥ ४७ ॥

व्याख्या—तस्य = पूर्वोक्तस्य, एकनागस्य = मुख्यगजस्य, गजेन्द्रस्येत्यर्थः । कपोलभित्त्योः = गण्डप्रदेशयोः, मदोद्भवस्थानयोरिति भावः । जलावगाहक्षणमात्रशान्ता = सलिलनिमज्जनमुहूर्त्तमात्रनिवृत्ता, मददुर्दिनश्रीः = दानवर्षशोभा, वन्येतरानेकपदर्शनेन = अरण्योद्भवभिन्नद्विपावलोकनेन, सेनागजेन्द्रदर्शनेनेत्यर्थः । पुनः = भूयः, दिदीपे = अदीप्यत, पुनः पूर्ववद्वेगेन मदस्रावोऽभूदित्यर्थः ॥ ४७ ॥

समासादि—एकश्चासौ नाग एकनागः ( क० धा० ) तस्यैकनागस्य । कपोलयोर्भित्ती-कपोलभित्ती ( त० पु० ) तयोः कपोलभित्त्योः । जलेऽवगाहो जलावगाहः ( त० पु० ), क्षणमात्र शान्ता क्षणमात्रशान्ता ( त० पु० ), जलावगाहेन क्षणमात्रशान्ता जलावगाहक्षणमात्रशान्ता ( त० पु० ) । वने साधवो वन्याः (पुं०), तेभ्य इतरे वन्येतरे (त० पु०), ते च तेऽनेकपा इति वन्येतरानेकपाः ( क० धा० ), तेषां दर्शनं वन्येतरानेकपदर्शनं ( त० पु० ) तेन तथोक्तेन । मदस्य दुर्दिनमिति मददुर्दिनं ( त० पु० ), तस्य श्रीर्मददुर्दिनश्रीः ( त० पु० ) ॥ ४७ ॥

व्याकरण—दिदीपे = दीपी ( दीप्तौ—ईदित् ) + लिट् , लिटस्तप्रत्यये द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४७ ॥

वाच्यान्तर—तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्तया मददुर्दिनश्रिया वन्येतरानेकपदर्शनेन पुनर्दिदीपे ॥ ४७ ॥

कोश—"गण्डौ कपोलौ" इति । "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः कुञ्जरो वारणः करी । इभः स्तम्बेरमः पद्मी" इति चामरः ॥ ४७ ॥

तात्पर्यार्थः—गजेन्द्रमुख्यस्य तस्य गण्डस्थलयोर्मदजलवर्षशोभा नर्मदासलिलनिमज्जनेन या क्षणमात्रं कथं चन शान्ताऽऽसीत् सैव सम्प्रति सैन्यगजेन्द्रदर्शनेन जातप्रतिस्पर्धतया तस्मिन्नेव क्षणे पुनर्द्विगुणिता प्रदीप्ता बभूव ॥ ४७ ॥

भाषाऽर्थः—हाथियों में मुख्य, उस गज के दोनों गण्डस्थलों में जल में डूब कर नहाने से जो क्षणमात्र के लिये शान्त हो गई थी, वही मद झरने की शोभा जंगली हाथियों से भिन्न अर्थात् सेना के हाथियों के देखने से पुनः बढ़ गई, अर्थात् पहले की अपेक्षा अधिक मद झरने लगा ॥ ४७ ॥

*प्रति तस्य वन्यगजेन्द्रस्योत्कटं मदगन्धमाघ्राय सेनास्थितगजेन्द्राणामवस्थां दर्शयन् कविराह—*

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

सञ्जीविनी—सप्तच्छदेति । सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारो यस्य तम् । 'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः' इति यादवः । असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः । विलङ्घितस्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान्यत्नो यस्ते तथोक्ताः सन्तः । 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । विमुखाः पराङ्मुखाः । बभूवुः ॥ ४८ ॥

अन्वयः—सप्तच्छदक्षीरकटुप्रवाहम्, "अत एव", असह्यं, तदीयं, मदम्, आघ्राय, सेना-

गजेन्द्राः, विलङ्घिताधोरणतीव्रयत्नाः, "सन्तः", विमुखाः, बभूवुः ॥ ४८ ॥

व्याख्या—सप्तच्छदक्षीरकटुप्रवाहं = विषमच्छदुग्धवत्सुरभिप्रसारम्, अत एवेति शेषः । असह्यं = सोढुमशक्यम्, आघ्राणानर्हमित्यर्थः । तदीयं = तत्सम्बन्धिनं, वन्यगजेन्द्रस्येत्यर्थः । मदं = दानं, मदगन्धमित्यर्थः । आघ्राय = घ्राणेन्द्रियविषयीकृत्य, घ्राणेन्द्रियेण गन्धमुपादायेत्यर्थः । सेनागजेन्द्राः = सैन्यकरिगजाः, विलङ्घिताधोरणतीव्रयत्नाः = अतिक्रान्तहस्तिपकात्यर्थप्रयत्नाः, पलायनान्निवर्त्तयितुकामतया हस्तिपकैरत्यर्थं कृतानङ्कुशताडनरूपप्रयासानतिक्रम्य विफलयन्त इत्यर्थः । सन्त इति शेषः । विमुखाः = पराङ्मुखाः, स्वस्थानादितस्ततः पलायमाना इत्यर्थः । बभूवुः = आसन् ॥ ४८ ॥

समासादि—सप्तच्छदस्य क्षीरं सप्तच्छदक्षीरं (त०पु०), तद्वत्कटुः सप्तच्छदक्षीरकटुः ( उ० स० ), स प्रवाहो यस्य स सप्तच्छदक्षीरकटुप्रवाहः ( ब० व्री० ) तं तथोक्तम् । तस्यायं तदीयः ( पुं० ) तं तदीयम् । तीव्रश्चासौ यत्नस्तीव्रयत्नः ( क० धा० ), आधोरणानां तीव्रयत्न आधोरणतीव्रयत्नः ( त० पु० ), विलङ्घित आधोरणतीव्रयत्नो यैस्ते विलङ्घिताधोरणतीव्रयत्नाः ( ब० व्री० ) । गजेष्विन्द्रा गजेन्द्राः ( त० पु० ), सेनाया गजेन्द्राः सेनागजेन्द्राः ( त० पु० ) ॥ ४८

व्याकरणम्—आघ्राय = आङ्+घ्रा ( गन्धोपादाने )+क्त्वा+ल्यप् । बभूवुः = भू ( सत्तायाम् )+लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ ४८ ॥

वाच्यान्तरं—सप्तच्छदक्षीरकटुप्रवाहमसह्यं तदीयं मदमाघ्राय सेनागजेन्द्रैर्विलङ्घिताधोरणतीव्रयत्नैः "सद्भिः" विमुखैर्बभूवे ॥ ४८ ॥

कोशः—"सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इति । "प्रवाहस्तु प्रवृत्तिः स्यात्" इति चामरः । "तीव्रकटूष्णात्यर्थेषु" इत्यनेकार्थसङ्ग्रहः ॥ ४८ ॥

तात्पर्यार्थः—युवराजस्य रघुकुमारस्य सेनागजेन्द्राः सप्तपर्णतरुक्षीरवत् तीव्रसौरभ्यशालिनं तस्य वन्यगजेन्द्रस्य मदमाघ्राय तमसहमाना उन्मत्ता इव स्वस्थानाद्बन्धनान्यवभज्येतस्ततः पलायन्ते स्म, हस्तिपका अपि सन्तताङ्कुशताडनादिभिरुपायैस्तान् निवारयितुं किञ्चिन्मात्रमपि समर्था न बभूवुः ॥ ४८ ॥

भाषाऽर्थः—सप्तपर्ण नामक वृक्ष के दुग्ध की भांति जिसकी सुगन्धि फैल रही, थी, इसी से असह्य उस जङ्गली हाथी के मद को सूंघ कर सेना के सभी गजेन्द्र अपने २ महावतों के किये हुये अत्यन्त अङ्कुश से मारने आदि उपायों को विफल करते हुये मुँह फेर कर भागने लगे ॥ ४८ ॥

*अथ स वन्यो गजेन्द्रः सैन्यनिवेशं प्रविश्य तत्रत्यान् सर्वानेव समुद्विग्नमनसः कृतवानित्याह—*

**स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ।**
**रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥ ४९ ॥**

सञ्जीविनी—स इति । स गजः । छिन्ना बन्धा यैस्ते च्छिन्नबन्धा द्रुताः पलायिताः, युगं वहन्तीति युग्या वाहा यस्मिन्स्सः, स चासौ शून्यश्च तम् । भग्ना अक्षा रथावयवदारुविशेषाः । 'अक्षा रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्' इति शाश्वतः । येषान्ते भग्नाक्षा अत एव पर्यस्ताः पतिता रथा यस्मिंस्तम् । रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः । 'विहस्तव्याकुलौ समौ' इत्यमरः । योधा यस्मिंस्तं सेनानिवेशं शिबिरं क्षणेन तुमुलं संकुलं चकार ॥ ४९ ॥

अन्वयः—सः, छिन्नबन्धद्रुतयुग्यशून्यं, भग्नाक्षपर्यस्तरथं, रामापरित्राणविहस्तयोधं, सेनानिवेशं, क्षणेन, तुमुलं, चकार ॥ ४९ ॥

व्याख्या—सः=पूर्वोक्तः, वन्यगज इत्यर्थः । छिन्नबन्धद्रुतयुग्यशून्यं=भग्नबन्धनश्रृङ्खलाऽपक्रान्तयानहस्त्यश्वादिरहितं, भग्नबन्धनतया पलायितैर्हस्त्यश्वादिभिः शून्यमित्यर्थः । भग्नाक्षपर्यस्तरथं=छिन्नरथावयवविशेषपतितस्यन्दनं, भग्नाक्षतया पतितरथयुक्तमित्यर्थः । रामापरित्राणविहस्तयोधं=स्त्रीरक्षणव्याकुलभटं, स्त्रीणां रक्षणे व्याकुलैर्भटैः संयुतमित्यर्थः । सेनानिवेशं=सैन्यशिबिरं, क्षणेन=क्षणमात्रेण, स्वल्पकालेनेत्यर्थः । तुमुलं=संकुलं, व्याकुलमित्यर्थः । चकार=कृतवान् ॥ ४९ ॥

समासादि—युगं वहन्तीति युग्याः (पुं०), छिन्ना बन्धा यैस्ते छिन्नबन्धाः (ब०व्री०),छिन्नबन्धाश्च ते द्रुता इति छिन्नबन्धद्रुताः (क०धा०),छिन्नबन्धद्रुता युग्या यस्मिन् स छिन्नबन्धद्रुतयुग्यः (ब०व्री०), स चासौ शून्य इति छिन्नबन्धद्रुतयुग्यशून्यः (क०धा०) तं तथोक्तम् । भग्ना अक्षा येषान्ते भग्नाक्षाः (ब०व्री०), भग्नाक्षाश्च ते पर्यस्ताः भग्नाक्षपर्यस्ताः (क० धा० ), ते रथा यस्मिन् स भग्नाक्षपर्यस्तरथः ( ब० व्री० ) तं भग्नाक्षपर्यस्तरथम् । रामाणां परित्राणं रामापरित्राणं ( त० पु० ), तस्मिन् विहस्ता रामापरित्राणविहस्ताः ( त० पु० ), ते योधा यस्मिन् स रामापरित्राणविहस्तयोधः ( ब० व्री० ) तं तथोक्तम् । सेनाया निवेशः सेनानिवेशः ( त० पु० ) तं सेनानिवेशम् ॥ ४९ ॥

व्याकरणं—चकार=डुकृञ् ( करणे—डुञित् )+लिट् लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये चुत्वे वृद्धौ रपरे रूपम् ॥ ४९ ॥

वाच्यान्तरं—तेन छिन्नबन्धद्रुतयुग्यशून्यो भग्नाक्षपर्यस्तरथो रामापरित्राणविहस्तयोधः सेनानिवेशः क्षणेन तुमुलं चक्रे ॥ ४९ ॥

कोशः—"क्षणो व्यापारशून्यत्वमुहूर्त्तोत्सवपर्वसु" इति रुद्रः । "रामा हिङ्गुलिनी स्त्रियोः" इति हैमः । "तुमुलं व्याकुले रणे" इति त्रिकाण्डशेषः ॥ ४९ ॥

तात्पर्यार्थः—सेनानिवेशं वन्यगजे प्रविष्टे सति तद्भयात् स्वस्वबन्धनानि भङ्क्त्वा सर्वेषां वाहनानां पलायनेन, भग्नाक्षतया रथाणां पतनेन, स्त्रीणां परित्राणे योधानां व्याकुलतया क्षणमात्रेणैव सर्वः सेनानिवेशो व्याकुलो बभूव ॥ ४९ ॥

भाषाऽर्थः—उस जङ्गली हाथी ने अपने २ वन्धनों को तोड़कर भागे हुये वाहनों ( हाथी घोड़े वगैरह ) से जो शून्य हो रहा है, धुरा के टूटजाने से गिरे हुये रथ जिसमें पड़े हुये हैं, स्त्रियों की रक्षा करने में योधा लोग जिसमें व्याकुल हो रहे हैं, ऐसे सेना के निवास स्थान को क्षण मात्र में व्याकुल कर दिया ॥ ४९ ॥

अथ वन्यगजकृतां सेनाशिविरव्याकुलतां श्रुत्वा तं गजं निवर्तयितुकामो युवराजोऽजो धनुरीषदाकृष्य कुम्भस्थले बाणेन जघानेत्याह—

**तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः ।**
**निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥**

सञ्जीविनी—तमिति । नृपते राज्ञो वन्यः करी अवध्य इति श्रुतवाञ्शास्त्राज्ज्ञातवान्कुमार आपतन्तमभिधावन्तं तं गजं निवर्तयिष्यन्न तु प्रहरिष्यन् । अत एव नात्यायतमनतिदीर्घं यथा स्यात् (नञर्थस्य नशब्दस्य सुप्सुपेति समासः ) । कृष्टशार्ङ्ग ईषदाकृष्टचापः सन्विशिखेन बाणेन कुम्भे जघान । अत्र चाक्षुपः—( लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । इयं हि श्रियै कारणः ) इति । अत एव ( युद्धादन्यत्र ) इति द्योतनार्थमेव वन्यग्रहणं कृतम् ॥५०॥

अन्वय—नृपतेः, वन्यः, करी, अवध्यः, इति, श्रुतवान्, कुमारः, आपतन्तं, तं, निवर्तयिष्यन्, "अत एव", नात्यायतकृष्टशार्ङ्गः, "सन्", विशिखेन, कुम्भे, जघान ॥ ५० ॥

व्याख्या—नृपतेः=राज्ञः, वन्यः=वनोद्भवः, करी=गजः, अवध्य=वधानर्हः, इति=इत्याकारकं, शास्त्रवचनमित्यर्थः । श्रुतवान्=अधिगतवान्, शास्त्राज्ज्ञातवानित्यर्थः । कुमा-

रः = युवराजः, अज इत्यर्थः । आपतन्तं = स्वाभिमुखमायान्तं, तं = पूर्वोक्तं, गजमित्यर्थः । निवर्त्तयिष्यन् = परावर्त्तयिष्यन्, न तु मारयिष्यन्नित्यर्थः । अत एवेति शेषः । नात्यायतकृष्टशार्ङ्गः = अनतिदूरसमाकृष्टधनुः, स्वल्पं धनुराकृष्येत्यथ । सन्निति शेषः । विशिखेन = शरेण, कुम्भे = गजशिरःपिण्डे, जघान = हतवान् ॥ ५० ॥

समासादि—आपततीत्यापतन् ( पुं० ) तमापतन्तम् । न वध्य इत्यवध्यः ( न० त० पु० )। वने साधुर्वन्यः ( पुं० )। निवर्तयिष्यतीति निवर्तयिष्यन् ( पुं० ) । शृङ्गस्य विकारः शार्ङ्गं ( न० लि० ) न अत्यायतमिति नात्यायतं ( सु०सु० ), नात्यायतं यथा स्यात्तथा कृष्टं नात्यायतकृष्टं ( क० धा० ), नात्यायतकृष्टं शार्ङ्गं येन स नात्यायतकृष्टशार्ङ्गः ( ब० व्री० ) ॥ ५० ॥

व्याकरणं—जघान = हन ( हिंसागत्योः-अकारेत् ) + लिट्, द्वित्वेऽभ्यासकार्ये कुत्वे रूपम् ॥ ५० ॥

वाच्यान्तरं—नृपतेर्वन्यः कर्यवध्य इति श्रुतवता कुमारेणापतन्तं तं निवर्त्तयिष्यता नात्यायतकृष्टशार्ङ्गेण "सता" विशिखेन कुम्भे जघ्ने ॥ ५० ॥

कोशः—"कुम्भौ तु पिण्डौ शिरसः" इति । "कुम्भौ घटेभमूर्द्धांशौ" इति चामरः ॥५०॥

तात्पर्यार्थः—"वनोद्भवो गजोऽवध्यः" इति शास्त्राज्जानन् युवराजोऽजोऽभिधावन्तं तं गजं निवर्तयितुकाम एव न तु हन्तुकामः सन् धनुरीषदाकृष्य शरेण तस्य कुम्भस्थले प्रहारं कृतवान् ॥ ५० ॥

भाषाऽर्थः—"राजा के लिये जङ्गली हाथी का मारना उचित नहीं है" इस बात के जानने वाले युवराज अज ने सामने दौड़ कर आते हुये उस हाथी के भगाने की इच्छा से न कि मार डालने की इच्छासे, थोड़ा सा धनुष् को खींच कर छोड़े हुये बाण से कुम्भ स्थल में ( मस्तक के मांस पिण्डाकार स्थान में ) मारा ॥ ५० ॥

*अथ बाणेन विद्धमात्र एव स गजरूपं विहाय सद्यः खेचरं वपुः प्रापेत्याह—*

**स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।**
**स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥**

सञ्जीविनी—स इति। स गजो विद्धमात्रस्ताडितमात्रः किल न तु प्रहृतस्तथाऽपि नागरूपं गजशरीरमुत्सृज्य । तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः सन् । स्फुरतः प्रभामण्डलस्य मध्यवर्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥ ५१ ॥

अन्वयः—सः, विद्धमात्रः, किल, नागरूपम्, उत्सृज्य, तद्विस्मितसैन्यदृष्टः, "सन्" स्फुरत्प्रभामण्डलमध्यवर्त्ति, कान्तं, व्योमचरं, वपुः, प्रपेदे ॥ ५१ ॥

व्याख्या—सः = पूर्वोक्तः, वन्यगज इत्यर्थः । विद्धमात्रः = बाधितमात्रः, ताडितमात्र इत्यर्थः । किल = वार्त्तायां, नागरूपं = गजवपुः, उत्सृज्य = त्यक्त्वा, तद्विस्मितसैन्यदृष्टः = पूर्वोक्तवृत्तान्तविस्मयापन्नसैनिकावलोकितः, सद्यःशरीरत्यागरूपव्यापारेण साश्चर्यं सैनिकैरवलोकित इत्यर्थः । सन्निति शेषः । स्फुरत्प्रभामण्डलमध्यवर्त्ति = देदीप्यमानदीप्तिनिवहाभ्यन्तरस्थायि, कान्तं = मनोरमं, व्योमचरम् = आकाशगामि, गान्धर्वमिति भावः । वपुः = शरीरं, प्रपेदे = प्रापत् ॥ ५१ ॥

समासादि—विद्ध एव विद्धमात्रः ( पुं० ) । नागस्य रूपमिति नागरूपम् ( त० पु० ) तत्तथोक्तम् । तेन विस्मितास्तद्विस्मिताः ( त० पु० ), ते च ते सैन्यास्तद्विस्मितसैन्याः ( क० धा० ), तैर्दृष्टस्तद्विस्मितसैन्यदृष्टः । मध्ये वर्त्तितुं शीलमस्येति मध्यवर्त्ति (न० लि०), प्रभाणां मण्डलमिति प्रभामण्डलं ( त०पु० ); स्फुरच्च तत्प्रभामण्डलं स्फुरत्प्रभामण्डलं (त० पु० ), तस्य मध्यवर्तीति स्फुरत्प्रभामण्डलमध्यवर्ति ( त०पु० ) तत्तथोक्तम् । व्योम्नि चर-

तीति व्योमचरम् ( न० लिं० ) तद् व्योमचरम् ॥ ५१ ॥

व्याकरणम्—उत्सृज्य=उद्+सृज ( विसर्गे-अकारेत् )+क्त्वा+ल्यप् । प्रपेदे=प्र+पद् ( गतौ-अकारेत् )+लिट्, तप्रत्यये द्वित्वे एत्वाभ्यासलोपे रूपम् ॥ ५१ ॥

वाच्यान्तरं—तेन विद्धमात्रेण किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टेन "सता" स्फुरत्प्रभामण्डलमध्यवर्त्ति कान्तं व्योमचरं वपुः प्रपेदे ॥ ५१ ॥

कोशः—"विद्धं स्याद्वेधिते क्षिप्ते सदृशे बाधिते त्रिषु" इति विश्वः । "स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि भुजगभेदे शुनि मण्डलः स्यात्" इति विश्वः ॥ ५१ ॥

तात्पर्यार्थः—स वन्यगजोऽजवाणेन ताडितमात्र एव स्वं गजदेहं विहाय गगनसञ्चरणशीलं सुन्दरं गान्धर्वं शरीरं प्रापेत्यालोक्य सर्वे सैनिकाः परमाश्चर्ययुक्ता बभूवुः ॥ ५१ ॥

भावार्थः—उस जंगली हाथी ने बाण से विध जाते ही अपने हाथी के रूप को छोड़ कर, इस घटना के होने से आश्चर्य के साथ सैनिकों से देखा जाता हुआ, चमकते हुये प्रभा मण्डल के मध्य में स्थित, सुन्दर, आकाश में चलने वाला गन्धर्व का शरीर धारण कर लिया ॥५१॥

*अथ स कल्पवृक्षकुसुमान्यजस्योपरि विकीर्य तमुवाचेत्याह—*

**अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।**
**उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ ५२ ॥**

सञ्जीविनी—अथेति । अथ प्रभावेणोपनतैः प्राप्तैः कल्पद्रुमोत्पन्नैः पुष्पैः कुमारमजमवकीर्याभिवृष्य दशनप्रभाभिर्दन्तकान्तिभिः संवर्धिता उरःस्थले ये तारहाराः स्थूला मुक्ताहारास्ते येन स तथोक्तः । वाचोऽस्य सन्तीति वाग्मी वक्ता। "वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः । स पुरुष उवाच ॥ ५२ ॥

अन्वयः—अथ, प्रभावोपनतैः, कल्पद्रुमोत्थैः, पुष्पैः, कुमारम्, अवकीर्य, दशनप्रभाभिः, सम्वर्धितोरःस्थलतारहारः, वाग्मी, "सः, पुरुषः," उवाच ॥ ५२ ॥

व्याख्या—अथ=अनन्तरं, दिव्यवपुःप्राप्त्यनन्तरमित्यर्थः । प्रभावोपनतैः=सामर्थ्यप्राप्तैः, दिव्यवपुःप्राप्तिसामर्थ्येन लब्धैरित्यर्थः । कल्पद्रुमोत्थैः=कल्पतरुसमुत्पन्नैः, पुष्पैः=कुसुमैः, कुमारं=युवराजम्, अजमित्यर्थः । अवकीर्य=अभिवर्षणं कृत्वा, दशनप्रभाभिः=दन्तदीप्तिभिः, संवर्धितोरःस्थलतारहारः=समेधितवक्षःप्रदेशस्थनिर्मलमुक्तावलिः, वक्षःस्थलस्थितस्थूलशुद्धमुक्ताहारकान्तिं वर्धयन्नित्यर्थः । वाग्मी=वाचोयुक्तिपटुः, प्रशस्तवचोभाषीत्यर्थः । "स पुरुषः" इति शेषः । उवाच=अवोचत् ॥ ५२ ॥

समासादि—प्रभावेणोपनतानि प्रभावोपनतानि ( त० पु० ) तैः प्रभावोपनतैः । कल्पद्रुमादुत्थानि कल्पद्रुमोत्थानि (त०पु०) तैः कल्पद्रुमोत्थैः । प्रशस्ता वाचः सन्त्यस्येति वाग्मी ( पुं० ) । दशनानां प्रभा दशनप्रभाः ( त० पु० ) ताभिर्दशनप्रभाभिः । ताराश्च ते हारास्तारहाराः ( क० धा० ), उरःस्थले तारहारा उरःस्थलतारहाराः ( त० पु० ), सम्वर्धिता उरःस्थलतारहारा येन स संवर्धितोरःस्थलतारहारः ( ब० व्री० ) ॥ ५२ ॥

व्याकरणम्—उवाच=ब्रूञ् ( व्यक्तायां वाचि-ञित् )+लिट्, "ब्रुवो वचिः" इति वच्यादेशे द्वित्वेऽभ्यासकार्ये रूपम् । अवकीर्य=अव+कॄ ( विक्षेपे )+क्त्वा+ल्यप्, "ॠत इद्धातोः", इतीत्वे रपरे "हलि च" इति दीर्घे रूपम् ॥ ५२ ॥

वाच्यान्तरम्—अथ प्रभावोपनतैः कल्पद्रुमोत्थैः पुष्पैः कुमारोऽवकीर्य दशनप्रभाभिः सम्वर्धितोरःस्थलतारहारेण वाग्मिना "तेन पुरुषेण" ऊचे ॥ ५२ ॥

कोशः—"प्रभावस्तेजसि शक्तौ" इत्यनेकार्थसंग्रहः । "वाचोयुक्तिपटुर्वाग्मी" इत्यमरः । "तारो वानरभिन्मुक्ताविशुद्ध्योः शुद्धमौक्तिके" इति । "हारो मुक्तावली युधि" इति च

मेदिनो ॥ ५२ ॥

तात्पर्यार्थः—दिव्यशरीरप्राप्त्यनन्तरं स पुरुषः स्वप्रभावेण प्राप्तैः कल्पवृक्षकुसुमैः कुमारमजमभिवृष्य प्रसन्नवदनतया स्मयमानः सन् वक्ष्यमाणप्रकारेणोवाच ॥ ५२ ॥

भाषाऽर्थः—उसके (दिव्यशरीर प्राप्त होने के) बाद अपने प्रभाव से प्राप्त कल्पवृक्ष के पुष्पों की युवराज अज के ऊपर वर्षा करके दांतों की कान्ति से छाती पर लटकती हुई शुद्ध बड़े २ मोतियों की मालाओं की कान्ति को बढ़ाता हुआ अच्छे वचनों को बोलने वाला वह दिव्य पुरुष बोला ॥ ५२ ॥

*अथ स्वकीयपूर्णपरिचयं दत्वा करिशरीरप्राप्तिकारणं मतङ्गशापमेव निर्दिशन्नाह—*

**मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ।**
**अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥**

सञ्जीविनी—मतङ्गशापादिति । अवलेपमूलाद्गर्वहेतुकात् । 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः । मतङ्गस्य मुनेः शापान्मतङ्गजत्वमवाप्तवानस्मि । मां प्रियदर्शनस्य प्रियदर्शनाख्यस्य गन्धर्वपतेर्गन्धर्वराजस्य तनूजं पुत्रम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । 'तन्वादेर्वा' इत्यूङिति केचित् । प्रियंवदं प्रियंवदाख्यमवेहि जानीहि । प्रियं वदतीति प्रियंवदः । "प्रियवशे वदः खच्" इति खच्प्रत्ययः ॥ ५३ ॥

अन्वयः—अवलेपमूलाद्, मतङ्गशापाद्, मतङ्गजत्वम्, अवाप्तवान्, अस्मि, मां, प्रियदर्शनस्य, गन्धर्वपतेः, तनूजं, प्रियंवदम्, अवेहि ॥ ५३ ॥

व्याख्या—अवलेपमूलाद्=गर्वाद्याद्, अहङ्कारनिमित्तकादित्यर्थः । मतङ्गशापात्=तन्नामकमहर्षिशापाद्, मतङ्गजत्वं= करिभावम्, अवाप्तवान्=लब्धवान्, अस्मि=अहम्, अस्मदर्थेऽव्ययमेतद् । मां=पुरःस्थितं, गजभावमुत्सृज्य प्राप्तदिव्यरूपमित्यर्थः । प्रियदर्शनस्य=तदाख्यस्य, गन्धर्वपतेः=दिव्यगायनराजस्य, विश्वावसुप्रभृतिगन्धर्वाणामधीशस्येत्यर्थः । तनूजं=पुत्रं, प्रियंवदं=तन्नामकं, गन्धर्वमित्यर्थः । अवेहि=विद्धि, त्वमिति शेषः ॥ ५३ ॥

समासादि—माद्यत्यनेनेति मतङ्गः(पुं०), मतङ्गस्य शापो मतङ्गशापः(त०पु०)तस्माद् मतङ्गशापात् । अवलेप एव मूलं यस्य सोऽवलेपमूलः(ब०व्री०)तस्मादवलेपमूलात् । मतङ्गाज्जातो-मतङ्गजः (पुं), तस्य भावो मतङ्गजत्वम् ( न० लि० ) तत्तथोक्तम् । गन्धमर्वन्तीति गन्धर्वाः (पुं०) तेषां पतिर्गन्धर्वपतिः ( त० पु० ) तस्य गन्धर्वपतेः । प्रियं वदतीति प्रियंवदः (त०पु०) तं प्रियंवदम् । प्रियं दर्शनं यस्य स प्रियदर्शनः ( ब० व्री० ) तस्य प्रियदर्शनस्य ॥ ५३ ॥

व्याकरणम्—अवेहि=अव+आङ्+इण् ( गतौ-णित् )+लोट्, सिपो ह्यादेशे रूपम् ॥ ५३ ॥

वाच्यान्तरम्—अवलेपमूलान्मतङ्गशापान्मतङ्गजत्वमवाप्तवता मया भूयते, अहं प्रियदर्शनस्य गन्धर्वपतेस्तनूजः प्रियंवदस्त्वयाऽवेयै ॥ ५३ ॥

कोश. "मूलमाद्ये शिफाभयोः" इत्यमरः । गन्धर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे । अन्तराभवदेहे च" इति हैमः ॥ ५३ ॥

तात्पर्यार्थः—एकदा किल तपस्यतो मद्दृष्टिपथं गतस्यापि महर्षेर्मतङ्गस्याभिवन्दनादिकं गर्वाद् नाहं कृतवानतः सञ्जातरुषा महर्षिणा "त्वं गजत्वं प्राप्नुहि" इति शप्तस्ततो गजत्वं प्राप्तं मां प्रियदर्शनाख्यस्य गन्धर्वराजस्य पुत्रं प्रियंवदनामानं गन्धर्वराजकुमारं त्वं जानीहि ॥५३॥

भाषाऽर्थः—मेरा गर्व करना ही जिसका कारण था, ऐसे मतङ्ग ऋषि के शाप से हाथी के शरीर को जो मैंने प्राप्त किया था, वही मुझे प्रियदर्शन नामक गन्धर्वराज का पुत्र प्रियंवद नामक गन्धर्व राजकुमार आप जानें ॥ ५३ ॥

*अथ शापप्रदानानन्तरं मत्कृतप्रणतिपूर्वकस्तवेन शान्तिं लभमानस्य महर्षेर्मयि पुनः कृपाऽभूदित्याह—*

**स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् ।**
**उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५४ ॥**

सञ्जीविनी—स इति । स महर्षिश्च प्रणतेन मयाऽनुनीतः सन्पश्चान्मृदुतां शान्तिमगच्छत् । तथाहि । जलस्योष्णत्वमग्नेरातपस्य वा संप्रयोगात्संपर्कात् । न तु प्रकृत्योष्णत्वम् । यच्छैत्यं सा प्रकृतिः स्वभावः । विधेयप्राधान्यात्सेति स्त्रीलिङ्गनिर्देशः । महर्षीणां शान्तिरेव स्वभावो न क्रोध इत्यर्थः ॥ ५४ ॥

अन्वयः—सः, महर्षिः च, प्रणतेन, मया, अनुनीतः, "सन्" पश्चाद्, मृदुताम्, अगच्छत्, हि, जलस्य, उष्णत्वम्, अग्न्यातपसंप्रयोगाद्, यद्, शैत्यं, सा, प्रकृतिः, ॥ ५४ ॥

व्याख्या—सः = पूर्वोक्तः, महर्षिः = अतिसत्यवचाः, मतङ्ग इत्यर्थः । च = समुच्चयेऽर्थे, प्रणतेन = आनतेन, पादयोर्निपत्य प्रणतिं कुर्वतेत्यर्थः । मया = प्रियंवदेन, अनुनीतः = प्रार्थितः, क्रोधशान्त्यर्थमित्यर्थः । सन्निति शेषः । पश्चाद् = अनन्तरं, अनुनयकरणानन्तरमित्यर्थः । मृदुतां = कोमलतां, शान्तिमित्यर्थः । अगच्छत् = प्राप्नोत्, हि = यतः, जलस्य = सलिलस्य, उष्णत्वम् = अशीतत्वं, शीतस्पर्शराहित्यमित्यर्थः । अग्न्यातपसंप्रयोगाद् = वह्न्यर्कप्रभासंयोगाद् । भवतीति शेषः । नतु स्वभावत उष्णस्पर्शवत्वमिति भावः । यत् = प्रसिद्धं, शैत्यं = शीतलत्वं, सा = प्रसिद्धा, शीतलत्वरूपेत्यर्थः । प्रकृतिः = स्वभावः, अस्तीति शेषः ॥ ५४ ॥

समासादि—मृदोर्भावो मृदुता (स्त्री०) तां मृदुताम् । उष्णस्य भाव उष्णत्वं (न०लि०)। अग्निश्चातपश्चेत्यग्न्यातपौ (द्वं०), तयोः संप्रयोगोऽग्न्यातपसंप्रयोगः ( त० पु० ) तस्मादग्न्यातपसंप्रयोगात् । शीतस्य भावः शैत्यम् ( न० लि० ) ॥ ५४ ॥

व्याकरणम्—अगच्छत् = अट् + गम्लृ (गतौ-लृदित्) + शप् + लङ्, "इषुगमियमां छः" इति छादेशे तिपि रूपम् ॥ ५४ ॥

वाच्यान्तरं—तेन महर्षिणा च मयाऽनुनीतेन "सता" पश्चान्मृदुताऽगम्यत हि जलस्योष्णत्वेनाग्न्यातपसंप्रयोगाद् "भूयते", येन शैत्येन "भूयते" तया प्रकृत्या "भूयते" ॥५४॥

कोश.—"मृदु चातीक्ष्णकोमलौ" इत्यमरः । "उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः" इति मेदिनी । "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे" इति विश्वः ॥ ५४ ॥

तात्पर्यार्थः—इत्थं महर्षिणा शप्तोऽहं विविधस्तुतिवाक्यैरनुनीतवांस्ततः शान्तो भूत्वा दयालुः स मयि कृपामकरोद्,यतो जलस्य यथा शैत्य स्वाभाविकं किन्तूष्णत्वं वह्निसूर्यातपयोः सम्पर्कादेव भवति, तथैव, महात्मनामपि प्रकृतिः शान्तैव क्रोधशीलता तु कारणवशादेव भवति ॥ ५४ ॥

भाषाऽर्थः—और उन महर्षि मतङ्ग के पैरों पर गिरे हुये मैंनें उनसे क्रोधशान्त करने की प्रार्थना की, बाद उन्होंने क्रोध को शान्त किया, क्योंकि-जलका गरम होना, जो है वह अग्नि और सूर्य के किरणों के सम्बन्ध से है और जो शीतलता है वह उसकी प्रकृति है, अर्थात् जैसे जल स्वाभाविक शीतल ही है, कारण वश गरम हो जाता है, उसी भांति महात्मा लोग स्वाभाविक शान्त होते हैं, कारण वश क्रुद्ध हो जाते हैं ॥ ५४ ॥

*अथ पश्चात् प्रसन्नेन महर्षिणा निर्दिष्टं शापान्तसमयं कथयन्नाह—*

**इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन ।**
**संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥ ५५ ॥**

सञ्जीविनी—इक्ष्वाकुवंशेति । इक्ष्वाकुवंशः प्रभवो यस्य सोऽजो यदा ते कुम्भमयोमुखेन लोहाग्रेण शरेण भेत्स्यति विदारयिष्यति तदा स्वेन वपुषो महिम्ना पुनः संयोक्ष्यसे संगंस्यस इति स तपोनिधिर्मामवोचत् ॥ ५५ ॥

अन्वयः—इक्ष्वाकुवंशप्रभवः, अजः, यदा, ते, कुम्भम्, अयोमुखेन, शरेण, भेत्स्यति, तदा, स्वेन, वपुर्महिम्ना, पुनः, संयोक्ष्यसे, इति, सः, तपोनिधिः, माम्, अवोचत् ॥५५॥

व्याख्या—इक्ष्वाकुवंशप्रभवः = इक्ष्वाकुनामकराजर्षिकुलजातः, सूर्यवंश्य इत्यर्थः । अजः = अजनामकः, रघुसूनुरित्यर्थः । यदा = यस्मिन् काले, ते = तव, गजत्वं गतस्य प्रियंवदस्येत्यर्थः । कुम्भं = मूर्द्धांशं, शिरःपिण्डमित्यर्थः । अयोमुखेन = लोहमयफलकेन, शरेण = बाणेन, भेत्स्यति = ताडयिष्यति, विदारणं करिष्यतीत्यर्थः । तदा = तस्मिन् काले, स्वेन = स्वकीयेन, वपुर्महिम्ना = शरीरमहत्त्वेन, पुनः = भूयः, संयोक्ष्यसे = संप्राप्स्यसे, संगतो भविष्यसीत्यर्थः । त्वमिति शेषः । इति = इत्याकारकं, वच इत्यर्थः । सः = पूर्वोक्तः, तपोनिधिः = धर्मशेवधिः, मतङ्ग इत्यर्थः । मां = प्रियंवदम्, अवोचत् = अब्रवीत् ॥ ५५ ॥

समासादि—इक्ष्वाकोर्वंश इक्ष्वाकुवंशः ( त० पु० ), स प्रभवो यस्य स इक्ष्वाकुवंशप्रभवः (ब० व्री०) । अयो मुखे यस्य सोऽयोमुखः (व्य० प० ब० व्री०) तेनायोमुखेन । वपुषो महिमा वपुर्महिमा (त० पु०) तेन वपुर्महिम्ना । तपसां निधिस्तपोनिधिः ( त० पु० ) ॥ ५५ ॥

व्याकरण—भेत्स्यति = भिदिर् (विदारणे-इरित्) + स्य + लृट्, तिपि गुणे रूपम् । संयोक्ष्यसे = सम् + युजिर् ( योगे-इरित् ) + स्य + लृट्, थासः से रूपम् । अवोचत् = अट् + वच ( परिभाषणे-अकारेत् ) + च्लि + अङ् + लुङ्, तिपि "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यङादेशे "वच उम्" इत्युमागमे रूपम् ॥ ५५ ॥

वाच्यान्तरम्—इक्ष्वाकुवंशप्रभवेणाजेन यदा ते कुम्भोऽयोमुखेन शरेण भेत्स्यते, तदा स्वेन वपुर्महिम्ना पुनः "त्वया" संयोक्ष्यते, इति तेन तपोनिधिनाऽहमवोचि ॥ ५५ ॥

कोशः—"वंशो वेणौ कुले वर्गे" इति विश्वः । "कुम्भौ तु पिण्डौ शिरसः" इत्यमरः ॥५५॥

तात्पर्यार्थः—मत्प्रार्थनया प्रसन्नो मुनिर्मतङ्गः, "इक्ष्वाकुवंश्यो रघुतनयोऽजो यदा ते कुम्भस्थलं लोहमयफलकेन बाणेन भेत्स्यति, तदा त्वं पुनर्गन्धर्वशरीरं प्राप्स्यसीति" शापान्तसमयं निर्दिष्टवान् ॥ ५५ ॥

भाषाऽर्थः—इक्ष्वाकु-वंश में उत्पन्न, अज नामक राजकुमार जब तुम्हारे कुम्भ-स्थल को लोह का बना हुआ है अग्रभाग जिसका ऐसे बाण से वेधेगें, तब अपने शरीर सम्बन्धी गौरव से फिर तुम युक्त होवोगे ऐसा उन तपोनिधि महर्षि मतङ्ग ने मुझसे कहा था ॥ ५५ ॥

*संप्रति त्वयाऽहं शापान्मोचितोऽस्मीत्यतस्तेऽपि प्रत्युपकारं चिकीर्षुरस्मीत्याह*—

संमोचितः सत्त्ववता त्वयाऽहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥५६॥

सञ्जीविनी—संमोचित इति । चिरं प्रार्थितं दर्शनं यस्य तेन सत्त्ववता बलवता त्वयाऽहं शापात्संमोचितो मोक्षं प्रापितः । भवतः प्रतिप्रियं प्रत्युपकारं न कुर्यां चेन्मे स्वपदोपलब्धिः स्वस्थानप्राप्तिः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । वृथा स्याद्धि । तदुक्तम्-(प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ) इति ॥ ५६ ॥

अन्वयः—चिरप्रार्थितदर्शनेन, सत्त्ववता, त्वया, अहं, शापात्, सम्मोचितः, भवतः, प्रतिप्रियं, न, कुर्यां, चेद्, मे, स्वपदोपलब्धिः, वृथा, स्यात्, हि ॥ ५६ ॥

व्याख्या—चिरप्रार्थितदर्शनेन = बहुकालवाञ्छितावलोकनेन, बहोः कालात्प्रतीक्ष्यमाणदर्शनेनेत्यर्थः । सत्त्ववता = बलवता, त्वया = भवता, अहं = प्रियंवदः, शापात् = मतङ्गजत्वरूपात्, संमोचितः = मुक्तिं गमितः, भवतः = तव, अजस्येत्यर्थः । प्रतिप्रियं = प्रत्युपकारं,

न=नहि, कुर्यां=सम्पादयेयं, चेद्=यदि, तर्हीति शेषः। मे=मम, स्वपदोपलब्धिः=निजस्थानावाप्तिः, वृथा=व्यर्थ, स्यात्=भवेद्, हि=अवधारणेऽर्थे ॥ ५६ ॥

समासादि—सत्त्वमस्यास्तीति सत्त्ववान् (पुं) तेन सत्त्ववता। चिरं प्रार्थितं चिरप्रार्थितं (सु० सु०), चिरप्रार्थितं दर्शनं यस्य स चिरप्रार्थितदर्शनः (ब० व्री०) तेन चिरप्रार्थितदर्शनेन। स्वस्य पदं स्वपदं (त० पु०), तस्योपलब्धिः स्वपदोपलब्धिः (त० पु०) ॥ ५६ ॥

व्याकरण—कुर्याम्=डुकृञ् (करणे-डुञित्)+उः+यासुट्+लिङ्,मिपि रूपम्। स्यात्=अस (भुवि—अकारेत्)+यासुट्+लिङ्, तिपि "श्नसोरल्लोपः" इत्यकारलोपे रूपम् ॥५६॥

वाच्यान्तरं—चिरप्रार्थितदर्शनः सत्त्ववाँस्त्वं मां शापात् सम्मोचितवान्, भवतः प्रतिप्रियो न मया क्रियेय चेन्मे स्वपदोपलब्ध्या वृथा भूयेत हि ॥ ५६ ॥

कोश.—"शापः शपथ आक्रोशे" इत्यनेकार्थसङ्ग्रहः ॥ ५६ ॥

तात्पर्यार्थः—तदा प्रभृत्येवाहं भवतः शुभागमनं प्रतीक्षमाणोऽत्र तिष्ठामि, अद्य भवता बाणेन भित्वा शापाद् मुक्तिं प्रापितोऽस्मीति मे सुदिवसः, यदीत्थमुपकुर्वतस्ते प्रत्युपकारं न कुर्यां, तर्हि मे पुनः स्वगन्धर्वरूपप्राप्तिरेव वृथा स्यात्, यत उपकारिणः प्रत्युपकारं कर्त्तुमसमर्थस्य पुरुषस्य जीवितापेक्षया मरणमेव वरमतस्ते प्रत्युपकारं चिकीर्षुरस्मि ॥ ५६ ॥

भाषाऽर्थः—बहुत दिनो से जिसका दर्शन अभीष्ट हो रहा था-ऐसे बलवान् आप ने मुझे शाप से छुड़ाया, अर्थात् गजयोनि छुड़ा कर गन्धर्व शरीर प्राप्त कराया, अतः आप का प्रत्युपकार यदि मैं न करूं तो मेरा अपने स्थान (गन्धर्व-लोक) को प्राप्त करना ही वृथा होगा इस में कोई सन्देह नहीं है ॥ ५६ ॥

*अथ प्रत्युपचिकीर्षया प्रियंवदः स गन्धर्वराजकुमारोऽजाय स्वकीयं संमोहनं नामकमस्त्रं दातुं स्वेच्छां प्रकटीकुर्वन्नाह—*

संमोहनं नाम सखे! ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम्।
गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥

सञ्जीविनी—संमोहनमिति। हे सखे! सखिशब्देन समप्राणतोक्ता। यथोक्तम्—(अत्यागसहनो बन्धुः सदैवानुमतः सुहृत्। एकक्रियं भवेन्मित्रं समप्राणः सखा मतः ॥) इति। प्रयोगसंहारयोर्विभक्तमन्त्रं गान्धर्वं गन्धर्वदेवताकम्। संमोह्यतेऽनेनेति संमोहनं नाम ममास्त्रमादत्स्व गृहाण। यतोऽस्मात्प्रयोक्तुरस्त्रप्रयोगिणोऽरिहिंसा न च विजयश्च हस्ते। हस्तगतो विजयो भवतीत्यर्थः ॥ ५७ ॥

अन्वयः—सखे!, प्रयोगसंहारविभक्तमन्त्रं, गान्धर्वं, सम्मोहनं, नाम, मम, अस्त्रम्, आदत्स्व, यतः, प्रयोक्तुः, अरिहिंसा, न, च, विजयः, च, हस्ते, "भवति" ॥ ५७ ॥

व्याख्या—सखे!=हे समप्राण, हे अज! इत्यर्थः। प्रयोगसंहारविभक्तमन्त्रम्=प्रयुक्तिसंहरणविभिन्नमन्त्रं, गान्धर्वं=गन्धर्वदेवताकं, संमोहनं=तदाख्यम्, अन्वर्थनामकमित्यर्थः। नाम=प्राकाश्येऽर्थे, संमोहननाम्ना प्रसिद्धमित्यर्थः। मम=प्रियंवदस्य, अस्त्रम्=आयुधम्, आदत्स्व=गृहाण, मद्दत्तं स्वीकुर्वित्यर्थः। यतः=यस्माद्, अस्त्रादित्यर्थः। प्रयोक्तुः=प्रयोगकारिण, अस्त्रसंचालनकर्त्तुरित्यर्थः। अरिहिंसा=शत्रुवधः, न=नहि, च=अवधारणेऽर्थे, विजयः=जयः, जयलाभ इत्यर्थः। च=समुच्चयेऽर्थे, हस्ते=करे, करतलगत इत्यर्थः। भवतीति शेषः ॥ ५७ ॥

समासादि—सम्मोह्यतेऽनेनेति सम्मोहनम् (न० लिं०) तत्तथोक्तम्। प्रयोगश्च संहारश्च प्रयोगसंहारौ (द्वं०), तयोर्विभक्तं प्रयोगसंहारविभक्तं (त० पु०), तद् मन्त्रं यस्य तत् प्रयोगसंहारविभक्तमन्त्रम् (ब० व्री०) तत्तथोक्तम्। गन्धर्वो देवताऽस्येति गान्धर्वम् (न० लिं०) तत्तथोक्तम्। अरीणां हिंसाऽरिहिंसा (त० पु०) ॥ ५७ ॥

व्याकरणम्—आदत्स्व = आङ् + डुदाञ् ( दाने-डुजित् ) + श्लु + लोट् + थास्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ ५७ ॥

वाच्यान्तरं—हे सखे ! प्रयोगसंहारविभक्तमन्त्रं गान्धर्वं संमोहनं नाम ममास्त्रं त्वयाऽऽदीयतां, यतः प्रयोक्तुररिहिंसया न च "भूयते" विजयेन च हस्ते "भूयते" ॥ ५७ ॥

कोशः—"प्रयोगः कार्मणेऽपि स्यात्प्रयुक्तौ च निदर्शने" इति । "विजयः स्याज्जये पार्थे स्त्रियां तिथ्यन्तरे स्मृता । उमासख्याम्" इति च मेदिनी ॥ ५७ ॥

तात्पर्यार्थः—हे समप्राण ! प्रियवर ! अज ! इदं मदीयं संमोहनं नामास्त्रं त्वं कृपया मत्तो गृहाण, अस्य च प्रयोगसंहारयोः, परस्परो भिन्नो मन्त्रोऽस्ति, तथा चैतद्गन्धर्वदेवताकमस्ति, अनेन शत्रूणां वधं विनैव तेषां सम्मोहनाद्विजयलाभो युद्धे ते निश्चयेन सर्वत्र भविष्यसि ॥ ५७ ॥

भाषाऽर्थः—हे प्राण के समान प्रिय अज ! आप, चलाने और लौटा लेने में जिसके पृथक् २ मन्त्र हैं, तथा गन्धर्व जिसके देवता हैं, और जो सब को मोहित करने वाला होने से सम्मोहन नाम से प्रसिद्ध है ऐसे मेरे इस अस्त्र को स्वीकार करें, जिस अस्त्र से कि-चलाने वाले के शत्रुओं का वध भी नहीं हो पाता और विजय हस्तगत हो जाता है ॥५७॥

वधलज्जितः कथमस्त्रग्रहणपरः स्यामिति चेत्तत्राह—

**अलं ह्रिया मां प्रति यन्मुहूर्त्तं दयापरोऽभूः प्रहरन्नपि त्वम् ।**
**तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥**

सञ्जीविनी—अलमिति । किं च । मां प्रति ह्रिया प्रहारनिमित्तयाऽलम् । कुतः । यद्यतो हेतोस्त्वं मां प्रहरन्नपि मुहूर्त्तं दयापरः कृपालुरभूः । तस्मादुपच्छन्दयति प्रार्थयमाने मयि त्वया प्रतिषेधः परिहारः स एव रौक्ष्यं पारुष्यम् । तन्न प्रयोज्यं न कर्तव्यम् ॥ ५८ ॥

अन्वयः—मां, प्रति, ह्रिया, अलं, "कुतः", यद्, त्वं, प्रहरन्, अपि, मुहूर्त्तं, दयापरः, अभूः, तस्माद्, उपच्छन्दयति, मयि, त्वया, प्रतिषेधरौक्ष्यं, न, प्रयोज्यम् ॥ ५८ ॥

व्याख्या—मां = प्रियंवदं, प्रति = आभिमुख्येऽर्थे, ह्रिया = लज्जया, वधजनितया लज्जयेत्यर्थः । अलं = निरर्थके, मदुपरिकृतशरप्रहारे त्वयाऽणीयस्यपि लज्जा न करणीयेत्यर्थः, । कुत इत्याह—यद् = यस्मात्कारणाद्, हेत्वर्थेऽव्ययमेतद् । त्वं = भवान्, अज इत्यर्थः । मां = प्रियंवदं, प्राप्तगजशरीरमिति भावः । प्रहरन् = ताडयन्, शरप्रहारं कुर्वन्नित्यर्थः । अपि = युक्तपदार्थे, मुहूर्त्तम् = अल्पकालं, दयापरः = करुणाऽन्वितः, अभूः = आसीः, तस्मात् = ततः, उपच्छन्दयति = अनुनयति, शस्त्रग्रहणविषये प्रार्थनां कुर्वतीत्यर्थः । मयि = प्रियंवदे, त्वया = भवता, प्रतिषेधरौक्ष्यं = निषेधरूक्षता, निषेधप्रयुक्तं पारुष्यमित्यर्थः । न = हि, प्रयोज्य = करणीयम् , अवश्यं स्वीकर्त्तव्यमिति भावः ॥ ५८ ॥

समासादि—दयासु परो दयापरः ( त० पु० ) । रूक्षस्य भावो रौक्ष्यं ( न० लिं० ), प्रतिषेध एव रौक्ष्यमिति प्रतिषेधरौक्ष्यम् ( क० धा० ) ॥ ५८ ॥

व्याकरणम्—अभूः = अट् + भू ( सत्तायाम् ) + च्लि + लुङ्, सिपि रूपम् । उपच्छन्दयति = उप + ( छदि ( संवरणे-इदित् ) + नुम् ) छन्दि + शप् + लट् + शतृ + ङि ॥ ५८ ॥

वाच्यान्तर—माम्प्रति ह्रियाऽलं, यत्त्वया माम्प्रहरताऽपि मुहूर्त्तं दयापरेणाभावि, तस्मादुपच्छन्दयति मयि त्वं प्रतिषेधरौक्ष्यं न प्रयुङ्ग्धि ॥ ५८ ॥

कोशः—"मुहूर्त्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च" इति मेदिनी । "उपमन्त्रयते चोपवदते सांत्वयत्यपि । चपत्युपच्छन्दयति सामयत्यपि सांत्वने । सप्तानुनयतीत्येवमात्मने" इत्याख्यातचन्द्रिका ॥ ५८ ॥

तात्पर्यार्थः—यद् भवान् मयि शरम्प्रहृतवानित्यतः किञ्चिन्मात्रमपि लज्जां न करोतु,

यतो भवद्बाणप्रहारेणैव पुनरहं गान्धर्वं शरीरं प्राप्तवान्, अतः प्रत्युपचिकीर्षया भवन्तं सम्मोहनास्त्राङ्गीकारार्थं प्रार्थये, आशासे च यदस्वीकाररूपं पारुष्यं भवान् न करिष्यतीति॥५८॥

भाषाऽर्थः—मेरे प्रति बाण प्रहार करने के कारण आप लज्जा मत करें, क्योंकि-आप मुझ पर प्रहार करते हुये भी थोड़ी देर के लिये दया से युक्त ही हुये थे, अर्थात् आप का बाण मारना मेरे लिये दया करना ही हुआ था, इस कारण से अस्त्र ग्रहण करने के लिये मेरे प्रार्थना करने पर आप "हम नहीं लेगें" ऐसी रुखाई मत करें ॥ ५८ ॥

अथ प्रियंवदात्तदीयं सम्मोहनास्त्रमजो गृहीतवानित्याह—

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥५९॥

सञ्जीविनी—तथेतीति । ना सोमश्चन्द्र इव नृसोमः । उपमितसमासः । 'सोम ओषधिचन्द्रयोः' इति शाश्वतः । पुरुषश्रेष्ठ इत्यर्थः । अस्त्रविदस्त्रज्ञः सोऽजस्तथेति सोम उद्भवो यस्याः सा तस्याः सोमोद्भवायाः सरितो नर्मदायाः । 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । पवित्रं पय उपस्पृश्य पीत्वा । आचम्येत्यर्थः । उदङ्मुखः सन्निगृहीतशापान्निवर्तितशापात् । उपकृतादित्यर्थः । तस्मात्प्रियंवदादस्त्रमन्त्रं जग्राह ॥ ५९ ॥

अन्वयः—नृसोमः, अस्त्रवित्, सः, तथा, इति, सोमोद्भवायाः, पवित्रं, पयः, उपस्पृश्य, उदङ्मुखः, "सन्", निगृहीतशापात्, तस्मात्, अस्त्रमन्त्रं, जग्राह ॥ ५९ ॥

व्याख्या—नृसोमः=नरचन्द्रः, मनुष्यश्रेष्ठ इत्यर्थः । अस्त्रविद्=आयुधवेत्ता, स=पूर्वोक्तः, अज इत्यर्थः । तथा=तेनप्रकारेण, यथा भवता कथ्यतेऽस्त्रग्रहणाय तथैवाहं करिष्यामीत्यर्थः । इति=इत्थम्, उक्त्वेति शेषः । सोमोद्भवायाः=नर्मदायाः, पवित्रं=पूतं, पयः=जलम्, उपस्पृश्य=उपस्पर्शनं कृत्वा, आचम्येत्यर्थः । उदङ्मुखः=उत्तराभिमुखः, सन्निति-शेषः । निगृहीतशापात्=दूरीकृतशापात्, प्राप्तोपकारादिति भावः । तस्मात्=पूर्वोक्तात्, प्रियंवदादित्यर्थः । अस्त्रमन्त्रम्=आयुधप्रयोगसंहारमन्त्रं, जग्राह=गृहीतवान् ॥ ५९ ॥

समासादि—सोमात्सोमवंशजात्पुरूरवस उद्भवति, तेनावतारितत्वात् सोमोद्भवा (स्त्री०) तस्याः सोमोद्भवायाः । ना सोम इव नृसोमः (उ० स०) । अस्त्रं वेत्तीत्यस्त्रवित् (पुं०) । अस्त्रस्य मन्त्र इत्यस्त्रमन्त्रः (त० पु०) तमस्त्रमन्त्रम् । निगृहीतः शापो यस्यासौ निगृहीतशापः (ब० व्री०) तस्मान्निगृहीतशापात् ॥ ५९ ॥

व्याकरणम्—उपस्पृश्य=उप+स्पृश (आमर्शने—अकारेत्)+क्त्वा+ल्यप् । जग्राह=ग्रह (उपादाने—अकारेत्)+लिट्, द्वित्वेऽभ्यासकार्ये णिपो णलि रूपम् ॥ ५९ ॥

वाच्यान्तरं—नृसोमेनास्त्रविदा तेन तथेति सोमोद्भवायाः पवित्रं पय उपस्पृश्योदङ्मुखेन 'सता' निगृहीतशापात्तस्मादस्त्रमन्त्रो जगृहे ॥ ५९ ॥

कोशः—"पवित्रः प्रयतः पूतः" इत्यमरः । "उपस्पृशति चाचामत्ययमू आचमनार्थके" "इत्याख्यातचन्द्रिका ॥ ५९ ॥

तात्पर्यार्थः—पुरुषश्रेष्ठोऽजः प्रियवदप्रार्थनां श्रुत्वा ततस्तथाऽस्त्वित्युक्त्वा च तत्प्रार्थनामङ्गीकुर्वन् नर्मदायाः पवित्रं जलमाचम्योत्तराभिमुखः संस्तस्मात् प्रयोगसंहारविभक्तमन्त्रसहितमस्त्रं संमोहननामकं गृहीतवान् ॥ ५९ ॥

भाषाऽर्थ—पुरुषश्रेष्ठ, अस्त्रों के जानने वाले उन युवराज अज ने "जैसा आप कहते हैं वैसा ही होगा" अर्थात् मैं ग्रहण करूंगा, यह कहकर नर्मदा का पवित्र जल आचमन कर के उत्तर की ओर मुख किये हुये, जिसका शाप छूट गया था ऐसे उस प्रियंवद नामक गन्धर्वराजकुमार से संमोहन नामक अस्त्र को चलाने और लौटा लेने के मन्त्रों के सहित ग्रहण किया ॥ ५९ ॥

*एवं मित्रत्वं प्राप्तवतोस्तयोर्गन्धर्वकुमारः प्रियंवदश्चैत्ररथमजश्च विदर्भदेशान् ययाविल्याह—*

**एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।**
**एको ययौ चैत्ररथप्रदेशान्सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥**

सञ्जीविनी—एवमिति । एवमध्वनि मार्गे दैवयोगाद् दैववशादचिन्त्यहेत्वनिर्धार्यहेतुकं सख्यं सखित्वम्। "सख्युर्यः"इति यप्रत्ययः। आसेदुषोः प्राप्तवतोस्तयोर्मध्य एको गन्धर्वश्चैत्ररथस्य कुबेरोद्यानस्य प्रदेशान्। 'अस्योद्यानं चैत्ररथम्' इत्यमरः। अपरोऽज' सौराज्येन राजन्वत्तया रम्यान्विदर्भान्विदर्भदेशान्ययौ ॥ ६० ॥

अन्वयः—एवम्, अध्वनि, दैवयोगाद्, अचिन्त्यहेतु, सख्यम्, आसेदुषोः, तयोः, एकः, चैत्ररथप्रदेशान्, अपरः, सौराज्यरम्यान्, विदर्भान्, ययौ ॥ ६० ॥

व्याख्या—एवम् = इत्थम्, उक्तप्रकारेणेत्यर्थः। अध्वनि = पथि, दैवयोगाद् = विधिसंगत्या, विधिवशादित्यर्थः। अचिन्त्यहेतु = अतर्क्यनिमित्तकं, सख्यं = मित्रत्वम्, आसेदुषोः = अधिगतवतोः, तयोः = पूर्वोक्तयोः, अजप्रियंवदयोर्मध्य इत्यर्थः। एकः = गन्धर्वः, चैत्ररथप्रदेशान् = कुबेरोद्यानभागान्, प्रतीति शेषः। अपरः = अन्यः, अज इत्यर्थः। सौराज्यरम्यान् = सुराजतया मनोरमान्, विदर्भान् = विदर्भदेशान्, ययौ = अगमत् ॥ ६० ॥

समासादि—अचिन्त्यो हेतुर्यस्य तदचिन्त्यहेतु ( ब० व्री० ) तत्तथोक्तम्। चैत्ररथस्य प्रदेशाश्चैत्ररथप्रदेशाः ( त० पु० ) तांश्चैत्ररथप्रदेशान्। सुराज्ञो भावः सौराज्यं ( न० लि० ), सौराज्येन रम्या. सौराज्यरम्याः ( त० पु० ) तान् सौराज्यरम्यान् ॥ ६० ॥

व्याकरणं—ययौ = या ( प्रापणे ) + लिट्, तिपो णलि रूपम् ॥ ६० ॥

वाच्यान्तरम्—एवमध्वनि दैवयोगादचिन्त्यहेतु सख्यमासेदुषोस्तयोरेकेन चैत्ररथप्रदेशा-अपरेण सौराज्यरम्या विदर्भा ययिरे ॥ ६० ॥

कोशः—"योगः संनहनोपायध्यानसंगतियुक्तिषु" इत्यमरः ॥ ६० ॥

तात्पर्यार्थः—एवं मार्गेऽकस्माद् मित्रभावं प्राप्तवतोस्तयोर्मध्य एकः प्रियंवदः कुबेरोद्यानमपरोऽजश्च विदर्भदेशान् प्रति जगाम ॥ ६० ॥

भाषाऽर्थ.—इस प्रकार से मार्ग में दैवयोग से, जिसका कारण नहीं समझा जा सकता ऐसा परस्पर मित्र भाव को प्राप्त किये हुये उन दोनों के मध्य में से एक अर्थात्–प्रियंवद चैत्ररथ नामक कुबेर के बगीचा की तरफ गये और दूसरे युवराज अज भली भांति शासन करने वाले राजा के होने से सुन्दर विदर्भ देश की तरफ गये ॥ ६० ॥

*अथ नगर समीपेऽजस्यागमनं श्रुत्वा विदर्भाधिपतिस्तत्स्वागताय स्वसदनान्निर्गत्य तं प्रत्युजगामेत्याह—*

**तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।**
**प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥**

सञ्जीविनी—तमिति। नगरस्योपकण्ठे समीपे तस्थिवांसं स्थितं तमजं तस्याजस्यागमेनागमनेनारूढ उत्पन्नो गुरुः प्रहर्षो यस्य स क्रथकैशिकेन्द्रो विदर्भराजः। प्रवृद्धोर्मिरूर्मिमाली समुद्रश्चन्द्रमिव। प्रत्युज्जगाम ॥ ६१ ॥

अन्वय.—नगरोपकण्ठे, तस्थिवांसं, तं, तदागमारूढगुरुप्रहर्षः, क्रथकैशिकेन्द्रः, प्रवृद्धोर्मिः, ऊर्मिमाली, चन्द्रम्, इव, प्रत्युज्जगाम ॥ ६१ ॥

व्याख्या = नगरोपकण्ठे = पुरान्तिके, तस्थिवांसं = कृतावस्थानं, स्थितमित्यर्थः। तम् = पूर्वोक्तम्, अजमित्यर्थ। तदागमारूढगुरुप्रहर्षः = पूर्वोक्ताजागमनप्रादुर्भूतानल्पप्रमोदः, अजागमनेनातीवप्रमोदयुक्त इत्यर्थ। क्रथकैशिकेन्द्र. = विदर्भदेशाधिपतिः, भोज इत्यर्थः।

प्रवृद्धोर्मिः = समेधिततरङ्गः, ऊर्मिमाली = तरङ्गपङ्क्तिशाली, उदधिरित्यर्थः। चन्द्रम् = इन्दुम्, इव = यथा, प्रत्युज्जगाम = प्रत्युद्ययौ ॥ ६१ ॥

समासादि—नगरस्योपकण्ठो नगरोपकण्ठः ( त० पु० ) तस्मिन्नगरोपकण्ठे। तस्यागमस्तदागमः (त० पु०), तेनारूढस्तदागमारूढः (त०पु०), तादृशो गुरुः प्रहर्षो यस्य स तदागमारूढगुरुप्रहर्षः ( ब० व्री० )। क्रथकैशिकेष्विन्द्र इति क्रथकैशिकेन्द्रः ( त०पु० )। प्रवृद्धा ऊर्मयो यस्मिन् स प्रवृद्धोर्मिः ( ब० व्री० )। ऊर्मीणां मालोर्मिमाला ( त० पु० ), साऽस्त्यस्मिन्नित्यूर्म्मिमाली ॥ ६१ ॥

व्याकरणं—प्रत्युज्जगाम = प्रति + उद् + गम्लृ ( गतौ—लृदित् ) + लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ ६१ ॥

वाच्यान्तरं—नगरोपकण्ठे तस्थिवान् स तदागमारूढगुरुप्रहर्षेण क्रथकैशिकेन्द्रेण प्रवृद्धोर्मिणोर्मिमालिना चन्द्र इव प्रत्युज्जग्मे ॥ ६१ ॥

कोशः—"उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" "इति।" "भङ्गस्तरङ्ग ऊर्मिर्वा" इति चामरः। "माला तु पङ्क्तौ पुष्पादिदामनि" इत्यनेकार्थसङ्ग्रहः ॥ ६१ ॥

तात्पर्यार्थः—यथा समुद्र उदितं पूर्णचन्द्रमवलोक्य तदालिङ्गनोत्कतया प्रवृद्धोर्मिः सन्नुद्गच्छति तथैव विदर्भाधिपतिर्नगरसमीपस्थितमजं श्रुत्वा तदवलोकनोत्कण्ठितः सन्नतिप्रमोदयुक्तस्तत्स्वागतार्थं स्वयं स्वसदनान्निर्गत्य तं प्रत्युज्जगाम ॥ ६१ ॥

भाषार्थः—नगर के समीप में स्थित उन युवराज अज के आगमन से उत्पन्न हुये अत्यन्त हर्ष से युक्त विदर्भ देश के महाराज भोज जैसे-बढ़ी हुई लहरों वाला समुद्र चन्द्रमा के उदय होने से अत्यन्त आनन्दित हो उससे मिलने के लिये जाता है, वैसे ही मिलने के लिये गये ॥ ६१ ॥

*अथ विदर्भेश्वरोऽग्रयायी भूत्वा मार्गं प्रदर्शयन्नजं सादरं स्वपुरं प्रवेश्य नम्रः सन्नुपाचरदित्याह—*

**प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः।**
**मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥**

सञ्जीविनी—प्रवेश्येति। एनमजमग्रयायी। सेवाधर्मेण पुरो गच्छन्नित्यर्थः। नीचैर्नम्रः पुरं प्रवेश्य प्रवेशं कारयित्वा प्रीत्याऽर्पितश्रीस्तथा तेन प्रकारेणोपाचरदुपचरितवान्। यथा येन प्रकारेण तत्र पुरे समेतो मिलितो जनो वैदर्भं भोजमागन्तुं प्राघूर्णिकं मेने। अजं गृहेशं गृहपतिं मेने ॥ ६२ ॥

अन्वयः—एनम्, अग्रयायी, नीचैः, पुरं, प्रवेश्य, "प्रीत्या" अर्पितश्रीः, तथा, उपाचरत्, यथा, तत्र, समेतः, जनः, वैदर्भम्, आगन्तुम्, अजं, गृहेशम्, मेने ॥ ६२ ॥

व्याख्या—एनं = पूर्वोक्तम्, अजमित्यर्थः। अग्रयायी = पुरोगामी, यथा स्वामिनोऽग्रे वर्त्म दर्शयन् सेवको याति तथैव पुरोगच्छन् विदर्भेश्वर इत्यर्थः। नीचैः = नम्रः, सन्निति शेषः। पुरं = नगरं, प्रवेश्य = प्रवेशं कारयित्वा, अर्पितश्रीः = दत्तलक्ष्मीकः, प्रीत्या सर्वाः स्वकीयाः सम्पदः समर्प्येत्यर्थः। तथा = तेन प्रकारेण, उपाचरत् = पर्यचरत, सेवां कृतवानित्यर्थः। यथा = येन प्रकारेण, तत्र = तस्मिन्, पुर इत्यर्थः। समेतः = सङ्गतः, जनः = लोकः, वैदर्भ = विदर्भाधिपतिं, भोजमित्यर्थः। आगन्तुम् = अभ्यागतं, गृहागतमित्यर्थः। अजं = रघुतनयं, गृहेशं = गृहस्वामिनं, मेने = ज्ञातवान् ॥ ६२ ॥

समासादि—अग्रे यातुं शीलमस्यासावग्रयायी ( पुं० )। अर्पिता श्रीर्येन सोऽर्पितश्रीः ( ब० व्री० )। गृहस्येश इति गृहेशः ( त० पु० ) तं गृहेशम् ॥ ६२ ॥

व्याकरणम्—उपाचरत् = उप + अट् + चर ( गतिभक्षणयोः-अकारेत् ) + शप् + लङ्, ति-

पि रूपम् । मेने = मनु (अवबोधने—उदित्) + लिट्, तप्रत्यये द्वित्वे एत्वाभ्यासलोपे रूपम् ॥ ६२ ॥

वाच्यान्तरम्—एषोऽग्रयायिना नीचैः पुरं प्रवेश्यार्पितश्रिया तथोपाचर्यत यथा तत्र समेतेन जनेन वैदर्भ आगन्तुर्मेनेऽजो गृहेशो मेने ॥ ६२ ॥

कोशः—"स्युरावेशिक आगन्तुरतिथिर्ना गृहागते"इत्यमरः ॥ ६२ ॥

तात्पर्यार्थः—विदर्भाधिपतिर्भोजः सेवकवत् पुरोगच्छन्नेनमजं नगराभ्यन्तरं सादरं समानीय सर्वाः सम्पदस्तदधीनीकृत्येव नम्रः संस्तथा परिचचार यथा स्वयंवरं दिदृक्षवो नगरान्तरात्समायातास्तत्रत्याश्च जना आगन्तुकमजं गृहस्वामिनम् मेनिरे गृहस्वामिनं विदर्भाधिपञ्चागन्तुकं मेनिरे ॥ ६२ ॥

भाषाऽर्थः—उन अज के आगे २ जाते हुए नम्र भोज महाराज उन्हें नगर में प्रवेश कराकर प्रेम से सारी सम्पत्ति अर्पण किये हुये, उस तरहसे उनकी सेवा करने लगे कि जिस तरह से वहाँ पर इकट्ठे हुये लोगों ने विदर्भदेशाधिपति को आगन्तुक ( मेहमान ) और अज को घर का मालिक समझा ॥ ६२ ॥

* अथाजो भोजराजपुरुषनिर्दिष्टां रम्यां नूतनोपकार्यामध्युवासेत्याह—*

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां-
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।
रम्यां रघुप्रतिनिधिः स नवोपकार्यां-
बाल्यात्परामिव दशां मदनोऽध्युवास ॥ ६३ ॥

सञ्जीविनी—तस्येति । रघुप्रतिनिधी रघुकल्पः । रघुतुल्य इत्यर्थः। उक्तं च दण्डिना सादृश्यवाचकप्रस्तावे 'कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि' इति । सोऽजः प्रणतैर्नमस्कुर्वद्भिः । कर्तरि क्तः । तस्य भोजस्याधिकारो नियोगस्तस्य पुरुषैः । अधिकृतैरित्यर्थः । प्रदिष्टां निर्दिष्टां प्राग्द्वारस्य वेद्यां विनिवेशितः पूर्णकुम्भो यस्यास्ताम् । स्थापितमङ्गलकलशामित्यर्थः। रम्यां रमणीयां नवोपकार्या नूतनं राजभवनम् । 'उपकार्या राजसद्मन्युपचारचिते ऽन्यवत्' इति विश्वः । मदनो बाल्यात्परां शैशवादनन्तरां दशामिव । यौवनमिवेत्यर्थः। अध्युवासाधिष्ठितवान् । तत्रोषितवानित्यर्थः। "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ ६३ ॥

अन्वयः—रघुप्रतिनिधिः, सः, प्रणतैः, तस्य, अधिकारपुरुषैः, प्रदिष्टां, प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भां, रम्यां, नवोपकार्यां, मदनः, बाल्यात्, परां, दशाम्, इव, अध्युवास ॥६३॥

व्याख्या—रघुप्रतिनिधिः = दिलीपसूनुप्रतिमः, रघुसदृश इत्यर्थः । सः = पूर्वोक्तः, अज इत्यर्थः । प्रणतैः = प्रणमद्भिः, तस्य = पूर्वोक्तस्य, विदर्भाधिपस्य भोजस्येत्यर्थः । अधिकार पुरुषैः = नियुक्तनरैः, गृहागतानां परिचर्यायां नियुक्तैर्जनैरित्यर्थः । प्रदिष्टां = निर्दिष्टां, प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भां = प्रथमद्वारवर्त्तिपरिष्कृतभूतलस्थापितमङ्गलघटां, रम्यां = मनोहरां, नवोपकार्यां = नूतनराजसदनं, मदनः = स्मरः, बाल्यात् = शैशवात्, पराम् = उत्तराम्, अनन्तरामित्यर्थः । दशाम् = अवस्थां, यौवनमित्यर्थ । इव = यथा, अध्युवास = अध्यवात्सीत्, निवासं कृतवानित्यर्थः ॥ ६३ ॥

समासादि—अधिकारस्य पुरुषा अधिकारपुरुषाः ( त० पु० ) तैरधिकारपुरुषैः । प्राग्द्वारस्य वेदिः प्राग्द्वारवेदिः ( त० पु० ), तत्र विनिवेशितः प्राग्द्वारवेदिविनिवेशितः ( त० पु० ), स पूर्णकुम्भो यस्यां सा प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भा (ब०व्री०) तां तथोक्ताम् । रघोः प्रतिनिधिः रघुप्रतिनिधिः ( त० पु० ) । नवा चासावुपकार्या नवोपकार्या ( क० धा० ) तां नवोपकार्याम् । बालस्य भावो बाल्यं ( न०लि० ) तस्माद्बाल्यात् ॥ ६३ ॥

व्याकरणम्—अध्युवास = अधि + वस ( निवासे-अकारेत् ) लिट् , द्वित्वेऽभ्यासकार्यं-संप्रसारणे रूपम् ॥ ६३ ॥

वाच्यान्तरं—रघुप्रतिनिधिना तेन प्रणतैस्तस्याधिकारपुरुषैः प्रदिष्टां प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भां रम्यां नवोपकार्यां मदनेन बाल्यात् परां दशामिवाध्यूषे ॥ ६३ ॥

कोशः—"प्रक्रिया त्वधिकारः स्यात्" इत्यमरः । द्वाः स्त्री द्वारं प्रतीहारः" इत्यमरः । "मदनः सिक्थके स्मरे । जले वसन्ते धत्तूरे" इत्यनेकार्थसङ्ग्रहः ॥ ६३ ॥

तात्पर्यार्थः—अजो महाराजभोजेनागन्तुकानां सेवायामधिकृतैः, पुरुषैर्निर्दिष्टे द्वारवेद्यां प्रतिष्ठापितैर्मङ्गलार्थकैर्जलपूर्णकुम्भैः सुशोभिते रम्ये पटनिर्मिते राजसदने तथा निवासं कृतवान्, यथा मदनो युवावस्थायां निवसति ॥ ६३ ॥

भाषाऽर्थः—रघु के तुल्य उन युवराज अज ने, नमस्कार करते हुये, उन विदर्भाधिपति भोज के नियुक्त किये हुये पुरुषों से बतलाये हुये, जिसके प्रधान द्वार के आगे वेदी पर जल से भरे मङ्गल कलश रक्खे हुये हैं ऐसे सुन्दर, नवीन कपड़े के बने हुये, राजाओं के रहने के योग्य मण्डप में, जैसे कामदेव बाल्यावस्था के बाद युवावस्था मे निवास करता है उसी भांति निवास किया ॥ ६३ ॥

*अथ रात्रौ कन्यारत्नमिन्दुमतीं लिप्सुरजश्चिरेण निद्रावशो बभूवेत्याह—*

तत्र स्वयंवरसमाहृतराजलोकं-
कन्याललाम कमनीयमजस्य लिप्सोः ।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥

सञ्जीविनी—तत्रेति । तत्रोपकार्यायां स्वयंवरनिमित्तं समाहृतः संमेलितो राजलोको येन तत्कमनीयं स्पृहणीयं कन्याललाम कन्यासु श्रेष्ठम् । 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठभूपाशुण्डशृङ्गपुच्छचिह्नाश्वलिङ्गिषु' इति यादवः । लिप्सोर्लब्धुमिच्छोः । लभेः सन्नन्तादुप्रत्ययः । अजस्य भावावबोधे पुरुषस्याभिप्रायपरिज्ञाने कलुषाऽसमर्था दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव । 'कामिनं राजानं चौरं प्रविशन्ति प्रजागराः' इति भावः । अभिमुखीशब्दो ङीषन्तश्च्व्यन्तो वा ॥ ६४ ॥

अन्वयः—तत्र, स्वयंवरसमाहृतराजलोकं, कन्याललाम, लिप्सोः, अजस्य, भावावबोधकलुषा, दयिता, इव, रात्रौ, निद्रा, चिरेण, नयनाभिमुखी, बभूव ॥ ६४ ॥

व्याख्या—तत्र = पूर्वोक्तायां, नवोपकार्यायामित्यर्थः । स्वयंवरसमाहृतराजलोकं = स्वयंवरार्थसंगमितनृपजन, स्वयंवरार्थं देशान्तरसमाहूतराजगणसम्मेलनकारीत्यर्थः । कमनीयम् = अभिलषणीयं, कन्याललाम = नारीश्रेष्ठम्, इन्दुमतीमित्यर्थः । लिप्सोः = अभीप्सोः, प्राप्तुमिच्छोरित्यर्थ. । अजस्य = रघुसूनोः, भावावबोधकलुषा = आशयपरिज्ञानाविला, पुरुषाशयज्ञानेऽक्षमेत्यर्थः । दयिता = प्रिया, का चिद् रमणीत्यर्थः । इव = यथा, रात्रौ = रजन्यां, निद्रा = स्वापः, चिरेण = बहुक्षणानन्तरं, नयनाभिमुखी = नेत्रसम्मुखी, बभूव = अभूत् ॥ ६४ ॥

समासादि—स्वयंवरार्थं समाहृतः स्वयंवरसमाहृतः ( त० पु० ), राज्ञां लोको राजलोकः ( त० पु० ), स्वयंवरसमाहृतो राजलोको येन तत् स्वयंवरसमाहृतराजलोकम् (ब० व्रीं०) तत्तथोक्तम् । कन्यासु ललाम कन्याललाम ( त०पु० ) तत्तथोक्तम् । भावस्यावबोधो भावावबोध ( त० पु० ), तत्र कलुषा भावावबोधकलुषा ( त०पु० ) । नयनयोरभिमुखी नयनाभिमुखी ( त० पु० ) ॥ ६४ ॥

व्याकरणं—बभूव = भू ( सत्तायाम् ) + लिट्, तिपो णलि रूपम् ॥ ६४ ॥

वाच्यान्तरं—तत्र स्वयंवरसमाहृतराजलोकं कमनीयं कन्याललाम लिप्सोरजस्य भावावबोधकलुषया दयितयेव रात्रौ, निद्रया चिरेण नयनाभिमुख्या बभूवे ॥ ६४ ॥

कोशः—"भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबु-

धजन्तुषु । इत्यादौ च" इति मेदिनी। "अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इति । "स्यान्निद्रा शयनं स्वापः" इति चामरः ॥ ६४ ॥

तात्पर्यार्थः—यस्य प्राप्त्यर्थं देशान्तरेभ्योऽनेकशो राजानो निमन्त्रिताः सन्तः समवेतास्तस्यैव कन्यारत्नस्य प्राप्तिविषयकचिन्ताग्रस्ततयाऽजो रात्रौ बहुमुहूर्त्तानन्तरं निद्रितोबभूव ॥ ६४ ॥

भाषाऽर्थः—उन पटनिर्मित राजमण्डप में, स्वयंवर में जिस के लिये राजा लोग एकत्र किये गये हैं ऐसे सबों के चाहने योग्य कन्याओं में श्रेष्ठ उस इन्दुमती के पाने की इच्छा रखने वाले "अज" के अभिप्राय के जानने में असमर्थ मुग्धा नवोढा नायिका की भाँति निद्रा रात में बहुत देर के बाद आंखों के संमुख अर्थात् आंखों में आई ॥ ६४ ॥

*अथ रात्रौ बहुमुहूर्त्तानन्तरं प्रसुप्तमजं वन्दिपुत्राः स्तुतिपाठैरुपसि प्रबोधयामासुरित्याह—

तं कर्णभूषणनिपीडितपीवरांसं-
शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजाः सवयसः प्रथितप्रबोधं-
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५ ॥

सञ्जीविनी—तमिति । कर्णभूषणाभ्यां निपीडितौ पीवरौ पीनावंसौ यस्य तम्। शय्याया-उत्तरच्छदस्योपर्यास्तरणवस्त्रस्य विमर्देन घर्षणेन कृशो विरलोऽङ्गरागो यस्य तम् । न त्वङ्गनासङ्गादिति भाव. । प्रथितप्रबोधं प्रकृष्टज्ञानं तमेनमजं सवयसः समानवयस्का उदारवाचः प्रगल्भगिरः सूतात्मजा वन्दिपुत्राः । "वैतालिकाः" इति वा पाठः । 'वैतालिका बोधकराः' इत्यमरः । वाग्भिः स्तुतिपाठैरुपसि प्राबोधयन्प्रबोधयामासुः ॥ ६५ ॥

अन्वयः—कर्णभूषणनिपीडितपीवरांसं, शय्योत्तरच्छदविमर्दकृशाङ्गरागं, प्रथितप्रबोधं, तं, सवयसः, उदारवाचः, सूतात्मजाः, वाग्भिः, उपसि, प्राबोधयन् ॥ ६५ ॥

व्याख्या—कर्णभूषणनिपीडितपीवरांसं = श्रवणालङ्कारमर्दितपीनस्कन्धं, शय्योत्तरच्छदविमर्दकृशाङ्गराग = तल्पोपर्यास्तरणपटसङ्घर्षणनिर्मृष्टकस्तूरिकाऽऽद्यङ्गरागं, प्रथितप्रबोधं = विश्रुतज्ञानं, प्रकृष्टज्ञानशालिनमित्यर्थः । तं = पूर्वोक्तम् , प्रसुप्तमजमित्यर्थः । सवयसः = तुल्यवयस्काः, उदारवाचः = प्रौढगिरः, सूतात्मजाः = वन्दिपुत्राः, वाग्भिः = स्तुतिवचनैः, उपसि = प्रत्यूषे, प्रातःकाल इत्यर्थः । प्राबोधयन् = प्रबोधयन्ति स्म ॥ ६५ ॥

समासादि—कर्णयोर्भूपणे कर्णभूषणे ( त० पु० ), ताभ्यां निपीडितौ कर्णभूषणनिपीडितौ ( त० पु० ), तौ पीवरावंसौ यस्य स कर्णभूषणनिपीडितपीवरांसः ( व० व्री० ) तं तथोक्तम् । शय्याया उत्तरच्छदः शय्योत्तरच्छदः ( त० पु० ), तस्य विमर्दः शय्योत्तरच्छदविमर्दः ( त० पु० ), तेन कृशः शय्योत्तरच्छदविमर्दकृशः ( त० पु० ), सोऽङ्गरागो यस्य स शय्योत्तरच्छदविमर्दकृशाङ्गरागः ( ब० व्री० ) त तथोक्तम् । सूतानामात्मजाः सूतात्मजाः ( त० पु० ) । समानं वयो येषां ते सवयसः ( व० व्री० ) । प्रथित प्रबोधो यस्य स प्रथितप्रबोधः ( ब० व्री० ) त प्रथितप्रबोधम् । उदारा वाचो येषां त उदारवाचः ( व० व्री० ) ॥ ६५ ॥

व्याकरण—प्राबोधयन् = प्र + अट् + ( बुध ( अवबोधने-अकारेत् ) + णिच् + )बोधि शप् + लङ् , झिप्रत्यये रूपम् ॥ ६५ ॥

वाच्यान्तरं—कर्णभूषणनिपीडितपीवरांसः शय्योत्तरच्छदविमर्दकृशाङ्गरागः प्रथितप्रबोधः स सवयोभिरुदारवाग्भिः सूतात्मजैर्वाग्भिरुपसि प्राबोध्यत ॥ ६५ ॥

कोशः—"पीनपीव्नी न स्थूलपीवरे" इत्यमरः। "अंसः स्कन्धे विभागे स्यात्" इति हैमः। "उदारो दातृमहतोर्दक्षिणे चाभिधेयवत्" इति विश्वः ॥ ६५ ॥

तात्पर्यार्थ.—अथ रात्रौ चिरेण प्रसुप्तस्याजस्य. स्थूलमसद्वय कर्णभूषणद्वयेन पीडित-

त्वदाननरुचिं=भवन्मुखकान्तिं, त्वन्मुखसादृश्यमित्यर्थः । विजहाति=त्यजति, अतो निद्रां त्यक्त्वा निराश्रयां लक्ष्मीमङ्गीकुर्विति भावः ॥ ६७ ॥

समासादि—निद्राया वशो निद्रावशः ( त० पु० ) तेन निद्रावशेन । अवेक्षत इत्यवेक्षमाणा ( स्त्री० ), नावेक्षमाणेत्यनवेक्षमाणा ( न० त० पु० ) । दिशामन्तो दिगन्तः ( त० पु० ), तं लम्बितुं शीलमस्येति दिगन्तलम्बी ( त० पु० ) । तवाऽननं त्वदाननं (त० पु०), तस्य रुचिस्त्वदाननरुचिः ( त० पु० ) तां त्वदाननरुचिम् ॥ ६७ ॥

व्याकरणं—विनोदयति=( विनोद+अम्+णिच् ) विनोदि+शप्+लट्, तिपि रूपम् । विजहाति=वि+ओहाक् ( त्यागे—ओकित् )+श्लु+लट्, द्वित्वेऽभ्यासकार्यं-रूपम् ॥ ६७ ॥

वाच्यान्तरं—निद्रावशेन भवता पर्युत्सुकत्वमपि निशि खण्डितयाऽवलयेवानवेक्षमाणया "सत्या" लक्ष्म्या येन "पर्युत्सुकत्वं" विनोद्यते, तेन चन्द्रेणापि दिगन्तलम्बिना "सता" त्वदाननरुचिर्विहीयते ॥ ६७ ॥

कोशः—"वंशो जनस्पृहाऽऽयत्तेष्वायत्तत्वप्रभुत्वयोः" इत्यनेकार्थसंग्रहः । "स्त्री योषिदबला योषा" इति । "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इति चामरः ॥ ६७ ॥

तात्पर्यार्थः—रात्रौ त्वयि सुप्ते सति या तव प्रेयसी लक्ष्मीः खण्डिता नायिकेव स्वामिनं त्वां निद्रारूपायामन्यस्यां कस्यां चिद्रमण्यामिव संसक्तं ज्ञात्वाऽत एव विषण्णा सती स्वमनोविनोदार्थं त्वन्मुखसादृश्यं भजमानं यं चन्द्रं समाश्रितवती, सोऽपि चन्द्र इदानीमस्तं गतोऽत एव निराश्रयामनन्यशरणां तां लक्ष्मी निद्रां परित्यज्याङ्गीकुरु ॥६७॥

भाषाऽर्थः—निद्रारूपी रमणी के अधीन हुये आप के विषय में अपनी अनुरक्ति की तरफ रात्रि में खण्डिता नायिका की भांति कुछ ध्यान नहीं देती हुई अतः-खिन्न-चित्त होती हुई लक्ष्मी जिस चन्द्रमा के साथ अपने मन को बहलाती थी वह चन्द्रमा भी इस समय पश्चिम दिशा के अन्त में जाता हुआ अर्थात् अस्त होता हुआ तुम्हारे मुख की कान्ति की भांति जो अपनी कान्ति है, उसको छोड रहा है, अर्थात् कान्ति हीन हो रहा है । अतः निद्रा को छोड़ कर आप जिसका कोई आश्रय नहीं है ऐसी उस लक्ष्मी को ग्रहण करें अर्थात् उठें ॥ ६७ ॥

*अथ निशाऽवसानद्योतकः कमलानां विकासोऽभूदित्यतस्तव नेत्रकमलयोरप्युन्मीलनं समुचितमिति ब्रुवन्तो वन्दिपुत्रा आहुरित्याह—*

तद्वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६८ ॥

सञ्जीविनी—तद्वल्गुनेति । तत्तस्माल्लक्ष्मीपरिग्रहणाद्वल्गुना मनोज्ञेन । 'वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्' इति विश्वः । युगपत्तावदुन्मिषितेन युगपदेवोन्मीलितेन न्द्वयो द्वे अपि परस्परतुलामन्योन्यसादृश्यमधिरोहतां प्राप्नुताम् । प्रार्थनायां लोट् । के द्वे । अन्तः प्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य तत्तथोक्तम् । 'तारकाऽक्ष्णः कनीनिका' इत्यमरः । तव चक्षुः । अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मं च । युगपदुन्मेषे सति सम्पूर्णसादृश्यलाभ इति भावः ॥ ६८ ॥

अन्वयः—तद्, वल्गुना, युगपत्, तावद्, उन्मिषितेन, सद्यः, द्वे, परस्परतुलाम्, अधिरोहताम्, "के द्वे", अन्तः, प्रस्पन्दमानपरुषेतरतारं, तव, चक्षुः, "अन्तः", प्रचलितभ्रमरं, पद्मं, च ॥ ६८ ॥

व्याख्या—तत्=तस्माद्, हेत्वर्थेऽव्ययमेतद् । लक्ष्मीपरिग्रहणादित्यर्थः । वल्गुना=मनोज्ञेन, सुन्दरेणेत्यर्थः । युगपद्=एकदा, एकस्मिन् काल इत्यर्थः । तावत्=एव, अवधारणेऽर्थेऽव्ययमेतद् । उन्मिषितेन=उन्मीलितेन, "पद्मपक्षे" विकसितेन, । सद्यः=सपदि, द्वे=उभे, नेत्रकमले इत्यर्थः । अपि=युक्तपदार्थे, परस्परतुलाम्=मिथःसादृश्यम्, अधिरोहताम्=अधितिष्ठतां, प्राप्नुतामित्यर्थः । के द्वे । अन्तः=मध्ये, प्रस्पन्दमानपरुषेतरतारं=किंचिच्चलत्स्निग्धकनीनिक, तव=भवतः, चक्षुः=नेत्रम्, "अन्तः" इत्यस्यात्राप्यन्वयः कार्यः । प्रचलितभ्रमरं=चलद्द्विरेफं, पद्मं=कमलं, च=समुच्चयेऽर्थे ॥६८॥

समासादि—परस्परयोस्तुला परस्परतुला ( त०पु० ) तां परस्परतुलाम् । परुषादितरा परुषेतरा ( त०पु० ), प्रस्पन्दमाना परुषेतरा तारा यस्य तत् प्रस्पन्दमानपरुषेतरतारम् ( ब०व्री० ) । प्रचलिता भ्रमरा यस्मिंस्तत् प्रचलितभ्रमरम् ( ब०व्री० ) ॥ ६८ ॥

व्याकरणम्—अधिरोहताम्=अधि+रुह ( बीजजन्मनि प्रादुर्भावे च—अकारेत् )+शप्+लोट्, तसि रूपम् ॥ ६८ ॥

वाच्यान्तरं—तद्वल्गुना युगपत्तावदुन्मिषितेन सद्यो द्वाभ्यामपि परस्परतुलाऽधिरुह्यतामन्तः प्रस्पन्दमानपरुषेतरतारेण तव चक्षुषाऽन्तः प्रचलितभ्रमरेण पद्मेन च ॥ ६८ ॥

कोशः—"युगपदेकदा" इत्यमरः । "यावत् कात्स्न्र्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधिकारसम्भ्रमे" इति मेदिनी । "तुला सादृश्यमानयोः । गृहाणां दारुबन्धायां पीठिकायामपीष्यते । राशौ पलशते भाण्डे" इत्यपि ॥ ६८ ॥

तात्पर्यार्थः—सम्प्रत्यरुणोदयकालसत्त्वादन्तः प्रचलद्भृङ्गानि कमलानि विकासमधिगच्छन्ति, अतो यदि भवानप्यस्मिन्नेव क्षणेऽन्तः प्रचलन्नीलकनीनिकायुतं नेत्रद्वयं समुन्मीलयतु तर्हि युगपदेवोन्मीलितेन विकसितेन च त्वन्नेत्रं कमलं च, एते द्वे अपि परस्परसादृश्यं प्राप्नुयाताम्, अतो नेत्रोन्मीलनं कुरु यतः कमलानां विकासेनासन्नसूर्योदयो लक्ष्यते, सूर्योदये सति च शयनं निषिद्धम् ॥ ६८ ॥

भाषाऽर्थः—इस ( लक्ष्मी के स्वीकार करने के ) कारण से सुन्दर जो साथ ही साथ एकही क्षण मे आँख का खुलना और कमल का खिलना इन दोनों व्यापारों से शीघ्र उसी क्षण में दोनों ही परस्पर एक दूसरे की बराबरी को प्राप्त करें, वे दोनों कौन—एक तो भीतर कुछ २ चलती हुइ चिकनी काली पुतलियों वाली तुम्हारी आँखें और दूसरे भीतर कुछ २ चलते हुये भौंरो से युक्त कमल, अर्थात्—साथ ही साथ खुलने और खिलने से आँखों की और कमलों की पूर्ण रूप से समानता हो जायगी, अर्थात् आप आंखें खोलै कमल खिल रहे हैं ॥६८॥

अथ निशाऽवसानसूचकं प्रातःकालीनं मन्दसुगन्धिपवनं वर्णयन्तो वैतालिका आहुरित्याह—

वृन्ताच्छ्लथं हरति पुष्पमनोऽकहानां-
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः-
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९ ॥

सञ्जीविनी—वृन्तादिति । विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निःश्वासपवनस्य सौरभ्यम् । तादृक्सौगन्ध्यमित्यर्थः । परगुणेनान्यदीयगुणेन । सांक्रामिकगन्धेनेत्यर्थ. । ईप्सुराप्तुमिच्छुरिव । "आप्ज्ञप्यृधामीत्" इतीकारादेशः । अनोऽकहानां वृक्षाणां श्लथं शिथिलं पुष्पं वृन्तात्पुष्पबन्धनात् । 'वृन्तं प्रसवबन्धनम्' इत्यमरः । हरत्यादत्ते । अरुणांशुभिन्नैस्तरणिकिरणोद्बोधितैः सरसिजातैः सरसिजैः कमलैः सह । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । संसृज्यते संगच्छते । सृजेर्दैवादिकात्कर्तरि लट् ॥ ६९ ॥

अन्वयः—विभातवायुः, स्वाभाविकं, ते, मुखमारुतस्य, सौरभ्यम्, परगुणेन, ईप्सुः, इव, अनोऽकहानां, श्लथ, पुष्पं, वृन्ताद्, हरति, अरुणांशुभिन्नैः, सरसिजैः, "सह", संसृज्यते ॥६९॥

व्याख्या—विभातवायुः = प्रभातपवनः, स्वाभाविकं = नैसर्गिकं, प्राकृतमित्यर्थः। ते = तव, मुखमारुतस्य = वदनपवनस्य, निःश्वासवातस्येत्यर्थः। सौरभ्यं = सौगन्ध्यं, परगुणेन = परकीयगुणेन, ईप्सुः = लिप्सुः, इव = यथा, अनोऽकहानां = पादपानां, श्लथं = शिथिलं, पुष्पं = कुसुमं, वृन्तात् = प्रसवबन्धनात्, हरति = गृह्णाति, अरुणांशुभिन्नैः = सूर्यकिरणविकसितैः, सरसिजैः = पद्मैः, सह। संसृज्यते = सङ्गच्छते, सङ्गतो भवतीत्यर्थः ॥ ६९ ॥

समासादि—सरसि जातानि सरसिजानि (त. पु.) तैः सरसिजैः। अरुणस्यांशव इत्यरुणांशवः (त. पु.) तैर्भिन्नान्यरुणांशुभिन्नानि (त. पु.) तैररुणांशुभिन्नैः। स्वभावेन सिद्धं स्वाभाविकं (न. लि.) तत्तथोक्तम्। परस्य गुणः परगुणः (त.पु.) तेन तथोक्तेन। विभातस्य वायुरिति विभातवायुः (त. पु.) ॥ ६९ ॥

व्याकरणं—हरति = हृञ् (हृणे--ञित्) + शप् + लट्, तिपि रूपम्। संसृज्यते = सम् + सृज (विसर्गे--अकारेत्) + श्यन् + लट्, तप्रत्यये रूपम्।

वाच्यान्तरं—विभातवायुना स्वाभाविकं ते मुखमारुतस्य सौरभ्यं परगुणेनेप्सुनेवानोऽकहानां श्लथं पुष्पं वृन्ताद्ध्रियतेऽरुणांशुभिन्नैः सरसिजैः सह संसृज्यते ॥ ६९ ॥

कोशः--"पुष्पं विकास आर्तवे। धनदस्य विमाने च कुसुमे नेत्ररुज्यपि" इति हैमः। "अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ। निःशब्दे कपिले,कुष्ठभेदे ना गुणिनि त्रिषु" इति मेदिनी ॥ ६९ ॥

तात्पर्यार्थः--प्रभातकालीनो मन्दमारुतः संप्रति तेऽन्यदीयगुणेन निःश्वासपवनस्य स्वाभाविकं तादृक्सौगन्ध्यं प्राप्तुमिच्छन्निव वृक्षेभ्यः सूर्यकिरणशिथिलबन्धनानि पुष्पाण्यधःपातयित्वा तदीयं सूर्यांशूद्बोधितानां कमलानां च गन्धमाहरन् वात्यतः सूर्योदयसमयं ज्ञात्वा निद्रां जहीहि ॥ ६९ ॥

भाषार्थः--प्रातःकाल की वायु स्वाभाविक तुम्हारे मुखके निःश्वास-वायु की सुगन्धि के समान सुगन्धि को दूसरे के गुण से अर्थात् दूसरे से प्राप्त किये हुये गन्ध के द्वारा प्राप्त करने की इच्छा से, मानों वृक्षों के शिथिल हुये पुष्पों को वृन्त अर्थात्-फूलों के बन्धन-स्थानों से अलग कर रहा है, और सूर्य के किरणों से विकसित कमलों के साथ संगत हो रहा है, अर्थात्-फूलों के और कमलों के गन्ध को ग्रहण करता हुआ वह रहा है, अतः सूर्योदय का समय हो रहा है आप उठें ॥ ६९ ॥

*अथ तरुपल्लवस्थितहिमाम्भोवर्णनपुरःसरं निशाऽवसानं सूचयन्तो बन्दिपुत्रा आहुरित्याह--

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः।
आभाति लब्धपरभागतयाऽधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥७०॥

सञ्जीविनी--ताम्रोदरेष्विति। ताम्रोदरेष्वरुणाभ्यन्तरेषु पतितं निर्धौता या हारगुलिका-मुक्तामणयस्तद्वद्विशदं हिमाम्भो लब्धपरभागतया लब्धोत्कर्षतया। 'परभागो गुणोत्कर्षे' इति यादवः। अधरोष्ठे त्वदीयं सदशनार्चिर्दन्तकान्तिसहितं लीलास्मितमिवाभाति शोभते ॥७०॥

अन्वयः–ताम्रोदरेषु, तरुपल्लवेषु, पतितं, निर्धौतहारगुलिकाविशदं, हिमाम्भः, लब्धपरभागतया, अधरोष्ठे, त्वदीयं, सदशनार्चिः, लीलास्मितम्, इव, आभाति ॥ ७० ॥

व्याख्या—ताम्रोदरेषु = शुल्वनिभगर्भेषु, अरुणवर्णयुतमध्यभागेष्वित्यर्थः। तरुपल्ल-

वेषु=पादपकिसलयेषु, पतितं=च्युतं, नभस्त इति शेषः । निर्धौतहारगुलिकाविशदं=स्वच्छमुक्तादामगुच्छनिर्मलं, हिमाम्भः=तुषारजलं, लब्धपरभागतया=प्राप्तगुणोत्कर्षतया, अधरोष्ठे=अधोरदनच्छदे, त्वदीयं=भवदीयं, सदशनार्चिः=रदनदीप्तिसहितं, लीलास्मितं=विलासेषद्धास्यम्, इव=यथा, आभाति=राजते ॥ ७० ॥

समासादि—ताम्रमुदरं येषान्ते ताम्रोदराः ( ब व्री. ) तेषु ताम्रोदरेषु । तरूणां पल्लवाः तरुपल्लवाः (त. पु.) तेषु तरुपल्लवेषु । हारस्य गुलिका हारगुलिकाः ( त. पु. ), निर्धौताश्च ताः हारगुलिका इति निर्धौतहारगुलिकाः (क.धा.), तद्वद् विशदं निर्धौतहारगुलिकाविशदं(त.पु.)। लब्धः परभागो येन तद् लब्धपरभागम् ( ब. व्री. ), तस्य भावो लब्धपरभागता ( स्त्री. ) तया तथोक्तया । दशनानामर्चिर्दशनार्चिः (त. पु.), तेन सहितं सदशनार्चिः (ब. व्री.)॥७०॥

व्याकरणम्—आभाति=आङ्+भा ( दीप्तौ )+लट्+तिप्, शपो लुकि रूपम् ॥ ७० ॥

वाच्यान्तरं—ताम्रोदरेषु तरुपल्लवेषु पतितेन निर्धौतहारगुलिकाविशदेन हिमाम्भसा लब्धपरभागतयाऽधरोष्ठे त्वदीयेन सदशनार्चिषा लीलास्मितेनेवाभायते ॥ ७० ॥

कोषः—"ताम्रं तु शुल्वे शुल्वनिभेऽपि च" इत्यनेकार्थसंग्रहः । "पल्लवोऽस्त्री किसलयम्" इति । "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इति चामरः ॥ ७० ॥

तात्पर्यार्थः—ताम्रवदरुणाभ्यन्तरेषु पादपनवपल्लवेषु रात्रौ पतितं स्वच्छमुक्तादामगुच्छतुल्यं तुषारजलं तवाधरोष्ठे वर्तमानं दशनकान्तिसहितं लीलापूर्वकं मन्दहास्यमनुकुर्वच्छोभते, अर्थात्—सम्प्रति सूर्योदयसमयः समीपवर्त्ती, अतो निद्रां जहीहि ॥ ७० ॥

भाषाऽर्थः—ताम्र के समान लाल वर्ण से युक्त जिनका मध्य भाग है, ऐसे वृक्षों के नवीन पल्लवों में गिरी हुईं स्वच्छ मोतियों के हार के गुच्छे की भांति निर्मल ओस की बूंदें उत्कर्ष को प्राप्त किये हुये होने से जैसे नीचे के ओष्ठ में तुम्हारी दांतों की कान्ति के सहित लीला पूर्वक मन्द हास्य सुशोभित होता है, उसी भांति सुशोभित हो रहा है । अर्थात् सूर्योदय होना चाहता है; अतः आप उठें ॥ ७० ॥

*संप्रति सुप्तमजं सूर्योदयात्प्रागेव शयनादुत्थापयितुं पुनरुक्तेजयन्तो बन्दिपुत्रा आहुरित्याह*

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर ! याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१ ॥

सञ्जीविनी—यावदिति । प्रतापनिधिस्तेजोनिधिर्भानुर्यावन्नाक्रमते नोद्गच्छति । "आङ उद्गमने" इत्यात्मनेपदम् । तावत् । भानावनुदित एवेत्यर्थः। अह्नाय झटिति । 'द्राग्झटित्यञ्जसाऽह्नाय' इत्यमरः । अरुणेनानूरुणा । 'सूर्यसूतोऽरुणोऽनूरुः' इत्यमरः । तमो निरस्तम् । तथाहि । हे वीर ! । त्वय्यायोधनेषु युद्धेषु । 'युद्धमायोधनं जन्यम्' इत्यमरः । अग्रसरतां याते सति तव गुरुः पिता रिपूंस्स्वयमुच्छिनत्ति किं वा । नोच्छिनत्त्येवेत्यर्थ. । न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां स्वयं व्यापारखेद इति भावः ॥ ७१ ॥

अन्वय.—प्रतापनिधि., भानुः, यावद्, न, आक्रमते, तावद्, अह्नाय, अरुणेन, तमः, निरस्त, "तथाहि", वीर !, त्वयि, आयोधनाग्रसरतां, याते, "सति", तव, गुरुः, रिपून् स्वयम्, उच्छिनत्ति, किं, वा,॥ ७१ ॥

व्याख्या—प्रतापनिधिः=तेजःशेवधिः, तेजःपुञ्जशालीत्यर्थः। भानु =सूर्यः, यावत्=साकल्येऽर्थे, न=नहि, आक्रमते=उद्गच्छति, उदेतीत्यर्थः । तावद्=अवध्यर्थे, सूर्येऽनुदित एवेत्यर्थः । अह्नाय=झटिति, अरुणेन=सूर्यसूतेन, तमः=अन्धकारः, निरस्तं=दूरीकृतं, तथाहि । हे वीर !=हे भट !, हे भज ! इत्यर्थः । त्वयि=भवति, आयोधनाग्रस-

रतां = समरपुरोगामितां, याते = प्राप्ते, सति। तत्र = भवतः, गुरुः = पिता, रघुरित्यर्थः। रिपून् = अरीन्, स्वयम् = आत्मना, उच्छिनत्ति = नाशयति, किं = पृच्छायां, वा = अवधारणेऽर्थे, न नाशयत्येवेत्यर्थः। योग्यसुते न्यस्तकार्यभारस्य पितुः स्वयं पुनः कस्य चिदपि कार्यस्य साधने व्यापारो न करणीय इत्यतो विनिद्रो भवेति भावः॥ ७१॥

समासादि—प्रतापस्य निधिरिति प्रतापनिधिः (त. पु.)। अग्रेसरतीत्यग्रसरः (त. पु.), तस्य भावोऽग्रसरता (स्त्री.), आयोधनेष्वग्रसरतेत्यायोधनाग्रसरता (त. पु.) तामायोधनाग्रसरताम्॥ ७१॥

व्याकरणम्—आक्रमते = आङ् + क्रमु (पादविक्षेपे-उदित्) + शप् + लट्, तप्रत्यये रूपम्। निरस्तं = निर् + असु (क्षेपणे-उदित्) + क्तः + सु, कर्मणि क्तप्रत्यये रूपम्। उच्छिनत्ति = उद् + छिदिर् (द्वैधीकरणे-इरित्) + श्नम् + लट्, तिपि रूपम्॥ ७१॥

वाच्यान्तरं—प्रतापनिधिना भानुना यावन्नाक्रम्यते तावदह्नायारुणस्तमो निरस्तवान् (तथाहि) हे वीर! त्वय्यायोधनाग्रसरतां याते (सति) तत्र गुरुणा रिपवः स्वयमुच्छिद्यन्ते किं वा॥ ७१॥

कोशः—"आक्रम्यते चाक्रमते ज्योतिष्कर्तृक उद्गमे" इत्याख्यातचन्द्रिका॥ ७१॥

तात्पर्यार्थः—यथा सूर्यसूतोऽरुणः सूर्योदयात्प्रागेव तत्साहाय्यमनपेक्ष्य तमो निरस्यति, तथैव त्वमपि पितुः शयनादुत्थानसमयात् प्रागेव शय्यां परित्यज्य विनिद्रः सन् स्वयं पितृसाहाय्यं विनैव रिपुजनान् समूलमुन्मूलय, अर्थात् निद्रां जहीहि॥ ७१॥

भाषाऽर्थः—तेज के निधि (खजाना) सूर्य भगवान् जब तक उदय नहीं हो पाते तब तक उन के पहिले ही जल्दी से सूर्य के सारथि "अरुण" ही अन्धकार को दूर कर देते हैं, अतः हे वीर! युवराज अज! आप के सब से अगाड़ी युद्ध में रहने वाले होते हुये आप के पिता रघु महाराज शत्रुओं को क्या स्वयम् उच्छिन्न करते हैं, नहीं बल्कि आप करते हैं, अतः आप अब सो कर के उठैं॥ ७१॥

*संप्रति ते सेनागजेन्द्रा अपि विनिद्रा जाता अतस्त्वमपि विनिद्रो भवेति वन्दिपुत्रा आहुरित्याह—*

शय्यां जहत्युभयपक्षविनीतनिद्राः-
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते।
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः॥७२॥

सञ्जीविनी—शय्यामिति। उभाभ्यां पक्षाभ्यां विनीता अपगता निद्रा येषां त उभयपक्षविनीतनिद्राः। अत्र समासविषय उभशब्दस्थान उभयशब्दप्रयोग एव साधुरित्यनुसंधेयम्। यथाऽऽह कैयटः—'उभादुदात्तो नित्यमि'ति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषय उभशब्दस्य प्रयोगो माभूत्। उभयशब्दस्यैव यथा स्यात्, उभयपुत्र इत्यादि भवति, इति। मुखराण्युत्थानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्तास्त एव तत्र स्तम्बे रमन्त इति स्तम्बेरमा हस्तिनः। "स्तम्बकर्णयो रमिजपोः" इत्यच्प्रत्ययः। 'हस्तिसूचकयोः' इति वक्तव्यात्। 'इभः स्तम्बेरमः पद्मी' इत्यमरः। "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक्। शय्यां जहति त्यजन्ति। येषां स्तम्बेरमाणां। दन्ताः कोशा इव दन्तकोशा दन्तकुड्मलास्तरुणारुणरागयोगाद् बालार्करुणसंपर्काद्धेतोर्भिन्नाद्रिगैरिकतटा इव विभान्ति। धातुरक्ता इव भान्तीत्यर्थः॥ ७२॥

अन्वयः—उभयपक्षविनीतनिद्राः, मुखरशृङ्खलकर्षिणः, ते, स्तम्बेरमाः, शय्यां, जहति, येषां, दन्तकोशाः, तरुणारुणरागयोगाद्, भिन्नाद्रिगैरिकतटाः, इव, विभान्ति॥ ७२॥

व्याख्या—उभयपक्षविनीतनिद्राः=पार्श्वद्वयपरिवर्त्तनदूरीकृतस्वापाः, मुखरशृङ्खलकर्षिणः=शब्दायमानान्दुककर्षणशीलाः, इतस्ततोऽङ्गसञ्चालनाज्झणझणायमानबन्धनशृङ्खलाकर्षणकारिण इत्यर्थः। ते=पूर्वोक्ताः, स्तम्बेरमाः=करिणः, तव सेनागजेन्द्रा इत्यर्थ.। शय्यां=शयनीयं, जहति=त्यजन्ति, विनिद्रा भवन्तीत्यर्थः। येषां=पूर्वोक्तानां, स्तम्बेरमाणामित्यर्थः। दन्तकोशाः=रदनकुड्मलाः, तरुणारुणरागयोगाद्=नूतनसूर्यरक्तवर्णसम्पर्काद्, हेतौ पञ्चमी बोध्या। भिन्नाद्रिगैरिकतटाः=छिन्नपर्वतगैरिकभृगवः, पर्वतस्य छिन्ना गैरिकधातुखण्डा इत्यर्थः। इव=यथा, विभान्ति=शोभन्ते, गैरिकधातुरक्ता इव राजन्त इत्यर्थः॥ ७२॥

समासादि—उभौ च तौ पक्षौ उभयपक्षौ (क०धा०), ताभ्यां विनीता उभयपक्षविनीता (त०पु०), तादृशी निद्रा येषान्त उभयपक्षविनीतनिद्राः (ब० व्री०)। स्तम्बे रमन्त इति स्तम्बेरमाः (पुं०)। मुखराश्च ते शृङ्खला मुखरशृङ्खलाः (क० धा०), तान् कर्ष्टुं शीलमेषान्ते मुखरशृङ्खलकर्षिणः (त० पु०)। तरुणश्चासावरुण इति तरुणारुणः (क० धा०), तस्य रागस्तरुणारुणरागः (त० पु०), तस्य योगस्तरुणारुणरागयोगः (त०पु०) तस्मात्तथोक्ताद्। गैरिकस्य तटा गैरिकतटाः (त०पु०), अद्रेर्गैरिकतटा अद्रिगैरिकतटाः (त० पु०), भिन्नाश्च तेऽद्रिगैरिकतटा इति भिन्नाद्रिगैरिकतटाः (क०धा०)। दन्ताः कोशा इव दन्तकोशाः (उ०।स०)॥ ७२॥

व्याकरणं—जहति=ओहाक् (त्यागे—ओकित्)+श्लु+लट्, झि प्रत्यये झस्यातादेशेचाकारलोपे रूपम्। विभान्ति=वि+भा (दीप्तौ)+शप्+लट्+झि, शपो लुकि रूपम्॥७२॥

वाच्यान्तम्—उभयपक्षविनीतनिद्रैर्मुखरशृङ्खलकर्षिभिस्तैः स्तम्बेरमैः शय्या हीयते येषां दन्तकोशैस्तरुणारुणरागयोगाद्भिन्नाद्रिगैरिकतटैरिव भायते॥ ७२॥

कोशः—"पक्षो मासार्धके गेहपार्श्वसाध्यविशेषयोः। केशादेः परतो वृन्दे बले सखिसहाययोः" इति मेदिनी। "अरुणोऽनूरुसूर्ययोः। सन्ध्यारागे बुधे कुष्ठे निःशब्दाव्यक्तरागयोः। व्याकुले कपिले वर्णे रक्तवर्णेऽपि वाच्यवत्" इत्यनेकार्थसंग्रहः॥ ७२॥

तात्पर्यार्थः—हे युवराज अज! तव सेनागजेन्द्रा वामदक्षिणपार्श्वद्वयपरिवर्तनपुरःसरं दूरीकृतनिद्राः सन्तः संप्रति शयनीयतलादुत्तिष्ठन्ति, ततस्तेषामुत्थानसमयेऽङ्गसञ्चालनाद्बन्धनशृङ्खलानां "झणज्झणे"ति घोरः शब्दः संजायते, तेषां रदनाश्चाभिनवसूर्यारुणकिरणसम्पर्काद्वप्रक्रीडायां पर्वतस्य गैरिकधातुतटोत्पाटने गैरिकधातुरक्ता इव शोभन्ते॥ ७२॥

भाषाऽर्थः—दोनों पार्श्वों से करवट बदलने से जिनकी नींद पूरी हो चुकी है, अत एव उठने के समय अङ्गों के हिलने से झन् झन् शब्द करते हुए लोह के बने हुये सीकडों को जो खींच रहे हैं, ऐसे आपकी सेना के सभी गजेन्द्र शय्या को त्याग कर रहे हैं, अर्थात् अपने २ शयन करने के स्थानों से उठ रहे हैं, और जिन्हों के खिलने के नजदीक आई हुई कलियों के समान दांत हाल में उदय होते हुये सूर्य को लाल २ किरणों के सम्पर्क होने से कटे हुये पर्वत के गेरू के टुकड़े की भांति मालूम पड़ते हुये सुशोभित हो रहे हैं। अर्थात् हाथी भी सोकर के उठ गये, अब आप को भी उठना चाहिये॥ ७२॥

*अथ सेनाऽश्वा अपि विगतनिद्रा जाता इति ब्रुवन्तो वन्दिपुत्रा आहुरित्याह—*

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष! वनायुदेश्याः।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः॥ ७३॥

सञ्जीविनी—दीर्घेष्विति। हे वनजाक्ष! नीरजाक्ष!! 'वनं नीरं वनं सत्त्वम्' इति शाश्वतः। दीर्घेषु पटमण्डपेषु नियमिता बद्धा वनायुदेश्या वनायुदेशे भवाः। 'पारसीका वनायुजाः' इति

हलायुधः। अमी वाहा अश्वा निद्रां विहाय पुरोगतानि लेह्यान्यास्वाद्यानि सैन्धवशिलाशकलानि। 'सैन्धवोऽस्त्री शीतशिवं मणिमन्थं च सिन्धुजे' इत्यमरः। वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति। उक्तं च सिद्धयोगसंग्रहे--( पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम्। शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम्॥ ) इत्यादि॥ ७३॥

अन्वयः—वनजाक्ष !, दीर्घेषु, पटमण्डपेषु, नियमिताः, वनायुदेश्याः, अमी, वाहाः, निद्रां, विहाय, पुरोगतानि, लेह्यानि, सैन्धवशिलाशकलानि, वक्त्रोष्मणा, मलिनयन्ति॥७३॥

व्याख्या—वनजाक्ष !=हे कमलनयन !, हे अज ! इत्यर्थः। दीर्घेषु=आयतेषु, पटमण्डपेषु=वस्त्रनिर्मितभवनेषु, नियमिताः=संयताः, बद्धा इत्यर्थः। वनायुदेश्याः=पारसीकाः, पारसदेशे जाता इत्यर्थः। अमी=एते, वाहाः=हयाः, सेनातुरङ्गमा इत्यर्थः। निद्रां=स्वापं, विहाय=त्यक्त्वा, पुरोगतानि=अग्रेस्थितानि, लेह्यानि=आस्वाद्यानि, जिह्वयाऽऽस्वादनार्हाणीत्यर्थः। सैन्धवशिलाशकलानि=सिन्धुजलवणप्रस्तरखण्डान्, वक्त्रोष्मणा=मुखौष्ण्येन, मुखनिःश्वासौष्ण्येनेत्यर्थः। मलिनयन्ति=मलिनानि कुर्वन्ति॥७३॥

समासादि—पटानां मण्डपानि पटमण्डपानि ( त० पु० ) तेषु पटमण्डपेषु। वने जाते वनजे ( न० लि० ), वनज इवाक्षिणी यस्यासौ वनजाक्षः ( व० व्री० ) तत्संबुद्धौ हे वनजाक्ष !। वनायुदेशे भवा वनायुदेश्याः (पुं०)। सैन्धवस्य शिलाः सैन्धवशिलाः (त० पु०), तासां शकलानि सैन्धवशिलाशकलानि (त० पु०)॥ ७३॥

व्याकरणं—विहाय=वि+ओहाक् ( त्यागे--ओकित् )+क्त्वा+ल्यप्। मलिनयन्ति=( मलिन+शस्+णिच् ) मलिनि+शप्+लट्, झिप्रत्यये "तत्करोति तदाचष्टे" इति णिचि रूपम्॥ ७३॥

वाच्यान्तरं—हे वनजाक्ष ! दीर्घेषु पटमण्डपेषु नियमितैर्वनायुदेश्यैरमीभिर्वाहैर्निद्रां विहाय पुरोगतानि लेह्यानि सैन्धवशिलाशकलानि वक्त्रोष्मणा मलिन्यन्ते॥ ७३॥

कोशः—"अथ मण्डपोऽस्त्री जनाश्रयः" इति। "जग्धिस्तु भोजनं, जेमनं लेह आहारो निघसो न्याद इत्यपि" इति चामरः॥ ७३॥

तात्पर्यार्थः—हे कमलनयन ! अज ! वस्त्रनिर्मितबृहदश्वशालायां बद्धाः पारसीका एते ते सेनामध्यवर्त्तिनोऽश्वाः संप्रति निद्रां परित्यज्य संमुखस्थितानि सैन्धवशिलाशकलानि लिलिक्षवः सन्तो निजमुखनिःश्वासौष्ण्येन मलिनानि कुर्वन्तीत्यतस्त्वमपि विगतनिद्रो भव॥ ७३॥

भाषाऽर्थः—हे कमलनयन ! अज ! कपड़ों के बने हुये बड़े २ मण्डपों में बँधे हुये पारस देश में उत्पन्न हुये ( पारसी ) ये आप की सेना के घोड़े निद्रा त्याग कर उठे हुये, आगे रक्खे हुये चाटने लायक सेंधा निमक के चट्टानों के टुकड़ों को अपने मुख के वायु की गर्मी से अर्थात् भाफ से मैला कर रहे हैं॥ ७३॥

≻संप्रति प्रातःकालसूचिकां पुष्पम्लानतां दीपस्य निष्प्रभतां च वर्णयन्तो निजवाक्यमुपसंहरन्तश्च वन्दिपुत्रा आहुरित्याह—≺

भवति विरलभक्तिर्म्लानपुष्पोपहारः-
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः॥ ७४॥

सञ्जीविनी--भवतीति। म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिर्विरलरचनो भवति। प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्योद्भेदेन स्फुरणेन शून्या भवन्ति। निस्तेजस्का भवन्तीत्यर्थः। अपि चायं मञ्जुवाङ् मधुरवचन. पञ्जरस्थस्ते तव शुकस्त्वत्प-

बोधनिमित्तेन प्रयुक्तामुच्चारितां नोऽस्माकं गिरं वाणीमनुवदति । अनुकृत्य वदतीत्यर्थः । इत्थं प्रभातलिङ्गानि वर्तन्ते, अतः प्रबोद्धव्यमिति भावः ॥ ७४ ॥

अन्वयः—म्लानपुष्पोपहारः, विरलभक्तिः, भवति, प्रदीपाः, स्वकिरणपरिवेषोद्भेदशून्याः, "भवन्ति", अपि, च, अयं, मञ्जुवाक्, पञ्जरस्थः, ते, शुकः, त्वत्प्रबोधप्रयुक्तां, नः, गिरम्, अनुवदति ॥ ७४ ॥

व्याख्या—म्लानपुष्पोपहारः=मुखबाष्पम्लानकुसुमोपायनम्, उपायनार्थमानीतानि पुष्पाणि मुखबाष्पादिना स्वरूपविकृतिं प्राप्तानीत्यर्थः । विरलभक्तिः=विरलरचनः, म्लानत्वादेवेति भावः । भवति=अस्ति, प्रदीपाः=दीपकाः, स्वकिरणपरिवेषोद्भेदशून्याः=निजरश्मिमण्डलस्फुरणरहिताः, निष्प्रभा इत्यर्थः । (भवन्ति=वर्त्तन्ते) वचनविपरिणामेनात्रान्वयो बोध्यः । अपि=युक्तपदार्थे, च=समुच्चयेऽर्थे, अयम्=एषः, मञ्जुवाग्=मञ्जुलवचाः, श्रुतिसुखदभाषीत्यर्थः । पञ्जरस्थः=पञ्जरवर्त्ती, ते=तव, शुकः=कीरः, त्वत्प्रबोधप्रयुक्तां=भवदुत्थापनार्थमुक्ताम्, भवन्निद्रात्यागार्थमस्माभिः प्रयुक्तामित्यर्थः । नः=अस्माकं, गिरं=वचः, पूर्वोक्तस्तुतिपाठरूपामित्यर्थः । अनुवदति=अनुब्रवीति, अनुकृत्य कथयतीत्यर्थः ॥७४॥

समासादि—विरला चासौ भक्तिरिति विरलभक्तिः ( क०धा० ) । पुष्पाणामुपहार इति पुष्पोपहारः ( त० पु० ), म्लानश्चासौ पुष्पोपहार इति म्लानपुष्पोपहारः ( क०धा० ) । स्वस्य किरणाः स्वकिरणाः ( त० पु० ), स्वकिरणानां परिवेष इति स्वकिरणपरिवेषः ( त० पु० ), तस्योद्भेदः स्वकिरणपरिवेषोद्भेदः ( त० पु० ), तेन शून्याः स्वकिरणपरिवेषोद्भेदशून्याः (त० पु०) । तव प्रबोधस्त्वत्प्रबोधः (त० पु०), तत्र प्रयुक्ता त्वत्प्रबोधप्रयुक्ता (त० पु० ) तां तथोक्ताम् । मञ्जुः वाग् यस्यासाविति मञ्जुवाक् (ब० व्री०) । पिञ्जरे तिष्ठतीति पिञ्जरस्थः ॥ ७४ ॥

व्याकरणम्—अनुवदति=अनु+वद ( व्यक्तायां वाचि-अकारेत् )+शप्+लट्, तिपि रूपम् ॥ ७४ ॥

वाच्यान्तरं—म्लानपुष्पोपहारेण विरलभक्त्या भूयते, प्रदीपैः स्वकिरणपरिवेषोद्भेदशून्यैः "भूयते", अपि चानेन मञ्जुवाचा पञ्जरस्थेन ते शुकेन त्वत्प्रबोधप्रयुक्ता नो गीरनूद्यते॥७४॥

कोशः—"पेलवं विरलं तनु" इत्यमरः । "परिवेषः स्यात्परिधौ परिवेषणे" इति रुद्रः । "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्" इति मेदिनी । "कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्" इत्यमरः ॥ ७४ ॥

तात्पर्यार्थः—भवदुपहारार्थमानीय स्थापितानि कुसुमस्तवकादीनि मुखबाष्पादिना म्लानतां प्राप्तानि, प्रदीपा अपि निजकिरणमण्डलैः प्रकाशयितुमसमर्थतया निस्तेजस्का जाताः, अतआसन्नसूर्योदयसमयो जातः,तथा चायं पिञ्जरवर्त्ती मधुरभाषी त्वदीयः शुकोऽप्यस्माभिस्त्वत्प्रबोधनार्थं यानि २ स्तुतिवचनानि पूर्वं समुच्चारितानि तानि सर्वाण्येवानुकृत्य वदन् संस्त्वां प्रबोधयत्यतो निद्रां विहायोत्तिष्ठतु भवान् ॥ ७४ ॥

भाषाऽर्थः—उपहार में आये हुये पुष्पों के मुरझा जाने से उनकी रचना (गुथाई) ढीली हो गई है, और दीपक अपने २ प्रभामण्डल के चमक से रहित हो रहे हैं, अर्थात्–दीपकों की प्रभा फीकी हो गई है, अतः इन सब पूर्वोक्त लक्षणों से पूरा सवेरा हो गया है, और यह सुन्दर बोलने वाला पिंजरे में रक्खा हुआ आपका सूआ भी आप को जगाने के लिये कहे गये हम लोगों के पूर्वोक्त वचनों का अनुकरण करके बोल रहा है, अतः अब आप निद्रा का त्याग करके उठें ॥ ७४ ॥

*अथ बन्दिपुत्रप्रयुक्तानि पूर्वोक्तानि स्तुतिवचनानि श्रुत्वा युवराजोऽजो जातप्रबोध-

तया सपदि तल्पं परित्यक्तवानित्याह—*

इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः-
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटु निनदद्भिर्बोधितो राजहंसैः-
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

सञ्जीविनी—इतीति । इतीत्थं विरचितवाग्भिर्वन्दिपुत्रैर्वैतालिकैः । पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् । सपदि विगतनिद्रः कुमारः । तल्पं शय्याम् । 'तल्पं शय्याऽट्टदारेषु' इत्यमरः । उज्झाञ्चकार विससर्ज । "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः । कथमिव । मदेन पटु मधुरं निनदद्भी राजहंसैर्बोधितः सुप्रतीकाख्यः । सुरगज ईशानदिग्गजः । गङ्गाया इदं गाङ्गं सैकतं पुलिनमिव । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । "सिकताशर्कराभ्यां च" इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसंभवादित्यनुसंधेयम् ॥ ७५ ॥

अन्वयः—इति, विरचितवाग्भिः, बन्दिपुत्रैः, सपदि, विगतनिद्रः, कुमारः, तल्पम्, उज्झाञ्चकार, "कथमिव", मदपटु, निनदद्भिः, राजहंसैः, बोधितः, सुप्रतीकः, सुरगजः, गाङ्गं, सैकतम्, इव७५॥

व्याख्या—इति = इत्थं, पूर्वोक्तप्रकारेणेत्यर्थः । विरचितवाग्भिः = प्रणीतस्तुतिवचनैः, वन्दिपुत्रैः = सूतात्मजैः, सपदि = सद्यः, तत्क्षण एवेत्यर्थः । विगतनिद्रः = त्यक्तस्वापः, कुमारः = युवराजः, अज इत्यर्थः । तल्पं = शय्याम्, उज्झांचकार = तत्याज, तल्पादुत्थितवानित्यर्थः । कथमिवेत्याह—मदपटु = हर्षमधुरं, यथा स्यात्तथा क्रियाविशेषणमिदम् । निनदद्भिः = शब्दं कुर्वद्भिः, राजहंसैः = कलहंसैः, चञ्चुचरणैर्लोहितैरुपलक्षितैर्हंसैरित्यर्थः । बोधितः = जागरितः, शयनादुत्थापित इत्यर्थः, सुप्रतीकः = तदाख्यः, सुरगजः = देवद्विपः, ईशानदिग्गज इत्यर्थः । गाङ्गं = स्वर्णदीसम्बन्धि, सैकतं = सिकतामयं, पुलिनम् । इव = यथा । अत्र उपरितनश्लोकेऽस्मिंश्च मालिनी नामक वृत्तमस्ति—तल्लक्षणं यथा वृत्तरत्नाकरे "ननमयययुतेयं मालिनी भोगिलोकैः" इति । तदुदाहरणमत्रैव यथा—

| न | न | म | य | य |
|---|---|---|---|---|
| ।।। | ।।। | ऽऽऽ | ।ऽऽ | ।ऽऽ |
| इतिवि | रचित | वाग्भिर्व | न्दिपुत्रैः | कुमारः । इति ॥ ७५ ॥ |

समासादि—विरचिता वाचो यैस्ते विरचितवाक् ( ब० व्री० ) । वन्दिनः पुत्रा इति वन्दिपुत्राः ( त० पु० ) तैर्वन्दिपुत्रैः । विगता निद्रा यस्यासौ विगतनिद्रः ( ब० व्री० ) । मदेन पटु, इति मदपटु ( त० पु० ) । गङ्गायाः इदं गाङ्गम् ( त० पु० ) ॥ ७५ ॥

व्याकरणम्—उज्झाञ्चकार = उज्झ ( उत्सर्गे—अकारेत् ) + आम् + कृ + लिट्, द्वित्वेऽभ्यासकार्ये रूपम् ॥ ७५ ॥

वाच्यान्तरम्—इति विरचितवाग्भिर्वन्दिपुत्रैः सपदि विगतनिद्रेण कुमारेण तल्पमुज्झाञ्चक्रे मदपटु निनदद्भी राजहंसैर्बोधितेन सुप्रतीकेन सुरगजेन गाङ्गं सैकतमिव ॥ ७५ ॥

कोशः—"युवराजः शिशौ स्कन्दे शुके वरुणपादपे । कुमारं जात्यकनके" इत्यनेकार्थसंग्रहः । "तल्पं शय्याऽट्टदारेषु" इत्यमरः । "रहति त्यजति त्यागे जहात्युज्झति व्युत्सृजति" इत्याख्यातचन्द्रिका ॥ ७५ ॥

तात्पर्यार्थः—हर्षेण मधुरं शब्दं कुर्वद्भी राजहंसैः प्रबोधितः सुप्रतीकाख्य ईशानदिग्गजो यथा गङ्गायाः सिकतामयं पुलिनं त्यजति तथैव पूर्वोक्तप्रकारेण स्तुतिवचनं ब्रुवद्भिर्वन्दिपुत्रैः प्रबोधितो रघुसूनुरजः शीघ्रमेव तल्पं तत्याज ॥ ७५ ॥

भाषार्थ—इस प्रकार से स्तुति-वचनों की रचना जिन्होंने की है, ऐसे बन्दि-पुत्रों से

शीघ्र ही जिनकी निद्रा दूर हो गई थी, ऐसे युवराज अज ने शय्या का उस तरह से परित्याग किया-कि जिस तरह से हर्ष से मधुर शब्द करते हुये राजहंसों से जगाया गया, "सुप्रतीक" नामक ईशान दिशा का दिग्गज गङ्गा के रेतीले तट को छोडता है ॥ ७५ ॥

*अथ विगतनिद्रोऽजः सन्ध्यावन्दनादिकं कृत्वा योग्यवस्त्रादिकं परिधाय स्वयवरमध्ये जगामेत्याह—*

अथ विधिमवसाय्य शास्त्रदृष्टं-
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेषः
क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥

सञ्जीविनी—अथेति। अथोत्थानानन्तरमञ्चितानि चारूण्यक्षिपक्ष्माणि यस्य सोऽजः शास्त्रे दृष्टमवगत दिवसमुखोचितं प्रातः कालोचितं विधिमनुष्ठानमवसाय्य समाप्य । स्यतेर्ण्यन्ताल्ल्यप् । कुशलैः प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वयंवरोचितो वेषो नेपथ्यं यस्य स तथोक्तः सन्स्वयंवरस्थं क्षितिपसमाजं राजसमूहमगादगमत्। "इणो गा लुङि" इति गादेशः। पुष्पिताग्रावृत्तमेतत्। तल्लक्षणम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥ ७६ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ॥ ५ ॥

---

अन्वयः—अथ, अञ्चिताक्षिपक्ष्मा, शास्त्रदृष्टं, दिवसमुखोचितं, विधिम्, अवसाय्य, कुशलविरचितानुकूलवेषः, "सन्", स्वयंवरस्थं, क्षितिपसमाजम्, अगात् ॥ ७६ ॥

व्याख्या—अथ=अनन्तरं, शय्यापरित्यागानन्तरमित्यर्थः । अञ्चिताक्षिपक्ष्मा=पूजितनेत्रलोमा, सुन्दरनयनलोमवानज इत्यर्थः। शास्त्रदृष्टं=आगमपरिज्ञातं, शास्त्रोदितमित्यर्थः। दिवसमुखोचितं=प्रत्यूषयोग्यं, प्रातःकाले करणीयमित्यर्थः। विधिम्=अनुष्ठानं, सन्ध्यावन्दनादिकमित्यर्थः। अवसाय्य=समाप्य, कृत्वेत्यर्थः। कुशलविरचितानुकूलवेषः=प्रसाधननिपुणजननिर्मितस्वयंवरोचितनेपथ्य. । सन् । स्वयंवरस्थं=स्वयंवरभूमिस्थितं, क्षितिपसमाजं=नृपतिमण्डलम्, अगात्=अगमत्।। अत्र-पुष्पिताग्रानामकं वृत्तं,-तल्लक्षणं यथा वृत्तरत्नाकरे—"अयुजि न युगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा" इति। तदुदाहरणं यथाऽत्रैव

| न | न | र | य |
|---|---|---|---|
| ।।। | ।।। | ऽ।ऽ | ।ऽऽ |
| अथवि | धिमव | साय्यशा | स्त्रदृष्टं- |

| न० | ज० | ज० | र० | गु० |
|---|---|---|---|---|
| ।।। | ।ऽ। | ।ऽ। | ऽ।ऽ | ऽ |
| दिवस | मुखोचि | तमञ्चि | ताक्षिप | क्ष्मा। |

इति। अत्रार्धसमवृत्तं बोध्यम् ॥ ७६ ॥

समासादि—शास्त्रे दृष्ट इति शास्त्रदृष्ट (त० पु०)। तं तथोक्तम् । दिवसस्य मुखं दिवसमुखं (त० पु०), तस्मिन्नुचित इति दिवसमुखोचितः (त० पु०) तं तथोक्तम्। अक्ष्णां पक्ष्माण्यक्षिपक्ष्माणि (त० पु०), अञ्चितान्यक्षिपक्ष्माणि यस्य सोऽञ्चिताक्षिपक्ष्मा (ब० व्रो०)। कुशलैर्विरचितः कुशलविरचितः (त० पु०), तादृशोऽनुकूलो वेषो यस्य स कुशलविरचितानुकूलवेषः (ब० व्रो०)। क्षितिपानां समाज. क्षितिपसमाजः (त० पु०)

तं क्षितिपसमाजम्। स्वयंवरे तिष्ठतीति स्वयंवरस्थः ( पुं० ) तं तथोक्तम् ॥ ७६ ॥

व्याकरणम्—अवसाय्य=अव+( षो ( अन्तकर्मणि )+युक्+णिच् )सायि+क्त्वा+ल्यप्। अगात्=अट्+इण् ( गतौ-णित् )+च्लि+सिच्+लुङ्, तिपि "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुकि रूपम् ॥ ७६ ॥

वाच्यान्तरम्—अञ्चिताक्षिपक्ष्मणा शास्त्रदृष्टं दिवसमुखोचितं विधिमवसाय्य कुशलविरचितानुकूलवेषेण "सता" स्वयंवरस्थः क्षितिपसमाजोऽगायि ॥ ७६ ॥

कोशः—"पूजितेऽञ्चितः" इत्यमरः। "आकल्पवेषौ नेपथ्यम्" इति चामरः ॥ ७६ ॥

तात्पर्यार्थः—शय्यात्यागानन्तरं शास्त्रोक्तं प्रातःकालोचित सन्ध्यावन्दनादिविधि समाप्य समाजोचितवेषसुसज्जितः सन्नजः स्वयंवरभवनस्थितं राजलोकं प्रति जगाम ॥ ७६ ॥

भाषाऽर्थः—शय्या त्याग कर उठने के बाद जिनके नेत्रों के लोम सुन्दर हैं ऐसे युवराज अज शास्त्रोक्त प्रातःकाल के योग्य सन्ध्यावन्दनादिक अनुष्ठान समाप्त कर के अलङ्कृत करने वालों में चतुर पुरुषों के द्वारा अपना स्वयंवर में जाने के योग्य उत्तम वेष बनाकर स्वयंवर में बैठे हुये राज समाज में गये ॥ ७६ ॥

इत्थं श्रीव्रजमोहनात्मजनुषा गोस्वामिविद्वद्वर-
श्रीदामोदरशास्त्रिशिष्यपदवीभाजाऽच्युतानुग्रहाद्।
श्रीब्रह्मान्वितशङ्करेण विहिता व्याख्या सुधाऽऽख्या नवा
पूर्त्तिं श्रीरघुवंशकाव्यसुभगे सर्गेऽभ्यगात्पञ्चमे ॥ ५ ॥

इति श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिणामन्तेवासिना मिश्रोपाह्वसरयूपारीणपङ्क्तिपावनान्ववायावतंसविविधकलाकोविदश्रौतस्मार्त्तकर्मनिष्ठगौतमगोत्रोद्भवश्रीव्रजमोहनशर्मतनुजनुषा श्रीब्रह्मशङ्करशर्मणा कृतया सुधाऽऽख्यया व्याख्ययाऽन्वितः श्रीरघुवंशमहाकाव्येऽजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ॥ ५ ॥

---

इत्थं गोत्रवसुग्रहक्षितिमिते संवत्सरे वैक्रमे
मासे कार्त्तिकिके सितेतरदले दीपावलीमण्डिते।
भौमेऽमावति सर्गपञ्चकभवा व्याख्या सुधाऽऽख्या नवा
काव्येऽस्मिन् रघुवंशनामनि गता सम्पूर्त्तिमस्मत्कृता ॥ १ ॥

क्वाहं विमूढमतिरस्मि निगूढभावस्योद्बोधने क्व च महाकविकालिदासः।
तन्निर्मितं तु यदिदं रघुवंशकाव्यं व्याख्यातवान्निजगुरोः करुणादृशा तत् ॥ २ ॥

व्याख्या यद्यप्यस्य सतां प्रसत्त्यै सन्ति प्रसिद्धा बहुशस्तथाऽपि।
सुहृद्वरश्रीजयकृष्णदासगुप्ताग्रहग्रस्ततया मयाऽपि ॥ ३ ॥

महान्वयेन प्रतिशब्दयुक्ता समाससाधुत्वनिदर्शनैश्च।
वाच्यान्तरेणापि च कोशजातैः सारार्थभाषाऽर्थविभूषिता च ॥ ४ ॥

विनिर्मिताऽन्तेवसतां नितान्तं सुखाप्तये शैशवशेमुषीणाम्।
सुधेयमेषां मुदमावहेच्चेद् भवेत्तदा निर्वृतिराशु मेऽपि ॥ ५ ॥

अस्यां कृतौ यत्र च कुत्र चिन्मे स्युः शोधने लेखन एव यानि।
स्वानीव मत्वा कृपयाऽखिलानि शोध्यानि विद्भिः स्खलितानि तानि ॥ ६ ॥

इत्थं यथामति सतां कृतिरस्मदीया स्तात् सन्ततं प्रकृतितः कृतिकीर्त्तनीया।
इत्यर्थयेऽर्थिसुरसार्थकृतार्थकारि गौरेः पदाब्जयुगलं कलुषापकारि ॥ ७ ॥

हरिः ओं तत्सत् ३।

शमिति।

# रघुवंशस्य-प्रश्नपत्रम् ।

## सन् १९१०

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ! ।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥ १ ॥
ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥ २ ॥
हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते स्वनामचिन्हं निचखान सायकम् ॥ ३ ॥
स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ ४ ॥
श्रवनीमुखपद्मानां सेहे मधुमदं न सः । बालातपमिवाब्जानामकालजलदोदयः ॥ ५ ॥
तद्वल्गुना युगपदुन्मिषितेन तावत् सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६ ॥
एतेषां दण्डान्वयं खण्डान्वयं वाऽऽश्रित्य व्याख्या कार्या ।

---

## सन् १९११

अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोघ्नीः ॥ १ ॥
अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्तिभेदेन गुणाग्र्यवर्त्तिना पतिः प्रजानामिव सर्गमात्मनः ॥ २ ॥
आपादपद्मप्रणताः कलमा इव ते रघुम् । फलैः सम्वर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३॥
खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु । कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥४॥
भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान् महाभाग ! तयाऽतिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ ५ ॥
तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्ददीपे मददुर्दिनश्रीः ॥ ६ ॥
त तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ७ ॥
एषां दण्डान्वयं खण्डान्वयं वाऽवलम्ब्य व्याख्या कार्या ।

---

## सन् १९१२

निवर्त्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ १ ॥
पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ २ ॥
ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत्सुरेश्वरम् ॥ ३ ॥
इक्षुच्छायानिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ ४ ॥
तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ५ ॥
तं श्लाघ्यसम्बन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ ६ ॥
दण्डान्वयं खण्डान्वयं वाऽवलम्ब्यैषां व्याख्या कार्या ।

सन् १९१३

धनुर्भृतोऽप्यस्य दयाऽऽर्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकाममविस्तारफलं हरिण्यः ॥ १ ॥
तदङ्गमग्र्यं मघवन् ! महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि ।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ २ ॥
स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥३॥
अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ४ ॥
तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।
विशां पतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥ ५ ॥
अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ ६ ॥
एषामन्वयमुखेन व्याख्या कार्या ।

---

सन् १९१४

सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥ १ ॥
तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ २ ॥
तथाऽपि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ३ ॥
लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत् पङ्कजलक्षणा ॥ ४ ॥
विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ५ ॥
उपात्तविद्यं विधिवद् गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषाऽपि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥ ६ ॥
अन्वयमुखेन व्याख्येया अमी श्लोकाः ।

---

सन् १९१५

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ १ ॥
यदात्थ राजन्यकुमार ! तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ २ ॥
ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ३ ॥
तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥ ४ ॥
तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ५ ॥
ते रेखाध्वजकुलिशातपत्रचिह्नं सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुर्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ६ ॥
अन्वयमुखेन व्याख्येया अमी श्लोकाः ।

सन् १९१६

टीकाऽनुकरणमकिञ्चित्करमिति निर्द्धार्यान्वयमुखेन व्याख्यातव्या इमे श्लोकाः ।

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ १ ॥

सममेव समाक्रान्तं द्वयं द्विरदगामिना । तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥२॥

भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग ! तयाऽतिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ ३ ॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्द्धमुखेन पत्रिणा शरासनज्यामलुनाद्बिडौजसः ॥ ४ ॥

सन् १९१७

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता । पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १ ॥

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥ २ ॥

उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषाऽपि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥ ३ ॥

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत । नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ४ ॥

भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान् महाभाग ! तयाऽतिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ ५ ॥

उपरितनाः श्लोकाः स्पष्टं व्याख्येयाः ।

सन् १९१८

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ १ ॥

तदा प्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्तिः ॥ २ ॥

आपादपद्मप्रणताः कलमा इव ते रघुम् । फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः ॥ ३ ॥

तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः । पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥४॥

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः ।
निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५ ॥

व्याख्यायन्ताममी श्लोकाः ॥

सन् १९१९

१ इत्थं व्रतं धारयतः प्रजाऽर्थं समं महिष्या महनीयकीर्त्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥

२ तमभ्यनन्दत् प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन् हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥

३ ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत् सुरेश्वरम् ॥

४ आधारबन्धप्रमुखैः प्रयत्नैः सम्वर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥

५ तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥

एते श्लोका अन्वयप्रदर्शनपुरःसरं व्याख्येयाः ।

सन् १९२०

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ॥
गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ १ ॥
तैस्तस्य सङ्ख्यामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ॥
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥ २ ॥
स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ॥
निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ३ ॥
अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि ॥
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोघ्नीः ॥ ४ ॥
जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ॥
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ५ ॥
एते श्लोका अन्वयसमासतात्पर्यनिर्णयपुरस्सरं व्याख्येयाः ॥

---

सन् १९२१

१ पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः । २०
भुजे भुजंगेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ १ ॥
२ अंमस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् । २०
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥ २ ॥
३ स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः । २०
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ ३ ॥
४ ताम्रोदरेषु पतितं तरुपल्लवेषु निर्धौतहारगुलिकाविशदं हिमाम्भः । २०
आभाति लब्धपरभागतयाऽधरोष्ठे लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥४॥
एते श्लोका अन्वयार्थकोशविग्रहभावसन्दर्भप्रदर्शनपुरःसरं व्याख्येयाः ।
५ इन्द्ररघुयुद्धवृत्तान्तः सरलसंस्कृतेन लेख्यः ॥ २०

---

सन् १९२२

(अ) संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतंगस्य मुनेश्च धेनुः ॥
(क) सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियाऽर्थः ॥
(च) त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥
(ट) कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् । रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥
(त) एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान् ॥
१ एते श्लोका दण्डान्वयमुखेन समासविग्रहप्रदर्शनपूर्वकं व्याख्येयाः ।
२ सिंहदिलीपयोः संवादः संस्कृतभाषया संक्षेपतो लेख्यः ।

---

## प्रश्नपत्रम् ।

### सन् १९२३

१ विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ १ ॥
न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ २ ॥
दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि । तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥३॥
शरैरुत्सवसङ्केतान् कृत्वा स विरतोत्सवान् । जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥४॥
संमोचितः सत्त्ववता त्वयाऽहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥ ५ ॥
(क) एते श्लोका दण्डान्वयेन समासविग्रहप्रदर्शनपूर्वकं व्याख्येयाः । ७५
(ग) अन्तिमश्लोके कः केन शप्तः केन च मोचितः । . . . ५
२ कौत्सस्य रघोश्च संवादः स्वसंस्कृतेन लेख्यः । . . २०

---

### सन् १९२४

१ अलं महीपाल ! तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ १ ॥
स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः ।
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ २ ॥
स सैन्यपरिभोगेण गजदानसुगन्धिना । कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥३॥
अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ । अपरान्तमहीपालव्याजेन रघवे करम् ॥४॥
निद्रावशेन भवताऽप्यनवेक्षमाणा पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ५ ॥
(क) एते श्लोका दण्डान्वयमुखेन सम्यग् व्याख्येयाः ।
समस्तपदानां विग्रहवाक्यानि च प्रदर्शनीयानि ।
(ख) प्रथमपञ्चमश्लोकयोः वक्तृबोद्धव्यप्रदर्शनं च कार्यम् ।
(ग) द्वितीयतृतीययोर्वाच्यपरिवर्तनं लेख्यम् ।
२ राजा दिलीपेन कुत्र, किमर्थं, केन प्रकारेण, कतिदिवसपर्यन्त गोचारणं कृतमिति स्वसंस्कृतेन लेख्यम् ।

---

### सन् १९२५

१ पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ २०
२ तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ .. २०
३ ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ २०
४ स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ . २०
५ ते रेखाध्वजकुलिशातपत्रचिन्हं सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुर्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ... २०
एते श्लोकाः कोशविग्रहसन्दर्भाभिप्रायादिनिरूपणपूर्वकं व्याख्येयाः ।

---

१९२६

१ पुरुपायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ . १९

२ तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ . २०

३ ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ .. २०

४ वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजाऽर्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ . १९

५ दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ... १९

एते श्लोकाः ससङ्गतिकोशविग्रहभावनिरूपणपुरस्सरं व्याख्येयाः ।

(क) प्रथमप्रश्ने ईतयो नामग्राहं परिगणनीयाः । ३

(ख) द्वितीयप्रश्ने ऐन्द्रपदस्य स्वरूपं यथावदवगतं प्रदर्शनीयम् । .. ३

(ग) तृतीयप्रश्ने 'त्रिसाधना शक्तिः' का ? कानि च त्रीणि साधनानीति स्पष्टं प्रदर्शनीयम् । . ३

(घ) चतुर्थप्रश्ने वाच्यपरिवर्त्तनमावश्यकम् । ३

(ङ) पञ्चमप्रश्ने दक्षिणस्यां दिशि रवेस्तेजः कुतो मन्दायते इत्यत्र हेतुरुपन्यस्यताम् । ३

---

१९२७

(क) वनान्तरादुपावृत्तैः समित्कुशफलाहरैः । पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥

(ख) कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥

१ अनयोर्यथोपयोगम्, अग्नीनां प्रत्युद्गमनबोधकं श्रुतिवचनम्,
अष्टमूर्त्तीनां स्वरूपं चोपवर्ण्य व्याख्या कार्या । .. ४०

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुस्सहः कटप्रभेदेन करीव पार्थिवः ॥

२ अस्मिन् पद्ये सुदुःसहत्वसादृश्यं सम्यक् समर्थयत । २०

(क) तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः । रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥

(ख) यवनीमुखपद्मानां सेहे मधुमदं न सः । बालातपमिवाब्जानामकालजलदोदयः ॥

३ अनयोर्यथाक्रममर्णवस्य रामास्त्रोत्सारणे कारणं, मधुमदासहिष्णुत्वे वर्णितसादृश्यं च स्फुटीकुरुत । ४०

---

१९२८

१ उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।
देवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम्॥ .. १३

२ धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन्।
प्रदक्षिणक्रियाऽर्हायां तस्यां त्वं साधु नाचरः॥ ... १३

३ क्षतात्किलत्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा॥ . १५

४ ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम्।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम्॥ २४

५ स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया॥ १३

६ आपादपद्मप्रणताः कलमा इव ते रघुम्।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः॥ १३

(क) प्रथमश्लोके सप्तान्यङ्गानि दैव्यो मानुष्यश्चापदो नामग्राहं वर्णनीयाः। २

(ख) द्वितीयश्लोके कीदृशं धर्मलोपभयं, कश्च स धर्मः, के च प्रदक्षिणक्रियाऽर्हा इति सोपपत्तिकं वर्णनीयम्। .. २

(ग) चतुर्थश्लोके कानि त्रीणि साधनानीति नामग्राहं वर्णनीयानि। .. २

(घ) पञ्चमश्लोके बलस्य षड्विधत्वं वर्णय। .. २

(ङ) षष्ठश्लोके कलमानां राज्ञां चासाधारणं साधर्म्यं निरूपणीयम्। १

वक्तृबोद्धव्यकोशविग्रहपर्य्यायतात्पर्य्यनिरूपणपूर्वकं व्याख्यायन्तामिमे श्लोकाः।

---

१९२९

सया हीनं विधातर्मां कथं पश्यन्न दूयसे।
सिक्तं स्वयमिव स्नेहाद् वन्ध्यमाश्रमवृक्षकम्॥ १॥
अवजानासि मां यस्मादतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥ २॥
अलं महीपाल! तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य॥ ३॥
भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ।
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन॥ ४॥
जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम्।
अदेयमासीत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे॥ ५॥
पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः।
नवे तस्मिन् महीपाले सर्वं नवमिवाभवत्॥ ६॥

१ एते श्लोकाः साधु व्याख्यायन्ताम्। ... ७५

२ द्वितीयश्लोके मत्प्रसूतिमित्यत्र कः समासः? ३

३ तृतीयश्लोके इत इत्यत्र का विभक्तिः? २

४ पञ्चमश्लोकस्य भावार्थो हिन्दीभाषायां लिख्यताम् १५

५ षष्ठश्लोके पञ्चभूतानि कानि! तेषां गुणाश्च के? ५

---

१९३०

(क) प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ १ ॥ १४

(ख) स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वशिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ २ ॥ २४

(ग) न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ ३ ॥ १८

(घ) दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ४ ॥ १८

(ङ) परिकल्पितसान्निध्या काले काले च बन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ५ ॥ ... ८

(च) प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ ६ ॥ ८

एतेषां श्लोकानां मल्लिनाथरीत्या व्याख्या विधेया तत्र कोशाश्च वक्तव्या । टीकाऽनुपूर्वीलेखो निषिद्धः ।

तृतीयश्लोके ऋणानि कतिविधानीत्युक्त्वा पितॄणां ऋणात् कथं मुक्तिर्भवतीति वक्तव्यम् । १०

दिलीपस्य नन्दिनीसेवायाः प्रयोजको हेतुर्निर्देष्टव्यः ।
रघोर्दिग्विजयवृत्तान्तः स्वशब्दैः सङ्क्षेपेणोपन्यस्यताम् ॥

---

सर्वविधपुस्तकप्राप्तिस्थानम्—
जयकृष्णदास-हरिदास गुप्तः —
चौखम्बा संस्कृत सीरिज आफिस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।